# कविकुलगुरु कालिदास संस्कृत विश्वविद्यालय, रामटेक

## हस्तलिखित संग्रह

दाखल क्र M ११6. विषय पुराण

नाव. अध्यात्म रामायण (मुद्रित)

लेखक/लिपीकार —

पृष्ठ 201 काळ शके 1826. पूर्ण/अपूर्ण

# ॥ अध्यात्मरामायणान्तर्गतविषयानुक्रमाणिका ॥

## आरण्यकाण्डम् ३.



## किष्किन्धाकाण्डम् ४.

## उत्तरकाण्डम् ७.

इति श्रीमदध्यात्मरामायणस्थविषयानुक्रमणिका श्रीकृष्णदासात्मजखेमराजप्रेरितखानदेशीयरावेरग्रामानिवासिपरशुरामभट्टतनयगोविन्दशर्मशास्त्रिविरचिता सम्पूर्णतामयासीत् । शकाब्दाः १८१७ संवत् १९५२ आश्विनशुक्ल २ ॥ श्रीः ॥ शिवम् ॥

॥ इत्यध्यात्मरामायणान्तर्गतविषयानुक्रमणिका समाप्ता ॥

खेमराज श्रीकृष्णदास 'श्रीवेङ्कटेश्वर' स्टीम् प्रेस–मुंबई.

श्रीगणेशाय नमः ॥ श्रीरामचंद्रायनमः ॥ बिसेन[1]वंशजलधौपूर्णःशीतकरोऽपरः ॥ प्रजाह्लादकरोविष्णु[2]भूषणःकौस्तुभोऽपरः ॥ १ ॥ नाम्नाहिम्मतिवर्माऽ भूद्धैर्येणहिमवानिव ॥ रूपेणजितकंदर्पःक्षमायांक्षमयासमः ॥ २ ॥ पराक्रमेऽर्जुनःसाक्षात्तेजसाभानुमानिव ॥ भूपानांभ्रष्टराज्यानांपुनाराज्यप्रदायकः ॥ ३ ॥ यंदृष्ट्वार्थिसमूहस्यजातेयंनिश्चितामतिः ॥ हित्वापशुत्वंस्त्रीत्वंचकामधुग्भूमिमागता ॥ ४ ॥ तस्माज्जातोरामदत्तश्चंद्राचंद्रइवापरः ॥ मित्राणांचरिपूणांचमा[3]नदःप्रथितःप्रभुः ॥ ५ ॥ आसमुद्रंक्ष्मादेवीयत्कीर्त्याधवलीकृता ॥ हिमाचलेनसमतांनीताःसप्तापिचाचलाः ॥ ६ ॥ यद्दानांबुप्रवाहेणमेघोदस्यानपेक्षकाः ॥ कृषीवलाःप्रतिदिशंप्रहृष्यंतिदिनेदिने ॥ ७ ॥ तेनश्रीरामभक्तेनसर्वविद्याप्रजानता ॥ शृंगवेरपुरेशेनरिपुकक्षदवाग्निना ॥ ८ ॥ अर्थिनांकल्पवृक्षेणविद्वज्जनसभासदा ॥ भट्टनागेशशिष्येणबद्ध्यतेरामवर्मणा ॥ ९ ॥ प्रणम्यजानकीजानिंरामंका[4]मातिसुंदरम् ॥ चापबाणधरंदेवंमायामानुषविग्रहम् ॥ १० ॥

## श्रीगणेशाय नमः ॥ अप्रमेयत्रयातीतनिर्मलज्ञानमूर्तये ॥ मनोगिरांविदूरायदक्षिणामूर्तयेनमः ॥ १ ॥

सेतुःपरोपकृतयेऽध्यात्मरामायणांबुधौ ॥ सुशब्दमणिभिःश्लक्ष्णैःश्रीयतांतेनराघवः ॥ ११ ॥ श्रीमतावाल्मीकिनालोकोद्धारायकृतेरामचरित्रवर्णनरूपेरामायणाख्यकाव्येभगवतोलीलावतारस्यरावणादीनां दृढमनुष्यत्वबुद्ध्येनटवदात्मस्वरूपगोपनेन व्यवहरतः स्वरूपं वाल्मीकिनागुप्तमेवतत्रतत्रनिरूपितम् । तदेतत्परमदयालुर्भगवान्साक्षाद्वेदव्यासोलोकानांस्फुटंबोधयितुं नारदब्रह्मसंवादरूपेण ब्रह्मांडपुराणेऽध्यात्मरामायणसंहितां चक्रे तस्याश्चवाल्मीकिसूचितार्थज्ञापकत्वंबोधयितुंवाल्मीकिरामायणवदेवकांडसर्गोपेतां कृतवान् । तांयथामतिस्वमतिदोषशुद्धये व्याचक्ष्महे तामेतांसंहितांनैमिषेऽरण्यैनैमिषीयानृषीञ्छ्रावयतिस्मसूतइत्याह ॥ अप्रमेयेति ॥ अप्रमेयत्रयंमायाजीवेश्वररूपंतदतीतस्ततोऽधिकश्चासौनिर्मलंयज्ज्ञानंतन्मूर्तिस्तत्स्वरूपस्तस्मैनमः ॥ मनइति ॥ वाङ्मनसयोरगोचरायेत्यर्थः ॥ १ ॥

---

१ बिसेननामकवंश एव जलधिः समुद्रस्तस्मिन् । २ विष्णुरेव भूषणं यस्य विष्णोरेकान्तभक्त इत्यर्थः । ३ मानं ददाति इति मानं द्यति इति च मानदः । डुदाञ् दाने–दोअवखण्डने च । इति धात्वोरर्थद्वये समानरूपव्यवहारः । ४ काममतिक्रम्य सुंदरस्तम् ।

कदाचिदिति ॥ योगीयोगपक्वकषायतयाविदितवेदितव्यः तादृशस्यपर्यटनंविफलंतत्राह ॥ परेति ॥ परेषांतत्तल्लोकवासिनांधर्मज्ञानाद्युपदेशेनयोऽनुग्रहस्त दिच्छयेत्यर्थः ॥ सत्यलोकंब्रह्मलोकम् ॥ २ ॥ तत्रसत्यलोके मुनिपुंगवोनारदउच्यमानगुणंचतुर्मुखंदृष्ट्वातुष्टावेतिअग्रिमतृतीयश्लोकस्थेनसंबन्धः मूर्तिमद्भि र्गृहीतविग्रहैः छंदोभिर्वेदैः परितोवेष्टितम् तत्तद्वेदाध्येतृमुखसंमुखेतत्तद्वेदमूर्त्येर्वैस्थानादितिभावः बालार्कप्रभयाबालार्कसदृशयास्वप्रभया ॥ ३ ॥ सर्वार्थं गोचरज्ञानमतीतानागतवर्तमानरूपायेसर्वेऽर्थास्तद्विषयज्ञानयुक्तम् बहुव्रीहिसमासः अतएवतत्तज्ज्ञानरूपयासरस्वत्याख्यशक्त्यायुक्तम् ॥ ४ ॥ जगन्नाथंजग

सूतउवाच ॥ कदाचिन्नारदोयोगीपरानुग्रहवांछया ॥ पर्यटन्सकलाँल्लोकान्सत्यलोकमुपागमत् ॥ २ ॥ तत्रदृष्ट्वामूर्तिमद्भिश्छंदोभिः परिवेष्टितम् ॥ बालार्कप्रभयासम्यग्भासयंतंसभागृहम् ॥ ३ ॥ मार्कंडेयादिमुनिभिःस्तूयमानंमुहुर्मुहुः ॥ सर्वार्थगोचरज्ञानंसरस्वत्या समन्वितम् ॥ ४ ॥ चतुर्मुखंजगन्नाथंभक्ताभीष्टफलप्रदम् ॥ प्रणम्यदंडवद्भक्त्यातुष्टावमुनिपुंगवः ॥ ५ ॥ संतुष्टस्तंमुनिंप्राहस्वयंभूर्वै ष्णवोत्तमम् ॥ किंप्रष्टुकामस्त्वमसितद्वदिष्यामितेमुने ॥ ६ ॥ इत्याकर्ण्यवचस्तस्यमुनिर्ब्रह्माणमब्रवीत् ॥ त्वत्तःश्रुतंमयासर्वंपूर्वमेवशु भाशुभम् ॥ ७ ॥ इदानीमेकमेवास्तिश्रोतव्यंसुरसत्तम ॥ तद्रहस्यमपिब्रूहियदितेऽनुग्रहोमयि ॥८॥ प्राप्तेकलियुगेघोरेनराःपुण्यविवर्जि ताः॥दुराचाररताःसर्वेसत्यवार्तापराङ्मुखाः॥९॥ परापवादनिरताःपरद्रव्याभिलाषिणः ॥ परस्त्रीसक्तमनसःपरहिंसापरायणाः ॥१०॥

त्स्रष्टारम् भक्ताभीष्टफलप्रदत्वेनप्रश्नयोग्यतासूचनम् ॥ ५ ॥ स्वयंभूरित्यनेनानावृतज्ञानत्वंसूचितम् वैष्णवोत्तमम् । सर्वभूतेषुयःपश्येद्भगवद्भावमात्मनः ॥ भूतानिभगवत्यात्मन्येषभागवतोत्तमः ॥ इत्युक्तलक्षणम् तत्पृष्टंवस्त्वित्यर्थः ॥ ६ ॥ शुभंविहितम् अशुभंनिषिद्धम् ॥ ७ ॥ एकमेवपुण्यहीनानांपरलोकप्रा प्त्युपायरूपम् तद्रहस्यमपिमत्पृष्टंब्रूहि अनुग्रहःपरोपकारकरणजपुण्येनायंपूज्यतामित्येवंरूपादयायदिमयीत्यर्थः ॥ ८ ॥ दुराचाररताः निषिद्धकर्मनिरताः तस्यैवप्रपंचः सत्यवार्तेति नानृतं वदेदितिनिषिद्धानृतभाषणशीलाइतियावत् ॥ ९ ॥ १० ॥



१ स्वस्थान एव सकलप्रकारज्ञानसामर्थ्यात् । २ तत्तद्वेदप्रतिभानेन स्वस्य ( ब्रह्मणः ) एव तत्तद्वेदाकारतयावस्थानादित्यर्थः ।

सर्वपापस्यमूलकारणमाह ॥ देहात्मदृष्टयइति ॥ देहेएवात्मदृष्टिर्येषांतेइत्यर्थः । एवंचदेहनाशेनात्मनाशात्पापपुण्यफलभोक्तुरभावात्तथादृष्टीनांविहिताकरणनि षिद्धकरणयोःप्रवृत्तिरितिभावः । स्थूलोऽहंगौरोऽहमितिप्रतीतिस्तुशुक्तौरजतप्रतीतिवद्भ्रमइतिवत्त्वम् ॥ देहस्यपरिणामित्वंतुप्रतिक्षणोपचयापचयाभ्यांप्रत्यक्षसि द्धम् । आत्मनोऽविनाशित्वंतु । अविनाशीवारेयमात्माइतिश्रुतिसिद्धम् अतएवनास्तिकानास्तिपरलोकइतिबुद्धिमंतः पशुबुद्धयः आहारविहारमात्रपराविधिनि षेधानभिज्ञाश्चेत्यर्थः । स्त्रीदेवाःस्त्रीजिताइत्यर्थः ॥ तेषामन्नस्याभोज्यत्वंचस्मृतिपूक्तम् कामकिंकराः काम्यकर्ममात्रपराः ॥ ११ ॥ लोभरूपग्रहेणभूतादिना ग्रस्ताः वेदविक्रयजीविनःभृतकाध्यापकाः धनार्जनफलकतयाभ्यस्तायाविद्यातन्मदेनतद्गर्वेणविमोहिताः इतरावज्ञाशीलाः ॥ १२ ॥ त्यक्तेति ॥ अत्रविप्राइ

देहात्मदृष्टयोमूढानास्तिकाःपशुबुद्धयः ॥ मातापितृकृतद्वेषाःस्त्रीदेवाःकामकिंकराः ॥ ११ ॥ विप्रालोभग्रहग्रस्तावेदविक्रयजीविनः ॥
धनार्जनार्थमभ्यस्तविद्यामदविमोहिताः ॥ १२ ॥ त्यक्तस्वजातिकर्माणःप्रायशःपरवंचकाः ॥ क्षत्रियाश्चतथावैश्याःस्वधर्मत्यागशी
लिनः ॥ १३ ॥ तद्वच्छूद्राश्चयेकेचिद्ब्राह्मणाचारतत्पराः ॥ स्त्रियश्चप्रायशोभ्रष्टाभर्त्रवज्ञाननिर्भयाः ॥ १४ ॥ श्वशुरद्रोहकारिण्योभवि
ष्यंतिनसंशयः ॥ एतेषांनष्टबुद्धीनांपरलोकःकथंभवेत् ॥ १५ ॥ इतिचिन्ताकुलंचित्तंजायतेममसंततम् ॥ लघूपायेनयेनैषांपरलोक
गतिर्भवेत् ॥ १६ ॥ तमुपायमुपाख्याहिसर्ववेत्तियतोभवान् ॥ इत्यृषेर्वाक्यमाकर्ण्यप्रत्युवाचांबुजासनः ॥ १७ ॥

त्यनुवर्तते त्यक्तंस्वजातिकर्मब्राह्मणजात्युचितंकर्माध्ययनादियैरतःपरवंचकाः परवंचनायैवधर्मानुष्ठानवंतः क्षत्रियादयोऽप्येवमेवेत्याह क्षत्रियाइति स्वधर्मत्याग रूपंशीलंयेषांनतुकदाचिदपिधर्मशीलाइत्यर्थः ॥ १३ ॥ ब्राह्मणाचारतत्पराइत्यनेनधर्मसंकरोदर्शितः स्त्रियश्चेत्यनेनवर्णसंकरोदर्शितः । भर्तुरवज्ञानेनिर्भयानिः शंकाः भर्तृवज्ञानेतिपाठेवष्टिभागुरिरित्यनेनावस्यादेरकारस्यलोपः ॥ १४ ॥ १५ ॥ परलोकगतिः भूर्लोकगतिः भूर्लोकोर्ध्वभुवर्लोकांतगमनम् तच्चदुराचारा दिनानर्थनिवृत्तिंविनाचित्तशोधकसकलधर्मविनाचदुष्प्रापमितिभावः ॥ १६ ॥ नन्वीदृशोपायज्ञानंममकथंस्यादितिचेत्तत्राह सर्ववेत्तीति यतोभवान्सर्वज्ञइति भावः । ऋषेर्नारदस्यवाक्यमाकर्ण्यांबुजासनोब्रह्माप्रत्युवाचेति ॥ १७ ॥

---

१ पूर्वश्लोकतः । २ दाम्भिका इत्यर्थः ।

साधुसर्वजनहितंयतःपृष्टमतःसादरंवक्ष्ये तदुत्तरमितिशेषः । तच्छृणु तदेवाह । पुरेति । त्रिपुरहंतारंशिवम् भक्तवत्सलेत्यनेनपार्वतीप्रश्नोऽपिस्वभक्तसकलजनकरुणयातदुद्धारार्थमितिसूचितम् ॥ १८ ॥ गूढंस्वातिरिक्ताज्ञातंवक्ष्यमाणंवस्तुव्याख्यातवान् कथितवानित्यर्थः ॥ १९ ॥ तत्किंतत्राह पुराणोत्तममिति पुराणमनादितच्चतदुत्तमंच श्रवणेनसर्वधर्मजनकत्वाच्चित्तशुद्धिद्वारातत्त्वज्ञानकरत्वाच्चेतिभावः । अध्यात्मरामायणमित्यन्वर्थंग्रंथनाम आत्मनीत्यध्यात्मम् ॥ आत्मनि चित्तेंऽतर्यामितयावर्तमानोयोरामोरमंतेयोगिनोऽत्रेतिव्युत्पत्त्यांतर्यामीतस्यायनंचित्तशुद्धिद्वाराप्रापकंतत्प्रतिपादकत्वादितितदध्यात्मरामायणम् उत्तरश्लोकस्थेआ

साधुपृष्टंत्वयासाधोवक्ष्येतच्छृणुसादरम् ॥ पुरात्रिपुरहंतारंपार्वतीभक्तवत्सला ॥ १८ ॥ श्रीरामतत्त्वंजिज्ञासुःपप्रच्छविनयान्विता ॥ प्रियायैगिरिशस्तस्यैगूढंव्याख्यातवान्स्वयम् ॥ १९ ॥ पुराणोत्तममध्यात्मरामायणमितिस्मृतम् ॥ तत्पार्वतीजगद्धात्रीपूजयित्वादिवानिशम् ॥ २० ॥ आलोचयंतीस्वानंदमग्नातिष्ठतिसांप्रतम् ॥ प्रचरिष्यतितल्लोकेप्राण्यदृष्टवशाद्यदा ॥ २१ ॥ तस्याध्ययनमात्रेण जनायास्यंतिसद्गतिम् ॥ तावद्विजृंभतेपापंब्रह्महत्यापुरःसरम् ॥ २२ ॥ [1]यावज्जगतिनाध्यात्मरामायणमुदेष्यति ॥ तावत्कलिमहोत्साहोनिःशंकंसंप्रवर्तते ॥ २३ ॥ यावज्जगतिनाध्यात्मरामायणमुदेष्यति ॥ तावद्यमभटाःशूराःसंचरिष्यंतिनिर्भयाः ॥ २४ ॥

लोचनेइदमेवकर्म ॥ २० ॥ स्वानंदमग्नास्वस्वरूपानंदमग्नातिष्ठतीतियत्तत्सांप्रतंयुक्तम् ॥ एतदालोचनेनस्वस्वरूपानंदस्यजगदंतर्यामिरूपस्यसम्यग्भानादितिभावः ॥ २१ ॥ २२ ॥ अध्यात्मकेतिष्ठतियःपरात्मारामोऽभ्यतेयत्रहितत्त्वविज्ञैः । अतोऽभिधानंकथितंभवान्यैअध्यात्मरामायणमस्यमेन ॥ मेनभवेन । मःशिवश्चंद्रमावेधाः इत्यभिधानात् संप्रवर्ततेजनेष्वितिशेषः ॥ २३ ॥ निर्भयाःसंचरिष्यति सर्वेषांपापग्रस्तत्वात्कलावितिभावः ॥ २४ ॥

१ अत्रैवं प्रतिभासते । यावज्जगति नाध्यात्मरामायणमुदेष्यति । इत्यर्द्धंपद्यमाधिकमपेक्ष्यते । नचेत्पञ्चविंशतितमश्लोकार्धस्यासंगतिः स्यात् । इति ।

शास्त्राणिन्यायादीनिविवदंतेविवादंकुर्वते आत्मविषयेइत्यर्थः कर्ताभोक्ताज्ञानाश्रयआत्मापरस्परंभिन्नइतिकाणादागौतमाश्च षोडशादिपदार्थानांपरस्परमात्म
निभेदज्ञानान्मुक्तिरित्यादिच ज्ञानस्वरूपाअनेकेजीवास्तेषां प्रकृत्यादिभ्योभेदज्ञानान्मोक्षइतिसांख्यादयः एकएवचेतनउपाधिभेदान्नानात्वंप्राप्तस्तत्वमस्या
दिवाक्यजश्रवणमनननिदिध्यासनैर्ब्रह्मैवाहमिति ज्ञानादुपाधिविलये स्वस्वरूपेणावस्थानमेव मोक्ष इत्युपनिषत्सिद्धांतोऽध्यात्मरामायणोदये स्फुटोभविष्यती
तितत्तच्छास्त्रवासनाजन्योवादोलयमेष्यतीतिभावः ॥ २५ ॥ रामस्यस्वरूपं सच्चिदानंदाद्वयब्रह्मस्वरूपं महतामपिशास्त्रज्ञानामपिदुर्बोधंभवतीतिशेषः ॥

यावज्जगतिनाध्यात्मरामयणमुदेष्यति ॥ तावत्सर्वाणिशास्त्राणिविवदंतेपरस्परम् ॥ २५ ॥ तावत्स्वरूपंरामस्यदुर्बोधंमहतामपि ॥
यावज्जगतिनाध्यात्मरामायणमुदेष्यति ॥ २६ ॥ अध्यात्मरामायणसंकीर्तनश्रवणादिजम् ॥ फलंवक्तुंनशक्नोमिकात्स्न्येंनमुनिसत्तम ॥
॥ २७ ॥ तथाऽपितस्यमाहात्म्यंवक्ष्येकिंचित्तवानघ ॥ शृणुचित्तंसमाधायशिवेनोक्तंपुरामम ॥ २८ ॥ अध्यात्मरामायणतः श्लोकंश्लो
कार्धमेववा ॥ यःपठेद्भक्तिसंयुक्तःसपापान्मुच्यतेक्षणात् ॥ २९ ॥ यस्तुप्रत्यहमध्यात्मरामायणमनन्यधीः ॥ यथाशक्तिवदेद्भक्त्यासजी
वन्मुक्तउच्यते ॥ ३० ॥ योभक्त्याऽर्चयतेऽध्यात्मरामायणमतंद्रितः ॥ दिनेदिनेऽश्वमेधस्यफलंतस्यभवेन्मुने ॥ ३१ ॥ यदृच्छयाऽ
पियोऽध्यात्मरामायणमनादरात् ॥ अन्यतःशृणुयान्मर्त्यःसोऽपिमुच्येतपातकात् ॥ ३२ ॥ नमस्करोतियोऽध्यात्मरामायणमदूरतः ॥
सर्वदेवार्चनफलंसप्राप्नोतिनसंशयः ॥ ३३ ॥ लिखित्वापुस्तकेऽध्यात्मरामायणमशेषतः ॥ योदद्याद्रामभक्तेभ्यस्तस्यपुण्यफलंशृणु ॥
॥ ३४ ॥ अधीतेषुचवेदेषुशास्त्रेषुव्याकृतेषुच ॥ यत्फलंदुर्लभंलोकेतत्फलंतस्यसंभवेत् ॥ ३५ ॥

॥ २६ ॥ २७ ॥ २८ ॥ अध्यात्मरामायणतःसार्वविभक्तिकः षष्ठ्यंतात्तसिः ॥ २९ ॥ जीवन्मुक्तइति । तल्लक्षणंच । दुःखेष्वनुद्विग्नमनाःसुखेषुविगतस्पृ
हः । वीतरागभयक्रोधःस्थितधीर्मुनिरुच्यते ॥ इत्यादिनागीतायाम् उक्तंचवासिष्ठेऽपि । निद्रादौजागरस्यांतेयोभावउपजायते ॥ तंभावंभावयन्नामजीव
न्मुक्तःसदाभवेत् ॥ ३० ॥ ३१ ॥ अनादरात्यदृच्छयापि नतुपुराणश्रवणविध्युक्तनियमेनेत्यर्थः ॥ ३२ ॥ ३३ ॥ ३४ ॥ अधीतेष्विति । सांगवेदा
ध्ययनेशास्त्रार्थाध्ययनेचयत्पुण्यंदुर्लभंतत्फलंतस्याध्यात्मरामायणपुस्तकदातुर्भवेदित्यर्थः ॥ ३५ ॥

॥ ३६ ॥ ३७ ॥ जागरितः कृतजागरणः ॥ ३८ ॥ आत्मतुल्यंधनमातिप्रियं वस्त्वित्यर्थः । सर्वतोमुखेजलेस्थितइतिशेषः पुष्करंसर्वतोमुखमितिजलपर्याये ष्वभिधानात् ॥ ३९ ॥ व्यासतुल्येभ्यइत्यनेनदेशप्रदेयवस्तुकालसंप्रदानविशेषाणां पुण्यातिशयजनकत्वंसूचितम् ॥ ४० ॥ गायतेइतिपाठेतङार्षः योगायतिमुदेतिपाठस्तुयुक्तएव ॥ ४१ ॥ अनुव्रतःतत्परः ततःस्वभावक्रियमाणकर्मणः ॥ ४२ ॥ तत्राध्यात्मरामायणमध्ये सुसमाहितः स्थिराचित्तः ॥



एकादशीदिनेऽध्यात्मरामायणमुपोषितः ॥ योरामभक्तःसदसिव्याकरोतिनरोत्तमः ॥ तस्यपुण्यफलंवक्ष्येशृणुवैष्णवसत्तम ॥ ३६ ॥ प्रत्यक्षरंतुगायत्रीपुरश्चर्याफलंभवेत् ॥ उपवासव्रतंकृत्वाश्रीरामनवमीदिने ॥ ३७ ॥ रात्रौजागरितोऽध्यात्मरामायणमनन्यधीः ॥ यःपठे च्छृणुयाद्वाऽपितस्यपुण्यंवदाम्यहम् ॥ ३८ ॥ कुरुक्षेत्रादिनिखिलपुण्यतीर्थेष्वनेकशः ॥ आत्मतुल्यंधनंसूर्यग्रहणेसर्वतोमुखे ॥ ३९ ॥ विप्रेभ्योव्यासतुल्येभ्योदत्त्वायत्फलमश्नुते ॥ तत्फलंसंभवेत्तस्यसत्यंसत्यंनसंशयः ॥४०॥ योगायतेमुदाऽध्यात्मरामायणमहर्निशम् ॥ आज्ञांतस्यप्रतीक्षंतेदेवाइंद्रपुरोगमाः ॥ ४१ ॥ पठन्प्रत्यहमध्यात्मरामायणमनुव्रतः ॥ यद्यत्करोतितत्कर्मततःकोटिगुणंभवेत् ॥ ४२ ॥ तत्रश्रीरामहृदयंयःपठेत्सुसमाहितः ॥ सब्रह्मघ्नोऽपिपूतात्मात्रिभिरेवदिनैर्भवेत् ॥ ४३ ॥ श्रीरामहृदयंयस्तुहनूमत्प्रतिमांतिके ॥ त्रिः पठेत्प्रत्यहंमौनीससर्वेप्सितभाग्भवेत् ॥ ४४ ॥ पठञ्छ्रीरामहृदयंतुलस्यश्वत्थयोर्यदि ॥ प्रत्यक्षरंप्रकुर्वीतब्रह्महत्यांनिवर्तयेत् ॥ ४५ ॥ श्रीरामगीतामाहात्म्यंकृत्स्नंजानातिशंकरः ॥ तदर्धंगिरिजावेत्तितदर्धंवेद्म्यहंमुने ॥ ४६ ॥ तत्तेकिंचित्प्रवक्ष्यामिकृत्स्नंवक्तुंनशक्यते ॥ यज्ज्ञात्वातत्क्षणाल्लोकश्चित्तशुद्धिमवाप्नुयात् ॥ ४७ ॥

॥ ४३ ॥ प्रतिमांतिकेप्रतिमासमीपे ॥ ४४ ॥ यस्तुलस्यादिसन्निधौरामहृदयंपठन्प्रकुर्वीतप्रदक्षिणादीतिशेषः ॥ सप्रत्यक्षरंप्रत्यक्षरोच्चारणंब्रह्महत्यांतज्जन्यं पापंनिवर्तयेत् । आत्मनःश्रोतुश्चेतिशेषः ॥ ४५ ॥ अहंब्रह्मा ॥ ४६ ॥ यद्रामगीतामाहात्म्यम् ॥ ४७ ॥



१ संनिधाविति शेषः ।

रामगीता पठ्यमाना इतिशेषः । कदाचन रविग्रहादिकालेऽपि स्नानादिनेतिशेषः । मार्गमाणःअन्वेषयन्नपितद्रामगीतातुल्यतयापापनाशकंवस्तुरामगीता तिरिक्तंनपश्यामीत्यर्थः ॥ ४८ ॥ गीतासुधामितिरूपकम् । अमृतरूपांगीतामित्यर्थः । अमरस्तत्तुल्यः ॥ ४९ ॥ कार्तवीर्यः सहस्रबाहुरर्जुनः ॥ ५० ॥ श्रवणोत्तरंग्रहणम् नारायणकलांनारायणरूपत्वम् ॥ ५१ ॥ ५१ ॥ दुष्प्रतिग्रहेति । दुष्प्रतिग्रहाः । तिलधेनुर्गजोवाजीप्रेतान्नमजिनंमणिः । सुरभिः

श्रीरामगीतां[2]यत्पापंननाशयतिनारद ॥ तन्ननश्यतितीर्थादौलोकेक्कापिकदाचन ॥ तन्नपश्याम्यहंलोकेमार्गमाणोऽपिसर्वदा ॥ ४८ ॥ रामेणोपनिषत्सिंधुमुन्मथ्योत्पादितांमुदा ॥ लक्ष्मणायार्पितांगीतासुधांपीत्वाऽमरोभवेत् ॥ ४९ ॥ जमदग्निसुतः[3]पूर्वंकार्तवीर्यवधेच्छया ॥ धनुर्विद्यामभ्यसितुंमहेशस्यांतिकेवसन् ॥ ५० ॥ अधीयमानांपार्वत्यारामगीतांप्रयत्नतः ॥ श्रुत्वागृहीत्वाऽऽशुपठन्नारायणकलामगात् ॥ ५१ ॥ ब्रह्महत्यादिपापानांनिष्कृतिंयदिवांछति ॥ रामगीतांमासमात्रंपठित्वामुच्यतेनरः ॥ ५२ ॥ दुष्प्रतिग्रहदुर्भोज्यदुरालापादिसंभवम् ॥ पापंयत्तत्कीर्तनेनरामगीताविनाशयेत् ॥५३॥ शालग्रामशिलाग्रेचतुलस्यश्वत्थसन्निधौ ॥ यतीनांपुरतस्तद्वद्रामगीतांपठेत्तुयः ॥ ५४ ॥ सतत्फलमवाप्नोतियद्वाचोऽपिर्नगोचरम् ॥ रामगीतांपठन्भक्त्यायःश्राद्धेभोजयेद्द्विजान् ॥ ५५ ॥ तस्यतेपितरःसर्वेयांतिविष्णोःपरंपदम् ॥ एकादश्यांनिराहारोनियतोद्वादशीदिने[5] ॥ ५६ ॥ स्थित्वागस्त्यतरोर्मूलेरामगीतांपठेत्तुयः ॥ सएवरा[6]घवःसाक्षात्सर्वदेवैश्चपूज्यते ॥ ५७ ॥ विनाध्यानंविनादानंविनातीर्थावगाहनम् ॥ रामगीतांनरोधीत्यतदनंतफलंभवेत् ॥ ५८ ॥

सूयमानाचघोराःसप्तप्रतिग्रहाः ॥ इत्यादिस्मृत्युक्ताः । मणिःशालग्रामः सूयमानासुरभिःउभयतोमुखी दुर्भोज्यं निषिद्धभक्षणम् दुरालापोऽनृतभाषणादिः ॥ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ तद्दानादिअनंतफलंलभेत् अनन्तफलं दानादिफलंतदध्ययनमात्रेणभवेदित्यर्थः ॥ ५८ ॥

---

१ अनेन रामगीतैव परमःपदार्थःप्रदर्शितः । २ एवं च व्यतिरेकतो रामगीताया एव सर्वपापक्षालनसामर्थ्यं समवहितम् । ३ परशुरामः । ४ अनंतमकल्पितं सुफलमित्यर्थः । ५ तिथौ । ६ रामरूपः ।

श्रुतिर्वेदः स्मृतिर्मन्वादिप्रणीता पुराणानिपाद्मादीन्यष्टादश इतिहासोभारतादिः आगमाःपंचरात्रादयः अध्यात्मरामायणस्यतदध्ययनस्यकलांषोडशांशमपि नार्हंति तदध्ययनानीत्यर्थः । सर्वाध्ययनफलत्वादस्येतिभावः ॥ ५९ ॥ पठतीत्यत्रउक्तमाहात्म्याध्यायःकर्म ॥ ६० ॥ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थैत्यादिबिरुदावलीविराजमानस्यहिम्मतिवर्मणःपुत्रस्यश्रीरामवर्मणःकृतौअध्यात्मरामायणाम्बुधिसेतौबालकांडेरामायणमाहात्म्यवर्णनं नामैकषष्टितमोऽध्यायः ॥६१॥ शिवपार्वतीसंवादरूपमध्यात्मरामायणंवक्तुंभगवान्व्यासोनिर्विघ्नार्थंभगवत्स्मरणरूपंमंगलमाचरति । य इति । पृथ्व्यायोदुष्टराक्षसादिजनितोभरोभारस्तस्यवारणायेत्यर्थः । परित्राणायसाधूनांविनाशायचदुष्कृताम् । धर्मसंस्थापनार्थायसंभवामियुगेयुगे ॥ इतिभगवदुक्तेः । दिविजैर्देवैःरावणपीडितैःसंप्रार्थितः सन् चिन्म

बहुनाकिमिहोक्तेनशृणुनारदतत्त्वतः ॥ श्रुतिस्मृतिपुराणेतिहासागमशतानिच ॥ अर्हंतिनाल्पामध्यात्मरामायणकलामपि ॥ ५९ ॥ अध्यात्मरामचरितस्यमुनीश्वरायमाहात्म्यमेतदुदितंकमलासनेन ॥ यःश्रद्धयापठतिवाशृणुयात्समर्त्यःप्राप्नोतिविष्णुपदवींसुरपूज्यमानः ॥ ६० ॥ इतिश्रीब्रह्मांडपुराणे उत्तरखंडेऽध्यात्मरामायणे बालकांडेरामायणमाहात्म्यकथनंनामैकषष्टितमोध्यायः ॥ ६१ ॥ यःपृथ्वीभरवारणायदिविजैःसंप्रार्थितश्चिन्मयः संजातःपृथिवीतलेरविकुलेमायामनुष्योऽव्ययः ॥ निश्चक्रंहतराक्षसःपुनरगाद्ब्रह्मत्वमाद्यंस्थिरां कीर्तिंपापहरांविधायजगतांतंजानकीशंभजे ॥ १ ॥

योऽपिचिद्रूपोऽपिअव्ययोपिपृथिवीतलेरविकुलेमायामनुष्यःसंजातः । तत्रदेवप्रार्थनयाऽयमवतारइत्यर्थोवाल्मीकीयेबालकांडेपंचदशषोडशसर्गयोःस्पष्टएव ॥ अव्ययस्यचिन्मयस्यचकथंजन्म जातस्यचकथमव्ययत्वमुत्पन्नभावस्यनाशावश्यंभावादतउक्तं मायेति । मायानामसत्वासत्वाभ्यामनिर्वाच्यासत्वरजस्तमोगुणाऽघटितघटनासामर्थ्यवतीकाचिदीश्वरशक्तिः । देवात्मशक्तिंस्वगुणैर्निगूढामितिश्रुतेः । दैवीह्येषागुणमयीममामायादुरत्यया । इतिगीतोक्तेश्च ॥ एवंचिन्मयस्याघटितोपिमनुष्यभावोजन्मव्यवहारश्चमायाकृतइतिभावः । तदुक्तंरामतापनीयोपनिषदि । चिन्मयस्याद्वितीयस्यानिष्कलस्याशरीरिणः । उपासकानांकार्यार्थंब्रह्मणोरूपकल्पना ॥ इति । निश्चक्रंनिरवशेषंयथातथाहतराक्षसः जगतांपापहरांस्थिरांकीर्तिंविधायलोकेस्थापयित्वापुनराद्यंब्रह्मत्वंनिरुपाधिब्रह्मरूपमगात् ॥ १ ॥

१—कला तु षोडशो भाग इत्याभिधानिकाः ।

रामस्योक्तंब्रह्मत्वंलक्षणैर्द्रढयति । विश्वेति । विश्वस्यसंसारस्योत्पत्तिलयादिषुएकंहेतुम् । यतोवाइमानिभूतानिजायंते । येनजातानिजीवंति । यत्प्रयंत्य भिसंविशंति । इतिश्रुतेः । प्रयंतियत्रलीनानिभवंतीत्यर्थः । अनेननिमित्तकारणत्वसमानाधिकरणंजगदुपादानकारणत्वंब्रह्मलक्षणंसूचितम् । एकमित्यस हायार्थकम् । तेननिमित्तकारणाभेदःसूचितः । ननुमिथ्याभूतकार्यनिरूपितकारणस्यापिमिथ्यात्वाद्ब्रह्मणासंबंधाभावात्कथमस्यलक्षणत्वमतआह । मायाश्रय मिति मायाश्रयत्वात्तत्कृतमिदमस्यकारणत्वमित्यर्थः । मायिकेनकारणत्वेनमायिकएवब्रह्मणःसंबंधइतिभावः । तदुक्तंश्रुतौ । मायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्व रम् ॥ इति । ननुमायाश्रयत्वेजीवंप्रतिस्वस्वरूपमिवस्वंप्रत्यपिएनंमायाआवृणुयात्तत्राह । विगतमायमिति । विगतामायाआवरणशक्तिरूपायस्मात्तमेनंप्रतिस्वस्वरू

विश्वोद्भवस्थितिलयादिषुहेतुमेकंमायाश्रयंविगतमायमचिंत्यमूर्तिम् ॥ आनंदसांद्रममलंनिजबोधरूपंसीतापतिंविदिततत्त्वमहंनमा मि ॥ २ ॥ पठंतियेनित्यमनन्यचेतसःशृण्वंतिचाध्यात्मिकसंज्ञितंशुभम् ॥ रामायणंसर्वपुराणसंमतंनिर्धूतपापाहरिमेवयांतिते ॥ ३ ॥ अध्यात्मरामायणमेवनित्यंपठेद्यदीच्छेद्भवबंधमुक्तिम् ॥ गवांसहस्रायुतकोटिदानात्फलंलभेद्यः शृणुयात्सनित्यम् ॥ ४ ॥

पावरणशक्तिराहित्वासवीत्यर्थः । अचिंत्यमूर्तिम् । यतोवाचोनिवर्तंते अप्राप्यमनसासह । इतिश्रुतेः । एवंजगदुत्पत्त्यादिकारणत्वरूपंतटस्थलक्षणमुक्तम् । तेन रूपेणाज्ञेयत्वात् । अथस्वरूपलक्षणमाह । अमलंनिजबोधरूपमिति । सत्यंज्ञानमनंतंब्रह्म । इतिश्रुतेः । इदमेवज्ञेयंरूपममलमुपाधिकृतदोषराहितम् जीवस्तूपा धिकृतकर्तृत्वाद्यभिमानवान्तथानेश्वरइतिभावः । निजंस्वाभाविकंबोधरूपमेवयस्यतम् । अनेनरूपांतरंसर्वंमायिकमिति सूचितम् । विदितंतत्त्वंज्ञानंस्वस्यबोध स्वरूपत्वंयेनतम् । तेनरामावतारेशोकक्रोधादिनटवन्नाटनमात्रमितिसूचितम् ॥ २ ॥ हरिमेव हरिसायुज्यमेव ॥ ३ ॥ यःशृणुयात्ससहस्रगुणितायुतवद्गुणित कोटिसंख्यगोदानादधिकफलंलभेदित्यन्वयः ॥ ४ ॥

---

१ शतसहस्रादयोऽनन्तार्थवाचका इत्यनन्तगोदानफलं लभेतेत्यर्थः । श्लोकाभिप्रायस्तु १०००००००००००००० जलधिसंख्याकगोदानफलं लभेतेति ।

पुरारिगिरीतिरामार्णवेतिच्चरूपके । अध्यात्मरामगंगेति अध्यात्मरामजंऽदोअध्यात्मरामायणपरस्तदेवगंगेति अनेनरूपकेणसर्वमहापातकादीनामपिनाशइवि सूचितम् । गंगायास्तन्नाशकत्वस्यसर्वश्रुतिस्मृतीसिद्धत्वात् ॥ ५ ॥ सकलमलहरंवस्तुविषयत्वाद्वाक्यस्यसकलमलहरत्वम् आनंदकंदमितीशविशेषणम् । एतस्यैवानंदस्यमात्रामुपजीवंति । इतिश्रुतेरस्यसर्वानंदमूलत्वेनानंदकंदत्वम् ॥ ६ ॥ देवोद्योतनात् जगन्निवसत्यस्मिन्जगतिनिवसतीतिवाजगन्निवासरतत्सं बुद्धिः तेतुभ्यंनमःअस्तु यतस्त्वंसर्वात्मदृक्सर्वस्वरूपआत्मासर्वात्माब्रह्म । सर्वंखल्विदंब्रह्म । इतिश्रुतेः । तमनिशमात्मरूपतयापश्यतीतिसर्वात्मदृक्अतएव

पुरारिगिरिसंभूताश्रीरामार्णवसंगता ॥ अध्यात्मरामगंगेयंपुनातिभुवनत्रयम् ॥५॥ कैलासाग्रेकदाचिद्रविशतविमलेमंदिरेरत्नपीठेसंविष्टं ध्याननिष्ठंत्रिनयनमभयंसेवितंसिद्धसंघैः॥देवीवामांकसंस्थागिरिवरतनयापार्वतीभक्तिनम्राप्राहेदंदेवमीशंसकलमलहरंवाक्यमानंदकंदम् ॥ ६ ॥ पार्वत्युवाच॥नमोऽस्तुतेदेवजगन्निवाससर्वात्मदृक्त्वंपरमेश्वरोऽसि ॥ पृच्छामितत्त्वंपुरुषोत्तमस्यसनातनंत्वंचसनातनोऽसि॥७॥ गोप्यंयदत्यंतमनन्यवाच्यंवदंतिभक्तेषुमहानुभावाः तदप्यहोऽहंतवदेवभक्ताप्रियोऽसिमेत्वंवदयत्तुपृष्टम् ॥ ८ ॥

परमेश्वरोऽसि । अतःपुरुषोत्तमस्यसर्वेभ्यःपुरुषेभ्यउत्तमस्यतस्यैवब्रह्मणःसनातनमुपाधिरहितम् सोपाधेरूपस्यज्ञानोत्तरंनाशान्नसनातनत्वम् तत्त्वंपृच्छा मि । नन्वसनातनेनमयाकथंतद्वक्तुंशक्यमतआह त्वंचसनातनोऽसित्वमपिसएवासीतित्वदज्ञातंनाकिंचिदितिभावः ॥ ७ ॥ अत्यंतगोप्यम् । इदंतुतेगुह्यतममिति गीतोक्तेः । अनन्यवाच्यंभक्तान्येषुवक्तुमयोग्यम् अहोतदपिमहानुभावाःभक्तेषुवदंतिअतोमेपृष्टंयत्तन्निश्चयेनवद हेदेव यतोऽहं तवभक्ता । ननुमद्भक्तात्वं कुतस्तत्राहयतस्त्वंमेप्रियोसि ॥ ८ ॥

ज्ञानमिति ॥ येनज्ञानेनजनास्तरंतिपुनर्जन्मादिसंसारंनप्राप्नुवंतितत्सविज्ञानंज्ञानंब्रूहि । विज्ञानंनिदिध्यासनपरिपाकजमपरोक्षज्ञानंतत्साहितंतत्फलकमितिया वत् । ज्ञानंश्रवणमननजंपरोक्षंज्ञानंब्रह्मैवसर्वम् ॥ ब्रह्मैवाहमितिच ॥ तरतिशोकमात्मवित् । इतिश्रुतेः । तद्ब्रूहितज्जनकवाक्यंब्रूहीत्यर्थः । तज्ज्ञानंनचवैराग्यं विनावैराग्यंचनभक्तिंविनेत्यतआह । अनुभक्तिवैराग्ययुक्तंचेति भक्तेःपश्चादनुभक्तिजायमानंयद्वैराग्यंतद्युक्तम् । तदुपायबोधकवाक्ययुक्तंचेत्यर्थः । तथा चपातंजलसूत्रम् । दृष्टानुश्रविकविषयवितृष्णस्यवशीकारसंज्ञावैराग्यम् । इति । अनुश्रवोवेदस्तद्बोधितःस्वर्गादिरानुश्रविकः भक्तिरीश्वरानुरागः तथामितं मितशब्दवत् ॥ विभास्वद्विशेषेणभास्वत् । श्रुतिमात्रेण झटित्यर्थप्रत्यायकशब्दबोधजनकवाक्यंयुक्तियुतंब्रूहि । यथायोषिदप्यहंत्वदुक्तंजानामि ॥ ९ ॥

ज्ञानंसविज्ञानमथानुभक्तिवैराग्ययुक्तंचमितंविभास्वत् ॥ जानाम्यहंयोषिदपित्वदुक्तंयथातथाब्रूहितरंतियेन ॥ ९ ॥ पृच्छामिचान्यच्चपरं रहस्यंतदेवचाग्रेवदवारिजाक्ष ॥ श्रीरामचंद्रेऽखिललोकसारेभक्तिर्दृढानौर्भवतिप्रसिद्धा ॥ १० ॥ भक्तिःप्रसिद्धाभवमोक्षणायनान्यत्ततः साधनमस्तिकिंचित् ॥ तथाऽपिहृत्संशयबंधनंमेविभेत्तुमर्हस्यमलोक्तिभिस्त्वम् ॥ ११ ॥ वदंतिरामंपरमेकमाद्यंनिरस्तमायागुणसंप्रवा हम् ॥ भजंतिचाहर्निशमप्रमत्ताः परंपदंयांतितथैवसिद्धाः ॥ १२ ॥

अग्रेप्रथमतःदृढाभक्तिःप्रसिद्धानौर्भवति । भवसागरतरणायेविशेषः ॥ १० ॥ तदेवाह । भक्तिरिति ॥ ततोऽन्यत्साधनंनास्ति अन्यद्धर्मादितत्साधनंभवमोक्ष जनकतत्त्वज्ञानसाधनंनास्तीत्यर्थः । सामुख्येतरापेक्षितत्वात् । सापरानुरक्तिरीश्वरे । इतिभक्तिमीमांसाकृच्छांडिल्यसूत्राभ्यामितरेणज्ञानेनससाधनतयाऽपेक्षित त्वात्साभक्तिर्मुख्येत्याद्यसूत्रार्थः । भक्तिलक्षणपरंचद्वितीयंसूत्रम् । हृत्संशयबंधनंहृद्गतसंशयविषयंरामस्यअनीश्वरत्वम् ॥ ११ ॥ निरस्तस्त्यक्तोमायागुणकृतो रागद्वेषादिसंप्रवाहोयेनतम् । अप्रमत्ताःप्रमादोऽज्ञानंतद्रहिताः । प्रमादंवैमृत्युमहंब्रवीमि । इतिसनत्सुजातीयोक्तेः । तत्रहि । मृत्युर्वैतमः । इतिश्रुतेर्मृत्युपदे नाज्ञानमितिबोध्यम् । तथैवत्वेनप्रकारेणभजनेनैव सिद्धास्तत्त्वज्ञाःसंतःपरंपदंमोक्षंयांतीत्यर्थः ॥ १२ ॥

परमोऽपिरामः स्वाविद्ययामाययासंवृतमावृतमात्मसंज्ञंब्रह्मसज्ञमात्मानंस्वस्वरूपंनजानाति । अतःपरेणब्रह्मणासंबोधितः । परात्माईश्वरस्तद्रूपंस्वंतत्त्वंवेद
जानातीतिकेचिद्वदंति । तथाचवाल्मीकीयेरावणवधानंतरंब्रह्मवाक्यम् । तमुवाचततोदेवःस्वयंभूरमितद्युतिः । प्रगृह्यरुचिरंबाहुंस्मारयन्पूर्वदैहिकम् ॥ भवा
न्नारायणःसाक्षाद्देवश्चक्रायुधःप्रभुः । इत्यादि । उपदेशसाहस्र्यांभगवत्पादैरप्युक्तम् । ब्रह्मादाशरथेर्यद्वदुक्त्यैवापानुदत्तमः । तस्यविष्णुत्वसंबोधेनयत्नां
तरमास्थितः । इति ॥ १३ ॥ सीताकृतेसीतानिमित्तंविलापः सचारण्यककांडकिष्किंधादौवाल्मीकीयेस्पष्टएव । केनसेव्यः । अज्ञस्यजीववत्सेव्यत्वाभा
वादित्यर्थः ॥ १४ ॥ १५ ॥ परात्मनोब्रह्मणः ॥ १६ ॥ एवंपार्वत्यापृष्टःशिवोरामस्वरूपमाह । रामइति ॥ रामःपरात्माब्रह्मैवेत्यर्थः । प्रकृतेरित्यस्या

वदंतिकेचित्परमोऽपिरामःस्वाविद्ययासंवृतमात्मसंज्ञम् ॥ जानातिनात्मानमतःपरेणसंबोधितोवेदपरात्मतत्त्वम् ॥ १३ ॥ यदिस्मजाना
तिकुतोविलापःसीताकृतेऽनेनकृतः परेण ॥ जानातिनैवंयदिकेनसेव्यःसमोहिसर्वैरपिजीवजातैः ॥ १४ ॥ अत्रोत्तरंकिंविदितंभवाद्भिस्तद्ब्रू
तमेसंशयभेदिवाक्यम् ॥ १५ ॥ श्रीमहादेवउवाच ॥ धन्याऽसिभक्ताऽसिपरात्मनस्त्वंयज्ज्ञातुमिच्छातवरामतत्त्वम् ॥ पुरानकेनाप्यभि
चोदितोऽहंवक्तुंरहस्यंपरमंनिगूढम्॥ १६॥ त्वयाऽद्यभक्त्यापरिनोदितोऽहंवक्ष्येनमस्कृत्यरघूत्तमंते ॥ रामःपरात्माप्रकृतेरनादिरानंदएकः
पुरुषोत्तमोहि॥ १७॥स्वमाययाकृत्स्नमिदंहिसृष्ट्वानभोवदंतर्बहिरास्थितोयः॥सर्वांतरस्थोपिनिगूढआत्मास्वमाययासृष्टमिदंविचष्टे ॥ १८॥

न्यइतिअसंसर्गींतिचशेषः । प्रकृतितत्कार्येभ्योऽन्यत्वात्तैरसंसर्गाच्चरामःपरमेश्वरएवेत्यर्थः । जीवस्तुतैरुपाधिभिःसंसृष्टस्तद्धर्मकर्तृत्वाद्यभिमानवानितिभावः ।
अतएवानादिरेकआनंदः । कार्यानंदव्यावृत्तयेअनादिरिति । एवंचानंदंब्रह्म एकमेवाद्वितीयंब्रह्मेतिश्रुतिसिद्धंब्रह्मेत्यर्थः । अतएवपुरुषोत्तमःपुरुषेभ्योजीवेभ्य
उत्तमः हि प्रसिद्धमेतदित्यर्थः ॥ १७ ॥ नन्वीदृशस्यमनुष्यादिदेहधारणंकथमतआह । स्वमाययेति ॥ अघटितघटनाशक्तिरूपामाया । मायांतुप्रकृतिंवि
द्यान्मायिनंतुमहेश्वरम् । इतिश्रुतिसिद्धा तयाइदंकृत्स्नंदृश्यंसृष्ट्वाऽतर्बहिरास्थितोयः । तत्सृष्ट्वातदेवानुप्राविशत् । इतिश्रुतेः । तादृशस्यमनुष्यशरीरपरिग्रहो
नाश्चर्याय । तदुक्तं गीताभाष्ये । भूतानामीश्वरोनित्यशुद्धबुद्धस्वभावोऽपिस्वमाययादेहवानिवजातइवचलोकानुग्रहंकुर्वन्नुलक्ष्यते स्वप्रयोजनाभावेऽपि

तानुजिघृक्षयेति । नन्वेवंसर्वगतत्वेसर्वज्ञेयःकिंनेत्यतआह । सर्वांतरस्थोऽपिनिगूढआत्मेति । यःपृथिव्यांतिष्ठन्पृथिव्याआंतरः । इत्यादिश्रुत्यासर्वांतरस्थत्वेनोक्तो
ऽपिनिगूढः । एषसर्वेषुभूतेषुगूढोत्मानप्रकाते । दृश्यतेत्वग्र्ययाबुद्ध्यासूक्ष्मयासूक्ष्मदर्शिभिः इतिश्रुतेः । तादृशस्यसत्त्वेव्यवहारकालिकमपिमानमाह । स्वमाय
येति । स्वाज्ञानकल्पितयामाययेत्यर्थः । अयंभावः । नित्यशुद्धादिरूपेश्वरस्वरूपाज्ञानेनतस्याघटितघटनासामर्थ्यापरपर्यायायामायाख्यात्रिगुणाशक्तिरुपाधिक
ल्पितावच्छेदैस्तत्स्वरूपैर्जीवैःकल्पिता साचस्वजातीयमेवसंसारमुच्चावचंप्रसूते अतएवतत्स्वरूपज्ञानेसकार्यायास्तस्यानाशः रज्जुज्ञानेनेवरज्जुकल्पितभुजंगस्यभ
यकंपादिकार्यसहितस्य । नचजीवैस्तत्कल्पनात्तत्सृष्टोपाधिभिश्चजीवतेत्यन्योन्याश्रयः । अनादित्वेनापिपरिहारात् ॥ नन्वेकस्यतत्त्वज्ञानेनतन्नाशेसंसारोच्छेदा
पत्तिः । एकरज्जौयुगपद्दशानांसर्पभ्रमेएकस्यरज्जुज्ञानेनतस्यसर्पभ्रमकार्येभयकंपादौनिवृत्तेऽपिअन्येषांतद्दर्शनेनतदनिवृत्तिवदुपपत्तेरिति । तयासृष्टमिदंविचष्टेपश्यति
एवंचद्रष्टृत्वेनतत्सिद्धिः । नान्योऽतोऽस्तिद्रष्टा । इतिश्रुतेः । एकेनैवाकाशेनोपाधिभेदात्घटाकाशादिव्यवहारवत् एकेनैवचेतनेनोपाधिभेदादनेकजीवव्य

जगंतिनित्यंपरितोभ्रमंतियत्सन्निधौचुंबकलोहवद्धि ॥ एतन्नजानंतिविमूढचित्ताःस्वाविद्ययासंवृतमानसाये ॥ १९ ॥

वहारोपपत्तौचेतनानेकत्वेमानाभावात् द्रष्टृत्वेनतत्सिद्धिरितिभावः । नचतत्तदज्ञानरूपोपाधिविशिष्टस्यैवजीवत्वेजीवस्याज्ञानमिति व्यवहारानापत्तिः ।
भार्याविशिष्टस्यैवगृहस्थत्वेऽपिगृहस्थस्यभार्येतिवदुपपत्तेरिति दिक् ॥ १८ ॥ चेतनस्वीकारेमानांतरमाह । जगतीति ॥ जगंतिजगदंतःकरणानियत्सन्निधौनित्यं
परितोभ्रमंतिस्वस्वचेष्टांकुर्वंति । अन्यथासर्वस्यजडत्वाच्चेतनाभावेजगदांध्यप्रसंगइतिभावः । ननुनिष्कलंनिष्क्रियंशांतम् । इतिश्रुतेस्तस्यनिष्क्रियतयाकथंतेनान्ये
षांव्यापारसंपादनमतआह । चुंबकलोहवद्धीति । यथानिष्क्रियोऽपिचुंबकमणिर्लोहंशक्तिविशेषात्सान्निधिमात्रेणचालयति तथाचेतनोनिष्क्रियोऽपिस्वमायावैचि
त्र्यादेवतानिसन्निधिमात्राद्व्यापारयतीत्यर्थः । तदुक्त[1]माचार्यैः । अनापन्नविकारःसन्नयस्कांतवदेवयः । बुद्ध्यादीँश्चालयेत्प्रत्यक्सोऽहमित्यवधारयेत् ॥ इति । एत
न्मायागुणास्पृष्टत्वादिरूपंरामस्वरूपंयेजनानजानंति । अज्ञानेहेतुर्विमूढचेतसः । विमूढचेतस्त्वेहेतुः स्वाविद्ययासंवृतमानसाइति । स्वोपाधिभूतयाअविद्ययाविद्या
विरोधिभावदार्ढ्यरूपयासंवृतांतःकरणाः ॥ १९ ॥

१–शंकराचार्यैः ।

अतस्तेजीवाःशुद्धबुद्धे शुद्धत्वं मायादोषानाक्रांतत्वेन बुद्धेज्ञानस्वरूपे निरस्तमायेस्वज्ञानवतांनिरस्तामायायेनतादृशे । मामेवयेप्रपद्यंतेमायामेतांतरंतिते । इतिगीतोक्तेः । ईदृशेरामेस्वाज्ञानंसुतरामारोपयंति । स्वस्याज्ञत्वाद्राममज्ञमितिजानंतीत्याशयः । तेषांदुष्टफलमाह । संसारमिति । तेपुत्रादिसक्ताःपुरुकर्मयुक्ताःभूरियज्ञादिकर्मयुक्ताःसंसारमेवानुसरंति ॥ यतस्तेयथाऽज्ञाःकंठगतंचामीकरंस्वर्णालंकारंनजानंति एवंहृदयेस्थितंरामंतेनजानंति। अतःसंसारमेवानुसरंतीत्यर्थः॥ २०॥ किंचपरात्मन्यज्ञानासंभवइतिदृष्टांतेनाह । यथेतिं । अप्रकाशस्तमोयथारवौज्योतिःस्वभावे ज्योतिःस्वरूपेनविद्यते । तथा विशुद्धविज्ञानेननिर्विशेषापरोक्षज्ञानेनघनेनिबिडेपरतःपरमात्मनिउत्कृष्टेभ्योऽप्युत्कृष्टेरामेअविद्याकथंस्यात् । तादृशेवस्तुन्यविद्यानवकाशादितिभावः । तदुक्तमाचार्यैः[1] । अप्रकाशोयथादित्येनास्तिज्योतिःस्वभावतः। नित्यबोधस्वरूपत्वान्नाज्ञानंतद्वदात्मनि ॥ इति ॥ २१ ॥ ननुस्वाज्ञानेनराममज्ञंव्यवहरतिजनइत्युक्तमसंगतम् । अन्यगतस्यान्यत्रारोपासंभवादित्याशं

स्वाज्ञानमप्यात्मनिशुद्धबुद्धेस्वारोपयंतीहनिरस्तमाये ॥ संसारमेवानुसरंतितेवैपुत्रादिसक्ताःपुरुकर्मयुक्ताः ॥ जानंतिनैवंहृदयेस्थितंवैचामीकरंकंठगतंयथाज्ञाः ॥२०॥ यथाऽप्रकाशोनतुविद्यतेरवौज्योतिःस्वभावेपरमेश्वरेतथा ॥ विशुद्धविज्ञानघनेरघूत्तमेविद्याकथंस्यात्परतःपरात्मनि॥२१॥यथाहिचाक्ष्णाभ्रमतागृहादिकंविनष्टदृष्टेर्भ्रमतीवदृश्यते ॥ तथैवदेहेंद्रियकर्तुरात्मनःकृतंपरेऽध्यस्यजनोविमुह्यति॥२२॥ नाहर्नरात्रिःसवितुर्यथाभवेत्प्रकाशरूपाव्यभिचारतःक्वचित् ॥ ज्ञानंतथाऽज्ञानमिदंद्वयंहरौरामेकथंस्थास्यतिशुद्धचिद्घने ॥ २३ ॥

क्यसदृष्टांततयामोहंजीवउपपादयति । यथेति । यथाविनष्टदृष्टेर्दोषयुक्तदृष्टेःपुरुषस्यभ्रमताक्ष्णागृहादिकंभ्रमतीव । उत्प्रेक्षेयम् । भ्रमतीवेतिगृह्यते तेनैवनष्टदृष्टिना । पुरुषेणेतिशेषः । तथैवदेहेंद्रियावच्छिन्नस्यकर्तुरात्मनोंऽतःकरणस्याहंकाराख्यस्यकृतंपरेसर्वधर्मालिप्तेतदनवच्छिन्नेचेतनेऽध्यस्यजनोजीवो मुह्यति अहंकर्तेतिमोहंप्राप्नोति । एवंचयथाक्षिगतभ्रमणस्यगृहादावारोपः यथाचांतःकरणधर्मस्यकर्तृत्वादेरात्मन्यारोपस्तथास्वाज्ञानस्यरामेआरोपइत्याशयः ॥ २२ ॥ भगवतिरामेस्वतोज्ञानमज्ञानंवानसंभवतीतिपुनरपिदार्ढ्यायोक्तंयुक्तमेवाह । नाहरिति ॥ सूर्येप्रतिरात्रिदिवसविभागाभावेहेतुः प्रकाशरूपाव्यभिचारतः । क्वचित्क्वापीत्यर्थः । ज्ञानाज्ञानयोर्भगवत्यनवस्थितौहेतुःशुद्धचिद्घनत्वम् ॥ २३ ॥

---

[1] शंकराचार्यैः ।

उपसंहराते । तस्मादिति ॥ परानंदमये सर्वभूतैरेतदानंदमात्रायाउपजीवनात् । विज्ञानरूपेनिर्विकल्पकज्ञानरूपेतमोऽज्ञानरूपम् । तमसोऽसंबंधेहेतुद्वयम् । अज्ञानसाक्षित्वंमायाधिष्ठातृत्वरूपंमायाश्रयत्वंच मोहकारणंतमोऽज्ञानम् । योयन्मायाधिष्ठातासतद्विषयाज्ञानहीनइतिलोकेदर्शनादितिभावः । नन्वेवंसतिब्रह्मादाशरथेर्यद्वदुक्तयैवापानुदत्तमइत्याद्याचार्याद्युक्तेःकागतिरितिचेच्छृणु । रावणवधार्थंमनुष्यत्वनाटनायभगवतासंकल्पपूर्वंकृतस्यस्वमाहात्म्याच्छादनस्यतत्रतमःशब्देनोक्तेरदोषात् । उक्तंहिसंक्षेपशारीरके । संकल्पपूर्वकमभूद्रघुनंदनस्यनाहंविदानइतिकंचनकालमेतत् । ब्रह्मोपदेशमुपलभ्यनिमित्तमात्रंतच्चोत्ससर्जसकृतेसतिदेवकार्ये ॥ इति । भागवतेऽप्युक्तम् । स्त्रीसंगिनांगतिरितिप्रथयंश्चचार । इति ॥ २४ ॥ मरुत्सूनुर्वायुपुत्रोहनूमान् ॥ २५ ॥ रामायणेरामायणप्रवर्तकेरामावतारकालेइत्यर्थः ॥ देवकंटकंदेवद्रोहिणम् ॥ २६ ॥ २७ ॥ परिवृतःसीतादिभिरितिशेषः ॥ २८ ॥ पुरतः स्थितमग्रेस्थितम् । अनेनगुरूपसदनंदर्शितम् । निराकांक्षंज्ञानेतरधनादिनिरपेक्षम् ॥ २९ ॥ तत्त्वंमत्स्वरूपतत्त्वंनिष्कल्मषोऽयमित्यनेनज्ञानाधिकारित्वंसूचितम् । नौआवयोः ॥ ३० ॥ रामस्यतत्त्वंश्रोतुर्निश्चितंयथाभवतितथाप्राह । लोकविमोहिनीत्यनेनबंधनकर्तुरेवबंधमोक्षेसामर्थ्यमितिदर्शितम् । राजाज्ञयाबद्धोहितदाज्ञयैवमुच्यतइतिलोकेप्रसिद्धम् । एवंचभागवतीकृपैवमुख्यंमोक्षकारणमितिदर्शितम् ॥ ३१ ॥

तस्मात्परानंदमयेरघूत्तमेविज्ञानरूपेहिनविद्यतेतमः ॥ अज्ञानसाक्षिण्यरविंदलोचनेमायाश्रयत्वान्नहिमोहकारणम् ॥ २४ ॥ अत्रतेकथयिष्यामिरहस्यमतिदुर्लभम् ॥ सीताराममरुत्सूनुसंवादंमोक्षसाधनम् ॥ २५ ॥ पुरारामायणेरामोरावणंदेवकंटकम् ॥ हत्वारणेरणश्लाघीसपुत्रबलवाहनम् ॥ २६ ॥ सीतयासहसुग्रीवलक्ष्मणाभ्यांसमन्वितः ॥ अयोध्यामगमद्रामोहनूमत्प्रमुखैर्वृतः ॥ २७ ॥ अभिषिक्तःपरिवृतोवसिष्ठाद्यैर्महात्मभिः ॥ सिंहासनेसमासीनःकोटिसूर्यसमप्रभः ॥ २८ ॥ दृष्ट्वातदाहनूमंतंप्रांजलिंपुरतःस्थितम् ॥ कृतकार्यंनिराकांक्षंज्ञानापेक्षंमहामतिम् ॥ २९ ॥ रामःसीतामुवाचेदंब्रूहितत्त्वंहनूमते ॥ निष्कल्मषोऽयंज्ञानस्यपात्रंनौनित्यभक्तिमान् ॥ ३० ॥ तथेतिजानकीप्राहतत्त्वंरामस्यनिश्चितम् ॥ हनूमतेप्रपन्नायसीतालोकविमोहिनी ॥ ३१ ॥

जानकीप्राहेत्युक्तंतदाह । राममिति ॥ रामंपरंब्रह्मविद्धि । रमंतेयोगिनोऽनंतेनित्यानंदेचिदात्मनि । इतिरामपदेनेदंपरंब्रह्माभिधीयते ॥ इतिरामतापनीयेपाद्मे चोक्तेः । सद्बाधहीनम् । सत्यत्वंबाधराहित्यंजगद्बाधैकसाक्षिणः । बाधःकिंसाक्षिकोब्रूहिनत्वसाक्षिकइष्यते ॥ इत्युक्तेः । चिज्ज्ञानस्वरूपम् । आनंदंतद्रूपम् । अद्वयम् । एकमेवाद्वितीयंब्रह्म । इतिश्रुतेः । सर्वोपाधिविनिर्मुक्तंस्थूलसूक्ष्मसकलोपाधिनिर्मुक्तम् । विराड्ढिरण्यगर्भश्चकारणंचेत्युपाधयः । ईशस्ययत्रिभिर्हीनंतुरीयंतत्पदंविदुः ॥ इतिवार्तिकम् । किंच सर्वोपाधिभिर्धर्मैर्वैनिर्मुक्तमस्पृष्टमित्यर्थः । सत्तामात्रंवस्तुमात्रेसदितिव्यवहारनियामकमित्यर्थः । एतत्संबंधादेवसर्वत्र सदितिव्यवहारइतिभावः । अगोचरंमनोवचसोरप्यविषयमित्यर्थः । यतोवाचोनिवर्ततेअप्राप्यमनसासह । इतिश्रुतेः ॥ ३२ ॥ आनंदंतत्त्वेनविपुलत्वमुपलक्ष्यते । योवैभूमातत्सुखंनाल्पेसुखमस्ति । इतिश्रुतेः । निर्मलंरजोहीनम् । शांतंप्रपंचोपशमत्वात् । प्रपंचोपशमंशिवंशांतम् । इतिश्रुतेः । निर्विकारं जायतेऽस्तिवर्धते विपरिणमतेऽपक्षीयतेनश्यतीतिषड्भावविकारहीनम् । नजायते म्रियतेवेतिगीतोक्तेः । अनेनापरिणामित्वंसूचितम् । निरंजनमविद्यातत्कार्यरूपतमोहीनम् ।

सीतोवाच ॥ रामंविद्धिपरंब्रह्मसच्चिदानंदमद्वयम् ॥ सर्वोपाधिविनिर्मुक्तंसत्तामात्रमगोचरम् ॥ ३२ ॥
आनंदंनिर्मलंशांतंनिर्विकारंनिरंजनम् ॥ सर्वव्यापिनमात्मानंस्वप्रकाशमकल्मषम् ॥ ३३ ॥

आदित्यवर्णंतमसःपरस्तात् । इत्युक्तेः । सर्वव्यापित्वादेवात्मानम् ।अततिव्याप्नोतीत्यात्मा । सर्वव्यापीसर्वभूतांतरात्मा । इतिश्रुतेः । स्वप्रकाशम् । अत्रायंपुरुषः स्वयंज्योतिरिति । यस्यभासासर्वमिदंविभाति । इतिश्रुतेः । अकल्मषम् । आत्मापहतपाप्मा । इतिश्रुतेः । सदादिशब्दानांकल्पितप्रवृत्तिनिमित्तभेदादिहपर्यायत्वे नसहप्रयोगः । यानित्वभावमुखेनबोधकानितेषुनकाप्यनुपपत्तिः । एवंचापाततः कल्पितप्रवृत्तिनिमित्तप्रकारकबोधेवृत्तेशुद्धचित्तस्यश्रुतौसर्वधर्मरहितत्वेनब्रह्मोक्त्या धर्माशेकल्पितत्वग्रहेशुद्धनिर्धर्मकब्रह्मबोधःसर्वैः पदैर्भवतीतिबोध्यम् । तत्रदुर्बोधस्यात्मतत्त्वस्यबोधार्थंपुनःपुनःशब्दतोऽर्थतश्चपरमकरुणावतीभगवतीसीताहनूमते बोधयामासेतिद्रष्टव्यम् ॥ ३३ ॥

नन्वेवंविधोरामश्चेज्जगत्कारणत्वायसंभवस्तस्मिन्निति कुतोजगदुत्पत्त्यादीत्यत आह ॥ मामिति ॥ मूलप्रकृतिंसर्वजगदुपादानकारणमित्यर्थः । प्रकृतिशब्दस्यो
पादानकारणेप्रसिद्धेः । तत्तदुपादानकारणानांमहदादीनामप्युपादानकारणत्वान्मूलप्रकृतित्वमस्याः । मां मायांतुप्रकृतिंविद्यादितिश्रुतिप्रसिद्धांब्रह्मण्यध्यस्तांत
तोभेदाभेदाभ्यांसत्त्वासत्त्वाभ्यांचअनिर्वचनीयामनादिमैश्वरींमायाम् । ऐश्वरीत्वंचास्याईश्वरस्वरूपज्ञानरूपत्वेनेतिबोध्यम् । एषाचजीवाश्रितेवेश्वरसन्निधाना
त्तद्रूपेणविवर्ततेइतिबोध्यम् । मूलप्रकृतित्वमेवस्फुटयति सर्गस्थित्यंतकारिणीमिति । उत्पत्तिस्थितिप्रलयकर्त्रीं । नन्वेवं तदैक्षतबहुस्यांप्रजायेय । इतिश्रुतेः ।
यतोवाइमानिभूतानिजायंते । येनजातानिजीवंति । यत्प्रयंत्यभिसंविशंति इतिब्रह्मप्रकरणस्थश्रुतेश्चब्रह्मणोजगत्कारणत्वंलभ्यते तद्विरुद्धचेतेत्यत्राह । तस्यस
न्निधीति । यथेंद्रजालिकमायाशक्तेस्तत्तन्मंत्रनिष्ठायाऐंद्रजालिकंविनानस्वकार्यसामर्थ्यं तथास्याः शक्तेस्तत्सन्निधानेनैवजगत्स्रष्टृत्वमितितत्रतदुपचारः ।
यथागृहिणीवैशिष्ट्येनैवसिद्धस्वरूपस्यगृहस्थस्यस्वसंबंधजसंकल्पवशवर्तिनीगृहिणीतथामायावैशिष्ट्येनैवसिद्धस्येश्वरस्यस्वसंगजतत्संकल्पवशवर्तिन्यहमित्याह ।

मांविद्धिमूलप्रकृतिंसर्गस्थित्यंतकारिणीम् ॥ तस्यसान्निधिमात्रेणसृजामीदमतंद्रिता ॥ ३४ ॥ तत्सान्निध्यान्मयासृष्टंतस्मिन्नारोप्यतेऽ
बुधैः ॥ अयोध्यानगरेजन्मरघुवंशेऽतिनिर्मले ॥ ३५ ॥ विश्वामित्रसहायत्वंमखसंरक्षणंततः ॥ अहल्याशापशमनंचापभंगोमहेशितुः ॥
॥ ३६ ॥ मत्पाणिग्रहणंपश्चाद्भार्गवस्यमदक्षयः ॥ अयोध्यानगरेवासोमयाद्वादशवार्षिकः ॥ ३७ ॥

अतंद्रितातत्संकल्पितेऽर्थेनिरालस्येत्यर्थः ॥ तदुक्तं वाल्मीकीये राममंप्रतिकालवचनेन । संक्षिप्येहपराँल्लोकानेकस्त्वंमाययासह । भार्ययाशुभयादेव्यामांत्वं
पूर्वमजीजनः । इति । एवंचमद्गतजगत्स्रष्टृत्वादेस्तत्रारोपइतिभावः ॥ ३४ ॥ यद्यपिमायाशबलेईश्वरेएवजगदुपादानत्वं निमित्तत्वंच । जगतस्तदुपादानं
मायामादायतामसीम् । निमित्तंशुद्धसत्त्वांतामुच्यतेब्रह्मतद्गिरा ॥ इत्यभियुक्तोक्तेस्तथाऽपिविशिष्टस्यविशेषणविशेष्योभयानतिरेकेणमायागतस्यतस्यभगवत्यारोपेणै
वतथाव्यवहारइत्याह । तदितियतस्तत्सान्निध्यान्मयासृष्टमतस्तत्स्रष्टृत्वादि अबुधैस्तत्स्वरूपानभिज्ञैस्तत्रारोप्यते रज्जौसर्पइवेतिभावः । एतदेवद्रढयितुंकानिचित्स्व
कृतानितत्रारोप्याणिदर्शयति । अयोध्येत्यादि ॥ ३५ ॥ ३६ ॥ ३७ ॥

मायामारीचमरणंमायागृहीतमृगरूपमारीचमरणमित्यर्थः । मायासीताहृतिरिति । तदुक्तं कूर्मपुराणे उत्तरखंडेचतुस्त्रिंशेऽध्याये । रामस्यसुभगांभार्यांरावणोराक्षसेश्वरः । सीतांविशालनयनांचकमेकालनोदितः ॥ गृहीत्वामाययावेषंचरंतींविजनेवने । समाहर्तुंमनश्चक्रेतापसःकिलकामिनीम् ॥ विज्ञायसाचतद्भावंस्मृत्वादाशरथिंपतिम् । जगामशरणंवह्निमावसथ्यंशुचिस्मिता ॥ प्रपद्येपावकंदेवंसाक्षिणंविश्वतोमुखम् । आत्मानंदीप्तवपुषंसर्वभूतहृदिस्थितम् ॥ इत्याद्यष्टश्लोकानुक्त्वा । इतिवह्न्यष्टकंजप्त्वारामपत्नीयशस्विनी । ध्यायंतीमनसातस्थौराममुन्मीलितेक्षणा ॥ अथावसथ्याद्भगवान्हव्यवाहोमहेश्वरः ॥ आविरासीत्सुदीप्तात्मातेजसानिर्दहन्निव ॥ सृष्ट्वामायामयींसीतांसरावणवधेच्छया । सीतामादायरामेष्टांपावकोंऽतरधीयत ॥ कृत्वातुरावणवधंरामोलक्ष्मणसंयुतः । समादायाभवत्सीतांशंकाकुलितमानसः । साप्रत्ययायभूतानांसीतामायामयीपुनः। विवेशपावकंदीप्तंददाहज्वलनोऽपिताम् ॥ दग्ध्वामायामयींसीतांभगवानुग्रदीधितिः । रामायादर्शयत्सीतांपावकोऽसौसुरप्रियः । एतत्पतिव्रतानांवैमाहात्म्यंकथितंमया ॥ स्त्रीणांसर्वाघशमनंप्रायश्चित्तंपरंस्मृतम् ॥ इति । अनेनस्त्रीणामेवंविधोऽग्निप्रवेशोनदोषाय

दंडकारण्यगमनंविराधवधएवच ॥ मायामारीचमरणंमायासीताहृतिस्तथा ॥ ३८ ॥ जटायुषोमोक्षलाभःकबंधस्यतथैवच ॥ शबर्याःपूजनंपश्चात्सुग्रीवेणसमागमः ॥ ३९ ॥ वालिनश्चवधःपश्चात्सीतान्वेषणमेवच ॥ सेतुबंधश्चजलधौलंकायाश्चनिरोधनम् ॥ ४० ॥

विपरीतंसर्वपापहरश्चेतिसूचितम् । वाल्मीकीयेऽपि । मारीचवधार्थंगतेरामेरामहतेनतेनरामशब्दसदृशशब्दैराक्रोशेकृतेलक्ष्मणस्यरामसहायार्थंगमनप्रेरणावसरेअरण्यकांडे । अपित्वासहरामेणपश्येयंपुनरागतः । लक्ष्मणेनैवमुक्तातुरुदतीजनकात्मजा ॥ प्रत्युवाचततोवाक्यंतीव्रबाष्पपरिप्लुता । गोदावरींप्रवेक्ष्यामिहीनारामेणलक्ष्मण ॥ आबंधिष्येऽथवात्यक्षेविषमेदेहमात्मनः । इति । विषमेभृग्वादौस्थित्वाततःप्रपातेनेत्यर्थः । पिबामिवाविषंतीक्ष्णंप्रवेक्ष्यामिहुताशनम् ॥ नत्वहंराघवादन्यंकदाऽपिपुरुषंस्पृशे । इतिसीतोक्त्यासूचितोऽयमर्थः । अन्यथैवंप्रविज्ञायरावणशरीरस्पर्शेजगन्मातुःप्रतिज्ञाहानिःस्यात् । तस्मात्प्रवेक्ष्यामिहुताशनमित्यनेन स्वकर्तव्यार्थएवोक्तइतिमंतव्यम् । एतत्प्रवेशादेवहनुमत्पुच्छसंबद्धाग्निनालंकादाहोपपत्तिः । अन्यथारावणवशीकृतेनलोकपालाग्निनाकथंतन्नगरदाहःस्यात् । एतच्छक्तिप्रवेशेतुतस्यस्वातंत्र्यहान्यातदुपपत्तिरित्यलम् ॥ ३८ ॥ ३९ ॥ ४० ॥

॥ ४१ ॥ एवमादीनि ब्राह्मणेभ्योदानादीन्यादिशब्दाद्ग्राह्याणि । निर्विकारे जन्मादिरहिते आरोपयंति एवंजगत्कर्तृत्वादिकमपि मन्निष्ठमेव रामे आरोपयंतीत्यर्थः ॥ ४२ ॥ निर्विकारत्वमेव रामस्योपपादयति । रामइति । निष्कलंनिष्क्रियंशांतम् । इत्यादिश्रुतेः । आनंदमूर्तिरानंदस्वरूपः अचलःकूटस्थोऽतएवपरिणामहीनः मायागुणान्माययासृष्टपदार्थाननुगतस्तदधिष्ठानत्वेनास्थितस्तथाविभातिसृष्टिरूपोभाति । यथारज्ज्ववच्छेदेनसर्पाकारोंतःकरणपरिणामइतिरज्जुःसर्पात्मनाभाति एतदेव विवर्तोपादानत्वमित्याहुः । सचसर्पाकारोंऽतःकरणपरिणामःसत्त्वासत्वाभ्यामनिर्वचनीयइत्युच्यते । एवंप्रपंचोऽप्यनिर्वचनीयइतिदिक् ॥ ४३ ॥ उपस्थितमात्मनोऽद्वितीयत्वेजीवेश्वरादिव्यवस्थाकथमितिजिज्ञासयोपपन्नम् । आत्माईश्वरःअनात्माचिदाभासोजीवःपरात्माशुद्धचैतन्यम् ॥ ४४ ॥ तेषांतत्त्वमेवसदृष्टांतमाह । आकाशस्येति ॥ एकस्याकाशस्यत्रिविधोभेदः महाकाशोजलाशयावच्छिन्नआकाशःप्रतिबिंबाकाशश्चेतिभेदात् । तदेवाह । महानिति । महाकाशइ

रावणस्यवधोयुद्धेसपुत्रस्यदुरात्मनः ॥ विभीषणे राज्यदानंपुष्पकेणमयासह ॥ ४१ ॥ अयोध्यागमनंपश्चाद्राज्येरामाभिषेचनम् ॥ एवमादीनिकर्माणिमयैवाचरितान्यपि ॥ आरोपयंतिरामेऽस्मिन्निर्विकारेऽखिलात्मनि ॥ ४२ ॥ रामोनगच्छतिनतिष्ठतिनानुशोचत्याकांक्षते त्यजतिनोनकरोतिकिंचित् ॥ आनंदमूर्तिरचलःपरिणामहीनोमायागुणाननुगतोहितथाविभाति ॥ ४३ ॥ श्रीमहादेवउवाच ॥ ततोरामः स्वयं प्राहहनूमंतमुपस्थितम् ॥ शृणुतत्वंप्रवक्ष्यामिह्यात्मानात्मपरात्मनाम् ॥ ४४ ॥ आकाशस्ययथाभेदस्त्रिविधोदृश्यतेमहान् ॥ जलाशयेमहाकाशस्तदवच्छिन्नएवही ॥ प्रतिबिंबाख्यमपरंदृश्यतेत्रिविधंनभः ॥ ४५ ॥ बुद्ध्यवच्छिन्नचैतन्यमेकंपूर्णमथापरम् ॥ आभासस्त्वपरंबिंबभूतमेवंत्रिधाचितिः ॥ ४६ ॥

त्यर्थः । सएवमहाकाशोजलाशयेतदवच्छिन्नएवभवति । तत्रैवजलाशयेपरंप्रतिबिंबाख्यंदृश्यते । एवंनभस्त्रिविधमित्यर्थः ॥ ४५ ॥ एवंदृष्टांतमुपपाद्यदार्ष्टांतिकमाह । बुद्धीति ॥ सर्वबुद्धिसाक्षितयाबुद्ध्युपहितंचैतन्यम् । पूर्णमुपाधिमंडलस्यविभुत्वाद्विभुसकलबुद्धिसमष्टिरेवमायेति तदवच्छिन्नचैतन्यमीश्वरइत्यर्थः । अथापरमाभासस्तत्तद्बुद्धिप्रतिबिंबभूतोजीवइत्यर्थः । अपरंबिंबभूतम् । एवंचितिस्त्रिधाइत्यर्थः । आभासस्त्वपरंविश्वभूतमितिपाठेबुद्ध्यवच्छिन्नंचैतन्यमेकमित्यनेनेश्वरः पूर्णमथापरमित्यनेनशुद्धमाभासस्त्वपरमितिजीवः । जीवत्वमेवस्फुटयतिविश्वभूतमिति । विश्वशब्देनजाग्रदवस्थाभिमानी विशतिदेहेंद्रियादिष्विति व्युत्पत्तेः । एतत्प्रतिबिंबाकाशस्थानीयमितित्रिधाचितिरित्यर्थइत्याहुः । तत्र द्वौमिथ्याभूतौ उपाध्योर्मिथ्यात्वात् ॥ ४६ ॥

नन्वेवंशुद्धचैतन्येसाक्षीतिव्यवहारानुपपत्तिः साक्षाद्द्रष्टाहिसाक्षी नचशुद्धचैतन्येद्रष्टृत्वमित्यतआह । साभासेति ॥ आभासेनचेतनप्रतिबिंबेनसहितायाबुद्धेरंतःकर
णस्येत्यर्थः । तद्गतंकर्तृत्वमबुधैःसाक्षिणिआरोप्यते तेनायंसाक्षिपदवाच्यइत्यर्थः । अयमाशयः । जानातीत्यादावंतःकरणवृत्तिविशेषरूपाक्रियाज्ञाधातुवाच्या ।
आभासविशिष्टश्चतिङर्थआश्रयः ॥ परस्पराध्यासेनाभासबुद्ध्योर्विवेकाग्रहात् । तदुक्तमाचार्यैः । आत्माभासस्तुतिङ्वाच्योधात्वर्थश्चधियःक्रिया । उभयंचावि
वेकेनजानातीत्युच्यतेमृषा । बुद्धेःकर्तृत्वमध्यस्यजानातीतिज्ञउच्यते । तथाचैतन्यमध्यस्यज्ञत्वंबुद्धेरिहोच्यते ॥ इति । आत्माभासइतिबहुव्रीहिः । धियोंऽतःकर
णस्य । तदेवाह । उभयंचेतिमृषेति आभासबुद्धितत्क्रियाणांमिथ्यात्वादयंव्यवहारोऽपिमिथ्येत्यर्थः । एवंचसाभासबुद्धिगतद्रष्टृत्वस्याविच्छिन्नेऽपरिच्छिन्नेऽविका
रिणिसाक्षिणिबुद्धितादात्म्यापन्नाभासतादात्म्याध्यासेनारोपः तथाजीवोनित्यःसत्यइत्यादिव्यवहाराज्जीवत्वमपितत्रारोप्यतइत्यर्थः ॥ ४७ ॥ आत्माभासमादा
यनूनंतथाव्यवहारसंभवइत्याह ॥ आभासस्त्विति ॥ तस्यमृषात्वादविद्याकार्यत्वाच्चतथाव्यवहारस्यतमादाय नोपपत्तिरित्यर्थः । नदर्पणेमुखमस्तिमिथ्यैवात्रदर्प

साभासबुद्धेःकर्तृत्वमविच्छिन्नेऽविकारिणि॥साक्षिण्यारोप्यतेभ्रांत्याजीवत्वंचतथाऽबुधैः॥४७॥आभासस्तुमृषाबुद्धिरविद्याकार्यमुच्यते॥
अविच्छिन्नंतुतद्ब्रह्मविच्छेदस्तुविकल्पतः॥४८॥अविच्छिन्नस्यपूर्णेनएकत्वंप्रतिपाद्यते॥तत्त्वमस्यादिवाक्यैश्चसाभासस्याहमस्तथा॥४९॥

णेमुखमभादित्येवंसर्वसिद्धबाधानुभवात् । अतएवासावविद्याकार्यं ग्रीवास्थमुखेआदर्शस्थत्वंत्वाध्यासिकंनतुवास्तवमितिबोध्यम् । आभासासत्यत्वंचाकरेप्रपंचितम् ।
विस्तरभयान्नेहोच्यते । ननूक्तंत्रैविध्यंकिं चितेर्वास्तवं नेत्याह । अविच्छिन्नंविच्छेदोभेदस्तद्रहितम् । नन्वेवंत्रिधाचिविरित्यसंगतंतत्राह । विच्छेदइति । भेदइ
त्यर्थः । विकल्पतः उपाध्यध्यासकृतइत्यर्थः । एवंजीवानांपरस्परंभेदोऽप्यध्यासकृतएवेतिबोध्यम् ॥ ४८ ॥ कल्पितभेदसत्त्वेप्रमाणमाह ॥ अविच्छिन्नस्येति ॥
अवच्छेदोभेदस्तद्वतःआध्यासिकभेदवतः साभासस्याहमस्तत्त्वमस्यादिवाक्यैःपूर्णेनेश्वरेणएकत्वंप्रतिपाद्यते । तथासतिकल्पितभेदेसतिउपपद्यतइतिशेषः । सर्व
थाभेदाभावेतदानर्थक्यंवास्तवेऽपिभेदेतदानर्थक्यं वास्तवस्यवचनशतेनाप्यनिवृत्तिरितिभावः । अत्रावच्छिन्नस्यसाभासस्याहमइत्यनेनत्वंपदार्थोदर्शितः ।
पूर्णेनेत्यनेनतत्पदार्थोदर्शितः ॥ ४९ ॥

एतदेवध्वनयंस्तदुपदेशफलमाह ॥ ऐक्येति ॥ आत्मनोर्जीवेश्वरयोरैक्यज्ञानमहंब्रह्मेतिज्ञानम् । यदेति कर्मानुष्ठानात्पापक्षयेसमुत्पन्ने । कषायेकर्मभिःपक्के ततोज्ञानंप्रवर्तते ॥ इतिस्मृतेः । अयंभावः । जीवेश्वरयोरुपाधिभिन्नयोरैक्यंश्रुत्योच्यमानंबाधितंसत्तत्त्वंपदयोरुपाधिरहितेलक्षणयाबिंबभूतंशुद्धब्रह्मैक्यपरतयाप र्यवस्यतीतिबोध्यम् । एतच्चाकरेविस्तरेणप्रपंचितम् । ब्रह्मैक्यज्ञानफलमाह । तदेति । तादृशज्ञानेसतिनिर्धर्मकत्वेनचिन्मात्रतयातत्स्वरूपज्ञानात्तत्स्वरू पाज्ञानरूपाऽविद्यास्वकार्यैःप्रपंचैःसहनश्यत्येवनसंशयः । एतेनभृष्टबीजवत्कार्यजननासामर्थ्यमेवतस्याज्ञानेनक्रियतइतिपक्षोऽपास्तः । तदुक्तमाचार्यैः । सोऽयमित्यादिवाक्येषुविरोधात्तदिदंतयोः । त्यागेनभागयोरेकआश्रयोलक्ष्यतेयथा ॥ १ मायाविद्येविहायैवमुपाधीपरजीवयोः । अखंडंसच्चिदानंदंपरंब्रह्मैव लक्ष्यते ॥ इति । यथासोऽयंदेवदत्तइत्यादौपूर्वानुभूतत्वरूपतत्तायाइदानीमनुभूयमानस्वरूपेदंतायाश्चत्यागेनदेवदत्तस्वरूपमात्रंलक्ष्यते । मायाबुद्धिःसम

ऐक्यज्ञानंयदोत्पन्नंमहावाक्येनचात्मनोः ॥ तदाऽविद्यास्वकार्यैश्चनश्यत्येवनसंशयः ॥५०॥ एतद्विज्ञायमद्भक्तोमद्भावायोपपद्यते ॥ मद्भ क्तिविमुखानांहिशास्त्रगर्तेषुमुह्यताम् ॥ नज्ञानंनचमोक्षःस्यात्तेषांजन्मशतैरपि ॥ ५१ ॥ इदंरहस्यंहृदयंममात्मनोमयैवसाक्षात्कथितं तवानघ ॥ मद्भक्तिहीनायशठायनत्वयादातव्यमैंद्रादपिराज्यतोऽधिकम् ॥ ५२ ॥ श्रीमहादेवउवाच ॥ एतत्तेऽभिहितंदेविश्रीरामहृदयंम या ॥ अतिगुह्यतमंहृद्यंपवित्रंपापशोधनम् ॥ ५३ ॥

ष्टिरविद्याव्यष्टिरूपेतिबोध्यम् । अपरोक्षज्ञानंमननादिसंस्कृतांतःकरणादेव । दृश्यतेत्वग्र्ययाबुद्धयेतिस्मृतेः । अग्र्ययामननादिसंस्कृतया । शास्त्राचार्योपदेश शमदमादिसंस्कृतंमनआत्मदर्शनेकारणमितिगीताभाष्योक्तेश्चेतिदिक् । उक्तंचनारदीये । तत्त्वमस्यादिवाक्योत्थज्ञानंमोक्षस्यसाधनम् । इति । श्रुतिरपि । तमेवविदित्वातिमृत्युमेतिनान्यःपंथाविद्यतेऽयनाय । इति ॥ ५० ॥ ईदृशज्ञानस्यमुख्यंसाधनमाह । एतदिति ॥ मद्भक्तइतिहेतुगर्भविशेषणम् । मद्भावोम त्सायुज्यम् । भक्तेःकारणत्वदार्ढ्यायभक्तिव्यतिरेकेकार्यव्यतिरेकमाह । मद्भक्तीति । शास्त्रगर्तेषुशास्त्रबोधितक्रियाकलापरूपगर्तेषु ॥ ५१ ॥ ममात्मनोमद्रूपस्य चेतनस्य ॥ ५२ ॥ ५३ ॥

---

१ समष्टिरूपा ।

सर्ववेदांतसंग्रहंसर्ववेदांतप्रतिपाद्यार्थसारसंग्रहरूपम् ॥ ५४ ॥ ५५ ॥ अतिभ्रष्टत्वोपपादकमतिपापीत्यादि । सर्वदेवैः पूज्यंपदंब्रह्मलोकंसलभतइत्यन्वयः॥५६॥ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थे० अध्यात्मरामायणाम्बुधिसेतौबालकांडेश्रीरामहृदयव्याख्यानंनामप्रथमः सर्गः ॥१॥॥ अथपार्वतीशिवोक्तमभिनंदति ॥ धन्याऽस्मीति ॥ अतिसंदेहग्रंथिःयदिरामःपरंब्रह्मतर्हिकथंतस्यशोकादि यदिशोकादिमत्त्वाज्जीवः कथंतदोपास्यत्वम् इत्याकारोमहान्संदेहरूपोग्रंथिः विच्छिन्नः निवृत्तः ॥ १ ॥ भवःसंसारस्तमःहंतिनाशयतितादृशंरामतत्त्वामृतरसायनंरामतत्त्वरूपममृतजनकंरसायनंपिबंत्यामेमनोनतृप्यति ॥ २ ॥ पुनर्विस्तरेणरामकथां

साक्षाद्रामेणकथितंसर्ववेदांतसंग्रहम् ॥ यःपठेत्सततंभक्त्यासमुक्तोनात्रसंशयः॥५४॥ब्रह्महत्यादिपापानिबहुजन्मार्जितान्यपि ॥ नश्यंत्येवनसंदेहोरामस्यवचनंयथा ॥ ५५॥ योऽतिभ्रष्टोऽतिपापीपरधनपरदारेषुनित्योद्यतोवास्तेयीब्रह्मघ्नमातापितृवधनिरतोयोगिवृंदापकारी ॥ यःसंपूज्याभिरामंपठतिचहृदयंरामचंद्रस्यभक्त्यायोगींद्रैरप्यलभ्यंपदमिहलभतेसर्वदेवैःसपूज्यम् ॥ ५६ ॥ ॥ इत्यध्यात्मरामायणेउमामहेश्वरसंवादेबालकांडेश्रीरामहृदयंनामप्रथमःसर्गः ॥ १ ॥ ॥ पार्वत्युवाच ॥ ॥ धन्याऽस्म्यनुगृहीताऽस्मिकृतार्थाऽस्मिजगत्प्रभो ॥ विच्छिन्नोमेऽतिसंदेहग्रंथिर्भवदनुग्रहात् ॥ १ ॥ त्वन्मुखाद्गलितंरामतत्त्वामृतरसायनम् ॥ पिबंत्यामेमनोदेवनतृप्यतिभवापहम्॥ २॥ श्रीरामस्यकथात्वत्तःश्रुतासंक्षेपतोमया ॥ इदानींश्रोतुमिच्छामिविस्तरेणस्फुटाक्षरम्॥ ३ ॥ ॥ श्रीमहादेवउवाच ॥ शृणुदेविप्रवक्ष्यामिगुह्याद्गुह्यतरंमहत् ॥ अध्यात्मरामचरितंरामेणोक्तंपुरामम ॥ ४ ॥ तदद्यकथयिष्यामिशृणुतापत्रयापहम् ॥ यच्छ्रुत्वामुच्यतेजंतुरज्ञानोत्थमहाभयात्॥ प्राप्नोतिपरमामृद्धिंदीर्घायुःपुत्रसंततिम् ॥ ५ ॥

पृच्छति । श्रीरामस्येति ॥ स्फुटाक्षरमितिक्रियाविशेषणम् ॥ ३ ॥ अथमहादेवस्तांकथांविवक्षुस्तत्रश्रोतृप्रवृत्तयेतत्प्रशंसामाह । शृण्विति ॥ आत्मसुइत्यध्यात्मंसर्वात्मसुअंतर्यामितयास्थितस्यरामस्यचरितंतद्वर्णनरूपंकाव्यम् ॥ ४ ॥ तापत्रयमाध्यात्मिकाधिभौतिकाधिदैविकाख्यंदुःखत्रयम् । तत्राद्यंरोगादिजंकामक्रोधादिजंच । द्वितीयंचोरादिनिमित्तम् । तृतीयंग्रहाद्यावेशनिमित्तम् ॥ ५ ॥

१–भूताद्यावेशनिमित्तमित्यर्थः ।

कथांप्रस्तौति । भूमिरिति । रक्षोगणानांभारेणमग्ना स्वाधारजलेइतिशेषः । गोरूपंधृत्वादेवादिभिः सहाब्जासनस्यब्रह्मणोलोकंगत्वाब्रह्मणेउपगतंस्वयंप्राप्तंसर्वंव्यसनं प्राह । सचमुहूर्तंध्यात्वासकलंदुःखकारणंतन्निवृत्तिकारणंचहृदाअवेत्अजानात् । तत्रहेतुः अशेषात्मकत्वात् । सर्वस्वसृज्यसमष्टिरूपत्वादित्यर्थः ॥ ६ ॥ तस्मादिति ॥ अनंतरमितिशेषः । तदनंतरंध्यानानंतरमित्यर्थः । देव्याचभूम्याचसहितइतिशेषः । अखिललोकहृत्स्थंसर्वांतर्यामिणमित्यर्थः । सवाएषआत्मा हृदि । इतिश्रुतेः । अजरम् । एषमहानात्माअजरः । इतिश्रुतेः । सर्वज्ञम् । यःसर्वज्ञःससर्ववित् । इतिश्रुतेः । ईशम् । एषसर्वेश्वरः । इतिश्रुतेः । हारिम् । हरा

भूमिर्भारेणमग्नादशवदनमुखाशेषरक्षोगणानांधृत्वागोरूपमादौदिविजमुनिजनैःसाकमब्जासनस्य ॥ गत्वालोकंरुदंतीव्यसनमुपगतंब्रह्मणेप्राहसर्वंब्रह्माध्यात्वामुहूर्तंसकलमपिहृदाऽवेदशेषात्मकत्वात् ॥ ६ ॥ तस्मात्क्षीरसमुद्रतीरमगमद्ब्रह्माथदेवैर्वृतोदेव्याचाखिललोकहृत्स्थमजरंसर्वज्ञमीशंहरिम् ॥ अस्तौषीच्छ्रुतिसिद्धनिर्मलपदैःस्तोत्रैःपुराणोद्भवैर्भक्त्यागद्गदयागिरातिविमलैरानंदबाष्पैर्वृतः ॥ ७ ॥ ततः स्फुरन्सहस्रांशुसहस्रसदृशप्रभः ॥ आविरासीद्धरिःप्राच्यांदिशांव्यपनयंस्तमः ॥ ८ ॥ कथंचिद्दृष्टवान्ब्रह्मादुर्दर्शमकृतात्मनाम् ॥ इंद्रनीलप्रतीकाशंस्मितास्यंपद्मलोचनम् ॥ ९ ॥ किरीटहारकेयूरकुंडलैःकटकादिभिः ॥ विभ्राजमानंश्रीवत्सकौस्तुभप्रभयान्वितम् ॥ १० ॥ स्तुवद्भिःसनकाद्यैश्चपार्षदैःपरिवेष्टितम् ॥ शंखचक्रगदापद्मवनमालाविराजितम् ॥ ११ ॥ स्वर्णयज्ञोपवीतेनस्वर्णवर्णांबरेणच ॥ १२ ॥ श्रियाभूम्याचसहितंगरुडोपरिसंस्थितम् ॥ हर्षगद्गदयावाचास्तोतुंसमुपचक्रमे ॥ १३ ॥ ब्रह्मोवाच ॥ नतोऽस्मितेपदंदेवप्राणबुद्धींद्रियात्मभिः ॥ यच्चिंत्यतेकर्मपाशाद्धृदिनित्यंमुमुक्षुभिः ॥ १४ ॥

म्यघंहिस्मर्तॄणांहविर्भागंक्रतौतथा । वर्णश्चमेहरिर्यस्मात्तस्माद्धरिरहंस्मृतः । इतिश्रुतेः । श्रुतिसिद्धनिर्मलहरिविष्णुप्रभृतिपदयुक्तैःपुराणोद्भवैःस्तोत्रैरित्यर्थः । भक्तिमूलिकैवचगद्गदवाणीभक्तिजत्वादेवानंदबाष्पाणांविमलत्वम् ॥ ७ ॥ सहस्रांशुसहस्रंसूर्यसहस्रम् ॥ ८ ॥ अकृतात्मनांज्ञानहीनानाम् । तेजोराशित्वात्कथंचिद्दर्शनम् ॥ ९ ॥ १० ॥ पार्षदाःपार्षदगणाः ॥ ११ ॥ स्वर्णवर्णांबरंपीतांबरम् ॥ १२ ॥ १३ ॥ प्राणःक्रियाशक्तिप्रधानोंऽशः तेनकर्मेंद्रियसंग्रहः । बुद्धींद्रियाणिश्रोत्रादीनिआत्मामनस्तैःकारणभूतैर्नतोऽस्मि । कर्मपाशान्मुमुक्षुभिर्यत्पदंहृदिचिंत्यते इत्यन्वयः ॥ १४ ॥

गुणमय्यासत्वरजस्तमोगुणयुक्तयामाययासचिवयाजगत्सृजसि तेनस्रष्टृत्वादिनतेलेपोऽहंस्रष्टेत्याद्यभिमानोन । तत्रहेतुगर्भविशेषणम् । आनंदानुभवात्मनः आनंदा
भिन्नानुभवरूप आत्मायस्यतस्य । एवंचस्वस्वरूपापरोक्षेणसर्वत्रमिथ्यादृष्ट्यातदभिमानरहितइतिभावः ॥ १५ ॥ दुष्टानांमलिनांतःकरणानां शुद्धात्मता शुद्धांतः
करणतातेयशसितवगुणकीर्तने ॥ १६ ॥ सात्वतैर्भक्तैर्वृतोंऽतर्हृदयेसद्योदृष्टस्त्वांघ्रिर्मेचित्तदोषापनुत्तये । अस्त्विविशेषः ॥ १७ ॥ स्वार्थसिद्ध्यर्थंस्वकर्तव्यसृ
ष्ट्यादिसिद्ध्यर्थं ज्ञानिभिर्ज्ञानेच्छुभिः ॥ १८ ॥ सपत्निवत् । आर्षोह्रस्वः सपत्नीवदित्यर्थः ॥ १९ ॥ यतःस्वचरणभक्तेषुतवलक्ष्मीतोऽप्यधिकाभक्तिः

माययागुणमय्यात्वंसृजस्यवसिलिंपसि ॥ जगत्तेननतेलेपआनंदानुभवात्मनः ॥ १५ ॥ तथाशुद्धिर्नदुष्टानांदानाध्ययनकर्मभिः ॥ शुद्धा
त्मतातेयशसिसदाभक्तिमतांयथा ॥ १६ ॥ अतस्त्वांघ्रिर्मेदृष्टश्चित्तदोषापनुत्तये ॥ सद्योंऽतर्हृदयेनित्यंमुनिभिःसात्वतैर्वृतः ॥ १७ ॥
ब्रह्माद्यैःस्वार्थसिद्ध्यर्थमस्माभिःपूर्वसेवितः ॥ अपरोक्षानुभूत्यर्थंज्ञानिभिर्हृदिभावितः ॥ १८ ॥ तवांघ्रिपूजानिर्माल्यतुलसीमालयाविभो ॥
स्पर्धतेवक्षसिपदंलब्ध्वापिश्रीःसपत्निवत् ॥ १९ ॥ अतस्त्वत्पादभक्तेषुतवभक्तिःश्रियोऽधिका ॥ भक्तिमेवाभिवांछंतित्वद्भक्ताःसारवेदि
नः ॥ २० ॥ अतस्त्वत्पादकमलेभक्तिरेवसदाऽस्तुमे ॥ संसारामयतप्तानांभेषजंभक्तिरेवते ॥ २१ ॥ इतिब्रुवंतंब्रह्माणंबभाषेभगवान्हरिः ॥
किंकरोमीतितंवेधाःप्रत्युवाचातिहर्षितः ॥ २२ ॥ भगवन्रावणोनामपौलस्त्यतनयोमहान् ॥ राक्षसानामधिपतिर्मद्दत्तवरदर्पितः ॥ २३ ॥
त्रिलोकींलोकपालांश्चबाधतेविश्वबाधकः ॥ मानुषेणमृतिस्तस्यमयाकल्याणकल्पिता ॥ २४ ॥ अतस्त्वंमानुषोभूत्वाजहिदेवरिपुंप्रभो ॥
श्रीभगवानुवाच ॥ कश्यपस्यवरोदत्तस्तपसातोषितेनमे ॥ २५ ॥

प्रीतिः । अतःसारवेदिनस्त्वद्भक्तास्त्वच्चरणयोर्भक्तिमेववांछति ॥ २० ॥ अतइति । यतस्तेभक्तिरेवसंसाररोगभेषजमतइत्यन्वयः ॥ २१ ॥ ब्रह्माणंहरिः किंक
रोमीतिबभाषे । अथतंहरिंवेधाः प्रत्युवाचेतिसंबंधः ॥ २२ ॥ रावणइति ॥ रावयामासलोकान्यस्तस्माद्रावणउच्यते । इतिभारतोक्तेः । मयाब्रह्मणादत्तेनवरेणद
र्पितोऽहंकृतः वरश्चमनुष्यातिरिक्तावध्यत्वरूपः ॥ २३ ॥ तदेवाह । मानुषेणेति ॥ २४ ॥ कश्यपस्यतपसातोषितेनमेमयातस्मैवरोदत्तः यत्त्वंयाचिष्यसि
तत्तुभ्यंदास्यामीतिकृतवरदानप्रतिज्ञइत्यर्थः ॥ २५ ॥

ततस्तेनाहंपुत्रभावाययाचितोमयाचतत्तथेत्यंगीकृतमित्यर्थः ॥ २६ ॥ अहंतस्यपुत्रतामेत्यपुत्रतांप्राप्स्यामीतिसंकल्प्य कौसल्यायामितरयोः सुमित्राकैकेय्यो रहमेवात्मानंचतुर्धाचतुःप्रकारावयवसंस्थानैरामलक्ष्मणभरतशत्रुघ्नेतिचतुःप्रकारनामभिश्वसृजामिस्रक्ष्यामि । वर्तमानसामीप्येलट् ॥ २७ ॥ योगमायेति ॥ योगो मत्संकल्पस्तद्वशवर्तिनीमायेत्यर्थः । नाहंप्रकाशःसर्वस्ययोगमायासमावृतः । इतिगीतोक्तेः । तयासार्धंतांसहकारिणींप्राप्य ॥ २८ ॥ २९ ॥ अंशसंभवा नृस्वस्वांशसंभवान्वानरानित्यर्थः ॥ ३० ॥ ३१ ॥ इतस्ततः पर्वतवनेषु ॥ ३२ ॥ ॥ इति श्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिवि० श्रीरामवर्मणः

याचितःपुत्रभावायतथेत्यंगीकृतंमया ॥ सइदानींदशरथोभूत्वातिष्ठतिभूतले ॥ २६ ॥ तस्याहंपुत्रतामेत्यकौसल्यायांशुभेदिने ॥ चतुर्धा त्मानमेवाहंसृजामीतरयोःपृथक् ॥ २७ ॥ योगमायाऽपिसीतेतिजनकस्यगृहेतदा ॥ उत्पत्स्यतेतयासार्धंसर्वंसंपादयाम्यहम् ॥ २८ ॥ इत्युक्त्वाऽतर्दधेविष्णुर्ब्रह्मादेवानथाब्रवीत् ॥ ब्रह्मोवाच ॥ विष्णुर्मानुषरूपेणभविष्यतिरघोःकुले ॥ २९ ॥ यूयंसृजध्वंसर्वेऽपिवानरेष्वंशसं भवान् ॥ विष्णोःसहायंकुरुतयावत्स्थास्यतिभूतले॥३०॥इतिदेवान्समादिश्यसमाश्वास्यचमेदिनीम् ॥ ययौब्रह्मास्वभवनंविज्वरःसुखमा स्थितः॥३१॥देवाश्चसर्वेहरिरूपधारिणःस्थिताःसहायार्थमितस्ततोहरेः॥महाबलाः पर्वतवृक्षयोधिनःप्रतीक्षमाणाभगवंतमीश्वरम् ॥३२॥ इति श्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेबालकांडेद्वितीयःसर्गः ॥२॥ श्रीरामचंद्रायनमः॥श्रीमहादेवउवाच ॥ अथराजादशरथःश्री मान्सत्यपरायणः॥अयोध्याधिपतिर्वीरः सर्वलोकेषुविश्रुतः ॥१॥ सोऽनपत्यत्वदुःखेनपीडितोगुरुमेकदा ॥ वसिष्ठंस्वकुलाचार्यमभिवाद्य दमब्रवीत्॥२॥स्वामिन्पुत्राःकथंमेस्युःसर्वलक्षणलक्षिताः॥पुत्रहीनस्यमेराज्यंसर्वंदुःखायकल्पते॥३॥ ततोऽब्रवीद्वसिष्ठस्तंभविष्यंतिसुता स्तव॥चत्वारःसत्वसंपन्नालोकपालाइवापराः॥४॥शांताभर्तारमानीयऋष्यशृंगंतपोधनम्॥अस्माभिःसहितःपुत्रकामेष्टिंशीघ्रमाचर॥५॥

कृतौअध्यात्मरामायणाम्बुधिसेतौबालकांडेद्वितीयःसर्गः ॥ २ ॥ अथरामजन्माह ॥ अथेति ॥ १ ॥ २ ॥ सर्वंदुःखायेति । मनुष्यलोकःपुत्रेणैवजय्योनान्येन कर्मणा । इतिश्रुतेः ॥ ३ ॥ ४ ॥ शांताभर्तारंशांतालोमपाददशरथस्यांगपतेरेतद्दशरथमित्रस्यकन्यानेनराज्ञाततोलब्धास्वदुहितृत्वेनकल्पितेत्याख्यायिका । पुत्रकामस्यकर्तव्येष्टिःपुत्रकामेष्टिः ॥ ५ ॥

---

१ वानरानित्यध्याहृत्यैवेष्टार्थलाभः । २ पर्वतवृक्षैर्युध्यंति तच्छीलाः । ताच्छील्ये णिनिः ।

(१ इतिश्रुत्वादशरथःपप्रच्छमुनिसत्तमम् ॥ कोवाकस्यसुतःकीदृक्प्रभावस्तस्यतद्वद ॥ १ ॥ इतिश्रुत्वावचस्तस्यमुनिःप्रोवाचसादरम् ॥ विभाण्डकस्यविप्रर्षेस्तपसाभावितात्मनः ॥ २ ॥ अमोघवीर्यस्यसुतःप्रजापतिसमद्युतिः ॥ एकदासह्यनावृष्टिकारणात्सुमहातपाः ॥ ३ ॥ आनीतोलोमपादेनअनावृष्टिनिवृत्तये ॥ शान्तांकन्यांददौतस्मैदक्षिणार्थंमहीपतिः ॥ ४ ॥ शृणुपुत्रोयथाजातऋष्यशृङ्गःप्रतापवान् ॥ महार्हःसमहातेजावालस्थविरसम्मतः ॥ ५ ॥ महाह्रदंसमासाद्यकाश्यपस्तपसिस्थितः ॥ दीर्घकालपरिश्रान्तऋषिर्देवर्षिसत्तमः ॥ ६ ॥ तस्यरतेःप्रचस्कन्ददृष्ट्वाप्सरसमुर्वशीम् ॥ अप्सूपस्पृशतोराजन्मृगीतच्चापिवत्तदा ॥ ७ ॥ सहतोयेनतृषिता (गुर्विणी) गर्भिणीसाभवत्ततः ॥ सापुरोक्ताभगवताब्रह्मणालोककर्तृणा ॥ ८ ॥ देवकन्येमृगीभूत्वामुनिंसूयविमोक्ष्यसे ॥ अमोघत्वाद्द्विषश्चैवभावित्वाद्दैवनिर्मितेः ॥ ९ ॥ तस्यांमृग्यांसमभवत्तस्यपुत्रोमहानृषिः ॥ ऋष्यशृङ्गस्तपोनिष्ठोवनएवाभ्यवर्द्धत ॥ १० ॥ तस्यर्षेःशृङ्गंशिरसिराजन्नासीन्महात्मनः ॥ तेनर्ष्यशृङ्गइत्येवसदासप्रथितोऽभवत् ॥ ११ ॥ नतेनदृष्टःपूर्वोऽन्यःपितुरन्यत्रमानुषः ॥ तस्मात्तस्यमनोनित्यंब्रह्मचर्य्येऽभवन्नृप ॥ १२ ॥ एतस्मिन्नेवकालेतुसखातवमहामते ॥ तेनकामात्कृतंमिथ्याब्राह्मणस्योतिनःश्रुतम् ॥ १३ ॥ सब्राह्मणैःपरित्यक्तस्तदावैजगतीपतिः ॥ पुरोहितापचाराच्चतस्यराज्ञोयदृच्छया ॥ १४ ॥ नववर्षसहस्राक्षस्ततोपीडयन्तत्प्रजाः ॥ सब्राह्मणान्पर्यपृच्छत्तपोयुक्तान्मनीषिणः ॥ १५ ॥ प्रवर्षणेसुरेन्द्रस्यसमर्थान्पृथिवीपते ॥ कथंप्रवर्षेत्पर्ज्जन्यउपायःपरिदृश्यताम् ॥ १६ ॥ तमूचुश्चोदितास्तेनसुकृतानिमनीषिणः ॥ तत्रत्वेकोमुनिवरस्तंराजानमुवाचह ॥ १७ ॥ कुपितास्तवराजेन्द्रब्राह्मणानिष्कृतिंचर ॥ ऋष्यशृङ्गंमुनिसुतमानयस्वचपार्थिव ॥ १८ ॥ बालोऽयमनभिज्ञोऽपिनारीणामार्त्तवेरतः ॥ सचेदवतरेद्राजन्विषयंतेमहातपाः ॥ १९ ॥ सद्यःप्रवर्षेत्पर्ज्जन्यइतितेनात्रसंशयः ॥ एतच्छ्रुत्वावचोराजन्कृत्वानिष्कृतिमात्मनः ॥ २० ॥ सगत्वापुनरागच्छत्प्रसन्नेषुद्विजातिषु ॥ राजानमागतंदृष्ट्वाप्रतिसंजहृषुःप्रजाः ॥ २१ ॥ ततोऽङ्गपतिराहूयसचिवान्मंत्रकोविदान् ॥ ऋष्यशृङ्गागमेयत्नमकरोन्मंत्रनिश्चयात् ॥ २२ ॥ सोऽध्यगच्छदुपायंतुतैरमात्यैर्महीपते ॥ शास्त्रज्ञैरखिलार्थज्ञैर्नित्यंचपरिनिष्ठितैः ॥ २३ ॥

१ तृतीयसर्गे पंचमश्लोकादग्रे कालिकातानगरे इटालीदेशेच मुद्रितयोः पुस्तकयोर्हस्तलिखितेषु चान्येषु पुस्तकेषु ऋष्यशृंगोपाख्यानमुपलभ्यते। तदिहप्रसंगोपात्तत्त्वात्प्रवेशितमतो नासङ्गतमिति बोद्धव्यं सुधीभिः।

तत्रत्वाज्ञापयामासवारमुख्यामहीपतिः ॥ वेश्याःसर्वत्रनिष्क्रातास्ताउवाचमहीपतिः ॥ २४ ॥ ऋष्यशृङ्गमृषेःपुत्रमानयध्वमुपायतः ॥
लोभयित्वासमाश्वास्यविषयंममशोभनाः ॥ २५ ॥ ताराजभयभीताश्चशापभीताश्चयोषितः ॥ अशक्यमूचुस्तत्कर्मविवर्णागत
चेतसः ॥ २६ ॥ तत्रत्वेकावारयोषाराजानमिदमब्रवीत् ॥ प्रयतिष्येमहाराजतमानेतुंतपोधनम् ॥ २७ ॥ अभिप्रेतांस्तुमेकामां
स्त्वमनुज्ञातुमर्हसि ॥ ततःशक्नोम्यानयितुमृष्यशृङ्गमृषेःसुतम् ॥ २८ ॥ तस्याःसर्वमभिप्रेतमन्वजानीतपार्थिवः ॥ २९ ॥ नावि
वृक्षानथारोप्यफलाकारांश्चमोदकान् ॥ सुरसांश्चसुगन्धीनिमधूनिरसवन्तिच ॥ ३० ॥ ततोरूपेणसम्पन्नावयसाचमहीपते ॥ स्त्रियआ
दायकाश्चित्साजगामवनमञ्जसा ॥ ३१ ॥ महेश्वरउवाच ॥ सातुस्थित्वाकियद्दूरंसंस्थाप्याश्रममुत्तमम् ॥ सन्देशाच्चैवनृपतेःस्वबुद्ध्याचैव
राघव ॥ ३२ ॥ नानापुष्पफलैर्वृक्षैःकृत्रिमैरुपशोभितम् ॥ कृत्वानाव्याश्रमंरम्यमद्भुतंसौम्यदर्शनम् ॥ ३३ ॥ ततोनिरूप्यतांनावम
दूरेकाश्यपाश्रमात् ॥ वाहयामासपुरुषैर्विहारंतस्यवैमुनेः ॥ ३४ ॥ ततोदुहितरंवेश्यांसमाधार्येतिकार्यंताम् ॥ दृष्ट्वान्तरंकाश्यपस्यप्रा
हिणोद्बुद्धिसम्मताम् ॥ ३५ ॥ सातत्रगत्वाकुशलीतपोनिष्ठस्यसन्निधौ ॥ आश्रमंतुसमासाद्यददर्शतमृषेःसुतम् ॥ उवाचमधुरंवाक्यंश्ल
क्ष्णंमधुरयागिरा ॥ ३६ ॥ कच्चिन्मुनेकुशलंतापसानांपिताचतेकच्चिदहीनतेजाः ॥ कच्चित्प्रियानरमतेचाश्रमेऽस्मिंस्त्वांवैद्रष्टुंसाम्प्रतं
चागतोऽस्मि ॥ ३७ ॥ कच्चित्तपोवर्द्धतेतापसानांकच्चित्तरोर्मूलफलंप्रभूतम् ॥ कच्चित्त्वयापीयतेचैवविप्रकच्चित्स्वाध्यायःक्रियते ऋष्यशृङ्ग ॥
॥ ३८ ॥ इतिश्रुत्वावचस्तस्यमुनिवेषधरस्यहि ॥ उवाचवाक्यंवाक्यज्ञोमुनिवेषविधारिणीम् ॥ ३९ ॥ ऋद्ध्याभवाञ्ज्योतिरिवप्रकाश
तेमन्येचाहंत्वामभिवादनीयम् ॥ पाद्यंवैसंप्रदास्यामियथासिद्धचेत्कर्मफलानिचैव ॥ ४० ॥ कौश्यांबृस्यामास्वयथोपवेशंकृष्णाजिनवो
स्तृतायांसुखायाम् ॥ क्वचाश्रमस्तवकिंनामचेदंब्राक्यंभातितदेवव्यक्तम् ॥ ४१ ॥ ततोवेश्याप्रत्युवाचाद्विजेंद्रंशंकायुक्ताकाश्यपस्यागमे
तु ॥ ममाश्रमःकाश्यपपुत्ररम्यस्त्रियोजनंशैलमिमंपरेण ॥ ४२ ॥ तत्रस्वधर्मोऽनभिवादनंमेनचोदकंपाद्यमुपस्पृशामि ॥ ४३ ॥ भव
तानाभिवाद्योऽहमभिवाद्योभवान्मया ॥ व्रतमेतादृशंब्रह्मन्परिष्वज्योभवान्मया ॥ इतिश्रुत्वावचस्तस्यपुनराहतपोधनः ॥ ४४ ॥
फलानिपक्वानिददानितेऽहंभल्लातकान्यामलकानिचैव ॥ करूषकानीङ्गुदकानितावद्यथोपजोषंफलमत्रभुङ्क्ष्व ॥ ४५ ॥ सातानिस
र्वाणिचवर्ज्जयित्वाभक्ष्यंमहार्हंप्रददौततोऽस्य ॥ तान्यृष्यशृङ्गस्यमहारसानिभृशंसुरूपाणिरुचिंददुर्हि ॥ ४६ ॥ ददौचमाल्यानिसुगन्ध

वन्तिचित्राणिवासांसिचभानुमन्ति ॥ पानानिचाग्र्याणिततोगृहीत्वामुमोदचिक्रीडजहासचोच्चैः ॥ ४७ ॥ तदाचुचुम्बामलगण्डमूलेविलज्ज
मानाफलितालतेव ॥ गात्रैश्चगात्राणिनिषेवमाणासमाश्लिषच्चासकृदृष्यशृङ्गम् ॥ ४८ ॥ विलज्जमानेवमलाभिभूताप्रलोभयामाससु
तंमहर्षेः ॥ अथर्ष्यशृङ्गंविकृतंनिरीक्ष्यपुनःपुनःपीड्यचकायमस्य ॥ आवेक्ष्यमाणाशनकैर्जगामकृत्वाग्निहोत्रस्यतदापदेशम् ॥ ४९ ॥
तस्यांगतायांमदनेनाचित्तविचेतनःप्रीतवदृष्यशृङ्गः ॥ तामेवचित्तेनगतेनशून्योविनिःश्वसन्नार्त्तवपुर्बभूव ॥ ५० ॥ ततोमुहूर्त्तंहरि
पिङ्गलाक्षःप्रवेष्टितोरोमभिरानखाग्रात् ॥ स्वाध्यायवान्दृष्टसमाधियुक्तोविभाण्डकःकाश्यपआविरासीत् ॥ ५१ ॥ सोऽपश्यदासीनमुपे
त्यपुत्रंध्यायंस्तमेवंविपरीतचित्तम् ॥ विनिःश्वसन्तंमुहुरूर्द्ध्वदृष्टिंविभाण्डकःपुत्रमुवाचदीनम् ॥ ५२ ॥ नत्वंयथापूर्वमिवासिपुत्रचिन्तापर
श्चापिविचेतनश्च ॥ दीनोऽतिमात्रंत्वमिहाद्यकिन्तु पृच्छामित्वांकइहाभाग्यतोऽभूत् ॥ ५३ ॥ नकल्प्यन्तेसमिधःकिन्नुतातकच्चिद्धुतंचा
ग्निहोत्रंत्वयाद्य ॥ सुनिर्णिक्तंस्रुक्स्रुवंहोमधेनुःकच्चित्सवत्साचकृतात्वयाद्य ॥ ५४ ॥ इतिश्रुत्वापितुस्तस्यवचोमुग्धाक्षरंपरम् ॥ उवाच
वाक्यंवाक्यज्ञंपितरंकरुणान्वितम् ॥ ५५॥इहागतोजटिलोब्रह्मचारीनवैह्रस्वोनातिदीर्घोमनस्वी ॥ सुवर्णवर्णःकमलायताक्षःसुतंसुराणामिव
लोभमानः ॥५६॥ सुस्निग्धरूपःसवितेवदीप्तःसुशुभ्रकृष्णाक्षिरतीवगौरः ॥ नीलाविविक्ताचजटासुगन्धिर्हिरण्यरज्जुग्रथितासुदीर्घा॥५७॥आ
लम्बमानापुनरस्यकण्ठेविद्योततेविद्युदिवान्तरिक्षे ॥ द्वौमांसपिण्डावधरेणकण्ठादलोमशौचापिमनोहरौच ॥५८॥ विलग्नमध्यश्वसनाभिदे
शेकटिश्चतस्यापिबृहत्प्रमाणा॥अथास्यचीरान्तरतःप्रभातिहिरण्मयीवममेखलेयम् ॥ ५९ ॥ अन्यच्चतस्याद्भुतदर्शनीयंविकुञ्चितंपादयोः
संविरौति ॥ पाण्योश्चतद्वद्रुचिरंनिबद्धौकलापकैरक्षमालायथेयम्॥६०॥विचेष्टमानस्यचतस्यनाभिःकूजन्तिहंसाःशरदीवमत्ताः ॥ चीराणि
तस्याद्भुतदर्शनानिलोमानितद्वन्ममरूपवन्ति ॥ ६१ ॥ वक्रञ्चतस्याद्भुतदर्शनीयंप्रव्याहृतंह्लादयतीवचेतः ॥ पुंस्कोकिलस्येवचतस्यवा
णीतांश्शृण्वतोमेव्यथितोन्तरात्मा ॥ ६२ ॥ समेसमाश्लिष्यपुनःशरीरंजटासुगृह्णात्यवनम्यवक्रम् ॥ वक्रेणवक्रंप्रणिधायशब्दंचकारतन्मे
जनयेत्प्रहर्षम् ॥ ६३ ॥ नचापिपाद्यंबहुमन्यतेऽसौफलानिचैलानिमयाहृतानि ॥ एवंव्रतोऽस्मीतिचमामवोचत्फलानिपाद्यानिनचाददन्मे ॥ ६४ ॥ मयोपभुक्तानिफलानितस्यनेमानितुल्यानिरसेनतेषाम् ॥ तोयानिचैवातिरसानिमह्यंप्रादात्सवैपातुमुदाररूपः ॥ ६५ ॥
पीत्वैवयान्यभ्यधिकःप्रहर्षोसमाभवद्भूश्चलितेवचासीत् ॥ इमानिचित्राणिचगन्धवन्तिमाल्यानितस्योद्ग्रथितानिपट्टे ॥ ६६ ॥ इच्छा

मितस्यान्तिकमेवतातकानामसाव्रतचर्यांनुतस्य ॥ इच्छाम्यहंचरितुंतेनसार्द्धंयथातपःसचरत्युग्रकर्मा ॥ ६७ ॥ इत्येववाक्यंमुनि
रात्मजस्यश्रुत्वामहावाक्यविशारदोऽसौ ॥ उवाचवाक्यंपरिशान्तयन्हिविभाण्डकस्तपसाज्ञाततत्वः ॥ ६८ ॥ रक्षांसिचैतानिचरान्ति
पुत्ररूपेणतेनाद्भुतदर्शनेन ॥ अतुल्यवीराण्यतिरूपवन्तिविघ्नंसदातपसश्चिन्तयन्ति ॥ ६९ ॥ नतानिसेवेतमुनिर्यतात्माफलानिपेयानि
मधूनितानि ॥ माल्यानिचैतानिनवैमुनीनांग्राह्याणिचित्तोत्पलगन्धवन्ति ॥ ७० ॥ रक्षांसितानीतिनिवार्यपुत्रंविभाण्डकस्तपसेनिर्जगा
म ॥ यदापुनःकाश्यपोनिर्जगामफलानिहर्तुंविधिनावनाद्धि ॥ ७१ ॥ तदापुनर्लोभयितुंजगामसावारयोषामुनिमृष्यशृङ्गम् ॥ दृष्ट्वैवताम्
ष्यशृङ्गःप्रहृष्टःसंभ्रांतरूपोन्यपतत्तदानीम् ॥ ७२ ॥ प्रोवाचचैनांभवदाश्रमायगच्छामियावन्नपितामसैति ॥ ततोवेश्याकाश्यपस्यैकपु
त्रंप्रवेश्ययोगेनविमुच्यनावम् ॥ ७३ ॥ प्रमोदयन्त्योविविधैरुपायैराजग्मुरंगाधिपराजधानीम् ॥ अन्तःपुरेतंतुनिवेश्यराजाविभाण्डकस्या
त्मजमेकपुत्रम् ॥७४॥ ददर्शदेवंसहसाप्रविष्टमापूर्यमाणञ्चजगज्जलेन ॥ सलोमपादःपरिपूर्णकामःसुतांददौऋष्यशृङ्गायशान्ताम् ॥७५॥ क्रोध
प्रतीकारकरञ्चचक्रेगाश्चैवमार्गेषुचकर्षकाणि ॥ विभाण्डकस्याव्रजतःसराजापशून्प्रभूतान्पशुपांश्चवीरान् ॥ ७६ ॥ समादिशत्पुत्रमार्गीमह
र्षिर्विभाण्डकःपरिपृच्छेद्यदावः॥सवक्तव्यःप्राञ्जलिभिर्भवद्भिःपुत्रस्यतेपशवःकर्षकञ्च ॥ ७७ ॥ अथोपजातंसमुनिश्चुकोपस्वमाश्रमंफलमूलं
गृहीत्वा ॥ अन्वेषमाणश्चनतत्रपुत्रंददर्शचुक्रोधततोभृशंसः ॥७८॥ ततःसकोपेनविदीर्यमाणमाशंकमानोनृपतेर्विधानम् ॥ जगामचंपांप्रति
वीक्ष्यमाणस्तमंगराजंसपुरंसराष्ट्रम् ॥ ७९ ॥ सवैश्रान्तःक्षुधितःकाश्यपस्तान्घोषान्देशान्सादिचरान्समृद्धान् ॥ गोपैश्चतैर्विधिवत्पूज्य
मानोराजेवतांरात्रिमुवासतत्र ॥ ८० ॥ अवापसत्कारमतवीतस्यप्रोवाचकस्यप्रहिताःस्थगोपाः ॥ ऊचुस्ततस्तेऽभ्युपगम्यसर्वेधनंतवेदंविहि
तंसुतस्य ॥ ८१ ॥ एवंसदेशेष्वभिपूज्यमानस्तांश्चैवशृण्वन्मधुरप्रलापान् ॥ प्रशान्तभूयिष्ठरजाःप्रहृष्टःसमाससादाङ्गपतिंपुरस्तम् ॥८२॥
सपूजितस्तेननरर्षभेणददर्शपुत्रंदिविदेवमिन्द्रम् ॥ शांतांस्नुषांचैवददर्शतत्रसौदामिनीमुच्चरतींयथैव ॥ ८३ ॥ ग्रामांश्चघोषांश्चसुतस्य
दृष्ट्वाशान्ताञ्चशान्तश्चपरःसकोपः ॥ चकारतस्मैचपरंप्रसादंविभाण्डकोभूमिपतेर्नरेन्द्र ॥ ८४ ॥ सतत्रनिःक्षिप्यसुतंमहर्षिरुवाचसूर्या
ग्निसमप्रभावः ॥ जातेतुपुत्रेवनमाव्रजेथाराज्ञःप्रियाण्यस्यसर्वाणिकृत्वा ॥ ८५ ॥ सतद्वचःकृतवानृष्यशृङ्गोययौचयत्रास्यपितावभूव ॥

मुनिमृष्यशृंगंमुनिभिर्वसिष्ठाद्यैः ॥ ६ ॥ तप्तजांबूनदंकृतमलापहरणंस्वर्णंतद्वत्कांतिः । हव्यवाडग्निः । अयमेव । प्राजापत्यंनरंविद्धिमामिहाभ्याग तंनृप । इतिवाल्मीकीयेप्राजापत्यशब्देनोक्तः ॥ ७ ॥ पुत्रीयंपुत्रायहितम् ॥ ८ ॥ मुनिशार्दूलौवसिष्ठऋष्यशृंगौ ॥ ९ ॥ १० ॥ जगृध्नुःभृशंतदिच्छाव ती । गृधुअभिकांक्षायामित्यतोयङ्लुगंतादागमशास्त्रानित्यत्वेनरुगभावेत्रसिगृधिधृषिक्षिपेःक्नुरितिक्नौरूपम् । पौत्रिकंचरुमितिषष्ठ्यभावआर्षः । पुत्रःप्रयो जनंयस्यवादृशंचरुमित्यर्थः । स्वभागार्धंस्वशब्दआत्मीयवाची स्वीयस्यभागःस्वभागस्तदर्धं स्वदत्तस्यचतुर्थांशमित्यर्थः । एवमग्रेऽपि । वाल्मीकीयेऽपि । कौसल्यायैनरपतिःपायसार्धंददौतदा । अर्धादर्धंददौचापिसुमित्रायैनराधिपः । कैकेय्यैचावशिष्टार्धंददौपुत्रार्थकारणात् । प्रददौचावशिष्टार्धंपायसस्यामृतोप मम् । अनुचिंत्यसुमित्रायैपुनरेवमहीपतिः ॥ इति श्लोकयोःकौसल्यार्धदत्तार्धस्यार्धादर्धंचतुर्थांशरूपं सुमित्रायैददौ । कौसल्ययादापितवानित्यर्थःकार्यः ।

शान्ताचैनंपर्यचरद्यथावैखेरोहिणीसोममेवंतथासा ॥ ८६ ॥ अरुन्धतीवसुभगावसिष्ठंलोपामुद्रावापियथाह्यगस्त्यम् ॥ तथाशांताऋष्य शृङ्गंवनस्थंप्रीत्यायुक्तापर्यचरन्नरेन्द्र ॥ ८७ ॥ इतितेसर्वमाख्यातऋष्यशृङ्गपराक्रमः ॥ तमानयमहाराजसतेयज्ञंकरिष्यति ॥ ८८ ॥ ) तथेतिमुनिमानीयमंत्रिभिःसहितःशुचिः ॥ यज्ञकर्मसमारेभेमुनिभिर्वीतकल्मषैः ॥ ६ ॥ श्रद्धयाहूयमानेऽग्नौतप्तजांबूनदप्रभः ॥ पायसं स्वर्णपात्रस्थंगृहीत्वोवाचहव्यवाट् ॥ ७ ॥ गृहाणपायसंदिव्यंपुत्रीयंदेवनिर्मितम् ॥ लप्स्यसेपरमात्मानंपुत्रत्वेननसंशयः ॥ ८ ॥ इत्यु क्त्वापायसंदत्त्वाराज्ञेसोंऽतर्दधेऽनलः ॥ववंदेमुनिशार्दूलौराजालब्धमनोरथः ॥९॥ वसिष्ठऋष्यशृंङ्गाभ्यामनुज्ञातोददौहविः ॥ कौसल्या यैसकैकेय्यैअर्धमर्धंप्रयत्नतः ॥ १० ॥ ततःसुमित्रासंप्राप्ताजगृध्नुःपौत्रिकंचरुम् ॥ कौसल्यातुस्वभागार्धंददौतस्यैमुदान्विता ॥ ११ ॥

अर्धादित्यत्रकस्यार्धादित्याकांक्षायामुपस्थितकौसल्यादत्तपायसार्धान्वयस्यैवौचित्यात् । अंतर्भावितण्यर्थत्वेमानंचैतदेकवाक्यतैव । एवंकैकेय्यैकौसल्या दत्तार्धादवशिष्टमर्धंददौ । ततःकौसल्यादत्तावशिष्टस्यकैकेय्यैदत्तस्ययदर्धंतदर्धं विचार्यपुनरपिसुमित्रायैददौप्रापयामासेत्यर्थः । अत्रचार्धपदावृत्तिर्बोध्या । एवंहिएतद्ग्रंथेनवस्यैकवाक्यताभवति । तत्तद्दत्तभागजन्यस्यतत्तत्पुत्राधीनतौचित्येनैवमेवोचितंसेव्यसेवकभावलाभार्थम् । ततस्ततोन्यूनांशत्वस्यलक्ष्मणशत्रु घ्नयोरौचित्याच्चात्रत्यस्वभागार्धमितियथाश्रुतंनव्याख्यातम् । कालिदासोऽपि सतेजोवैष्णवंपत्न्योर्विभेजेचरुसंज्ञितम् । द्यावापृथिव्योःप्रत्यग्रमहर्पतिरिवा तपम् ॥ अर्चितातस्यकौसल्याप्रियाकेकयवंशजा । अतःसंभावितांताभ्यांसुमित्रामैच्छदीश्वरः ॥ तेबहुज्ञस्यचित्तज्ञेपत्न्यौपत्युर्महीक्षितुः । चरोरर्धार्धभागा

भ्यांतामयोजयतामुभे ॥ साह्विप्रणयवत्यासत्सिपत्न्योरुभयोरपि ॥ इत्याह । चरोरर्धार्धभागाभ्यामित्यस्यस्वस्वलब्धचरुभागाभ्यामित्यर्थः । एवंचरामभरतौत्रिरयं
शौ । लक्ष्मणशत्रुघ्नावष्टमांशाविति सिद्धम् । वाल्मीकीयव्याख्यातारौकतकाचार्यश्रीरामाचार्यावप्येवमेवोचतुः । अन्येतुतद्व्याख्यातारःकौसल्यायैसंपूर्णपायसार्धं
ददौ । ततःपात्रस्थादर्धार्धर्धंसर्वपायसचतुर्थांशंसुमित्रायैदत्तवान्स्वयमेव ततःपात्रेऽवशिष्टस्यचतुर्थांशस्यार्धमष्टमांशंकैकेय्यैदत्तवान् । ततः पुनरवशिष्टमर्धमष्टमांशरू
पंपुनरपिसुमित्रायैदत्तवानितियथाश्रुतग्राहिणोव्याचक्षते । तेषामेतद्विरोधोरामलक्ष्मणयोरेवभरतशत्रुघ्नयोरेवैकवाक्यतायाबीजालाभश्च । अवशिष्टार्धपदेक्वचित्षष्ठीत
त्पुरुषःक्वचित्कर्मधारयइतिवैषम्यंच ॥ ११ ॥ स्वभागार्धमितिप्राग्वत् ॥ १२ ॥ १३ ॥ मधुमासे चैत्रे सिते शुक्ले कर्कटेकर्कलग्ने पुनर्व

कैकेयीचस्वभागार्धंददौप्रीतिसमन्विता ॥ उपभुज्यचरुंसर्वास्त्रियोगर्भसमन्विताः ॥ १२ ॥ देवताइवरेजुस्ताःस्वभासाराजमंदिरे ॥
दशमेमासिकौसल्यासुषुवेपुत्रमद्भुतम् ॥ १३ ॥ मधुमासेसितेपक्षेनवम्यांकर्कटेशुभे ॥ पुनर्वस्वृक्षसहितेउच्चस्थेग्रहपंचके ॥ १४ ॥ मेषंपू
षणिसंप्राप्तेपुष्पवृष्टिसमाकुले ॥ आविरासीज्जगन्नाथःपरमात्मासनातनः ॥ १५ ॥ नीलोत्पलदलश्यामः पीतवासाश्चतुर्भुजः ॥ जलजारु
णनेत्रांतः स्फुरत्कुंडलमंडितः ॥ १६ ॥ सहस्रार्कप्रतीकाशःकिरीटीकुंचितालकः ॥ शंखचक्रगदापद्मवनमालाविराजितः ॥ १७ ॥ अनु
ग्रहाख्यहृत्स्थेंदुसूचकस्मितचंद्रिकः ॥ करुणारससंपूर्णविशालोत्पललोचनः ॥ श्रीवत्सहारकेयूरनूपुरादिविभूषणः ॥ १८ ॥ दृष्ट्वातंपरमा
त्मानंकौसल्याविस्मयाकुला ॥ हर्षाश्रुपूर्णनयनानत्वाप्रांजलिरब्रवीत् ॥ १९ ॥

स्वृक्षसहितेपुनर्वसुनक्षत्रसहितेइतिकर्कलग्नविशेषणम् । ग्रहपंचके चंद्रबुधव्यतिरिक्तेरविभौमगुरुभृगुशनिरूपे तदुच्चस्थानानिचक्रमेणमेषमकरकर्कमीनतुला
ख्यानि ॥ १४ ॥ सर्वग्रहास्तोदयस्यरव्यधीनत्वात्तदुच्चस्थानंस्फुटयति । मेषमिति । तेनसर्वेषामनस्तगत्वंसूचितम् । पुष्पवृष्टिसमाकुले कालेइत्यर्थः ॥
॥ १५ ॥ तत्रकौसल्यानुग्रहायप्रथमंयेनरूपेणप्रादुर्भूतस्तद्रूपमाह । नीलोत्पलेति ॥ १६ ॥ १७ ॥ अनुग्रहाख्येति । भक्तानुग्रहा
ख्योयोहृदयस्थइंदुस्तस्यसूचिकास्मितरूपाचंद्रिकायस्यसः । स्मितंच । ईषद्विकसितैर्गल्लैःकटाक्षैःसौष्ठवान्वितैः । अलक्षितद्विजंधीरमुत्तमानां
स्मितंभवेत् ॥ इतिलक्षणम् ॥ १८ ॥ १९ ॥

परमात्माशुद्धबुद्धमुक्तस्वभावः अच्युतःस्वस्वरूपात्कदाऽपिनच्युतः । शाश्वतंशिवमच्युतम् । इतिश्रुतेः । अनंतःअनंतगुणः नित्यत्वादंतरहितइति । पूर्णःदेशकालाप रिच्छेद्यः पुरुषेभ्यउत्तमः सर्वाधिष्ठानत्वात् ॥ २० ॥ वाचांबुद्ध्यादीनामिंद्रियाणांचागोचरंवदंति । यतोवाचोनिवर्ततेअप्राप्यमनसासह । इत्यादिश्रुतयः । रागादिसर्वद्रष्टृत्वाच्चनतासांविषयः । नहिघटादिप्रकाशकोदीपोघटादिविषयोभवति । अतएवत्वामतींद्रियंवेदवादिनोवेदज्ञावदंति । तेत्वांसत्तामात्रंसर्व त्रस्वसंबंधात्सदितिव्यवहारोपपादकम् । सर्वाःप्रजाःसदायतनाः । इतिश्रुतेः । ज्ञानैकविग्रहं । सत्यंज्ञानम् । इतिश्रुतेर्वदंति ॥ २१ ॥ त्वमिति ॥ त्वमेवमा ययासत्त्वादिगुणसंयुक्तस्तत्तद्गुणसंयुक्तब्रह्मविष्णुरुद्रात्मकः सन् सृष्ट्यादिकरोषि । तत्ररजःप्रधानोब्रह्मा सत्त्वप्रधानोविष्णुः तमःप्रधानोरुद्रः । विष्णोर्दैत्यादिहंतृ त्वमपिपालनार्थमेव दुष्टनिग्रहंविनाशिष्टपालनायोगात् । परमार्थतस्तुनिर्गुणएवत्वमित्याह । तुर्यएवेति । तत्तद्गुणसंयुक्तोक्तमूर्त्तित्रयापेक्षयाचतुर्थइत्यर्थः । यद्वा ।

कौसल्योवाच ॥ देवदेवनमस्तेऽस्तुशंखचक्रगदाधर ॥ परमात्माऽच्युतोऽनंतःपूर्णस्त्वंपुरुषोत्तमः ॥२०॥ वदंत्यगोचरंवाचांबुद्ध्यादीनाम तींद्रियम् ॥ त्वांवेदवादिनःसत्तामात्रंज्ञानैकविग्रहम् ॥ २१ ॥ त्वमेवमाययाविश्वंसृजस्यवसिहंसिच ॥ सत्त्वादिगुणसंयुक्तस्तुर्यएवामलः सदा ॥ २२ ॥ करोषीवनकर्तात्वंगच्छसीवनगच्छसि ॥ नशृणोषिशृणोषीवपश्यसीवनपश्यसि ॥ २३ ॥ अप्राणोह्यमनाःशुद्धइत्यादि श्रुतिरब्रवीत् ॥ समःसर्वेषुभूतेषुतिष्ठन्नपिनलक्ष्यसे ॥ २४ ॥

जाग्रत्स्वप्नसुषुप्त्यवस्थासुविश्वतैजसप्राज्ञेभ्यस्तुर्यइत्यर्थः । नबहिःप्रज्ञंनांतःप्रज्ञंनोभयतः प्रज्ञम् । इतिश्रुतेः । इयंहिक्रमेणजाग्रत्स्वप्नसुषुप्त्यवस्थानिषेधति अतएवसदाऽमलःमायागुणास्पृष्टत्वादित्यर्थः ॥ २२ ॥ अमलत्वंसूचितंनिर्विकारत्वमेवस्फुटयति । करोषीवेति । मायागतकृतिगत्यादिभिस्तद्वानिवभासि वस्तुतोविकारहीनत्वान्नकर्तेत्यादि । अकुर्वन्सर्वकृच्छुद्धस्तिष्ठन्नत्येतिधावतः । माययासर्वशक्तित्वादजःसबहुधामतः । इत्यभियुक्तोक्तेः ॥ २३ ॥ निर्विकारत्वेहेतुः श्रुतिदर्शितइत्याह । अप्राणइति । दिव्योह्यमूर्तःपुरुषःसबाह्याभ्यंतरोह्यजः । अप्राणोह्यमनाःशुद्धोऽक्षरात्परतरःपरः । इतिमुंडकश्रुतिः ॥ प्राणाद्युपाधिरहितः । अतएव कृतिगत्यादिरहितइतिभावः ॥ अक्षरमत्रमाया ततःपरतरः तद्गुणास्पृष्टःसर्वतःपरउत्कृष्टइतिश्रुत्यर्थः । सर्वभूतेषुसमःसन्घट इत्यादिप्रतीतेःसर्वत्रानुस्यूतत्वात् । अतःसर्वत्रतिष्ठन्नपि ॥ २४ ॥

अज्ञानध्वांतचित्तानामज्ञानरूपांधकारवच्चित्तैः । शेषेषष्ठी । तैर्नलक्ष्यसे सुमेधसांतत्त्वज्ञानांव्यक्तएव । दृश्यतेत्वग्र्ययाबुद्ध्यासूक्ष्मयासूक्ष्मदर्शिभिः । इति श्रुतेः । यस्यतवजठरेब्रह्मांडाःपरमाणवइवदृश्यंते ॥ २५ ॥ सत्वंममोदरसंभूतइतिलोकान्ममाहात्म्यंविडंबसेख्यापयासि । एतत्सर्वंभक्तपारवश्यादित्याह । भक्तेष्विति ॥ २६ ॥ यद्यपितेमायया॰ऽपत्यादिषुमग्नातद्विषयोत्कटेच्छावतीसंसारसागरेभ्रमामितथाऽप्यद्यतेपादमूलमागतातारिष्यामीति मन्येइतिशेषः ॥ २७ ॥ एतत्त्वद्रूपंशंखचक्रगदाधरत्वविशिष्टम् । आशास्यांतरमाह । आवृणोत्विति ॥ २८ ॥ उपसंहारेहेतुरलौकिकमिति । सर्वलोकैर्द्रष्टुमशक्यंतेजोमयत्वादित्यर्थः ॥ २९ ॥ ननुत्वत्तारणार्थमेवंरूपपरिग्रहइतिचेत्तत्राह । ललितेति । तमःअज्ञानमूलंसंसारम् ॥ ३० ॥ त्वादिष्टरूपभवनेहेतुमाह । अहंत्विति । मानु

अज्ञानध्वांतचित्तानांव्यक्तएवसुमेधसाम् ॥ जठरेतवदृश्यंतेब्रह्मांडाःपरमाणवः ॥ २५ ॥ त्वंममोदरसंभूतइतिलोकान्विडंबसे ॥ भक्तेषुपारवश्यंतेदृष्टंमेऽद्यरघूत्तम ॥ २६ ॥ संसारसागरेमग्नापतिपुत्रधनादिषु ॥ भ्रमामिमाययातेऽद्यपादमूलमुपागता ॥ २७ ॥ देवत्वद्रूपमेतन्मेसदातिष्ठतुमानसे ॥ आवृणोतुनमांमायातवविश्वविमोहिनी ॥ २८ ॥ उपसंहरविश्वात्मन्नदोरूपमलौकिकम् ॥ दर्शयस्वमहानंदबालभावंसुकोमलम् ॥ २९ ॥ ललितालिंगनालापैस्तरिष्याम्युत्कटंतमः ॥ श्रीभगवानुवाच ॥ यद्यदिष्टंतवास्त्यंबतत्तद्भवतुनान्यथा ॥ ३० ॥ अहंतुब्रह्मणापूर्वंभूमेर्भारापनुत्तये ॥ प्रार्थितोरावणंहंतुंमानुषत्वमुपागतः ॥ ३१ ॥ त्वयादशरथेनाहंतपसाऽऽराधितःपुरा ॥ मत्पुत्रत्वाभिकांक्षिण्यातथाकृतमानिंदिते ॥ ३२ ॥ रूपमेतत्त्वयादृष्टंप्राक्तनंतपसःफलम् ॥ मद्दर्शनंविमोक्षायकल्पतेह्यन्यदुर्लभम् ॥ ३३ ॥ संवादमावयोर्यस्तुपठेद्वाशृणुयादपि ॥ सयातिममसारूप्यंमरणेमत्स्मृतिंलभेत् ॥ ३४ ॥ इत्युक्त्वामातरंरामोबालोभूत्वारुरोदह ॥ बालत्वेऽपींद्रनीलाभोविशालाक्षोऽतिसुंदरः ॥ ३५ ॥

षत्वमुपागतःमानुषत्वंप्राप्तुंकृतमतिः ॥ ३१ ॥ तर्हिप्रथममेवकिंतथारूपंनकृतमतआह ॥ त्वयेति ॥ अहंपुत्रोयस्यास्तद्भावोमत्पुत्रत्वमतस्तत्प्रकटीकर्तुंतथाकृतमित्यर्थः ॥ ३२ ॥ प्राक्तनतपसःफलभूतमेतद्रूपंत्वयादृष्टम् । ननुत्वद्दर्शनमात्रंनपुरुषार्थोऽतआह । मदिति । एवंरूपस्यममदर्शनमन्यैस्तपोहीनैर्दुर्लभंविमोक्षायकल्पते । चित्तशुद्धिद्वारातत्त्वमस्यादिवाक्यज्ञानसंपादकत्वेनेतिभावः ॥ ३३ ॥ ३४ ॥ भक्तानुग्रहार्थंतद्ध्येयंमायिकंभगवतोरूपमाह । बालत्वेऽपीति ॥ ३५ ॥

लालिताखिललोकपःस्वावतरणेनलालितास्तोषिताअखिललोकपाइंद्रादयोयेनसः । पुत्रोद्भवःपुत्रोत्पत्तिस्तद्रूपमुत्सवम् ॥ ३६ ॥ राजीवंकमलम् । गुरुणेति करणेतृतीया । जातकर्माणि बहुवचनेननामकरणपर्यंतकर्तव्यषष्ठीपूजादिसंग्रहः ॥ ३७ ॥ ३८ ॥ सुरभीर्गाः ॥ ३९ ॥ अथनामकरणेनाम्नामन्वर्थ त्वंदर्शयति । यस्मिन्निति । विषयातत्त्वज्ञानेनअज्ञानविप्लवेअज्ञाननाशेतन्निमित्तंयस्मिन्योगिनोरमंतेइत्येकः । योगांतरमाह । रमणाद्भक्तानांवपुःसौंदर्ये णरमणाद्रामइत्यपि योगइतिशेषः । रमणंरामः भावेघञ् तंकरोति रामयति तत्करोतीति णिच् रामयतीतिरामः णिजंतादच् । तथाचभक्तान्रमयतीतिफ लितोऽर्थः ॥ ४० ॥ ४१ ॥ पायसांशानुसारतः कौसल्यापायसांशत्वाल्लक्ष्मणोरामानुचरः कैकेयीपायसांशत्वाच्छत्रुघ्नोभरतानुचरइत्यर्थः ॥ ४२ ॥

बालारुणप्रतीकाशोलालिताखिललोकपः ॥ अथराजादशरथः श्रुत्वापुत्रोद्भवोत्सवम् ॥ आनंदार्णवमग्नोऽसावाययौगुरुणासह ॥ ३६ ॥ रामंराजीवपत्राक्षंदृष्ट्वाहर्षाश्रुसंप्लुतः ॥ गुरुणाजातकर्माणिकर्तव्यानिचकारसः ॥ ३७ ॥ कैकेयीचाथभरतमसूतकमलेक्षणा ॥ सुमित्रा यांयमौजातौपूर्णेंदुसदृशाननौ ॥ ३८ ॥ तदाग्रामसहस्राणिब्राह्मणेभ्योमुदाददौ ॥ सुवर्णानिचरत्नानिवासांसिसुरभीःशुभाः ॥ ३९ ॥ य स्मिन्रमंतेमुनयोविद्ययाऽज्ञानविप्लवे ॥ तंगुरुःप्राहरामेतिरमणाद्रामइत्यपि ॥ ४० ॥ भरणाद्भरतोनामलक्ष्मणंलक्षणान्वितम् ॥ शत्रुघ्नं शत्रुहंतारमेवंगुरुरभाषत ॥ ४१ ॥ लक्ष्मणोरामचंद्रेणशत्रुघ्नोभरतेनच ॥ द्वंद्वीभूयचरंतौतौपायसांशानुसारतः ॥ ४२ ॥ रामस्तुलक्ष्मणे नाथविचरन्बाललीलया ॥ रमयामासपितरौचेष्टितैर्मुग्धभाषितैः ॥ ४३ ॥ भालेस्वर्णमयाश्वत्थपर्णमुक्ताफलप्रभम् ॥ कंठेरत्नमणिव्रात मध्यद्वीपिनखांचितम् ॥ ४४ ॥ कर्णयोःस्वर्णसंपन्नरत्नार्जुनसटालुकम् ॥ सिंजानमणिमंजीरकटिसूत्रांगदैर्वृतम् ॥ ४५ ॥

॥ ४३ ॥ स्वर्णमयाश्वत्थपर्णस्यप्रांतेसंयुक्तानियानिमुक्ताफलानि तैः प्रभाशोभायस्यतम् । रत्नमणीनांव्रातःसमूहस्तन्मध्येवर्तमानंयद्द्वीपिनखंव्याघ्रनखंतेनां चितंमंडितम् । यत्तु । व्याघ्रव्यालगजान्सिंहानश्वोष्ट्रमहिषान्वृषम् । भूषणेषुत्यजेदष्टौयदीच्छेच्चिरजीवितम् । इति तत्तुभूषणेषुव्याघ्राद्याकारचित्रनिषेधपरम् नतुमुख्यव्याघ्राद्यवयवनिषेधकमित्याहुः ॥ ४४ ॥ स्वर्णेसंपन्नानिघटितानिरत्नानियस्मिंस्तत् । अर्जुनवृक्षस्यसटालुकमपक्वफलंतदाकारंभूषणंयस्य । रत्नार्जु नशलाटुकमितिपाठांतरम् । अर्थस्तुल्यः । सिंजानाःशब्दयुक्तायेमणयस्तद्युक्तैःमंजीरकटिसूत्रांगदैर्वृतम् । मंजीरःपादभूषणम् । अंगदोबाहुभूषणम् ॥ ४५ ॥

स्मितंस्मितयुक्तंवक्त्रंयस्यसचासावल्पदशनश्चतम् । तर्णकान्गोवत्साननुतत्पुच्छप्रांतधरणपूर्वंसर्वतोरिंगमाणंपरितोबालगत्याखेलंतम् ॥ ४६ ॥ दृष्ट्वेति ॥ तादृ
शींतत्क्रीडामित्यर्थः ॥ ४७ ॥ प्रेम्णाआहूतोपीतिशेषः । लीलयाक्रीडासक्त्यानायातीत्यर्थः ॥ ४८ ॥ योगिमनोगतिंयोगिमनोविषयम् । कर्दमांकितपाणि
नोपलक्षितइतिशेषः ॥ ४९ ॥ ५० ॥ पुत्रादिकल्याणमुद्दिश्यसधवाभ्योदीयमानभक्ष्यविशेषवायनानिप्रकुर्वतीबभूवेतिशेषः । कर्णशष्कुलीकर्णपूरादयोभक्ष्य

स्मितवक्त्राल्पदशनमिंद्रनीलमणिप्रभम् ॥ अंगणेरिंगमाणंतंतर्णकाननुसर्वतः ॥ ४६ ॥ दृष्ट्वादशरथोराजाकौसल्यामुमुदेतदा ॥ भोक्ष्य
माणोदशरथोराममेहीतिचासकृत् ॥ ४७ ॥ आह्वयत्यतिहर्षेणप्रेम्णानायातिलीलया ॥ आनयेतिचकौसल्यामाहसासास्मितासुतम् ॥
॥ ४८ ॥ धावत्यपिनशक्नोतिस्प्रष्टुंयोगिमनोगतिम् ॥ प्रहसन्स्वयमायातिकर्दमांकितपाणिना ॥ ४९ ॥ किंचिद्गृहीत्वाकवलंपुनरेवपला
यते ॥ कौसल्याजननीतस्यमासिमासिप्रकुर्वती ॥ ५० ॥ वायनानिविचित्राणिसमलंकृत्यराघवम् ॥ अपूपान्मोदकान्कृत्वाकर्णशष्कुलि
कास्तथा ॥ कर्णपूरांश्चविविधान्वर्षवृद्धौचवायनम् ॥ ५१ ॥ गृहकृत्यंतयात्यक्तंतस्यचापल्यकारणात् ॥ एकदारघुनाथोऽसौगतोमातर
मंतिके ॥ ५२ ॥ भोजनंदेहिमेमातर्नश्रुतंकार्यसक्तया ॥ ततःक्रोधेनभांडानिलगुडेनाहनत्तदा ॥ ५३ ॥ शिक्यस्थंपातयामासगव्यंचनव
नीतकम् ॥ लक्ष्मणायददौरामोभरताययथाक्रमम् ॥ ५४ ॥ शत्रुघ्नायददौपश्चाद्दधिदुग्धंतथैवच ॥ सूदेनकथितंमात्रेहास्यंकृत्वाप्रधाव
ति ॥ ५५ ॥ आगतांतांविलोक्याथततःसर्वैःपलायितम् ॥ कौसल्याधावमानाऽपिप्रस्खलंतीपदेपदे ॥ ५६ ॥ रघुनाथंकरेधृत्वाकिंचिन्नो
वाचभामिनी ॥ बालभावंसमाश्रित्यमंदंमंदंरुरोदह ॥ ५७ ॥ तेसर्वेलालितामात्रागाढमालिंग्ययत्नतः ॥ एवमानंदसंदोहजगदानंदकार
कः ॥ ५८ ॥ मायाबालवपुर्धृत्वारमयामासदंपती ॥ अथकालेनतेसर्वेकौमारंप्रतिपेदिरे ॥ ५९ ॥ उपनीतावसिष्ठेनसर्वविद्याविशारदाः ॥
धनुर्वेदेचानिरताःसर्वशास्त्रार्थवेदिनः ॥ ६० ॥

विशेषाः । वर्षवृद्धिर्वर्षारंभदिनकर्तव्यंकर्म ॥ ५१ ॥ गृहकृत्यत्यागकारणंचापल्यमेवदर्शयति । एकदेति ॥ मातरमंतिकेमातुःसमीपेइत्यर्थः । द्वितीयाछांदसी
॥ ५२ ॥ अहनत् अहन्नित्यर्थः । गणकार्यस्यानित्यत्वान्नशब्लुक् ॥ ५३ ॥ गव्यंदधिदुग्धम् ॥ ५४ ॥ सूदःसूपकारःमात्रेकौसल्यायै ॥ ५५ ॥ ५६ ॥
॥ ५७ ॥ ५८ ॥ दंपतीकौसल्यादशरथौ कौमारंपंचवर्षाधिकत्वम् ॥ ५९ ॥ ६० ॥

॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ नकरोतीत्यत्रहेतुरविकारीपरिणामहीनइति । अविकारीत्यस्यैवव्याख्यानंपरिणामहीनइति ॥ ६६ ॥ इतिश्रीमत्सकलराजविपदुद्धरणेत्यादिविरुदा० अध्यात्म० सेतौबालकांडेतृतीयःसर्गः ॥ ३ ॥ ॥ अथरामंनेतुंविश्वामित्रागमनमाह ॥ कदाचिदिति ॥ रामंस्वमाययाजातंज्ञात्वातंद्रष्टुमभ्यागादित्यन्वयः ॥ १ ॥ अचिरेणशीघ्रंदर्शनाव्यवहितोत्तरकालेप्रत्युत्थायवसिष्ठेनसमागम्यसहितोभूत्वेतियावत् । पूजनेमुनिःकर्म

बभूवुर्जगतांनाथालीलयानररूपिणः ॥ लक्ष्मणस्तुसदाराममनुगच्छतिसादरम् ॥६१॥ सेव्यसेवकभावेनशत्रुघ्नोभरतंतथा ॥ रामश्चापधरोनित्यंतूणीबाणान्वितःप्रभुः ॥ ६२ ॥ अश्वारूढोवनंयातिमृगयायैसलक्ष्मणः ॥ हत्वादुष्टमृगान्सर्वान्पित्रेसर्वंन्यवेदयत् ॥ ६३ ॥ प्रातरुत्थायसुस्नातःपितरावभिवाद्यच ॥ पौरकार्याणिसर्वाणिकरोतिविनयान्वितः ॥ ६४ ॥ बंधुभिःसहितोनित्यंभुक्त्वामुनिभिरन्वहम् ॥ धर्मशास्त्ररहस्यानिशृणोतिव्याकरोतिच ॥ ६५ ॥ एवंपरात्मामनुजावतारोमनुष्यलोकाननुसृत्यसर्वम् ॥ चक्रेऽविकारीपरिणामहीनोविचार्यमाणेनकरोतिकिंचित् ॥ ६६ ॥ इतिश्रीमद०उमामहे०बा०तृतीयः सर्गः ॥ ३ ॥ श्रीमहादेवउवाच ॥ कदाचित्कौशिकोऽभ्यागादयोध्यांत्वनलप्रभः ॥ द्रष्टुंरामंपरात्मानंजातंज्ञात्वास्वमायया ॥१॥ दृष्ट्वादशरथोराजाप्रत्युत्थायाचिरेणतु ॥ वसिष्ठेनसमागम्य पूजयित्वायथाविधि ॥ २ ॥ अभिवाद्यमुनिंराजाप्रांजलिर्भक्तिनम्रधीः ॥ कृतार्थोऽस्मिमुनींद्राहंत्वदागमनकारणात् ॥ ३ ॥ त्वद्विधायद्गृहं यांतितत्रैवायांतिसंपदः ॥ यदर्थमागतोऽसित्वंब्रूहिसत्यंकरोमितत् ॥४॥ विश्वामित्रोऽपितंप्रीतःप्रत्युवाचमहामतिः ॥ अहंपर्वणिसंप्राप्ते दृष्ट्वायष्टुंसुरान्पितॄन् ॥ ५ ॥ यदारेभेतदादैत्याविघ्नंकुर्वंतिनित्यशः ॥ मारीचश्चसुबाहुश्चपरेचानुचरास्तयोः ॥ ६ ॥

॥ २ ॥ नम्रशरीरत्वेननम्रधीत्वानुमानम् । त्वदागमनरूपात्कारणादित्यर्थः ॥ ३ ॥ तत्रैवतद्गृहएव भवदाद्यागमनस्यसकलसंपत्प्रतिबंधकदुरितनाशकत्वादितिभावः । तत्करोमीतिसत्यंब्रवीमीतिशेषः ॥ ४ ॥ दृष्ट्वापर्वप्राप्तिंज्ञात्वासुरादीन्यष्टुम् ॥ ५ ॥ यदारेभेतदेत्यन्वयः ॥ ६ ॥

---

१ अत्र छंदोविषयकं पारोक्ष्यं, राक्षसभयसंस्मरणेन चित्तविक्षेपाद्वाऽवगन्तव्यम् ।

तवेति वदैवतवश्रेयइत्यर्थः ॥ ७ ॥ पप्रच्छेत्यस्यविश्वामित्रवचोनंतरमित्यादिः ॥ ८ ॥ ९ ॥ इतःमत्सन्निधानात् ॥ १० ॥ प्रत्याख्यातोयदीति । भविष्य
तीतिशेषः श्रेयोरामवियोगकृतमरणाभावरूपम् । असत्यंमुनिप्रत्याख्यानजंपापंतन्मूलंशापंच ॥ ११ ॥ शृण्विति । रामःपूर्वमपिमानुषएवेदानींपुनरपि
मानुषोजातइविन किंतु सनातनोनिर्विकारत्वात्सदैकरूपोयःपरमात्मासएवब्रह्मणापुराप्रार्थितःसन्नूतवभवनेजातइत्यन्वयः ॥ १२ ॥ १३ ॥ भगवदवतारयोग्यता

अतस्तयोर्वैवार्थायज्येष्ठंरामंप्रयच्छमे ॥ लक्ष्मणेनसहभ्रात्रातवश्रेयोभविष्यति ॥ ७ ॥ वसिष्ठेनसहामंत्र्यदीयतांयदिरोचते ॥ पप्रच्छगु
रुमेकान्तेराजाचिंतापरायणः ॥ ८ ॥ किंकरोमिगुरोरामंत्यक्तुंनोत्सहतेमनः ॥ बहुवर्षसहस्रांतेकष्टेनोत्पादिताःसुताः ॥ ९ ॥ चत्वारोऽ
मरतुल्यास्तेतेषांरामोऽतिवल्लभः ॥ रामस्त्वितोगच्छतिचेन्नजीवामिकथंचन ॥ १० ॥ प्रत्याख्यातोयदिमुनिःशापंदास्यत्यसंशयः ॥
कथंश्रेयोभवेन्मह्यमसत्यंचापिनस्पृशेत् ॥ ११ ॥ वसिष्ठउवाच ॥ शृणुराजन्देवगुह्यंगोपनीयंप्रयत्नतः ॥ रामोनमानुषोजातःपरमात्मास
नातनः ॥ १२ ॥ भूमेर्भारावतारायब्रह्मणाप्रार्थितःपुरा ॥ सएवजातोभवनेकौसल्यायांतवानघ ॥ १३ ॥ त्वंतुप्रजापतिःपूर्वंकश्यपोब्र
ह्मणःसुतः ॥ कौसल्याचादितिर्देवमातापूर्वंयशस्विनी ॥ भवंतौतपउग्रंवैतेपाथेबहुवत्सरम् ॥ १४ ॥ अग्राम्यविषयौविष्णुपूजाध्यानैक
तत्परौ ॥ तदाप्रसन्नोभगवान्वरदोभक्तवत्सलः ॥ १५ ॥ वृणीष्ववरमित्युक्तेत्वंमेपुत्रोभवामल ॥ इतित्वयायाचितोऽसौभगवान्भूतभा
वनः ॥ १६ ॥ तथेत्युक्त्वाऽद्यपुत्रस्तेजातोरामःसएवहि ॥ शेषस्तुलक्ष्मणोराजन्राममेवान्वपद्यत ॥ १७ ॥ जातौभरतशत्रुघ्नौशंखचक्र
गदाभृतः ॥ योगमायाऽपिसीतेतिजाताजनकनंदिनी ॥ १८ ॥ विश्वामित्रोऽपिरामायतांयोजयितुमागतः ॥ एतद्गुह्यतमंराजन्नवक्तव्यंक
दाचन ॥ १९ ॥ अतःप्रीतेनमनसापूजयित्वाऽथकौशिकम् ॥ प्रेषयस्वरमानाथंराघवंसहलक्ष्मणम् ॥ २० ॥

माह । त्वंत्विति ॥ भवंतौतेपाथेतपःकृतवंतौ ॥ १४ ॥ अग्राम्यविषयौग्राम्यविषयानासक्तौ तेनब्रह्मचर्यंसूचितम् ॥ १५ ॥ १६ ॥ शेषोलक्ष्मणः । शेषां
शोलक्ष्मणइत्यर्थः ॥ १७ ॥ शंखचक्रगदाभृतःसंबंधिनौ चक्रंगरुडावितिशेषः । तौभरतशत्रुघ्नौजातावित्यर्थः ॥ १८ ॥ १९ ॥ २० ॥

---

१ अयमर्थश्च–वाल्मीकियेऽन्यथैवोपसंगृहीतः । यच्च–मुनिनाऽयाचितस्यैव लक्ष्मणस्य दशरथेन वसिष्ठनिदेशतः समर्पणं कृतम् ।इति। २ ग्राम्यविषयश्च मैथुनादिः। ३ अयमर्थश्चवाल्मीकीयात्।

प्रमुदितांतरःहृष्टचित्तः ॥ २१ ॥ मूर्घ्न्यवघ्रायेति । प्रजापतेस्त्वांहिंकारेणावजिघ्रामि सहस्रायुषोऽसौजीवशरदः शतम् । इत्यवघ्राणमंत्रलिंगेन तस्यपुत्राद्या युर्वृद्धिकरत्वात्तत्करणमितिबोध्यम् ॥ २२ ॥ आगतौस्वसमीपंप्राप्तौरामलक्ष्मणौ ॥ २३ ॥ गृहीत्वा ययौ जगामेत्यर्थः ॥ २४ ॥ बलामिति ॥ बलाविद्याशरीरसामर्थ्यसंपादनद्वारेष्टसाधिका । बलंधेहितनुषुनः । इतिमंत्रलिंगात् । अतिबलातुसंकल्पमात्रादिष्टजनिकेत्याहुः ॥ २५ ॥ २६ ॥ अविचारयन् स्त्रियाअवध्यत्वमविचारयन्नित्यर्थः ॥ २७ ॥ सगुणमारूढज्यं तेनशब्देनधनुःशब्देन ॥ २८ ॥ असहमानेतिच्छेदः । क्रोधसंमूर्च्छिताअतिक्रुद्धा ॥ २९ ॥

वसिष्ठेनैवमुक्तस्तुराजादशरथस्तदा ॥ कृतकृत्यमिवात्मानंमेनेप्रमुदितांतरः ॥ २१ ॥ आहूयरामरामेतिलक्ष्मणेतिचसादरम् ॥ आलिंग्यमूर्धन्यवघ्रायकौशिकायसमर्पयत् ॥ २२ ॥ ततोऽतिहृष्टोभगवान्विश्वामित्रःप्रतापवान् ॥ आशीर्भिरभिनंद्याथआगतौरामलक्ष्मणौ ॥ २३ ॥ गृहीत्वाचापतूणीरबाणखड्गधरौययौ ॥ किंचिद्देशमतिक्रम्यराममाहूयभक्तितः ॥ २४ ॥ ददौबलांचातिबलांविद्येद्वेदेवनिर्मिते ॥ ययोर्ग्रहणमात्रेणक्षुत्क्षामादिनजायते ॥ २५ ॥ ततउत्तीर्यगंगांतेताटकावनमागमन् ॥ विश्वामित्रस्तदाप्राहरामंसत्यपराक्रमम् ॥ ॥ २६ ॥ अत्रास्तिताटकानामराक्षसीकामरूपिणी ॥ बाधतेलोकमखिलंजहितामविचारयन् ॥ २७ ॥ तथेतिधनुरादायसगुणंरघुनंदनः ॥ टंकारमकरोत्तेनशब्देनापूरयद्वनम् ॥ २८ ॥ तच्छुत्वाऽसहमानासाताटकाघोररूपिणी ॥ क्रोधसंमूर्च्छितारामममभिदुद्रावमेघवत् ॥ २९ ॥ तामेकेनशरेणाशुताडयामासवक्षसि ॥ पपातविपिनेघोरावमंतीरुधिरंबहु ॥ ३० ॥ ततोऽतिसुंदरीयक्षी सर्वाभरणभूषिता ॥ शापात्पिशाचतांप्राप्तामुक्तारामप्रसादतः ॥ ३१ ॥ नत्वारामंपरिक्रम्यगतारामाज्ञयादिवम् ॥ ३२ ॥ ततोऽतिहृष्टःपरिरभ्यराममूर्धन्यवघ्रायविचिन्त्यकिंचित् ॥ सर्वास्त्रजालंसरहस्यमंत्रंप्रीत्याऽभिरामायददौमुनींद्रः ॥ ३३ ॥ ॥ इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादेबालकांडेचतुर्थःसर्गः ॥ ४ ॥

॥ ३० ॥ ३१ ॥ ३२ ॥ ततस्ताटकावधकर्मवशादतिहृष्टो विश्वामित्रःकिंचिद्विचिंत्य रामगुरुत्वेनस्वस्यांतकालेमुक्तिपदप्राप्तियोग्यतालाभंविचार्येत्यर्थः । अभिरामायरामायसरहस्यमंत्रमस्त्रजालंददावित्यन्वयः ॥ ३३ ॥ इति श्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदा० अध्यात्मरामायणांबुधि० बालकांडेचतुर्थःसर्गः ॥ ४ ॥



१ मूर्धोवघ्राणस्य ।

तत्रकामाश्रमेताटकावधस्थानभूतेकामाश्रमाख्येकामस्यरुद्रेणानंगतासंपादकेवनेताटकाभयादेवमुनिसंकुले ॥ १ ॥ सिद्धाश्रमंविश्वामित्रवासस्थानंवामना
श्रमाख्यंतन्निवासिनःसिद्धाश्रमवासिनः ॥ २ ॥ ३ ॥ कुतःआगच्छतः कस्मिन्कालेइतिशेषः ॥ ४ ॥ ददृशातेदृष्टौ ॥ ५ ॥ द्वौबाणौसंदधे ईषत्कालांतर
त्वेऽपियुगपदिव ॥ ६ ॥ जलधौतत्समीपेसंपूर्णशतयोजनम् । क्षिप्तःसागररोधसिइतिवाल्मीक्युक्तेः ॥ ७ ॥ अग्निमयआग्नेयास्त्रयुक्तः । अजयत्हतवानितियाव

॥ श्रीमहादेवउवाच ॥ तत्रकामाश्रमेरम्येकाननेमुनिसंकुले ॥ उषित्वारजनीमेकांप्रभातेप्रस्थिताःशनैः ॥ १ ॥ सिद्धाश्रमंगताःसर्वेसिद्ध
चारणसेवितम् ॥ विश्वामित्रेणसंदिष्टामुनयस्तान्निवासिनः ॥ २ ॥ पूजांचमहतींचक्रुरामलक्ष्मणयोर्द्रुतम् ॥ श्रीरामःकौशिकंप्राहमुनेदीक्षां
प्रविश्यताम् ॥ ३ ॥ दर्शयस्वमहाभागकुतस्तौराक्षसाधमौ ॥ तथेत्युक्त्वामुनिर्यष्टुमारेभेमुनिभिःसह ॥ ४ ॥ मध्याह्नेददृशातेतौराक्षसौ
कामरूपिणौ ॥ मारीचश्चसुबाहुश्चवर्षंतौरुधिरास्थिनी ॥ ५ ॥ रामोऽपिधनुरादायद्वौबाणौसंदधेसुधीः ॥ आकर्णांतंसमाकृष्यविसस
र्जतयोःपृथक् ॥ ६ ॥ तयोरेकस्तुमारीचंभ्रामयञ्छतयोजनम् ॥ पातयामाससजलधौतदद्भुतमिवाभवत् ॥ ७ ॥ द्वितीयोऽग्निमयोबाणः
सुबाहुमजयत्क्षणात् ॥ अपरेलक्ष्मणेनाशुहतास्तदनुयायिनः ॥ ८ ॥ पुष्पौघैराकिरन्देवाराघवंसहलक्ष्मणम् ॥ देवदुंदुभयोनेदुस्तुष्टुवुः
सिद्धचारणाः ॥ ९ ॥ विश्वामित्रस्तुसंपूज्यपूजार्हंरघुनंदनम् ॥ अंकेनिवेश्यचालिंग्यभक्त्याबाष्पाकुलेक्षणः ॥ १० ॥ भोजयित्वासहभ्रा
त्रारामंपक्कफलादिभिः ॥ पुराणवाक्यैर्मधुरैर्निनायादिवसत्रयम् ॥ ११ ॥ चतुर्थेऽहनिसंप्राप्तेकौशिकोराममब्रवीत् ॥ रामराममहायज्ञंद्रष्टुं
गच्छामहेवयम् ॥ १२ ॥ विदेहराजनगरेजनकस्यमहात्मनः ॥ तत्रमाहेश्वरंचापमस्तिन्यस्तंपिनाकिना ॥ १३ ॥ द्रक्ष्यसित्वंमहासत्त्वंपू
ज्यसेजनकेनच ॥ इत्युक्त्वामुनिभिस्ताभ्यांययौगंगासमीपगम् ॥ १४ ॥

त् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ न्यस्तंतन्नगराधिपेराज्ञिकस्मिंश्चिन्यासत्वेनस्थापितम् ॥ १३ ॥ महासत्त्वमतिदृढं गंगासमीपगमितिगौतमाश्रम
विशेषणम् ॥ १४ ॥

यत्राहल्यातपआस्थितेत्यन्वयः ॥ १५ ॥ नानाजंतुभिःनानाप्रकारैः क्षुद्रप्राणिभिरपिहीनं गौतमशापादितिभावः ॥ १६ ॥ १७ ॥ १८ ॥ तपसाहरिमाराध
यन्नुस्थितइतिशेषः ॥ १९ ॥ २० ॥ अवात्सीत्वासंकृतवान् । तामहल्यांधर्षयितुमुपभोक्तुमंतरंमुन्यसान्निध्यरूपंप्रेप्सुरासीदितिशेषः ॥ २१ ॥ गौतमेगृहा
न्निर्गतेसतिमुनिवेषेणतद्गृहंप्रविश्यतामहल्यांधर्षयित्वोपभुज्यनिरगात् मुनिरपि स्वगृहमगात् ॥ २२ ॥ स्वरूपेणस्वस्यात्मनोगौतमस्यरूपेण दुष्टात्मत्वेहेतुर्मद्रूपधर

गौतमस्याश्रमंपुण्यंयत्राहल्याऽस्थितातपः॥ दिव्यपुण्यफलोपेतपादपैःपरिवेष्टितम्॥१५॥मृगपक्षिगणैर्हीनंनानाजंतुविवर्जितम्॥दृष्ट्वोवा
चमुनिंश्रीमान्रामोराजीवलोचनः॥१६॥कस्यैतदाश्रमपदंभातिभास्वच्छुभंमहत्॥पत्रपुष्पफलैर्युक्तंजंतुभिःपरिवर्जितम्॥१७॥ आह्लादय
तिमेचेतोभगवन्ब्रूहितत्त्वतः॥१८॥विश्वामित्रउवाच॥ शृणुरामपुरावृत्तंगौतमोलोकविश्रुतः॥सर्वधर्मभृतांश्रेष्ठस्तपसाराधयन्हरिम्॥१९॥
तस्मैब्रह्माददौकन्यामहल्यांलोकसुंदरीम्॥ब्रह्मचर्येणसंतुष्टःशुश्रूषणपरायणाम्॥२०॥तयासार्धमिहावात्सीद्गौतमस्तपतांवरः॥ शक्रस्तु
तांधर्षयितुमंतरंप्रेप्सुरन्वहम्॥ २१ ॥कदाचिन्मुनिवेषेणगौतमेनिर्गतेगृहात् ॥ धर्षयित्वाऽथनिरगात्त्वरितंमुनिरप्यगात् ॥ २२ ॥
दृष्ट्वायांतंस्वरूपेणमुनिःपरमकोपनः ॥ पप्रच्छकस्त्वंदुष्टात्मन्ममरूपधरोऽधमः ॥ २३ ॥ सत्यंब्रूहिनचेद्भस्मकरिष्यामिनसंशयः ॥
सोऽब्रवीद्देवराजोऽहंपाहिमांकामकिंकरम् ॥२४॥ कृतंजुगुप्सितंकर्ममयाकुत्सितचेतसा ॥ गौतमःक्रोधताम्राक्षःशशापदिविजाधिपम् ॥
॥ २५ ॥ योनिलंपटदुष्टात्मन्सहस्रभगवान्भव ॥ शप्त्वातंदेवराजानंप्रविश्यस्वाश्रमंद्रुतम् ॥ २६ ॥ दृष्ट्वाहल्यांवेपमानांप्रांजलिंगौतमो
ऽब्रवीत् ॥ दुष्टेत्वंतिष्ठदुर्वृत्तेशिलायामाश्रमेमम ॥ २७ ॥ निराहारादिवारात्रंतपःपरममास्थिता ॥ आतपानिलवर्षादिसहिष्णुःपरमेश्वरम्
॥ २८ ॥ ध्यायंतीराममेकाग्रमनसाहृदिसंस्थितम् ॥ नानाजंतुविहीनोऽयमाश्रमोमेभविष्यति ॥ २९ ॥ एवंवर्षसहस्रेषुह्यनेकेषुगतेषुच
रामोदाशरथिःश्रीमानागमिष्यतिसानुजः॥३०॥यदात्वदाश्रयशिलांपादाभ्यामाक्रमिष्यति॥तदैवधूतपापात्वंरामंसंपूज्यभक्तितः॥३१॥

त्वम् ॥ २३ ॥ कामकिंकरंकामपरवशतयाऽयुक्तकर्मकरमित्यर्थः ॥ २४ ॥ २५ ॥ २६ ॥ शिलायामिति । लीनाभूत्वेतिशेषः ॥ २७ ॥ २८ ॥ २९ ॥
दययास्वयमेवशापांतमाह । एवमिति ॥ ३० ॥ त्वदाश्रयशिलांत्वल्लयाश्रयशिलाम् ॥ ३१ ॥

॥ ३२ ॥ तदादितत्प्रभृति शुभेस्वाश्रमेअदृष्टाआस्तेइतिशेषः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ चतुर्भुजमिति । स्वस्यभगवदवतारत्वख्यापना यमध्येमध्येचतुर्भुजरूपंकौशल्यामिवदर्शयित्वापुनर्द्विभुजरूपेणैवस्थितइत्याह । धनुरिति ॥ ३८ ॥ ३९ ॥ ४० ॥ हर्षजन्यंयदश्रुरूपंजलंतद्युक्तेनेत्रेयस्याः सा ॥ ४१ ॥ ऐलतअस्तौषीत् । ईडस्तुतावित्यस्माल्लङि व्यत्ययेनशपोलुगभावः । डलयोरेकश्रुतित्वाल्लकारोच्चारणम् ॥ ४२ ॥ अहोइति । येतवपादा

परिक्रम्यनमस्कृत्यस्तुत्वाशापाद्विमोक्ष्यसे ॥ पूर्ववन्ममशुश्रूषांकरिष्यसियथासुखम् ॥ ३२ ॥ इत्युक्त्वागौतमःप्रागाद्धिमवंतंनगोत्तमम् ॥ तदाप्रहल्याभूतानामदृश्यास्वाश्रमेशुभे ॥ ३३ ॥ तवपादरजःस्पर्शंकांक्षतेपवनाशना ॥ आस्तेऽद्यापिरघुश्रेष्ठतपोदुष्करमास्थिता ॥ ३४ ॥ पावयस्वमुनेर्भार्यामहल्यांब्रह्मणःसुताम् ॥ इत्युक्त्वाराघवंहस्तेगृहीत्वामुनिपुंगवः ॥ ३५ ॥ दर्शयामासचाहल्यामुग्रेणतपसास्थिताम् ॥ रामःशिलांपदास्पृष्ट्वातांचापश्यत्तपोधनाम् ॥ ३६ ॥ ननामराघवोऽहल्यांरामोऽहमितिचाब्रवीत् ॥ ततोदृष्ट्वारघुश्रेष्ठं पीतकौशेयवास सम् ॥ ३७ ॥ चतुर्भुजंशंखचक्रगदापंकजधारिणम् ॥ धनुर्बाणधरंरामंलक्ष्मणेनसमन्वितम् ॥ ३८ ॥ स्मितवक्त्रंपद्मनेत्रं श्रीवत्सांकितवक्ष सम् ॥ नीलमाणिक्यसंकाशंद्योतयंतंदिशोदश ॥ ३९ ॥ दृष्ट्वारामंरमानाथंहर्षविस्फारितेक्षणा ॥ गौतमस्यवचःस्मृत्वाज्ञात्वानारायणं परम् ॥ ४० ॥ संपूज्यविधिवद्राममर्घ्यादिभिरनिंदिता ॥ हर्षाश्रुजलनेत्रांतादंडवत्प्रणिपत्यसा ॥ ४१ ॥ उत्थायच पुनर्दृष्ट्वारामंराजीवलो चनम् ॥ पुलकांकितसर्वांगागिरागद्गदयैलत ॥ ४२ ॥ अहल्योवाच ॥ अहोकृतार्थाऽस्मिजगन्निवासतेपादाब्जसँलग्नरजःकणादहम् ॥ स्पृशामियत्पद्मजशंकरादिभिर्विमृग्यतेरंधितमानसैःसदा ॥ ४३ ॥

ब्जसँल्लग्नरजःकणात्तत्संबंधादहंकृतार्थाऽस्मिमुक्तशापास्मि अहोइत्याश्चर्यम् । अपरंस्वस्यकृतार्थत्वेहेतुमाह । यत्तेपादपद्मंपद्मजशंकरादिभिस्तदलाभात्रंधितमा नसैः पीडितमानसैःसदास्पष्टुंविमृग्यते तदहंस्पृशामिचअतःकृतार्थास्मि ॥ ४३ ॥

अहोइतिआश्चर्यम् । विचित्रंवास्तवस्वरूपाननुगुणंतवचेष्टितम् । यतः । अपाणिपादोजवनोग्रहीता । इतिश्रुतेर्वस्तुतश्चरणादिवर्जितोऽपिसन्संपूर्णःसर्वव्याप्तोऽपि
सन्आनंदमयःतत्स्वरूपोऽपिसन्जगत्आत्मनिमनुष्यबुद्ध्युत्पादनेनविमोहयन्मनुष्यभावेनचलसि । क्रियामात्रोपलक्षणमिदम् । विरोधाभासोऽत्र । औपाधि
कत्वेनतत्परिहारात् । नन्वीदृशस्यमनुष्यभावःकथंतत्राह । अतिमायिकइति । सकलमायाबद्धयोऽत्युत्कृष्टःसकलजगद्रूपेणपरिणमनसमर्थः महामायावानित्यर्थः ।
एवंचशुद्धमायिकमेवेदंतवशरीरंचलनादिकंचनेतरवदितिभावः ॥ ४४ ॥ यत्पादेति । विष्णोःपादप्रसूता । इतिपुराणोक्तेः ॥ ४५ ॥ रमणीयदेहिनमित्या
र्थम् ॥ ४६ ॥ यस्यपादोविश्वम् । पादोऽस्यविश्वाभूतानि इतिश्रुतेः । तदेवपंकजंतस्यरजःरजइवसारांशः यथाकमलेसौगंध्यसंपादकतयांऽतर्विद्यमानं

अहोविचित्रंतवरामचेष्टितंमनुष्यभावेनविमोहितंजगत् ॥ चलस्यजस्रंचरणादिवर्जितःसंपूर्णआनंदमयोऽतिमायिकः ॥ ४४ ॥ यत्पादपं
कजपरागपवित्रगात्राभागीरथीभवविरिंचिमुखान्पुनाति ॥ साक्षात्सएवममदृग्विषयोयदास्तेकिंवर्ण्यतेममपुराकृतभागधेयम् ॥ ४५ ॥
मर्त्यावतारेमनुजाकृतिंहरिंरामाभिधेयंरमणीयदेहिनम् ॥ धनुर्धरंपद्मविशाललोचनंभजामिनित्यंनपरान्भजिष्ये ॥ ४६ ॥ यत्पादपंकज
रजःश्रुतिभिर्विमृग्यंयन्नाभिपंकजभवःकमलासनश्च ॥ यन्नामसाररसिकोभगवान्पुरारिस्तंरामचंद्रमनिशंहृदिभावयामि ॥ ४७ ॥ यस्या
वतारचरितानिविरिंचिलोकेगायंतिनारदमुखाभवपद्मजाद्याः ॥ आनंदजाश्रुपरिषिक्तकुचाग्रसीमावागीश्वरीचतमहंशरणंप्रपद्ये ॥ ४८ ॥

रजएवसारमेवंविश्वस्यसत्ताभानसंपादकतयाब्रह्मैवसारांशत्वाद्रजस्तच्छ्रुतिभिर्विमृग्यम् । श्रुतिशिरोरूपोपनिषद्गम्यत्वात्तस्येतिभावः । यन्नाम्नांमध्येसारंनामरा
मेतितस्यरसिकस्तद्विषयप्रीतिमान्भगवान्ऐश्वर्यधर्मयशोलक्ष्मीज्ञानवैराग्यवान् । षण्णामेषाम् । ऐश्वर्यस्यसमग्रस्यधर्मस्ययशसःश्रियः । ज्ञानवैराग्ययोश्चैव
षण्णांभगइतींगना । इतिभगसंज्ञकत्वोक्तेः । उत्पत्तिंप्रलयंचैवभूतानामागतिंगतिम् । वेत्तिविद्यामविद्यांचसवाच्योभगवानिति । इत्युक्तोवा ॥ ४७ ॥
विरिंचिलोकेब्रह्मलोकेनारदमुखाऋषयोभवपद्मजाद्यादेवाश्चत्वच्चरितस्मरणजानंदाश्रुभिःसिक्तेकुचाग्रेचूचुकेतथासीमेतत्प्रांतभागौचययासावागीश्वरीसरस्वतीचगाय
तीतिविपरिणामेनान्वयः ॥ ४८ ॥

१ कर्मधारयान्न मत्वर्थीयास्तदर्थप्रतिपत्तिकरश्चेद्बहुव्रीहिरिति सिद्धान्तादित्यर्थः ।

सोऽयंरामः परात्मापरःसर्वजीवेभ्यःप्रकृतेश्चअधिकआत्मापुरुषःपुरिशयनात्पुरुषःपुराणःसर्वदाविद्यमानइत्यर्थः । एषःस्वयंज्योतिःस्वप्रकाशः अनंतोऽविनाशीआ
द्यःसर्वकारणं यःपरानुग्रहेपरेषांमादृशजनानामनुग्रहेकर्तव्यतयाबुद्धिस्थेसतिपरमसुंदरत्वादिगुणैर्लोकविमोहनीयांमायातनुं नत्वितरजनवत्पांचभौतिकींधत्ते । सएव
एषरामः । उपासकानांकामार्थंब्रह्मणोरूपकल्पना । इतिश्रुतेः ॥ ४९ ॥ अयंहीति । विश्वस्यजगतउद्भवउत्पत्तिःसंयमोनाशः ताभ्यांपालनमप्युपलक्ष्यते । तेषां
स्वतंत्रःकर्ता । स्वतंत्रःकर्तेतिपाणिन्युक्तेः । यएकएवपूर्णोव्यापकआत्मास्वमायागुणेषुरजःसत्वतमःसुबिंबितःप्रतिबिंबितःसन्विरिंच्यादिनामभेदान्धत्ते रजोगुणो
पहितचैतन्यमेवब्रह्मा सत्त्वगुणोपहितंविष्णुः तमोगुणयुक्तंरुद्रइतिभावः ॥ ५० ॥ हेराम यत्तवांघ्रिपंकजंप्रियात्प्रियत्वाच्छ्रियावक्षसिधृतंलालितंच येनैकेनजगत्र
यमाक्रांतम् । इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् । इतिश्रुतेः । यच्चत्यक्ताभिमानैर्मुनिभिर्ध्येयम् । तद्विष्णोःपरमंपदंसदापश्यंतिसूरयः । इतिश्रुतेः । तस्मैनमोऽस्त्वि

सोऽयंपरात्मापुरुषःपुराणएषःस्वयंज्योतिरनंतआद्यः ॥ मायातनुंलोकविमोहनीयांधत्तेपरानुग्रहएषरामः ॥ ४९ ॥ अयंहिविश्वोद्भवसंय
मानामेकःस्वमायागुणबिंबितोयः ॥ विरिंचिविष्णवीश्वरनामभेदान्धत्तेस्वतंत्रःपरिपूर्णआत्मा ॥ ५० ॥ नमोऽस्तुतेरामतवांघ्रिपंकजंश्रि
याधृतंवक्षसिलालितंप्रियात् ॥ आक्रांतमेकेनजगत्रयंपुराध्येयंमुनींद्रैरभिमानवर्जितैः ॥ ५१ ॥ जगतामादिभूतस्त्वंजगत्त्वंजगदाश्रयः ॥ सर्व
भूतेष्वसंयुक्तएकोभातिभवान्परः ॥ ५२ ॥ ओंकारवाच्यस्त्वंरामवाचामविषयःपुमान् ॥ वाच्यवाचकभेदेनभवानेवजगन्मयः ॥ ५३ ॥

त्यर्थः ॥ ५१ ॥ जगतामिति । आदिभूतःकारणत्वादितिभावः । जगत्त्वंजगदनुवादेनत्वंपदोपात्तब्रह्मात्मत्वंविधीयते । सर्वंखल्विदंब्रह्मेतिवत् । तत्रजगतो
मिथ्याभूतत्वेनब्रह्मसामानाधिकरण्यानुपपत्तावपितस्याध्यस्तत्वेनजगद्बाधफलकत्वान्नदोषः । एवंचजगदारोपाधिष्ठानंत्वमित्यर्थः । तदेवाह । जगदाश्रयइति ।
इमाःप्रजाःसदायतनाःसत्प्रतिष्ठाः इतिश्रुतेः । वास्तवआश्रयाश्रयिभावोनास्त्येवेत्याह । सर्वभूतेष्वसंयुक्तइति । एवंचश्रुत्युक्तंतदधिष्ठानत्वमध्यारोपितमेवेति
भावः । अतएवभवानेकोऽद्वितीयोभातिप्रकाशते ॥ ५२ ॥ ओंकारवाच्यस्त्वम् । तस्यवाचकः प्रणवः । इतिपातंजलसूत्रात् । अवतीत्योमितिनिरुपा
धिकरक्षकत्वगुणेनसतद्वाच्यः । यद्वा । अश्चउश्चमश्चओमितिब्रह्माविष्णुशिवात्मत्वेनसतद्वाच्यः । तुर्येणनादाख्यध्वनिनाचशुद्धंब्रह्मस्वरूपतएवतत्रनिबद्धंपक्षद्व

येऽपि । यदाऽपिसोऽहमितिशब्दे । सकारार्णंहकारार्णंलोपयित्वातःपरम् ॥ संधिंकुर्यात्पूर्वरूपंततोऽसौप्रणवोभवेत् । इतिरीत्याप्रणवसाधनम् । तदापिअहमनुवादेनस त्ताविशिष्टांतर्याम्यभेदप्रतिपादनात्सगुणएवतदर्थः । यद्वा । सकारहकारलोपेनतत्त्वाहंतयोस्त्यागाच्छुद्धमेवब्रह्मतदर्थः । अत्रशक्तिग्रहादिप्रकारोऽन्यत्रविस्तरेणप्रपं चितः । तर्हिकिंसगुणएवाहं । नेत्याह । वाचामविषयइति । निर्धर्मकत्वाच्छक्त्याद्यसंभवेनस्वरूपतस्तज्जन्यबोधाविषयइत्यर्थः । नन्वेवं । तस्यवाचकःप्रणवः । इतिपातंजलसूत्रासंगतिस्तत्राह । वाच्येति । वाच्यवाचकभेदेनतत्कल्पनयाभवानेवमाययाजगन्मयइतिकल्पितभेदेनकल्पितगुणैश्चतवावाच्यत्वंगृहीत्वापारमर्षसूत्रो पपत्तिरितिभावः ॥ ५३ ॥ उक्तंजगन्मयत्वंमायिकमित्याह । कार्येत्यादि ॥ कार्यंमहत्तत्त्वादि कारणंमायारूपामूलप्रकृतिः कर्तृत्वंतत्तदुपादानगोचरापरोक्ष ज्ञानचिकीर्षाकृतिमत्त्वम् । फलंस्वर्गनरकादिसाधनंकृत्वादिवेदादि एतद्भेदतः एकोऽपित्वंबहुरूपयामाययाउक्तभेदैर्युक्तइवभासि । उक्तंचविष्णुपुराणे । सएवमूल

कार्यकारणकर्तृत्वफलसाधनभेदतः ॥ एकोविभासिरामत्वंमाययाबहुरूपया ॥ ५४ ॥ त्वन्मायामोहितधियस्त्वांनजानंतितत्त्वतः ॥ मानुषंत्वाभिमन्यंतेमायिनंपरमेश्वरम् ॥ ५५ ॥ आकाशवत्त्वंसर्वत्रबहिरंतर्गतोऽमलः ॥ असंगोह्यचलोनित्यःशुद्धोबुद्धःसदव्ययः ॥ ५६ ॥ योषिन्मूढाऽहमज्ञातेतत्त्वंजानेकथंविभो ॥ तस्मात्तेशतशोरामनमस्कुर्यामनन्यधीः ॥ ५७ ॥

प्रकृतिर्व्यक्तरूपीजगद्वसः ॥ तस्मिन्नेवलयंसर्वंयातितत्रचतिष्ठति ॥ कर्ताक्रियाणांसचइज्यतेक्रतुःसएवतत्कर्मफलंचतस्ययत् । स्रगादियत्साधनमप्यशेषतोहरेर्नं किंचिद्व्यतिरिक्तमस्ति । इति ॥ ५४ ॥ नन्वीदृशोयद्यहंतर्हिलोकोमांतथाकिमितिनजानातीत्यत्राह । त्वन्मायेति । त्वद्विषययामाययेत्यर्थः । तदुक्तंवि ष्णुपुराणे । सोऽहंसत्त्वंजगच्चेदंसदेवासुरमानुषम् । अविद्यामोहितात्मानः पुरुषाभिन्नदर्शिनः ॥ इति ॥ ५५ ॥ ननुतर्हितादृशएवाहंनेत्याह । आकाशव दिति । अचलोऽक्रियः बुद्धोज्ञानरूपः सत्सत्तारूपः नित्यत्वमनादित्वम् अव्ययत्वमनंतत्त्वम् ॥ ५६ ॥ मूढातमोगुणप्रधानाअतएवाज्ञा नमस्कुर्याम् । त्वद्रूपज्ञानायेतिभावः ॥ ५७ ॥

१ वर्णम् । यथा—सोऽहमित्यत्र-स्-ओ-ह्-अ-म्-इतिस्थितौ स्-ह्इत्येतयोर्लोपं ओअम्इत्यत्रपूर्वरूपेओं इति सिद्धम् । २ पातञ्जलम् ।

सक्तानिरंतरा ॥ ५८ ॥ पुरुषाध्यक्षसकलपुरुषसाक्षिन् हृषीकेशहृषीकाणामिंद्रियाणामधिष्ठाता हृष्यंतिविषयैरितिहृषीकाणींद्रियाणि हृषीकेशंभयंपुचेतिविष्णु
धर्मोक्तेर्भीतयाऽहल्ययैवन्नामस्मृतम् । नारंजीवसमूहोऽयनंस्थानंयस्यांतर्यामित्वात्तत्रस्थितत्वान्नारायणः । नयवीतिनरःप्रोक्तःपरमात्मासनातनः । नराज्जाता
नितत्त्वानिनाराणीतिततोविदुः ॥ तान्येवचायनंतस्यतेननारायणःस्मृतः । इतितुमनुः । आपोनारास्तत्स्थितत्वाद्वानारायणः । अस्यमंत्रस्यसंसारभय
नाशकत्वात्स्मरणम् । तदुक्तंनृसिंहपुराणे । नारायणायनमइत्ययमेवसत्यःसंसारघोरविषसंहरणायमंत्रः ॥ ५९ ॥ तदेवाह । भवभयेति ॥ भवभयंसंसा

देवमेयत्रकुत्रापिस्थितायाअपिसर्वदा ॥ त्वत्पादकमलेसक्ताभक्तिरेवसदाऽस्तुमे ॥ ५८ ॥ नमस्तेपुरुषाध्यक्षनमस्तेभक्तवत्सल ॥
नमस्तेऽस्तुहृषीकेशनारायणनमोऽस्तुते ॥ ५९ ॥ भवभयहरमेकंभानुकोटिप्रकाशंकरधृतशरचापंकालमेघावभासम् ॥ कन
करुचिरवस्त्रंरत्नवत्कुंडलाढ्यंकमलविशदनेत्रंसानुजंराममीडे ॥ ६० ॥ स्तुत्वैवंपुरुषंसाक्षाद्राघवंपुरतःस्थितम् ॥ परिक्रम्यप्रण
म्याशुसानुज्ञातायौपतिम् ॥ ६१ ॥ अहल्ययाकृतंस्तोत्रंयःपठेद्भक्तिसंयुतः ॥ समुच्यतेऽखिलैःपापैःपरंब्रह्माधिगच्छति ॥ ६२ ॥
पुत्राद्यर्थेपठेद्भक्त्यारामंहृदिनिधायच ॥ संवत्सरेणलभतेवंध्याअपिसुपुत्रकम् ॥ ६३ ॥ सर्वान्कामानवाप्नोतिरामचंद्रप्रसादतः ॥
॥ ६४ ॥ ब्रह्मघ्नोगुरुतल्पगोऽपिपुरुषःस्तेयीसुरापोऽपिवामातृभ्रातृविहिंसकोऽपिसततंभोगैकबद्धातुरः ॥ नित्यंस्तोत्रमिदंजप
न्रघुपतिंभक्त्याहृदिस्थंस्मरन्ध्यायन्मुक्तिमुपैतिकिंपुनरसौस्वाचारयुक्तोनरः ॥ ६५ ॥ इति श्रीमदध्या० उमामहेश्वरसंवादेबालकांडे
अहल्योद्धरणंनामपंचमःसर्गः ॥ ५ ॥ ॥ सूतउवाच ॥ विश्वामित्रोऽथतंप्राहराघवंसहलक्ष्मणम् ॥ गच्छामोवत्समिथिलांजनकेनाभिपालि
ताम् ॥ १ ॥ दृष्ट्वाक्रतुवरंपश्चादयोध्यांगंतुमर्हसि ॥ इत्युक्त्वाप्रययौगंगामुत्तर्तुंसहराघवः ॥ तस्मिन्कालेनाविकेननिषिद्धोरघुनंदनः ॥ २ ॥

रभयम् । कालमेघोनीलमेघः ॥ ६० ॥ साऽहल्या पतिंगौतमम् ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ मातृभ्रात्रित्यत्रानङ्भावआर्षः । भोगैकबद्धःआतु
रइतिच्छेदः । संधिरार्षः ॥ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराजमानस्यहिम्मतिवर्मणःपुत्रस्यश्रीरामवर्मणः कृतावध्यात्मरामायणा
न्बुधिसेतौबालकांडेपंचमःसर्गः ॥ ५ ॥ ॥ छ ॥ ॥ विश्वामित्रइति ॥ वयंगच्छामइतिप्राहेत्यन्वयः । बहुवचनादेवरामलक्ष्मणयोरपिगमनकर्तृत्वम् ॥ १ ॥
उत्तर्तुमित्यागमशासनानित्यत्वादिडभावः । नाविकेननौतारकेण ॥ २ ॥

दारुदृषदोःकाष्ठपाषाणयोः मानुषीकरणचर्णमिति । शिलारूपाऽहल्यायाःपादस्पर्शमात्रेणमानुषदेहसंपादनात् ॥ ३ ॥ ४ ॥ ५ ॥ प्रातर्विदेहस्यपुरंगत्वेति शेषः । ऋषिवाटमृषिवासस्थानमार्गम् ॥ ६ ॥ सोपाध्यायःगौतमपुत्रशतानंदसहितः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ मे नोदितः मयाप्रेरितइत्यर्थः

नाविकउवाच ॥ क्षालयामितवपादपंकजंनाथदारुदृषदोःकिमंतरम् ॥ मानुषीकरणचूर्णमस्तितेपादयोरितिकथाप्रथीयसी ॥ ३ ॥ पादांबुजंतेविमलंहिकृत्वापश्चात्परंतीरमहंनयामि ॥ नोचेत्तरीसद्युवतीमलेनस्याच्चेद्विभोविद्धिकुटुंबहानिः ॥ ४ ॥ इत्युक्त्वाक्षालितौपादौपरंतीरंततोगताः ॥ कौशिकोरघुनाथेनसहितोमिथिलांययौ ॥ ५ ॥ विदेहस्यपुरंप्रातर्ऋषिवाटंसमाविशत् ॥ प्राप्तंकौशिकमाकर्ण्यजनकोऽतिमुदान्वितः ॥ ६ ॥ पूजाद्रव्याणिसंगृह्यसोपाध्यायःसमाययौ ॥ दंडवत्प्रणिपत्याथपूजयामासकौशिकम् ॥ ७ ॥ पप्रच्छराघवौदृष्ट्वासर्वलक्षणसंयुतौ ॥ द्योतयंतौदिशःसर्वाश्चंद्रसूर्याविवापरौ ॥ ८ ॥ कस्यैतौनरशार्दूलौपुत्रौदेवसुतोपमौ ॥ मनःप्रीतिकरौमेऽद्यनरनारायणाविव ॥ ९ ॥ प्रत्युवाचमुनिःप्रीतोहर्षयञ्जनकंतदा ॥ पुत्रौदशरथस्यैतौभ्रातरौरामलक्ष्मणौ ॥ १० ॥ मखसंरक्षणार्थायमयानीतौपितुःपुरात् ॥ आगच्छन्राघवोमार्गेताटकांविश्वघातिनीम् ॥ ११ ॥ शरेणैकेनहतवान्नोदितोमेऽतिविक्रमः ॥ ततोममाश्रमंगत्वाममयज्ञविहिंसकान् ॥ १२ ॥ सुबाहुप्रमुखान्हत्वामारीचंसागरेऽक्षिपत् ॥ ततोगंगातटेपुण्येगौतमस्याश्रमेशुभे ॥ १३ ॥ गत्वातत्रशिलारूपागौतमस्यवधूःस्थिता ॥ पादपंकजसंस्पर्शात्कृतामानुषरूपिणी ॥ १४ ॥ दृष्ट्वाऽहल्यांनमस्कृत्यतयासम्यक्प्रपूजितः ॥ इदानींद्रष्टुकामस्तेगृहेमाहेश्वरंधनुः ॥ १५ ॥ पूजितंराजभिःसर्वैर्दृष्टमित्यनुशुश्रुवे ॥ अतोदर्शयराजेंद्रशैवंचापमनुत्तमम् ॥ दृष्ट्वायोध्यांजिगमिषुःपितरंद्रष्टुमिच्छति ॥ १६ ॥

॥ १२ ॥ १३ ॥ १४ ॥ तेगृहेपूजितंधनुर्द्रष्टुकामइदानीमागतइत्यन्वयः । तच्चसर्वैराजभिर्दृष्टमेवनत्वारूढज्यंकृतमित्यनुशुश्रुवेअनेनश्रुतमित्यर्थः ॥ १५ ॥ दृष्ट्वेत्यस्यधनुःकर्म । यतःपितरंद्रष्टुमिच्छत्यतोऽयोध्यांजिगमिषुरित्यन्वयः ॥ १६ ॥ ॥

१ अनेनास्य तस्य नाविकस्य पादप्रक्षालनतः श्रीरामपादसेवापि जातेत्यन्तर्गतो भक्त्युद्रेको निदर्शितः ।

॥ १७ ॥ मंत्रिणंसुदामाख्यम् ॥ १८ ॥ १९ ॥ कौशिकोऽपितथेत्युक्त्वावक्ष्यमाणमाहेत्यन्वयः ॥ २० ॥ मौनीशेऋषिश्रेष्ठे ॥ २१ ॥ २२ ॥
परिकरंकटिवस्त्रबंधम् ॥ २३ ॥ गुणंज्याम् ॥ २४ ॥ अखिलहृत्सारः अखिलप्राणिनांहिरण्यगर्भादीनांसकलब्रह्मांडस्थानांहृत्सारोबलंयस्यसः ॥ २५ ॥
मर्त्यंमनुष्यलोकम् ॥ २६ ॥ २७ ॥ रघूद्वहमालिंग्यराजाऽतिहृष्टो जातइतिशेषः । सीतामातरोजनकपत्न्यः । अंतःपुराजिरेतदंगणेआगताः । किमिदमि

इत्युक्तोमुनिनाराजापूजार्हाविितिपूजया ॥ पूजयामासधर्मज्ञोविधिदृष्टेनकर्मणा ॥ १७ ॥ ततःसंप्रेषयामासमंत्रिणंबुद्धिमत्तरम् ॥ जनकउवाच ॥ शीघ्रमानयविश्वेशचापंरामायदर्शय ॥ १८ ॥ ततोगतेमंत्रिवरेराजाकौशिकमब्रवीत् ॥ यदिरामोधनुर्धृत्वाकोट्यामारोपयेद्गुणम् ॥
॥ १९ ॥ तदामयाऽत्मजासीतादीयतेराघवायहि ॥ तथेतिकौशिकोऽप्याहरामंसंवीक्ष्यसस्मितम् ॥ २० ॥ शीघ्रंदर्शयचापाग्र्यंरामायामिततेजसे ॥ एवंब्रुवतिमौनीशआगताश्चापवाहकाः ॥ २१ ॥ चापंगृहीत्वाबलिनःपंचसाहस्रसंख्यकाः ॥ घंटाशतसमायुक्तंमणिवज्रादिभूषितम् ॥ २२ ॥ दर्शयामासरामायमंत्रीमंत्रवतांवरः ॥ दृष्ट्वारामःप्रहृष्टात्माबद्ध्वापरिकरंदृढम् ॥ २३ ॥ गृहीत्वावामहस्तेनलीलयातोलयन्धनुः ॥ आरोपयामासगुणंपश्यत्स्वाखिलराजसु ॥ २४ ॥ ईषदाकर्षयामासपाणिनादक्षिणेनसः ॥ बभंजाखिलहृत्सारोदिशःशब्देनपूरयन् ॥ २५ ॥ दिशश्चविदिशश्चैवस्वर्गंमर्त्यंरसातलम् ॥ तदद्भुतमभूत्तत्रदेवानांदिविपश्यताम् ॥ २६ ॥ आच्छादयंतःकुसुमैर्देवाःस्तुतिभिरीडिरे ॥ देवदुंदुभयोनेदुर्ननृतुश्चाप्सरोगणाः ॥ २७ ॥ द्विधाभग्नंधनुर्दृष्ट्वाराजालिंग्यरघूद्वहम् ॥ विस्मयंलेभिरेसीतामातरोंऽतःपुराजिरे
॥ २८ ॥ सीतास्वर्णमयींमालांगृहीत्वादक्षिणेकरे ॥ स्मितवक्रास्वर्णवर्णासर्वाभरणभूषिता ॥ २९ ॥ मुक्ताहारैःकर्णपत्रैःक्वणच्चरणनूपुरा ॥ दुकूलपरिसंवीतावस्त्रांतर्व्यंजितस्तनी ॥ ३० ॥ रामस्योपरिनिक्षिप्यस्मयमानामुदंययौ ॥ ततोमुमुदिरेसर्वेराजदाराःस्वलंकृतम् ॥
॥ ३१ ॥ गवाक्षजालरंध्रेभ्योदृष्ट्वालोकविमोहनम् ॥ ततोऽब्रवीन्मुनिंराजासर्वशास्त्रविशारदः ॥ ३२ ॥

तिविस्मयवशादितिभावः । विस्मयमद्भुतरसंलेभिरेप्राप्ताः ॥ २८ ॥ स्मितवक्रा । स्मितपदेअर्शआद्यच् । स्मितयुक्तंवक्रंयस्याः सा ॥ २९ ॥ कर्णपत्रैःकर्णभूषणैः उपलक्षितेतिशेषः । चरणेनचलितेनक्वणन्नूपुरंयस्याःसा । आर्षःसमासः ॥ ३० ॥ निक्षिप्येत्यस्यमाला कर्म । स्वलंकृतंलोकविमोहनंरामंदृष्ट्वामुमुदिरेइत्यन्वयः ॥ ३१ ॥ ३२ ॥

पत्रंसंदेशप्रापकलेखवत्पत्रसहितंदूतमित्यर्थः । यथागच्छतिवथापत्रंप्रेषयेत्यन्वयः । सपुत्रकःभरतादिसहितः ॥ ३३ ॥ ३४ ॥ राजशार्दूलंदशरथं राम श्रेयः विवाहरूपं रामकृतंधनुर्भंगम् ॥ ३५ ॥ गजाश्वरथपत्तयइतिमध्यमपदलोपीसमासः । द्वंद्वश्चेतिसूत्रे सेनांगशब्देनरथिकादीनामेवग्रहणं न रथादीनाम तोवाऽत्रनदोषः । अतएवसंग्रामहस्त्यश्वरथपदातिभिरितिअल्पाच्तरसूत्रस्थभाष्यप्रयोगःसंगच्छत इत्यन्ये ॥ ३६ ॥ ३७ ॥ राममातृःकौसल्यायाः

भोःकौशिकमुनिश्रेष्ठपत्रंप्रेषयसत्वरम् ॥ राजादशरथःशीघ्रमागच्छतुसपुत्रकः ॥३३॥ विवाहार्थंकुमाराणांसदारःसहमंत्रिभिः ॥ तथेतिप्रे षयामासदूतांस्त्वरितविक्रमान् ॥ ३४ ॥ तेगत्वाराजशार्दूलंरामश्रेयोन्यवेदयन्॥श्रुत्वारामकृतंराजाहर्षेणमहताप्लुतः ॥ ३५ ॥ मिथिला गमनार्थायत्वरयामाससमंत्रिणः॥ गच्छंतुमिथिलांसर्वेंगजाश्वरथपत्तयः ॥३६॥ रथमानयमेशीघ्रंगच्छाम्यद्यैवमाचिरम् ॥ वसिष्ठस्त्वग्रतो यातुसदारःसहितोऽग्निभिः ॥ ३७ ॥ राममातृःसमादायमुनिर्मेभगवान्गुरुः ॥ एवंप्रस्थाप्यसकलंराजर्षिर्विपुलंरथम् ॥ ३८ ॥ महत्यासे नयासार्धमारुह्यत्वरितोययौ ॥ आगतंराघवंश्रुत्वाराजाहर्षसमाकुलः ॥ ३९ ॥ प्रत्युज्जगामजनकःशतानंदपुरोधसा ॥ यथोक्तपूजया पूज्यंपूजयामाससत्कृतम् ॥ ४० ॥ रामस्तुलक्ष्मणेनाशुववंदेचरणौपितुः ॥ ततोहृष्टोदशरथोरामंवचनमब्रवीत् ॥ ४१ ॥ दिष्ट्यापश्या मितेरामसुखंफुल्लांबुजोपमम् ॥ मुनेरनुग्रहात्सर्वंसंपन्नंममशोभनम् ॥ ४२ ॥ इत्युक्त्वाऽऽघ्रायमूर्धानमालिंग्यचपुनःपुनः ॥ हर्षेणमहता विष्टोब्रह्मानंदंगतोयथा ॥ ४३ ॥ ततोजनकराजेनमंदिरेसान्निवेशितः ॥ शोभनेसर्वभोगाढ्येसदारःससुतःसुखी ॥ ४४ ॥ ततःशुभेदिने लग्नेसुमुहूर्तेरघूत्तमम् ॥ आनयामासधर्मज्ञोरामंसभ्रातृकंतदा ॥ ४५ ॥ रत्नस्तंभसुविस्तारेसुवितानेसुतोरणे ॥ मंडपेसर्वशोभाढ्ये मुक्तापुष्पफलान्विते ॥ ४६ ॥

प्रस्थाप्यनगराद्बहिःसंप्रेष्यरथमारुह्यतयैवसेनयासार्धंययावित्यन्वयः ॥ ३८ ॥ ३९ ॥ शतानंदपुरोधसा सहितइतिशेषः । यथोक्तपूजयायथाशास्त्रोक्तपूज या ॥ ४० ॥ ४१ ॥ फुल्लांबुजोपमंविकसितकमलसदृशम् ॥ ४२ ॥ ब्रह्मानंदंगतःप्राप्तः समाधावितिशेषः ॥ ४३ ॥ ४४ ॥ ४५ ॥ वितानंवासः कृतमंगणाच्छादनम् । मंडपोऽत्रविवाहशाला ॥ ४६ ॥



१–रघोर्गोत्रापत्यं पुमांसं दशरथमित्यर्थः ।

सुसंबाधेसंकीर्णे सुवासिन्योजीवद्भर्तृकाः । पतकोरुचकोरुक्मोनिष्कंवक्षोविभूषणे । इतिकोशाद्वक्षोविभूषणंनिष्कंतत्कंठेयासांताभिः ॥ ४७ ॥ भेरीदुंदुभीवाद्यवि
शेषौ वितस्तित्रितयदीर्घाताम्रनिर्मिताचर्मच्छन्नाचतुर्विंशत्यंगुलवदनद्वयाभेरी । वर्तुलश्चर्मबद्धैकाननोदुंदुभिरितिवदंति । रत्नांचितेरत्नघटिते ॥ ४८ ॥ रामस्यो
भयपार्श्वयोःस्थितंवसिष्ठंकौशिकंचयथाक्रमंपूर्वंवसिष्ठंततःकौशिकमितिक्रमेणपूजयित्वेत्यन्वयः ॥ ४९ ॥ सीतामानीयअग्रेकृत्वा ॥ ५० ॥ सभार्योजनकोरामं

वेदविद्भिःसुसंबाधेब्राह्मणैःस्वर्णभूषितैः ॥ सुवासिनीभिःपरितोनिष्ककंठीभिरावृते ॥ ४७ ॥ भेरीदुंदुभिनिर्घोषैर्गीतनृत्यैःसमाकुले ॥
दिव्यरत्नांचितेस्वर्णपीठेरामंन्यवेशयत् ॥ ४८ ॥ वसिष्ठंकौशिकंचैवशतानंदःपुरोहितः ॥ यथाक्रमंपूजयित्वारामस्योभयपार्श्वयोः
॥ ४९ ॥ स्थापयित्वा सतत्राग्निंज्वालयित्वायथाविधि ॥ सीतामानीयशोभाढ्यांनानारत्नविभूषिताम् ॥ ५० ॥ सभार्योजनकःप्राया
द्रामंराजीवलोचनम् ॥ पादौप्रक्षाल्यविधिवत्तदपोमूर्ध्न्यधारयत् ॥ ५१ ॥ याधृतामूर्ध्निशर्वेणब्रह्मणामुनिभिःसदा ॥ ततःसीतांकरेधृत्वा
साक्षतोदकपूर्वकम् ॥ ५२ ॥ रामायप्रददौप्रीत्यापाणिग्रहविधानतः ॥ सीताकमलपत्राक्षीस्वर्णमुक्तादिभूषिता ॥ ५३ ॥ दीयतेमेसुतातु
भ्यंप्रीतोभवरघूत्तम ॥ इतिप्रीतेनमनसासीतांरामकरेऽर्पयन् ॥ ५४ ॥ मुमोदजनकोलक्ष्मींक्षीराब्धिरिवविष्णवे ॥ ऊर्मिलांचौरसींकन्यां
लक्ष्मणायददौमुदा॥ ५५ ॥तथैवश्रुतकीर्तिंचमांडवींभ्रातृकन्यके ॥ भरतायददावेकांशत्रुघ्नायापरांददौ ॥ ५६ ॥ चत्वारोदारसंपन्नाभ्रात
रःशुभलक्षणाः ॥ विरेजुःप्रभयासर्वेलोकपालाइवापरे ॥ ५७ ॥ ततोऽब्रवीद्वसिष्ठायविश्वमित्रायमैथिलः॥ जनकःस्वसुतोदंतंनारदेनाभि
भाषितम् ॥ ५८ ॥ यज्ञभूमिविशुद्ध्यर्थंकर्षतोलांगलेनमे ॥ सीतामुखात्समुत्पन्नाकन्यकाशुभलक्षणा ॥ ५९ ॥ तामद्राक्षमहंप्रीत्यापुत्रि
काभावभाविताम् ॥ अर्पिताप्रियभार्यायैशरच्चंद्रनिभानना ॥ ६० ॥

प्रतिप्रायादित्यन्वयः ॥ ५१ ॥ याःगंगारूपाः ॥ ५२ ॥ ५३ ॥ सीतानाम्नीमेसुतातुभ्यंदीयतेप्रीतोभवेति अनेननिष्कामतयाभगवत्प्रीतयेदानंकृतवानितिसूच्य
ते । रामकरेसीतामर्पयन्जनकोलक्ष्मींविष्णवेऽर्पयन्समुद्रइवमुमोद ॥ ५४ ॥ ५५ ॥ भ्रातृकन्यकेकुशध्वजकन्यके ॥ ५६ ॥ ५७ ॥ ५८ ॥ सीतामुखात
लांगलाग्रकृतभूविवरात् ॥ ५९ ॥ पुत्रिकाभावेनभावितांध्याताम् ॥ ६० ॥

महतींमहतीसंज्ञाम् । विश्वावसोस्तुबृहतीतुंबुरोस्तुकलावती । महतीनारदस्यस्यात्सरस्वत्यास्तुकच्छपी ॥ इत्युक्तेः ॥ ६१ ॥ ६२ ॥ ६३ ॥ चतुर्धारामलक्ष्मणभरतशत्रुघ्नरूपेण ॥ ६४ ॥ ६५ ॥ पूर्वभार्याअनादिशक्तिःसैवविराड्रूपभरणादस्यभार्या । देवगतिंदेवलोकमार्गम् ॥६६॥६७॥ पितामहशब्देनतदादयोवंश्याः ॥ ६८ ॥ इतिचिंत्येत्येकंपदमितिल्यपोनानुपपत्तिः इतिविचार्यतथाकृतंपणभूतं तत्कृतमित्यर्थः ॥ ६९ ॥ ७० ॥ यत्पश्यामितन्मेजन्मसफलमित्यन्व

एकदानारदोभ्यागाद्विविक्तेमयिसंस्थिते ॥ रणयन्महतींवीणांगायन्नारायणंविभुम् ॥६१॥ पूजितःसुखमासीनोमामुवाचसुखान्वितः ॥ शृणुष्ववचनंगुह्यंतवाभ्युदयकारणम् ॥ ६२ ॥ परमात्माहृषीकेशोभक्तानुग्रहकाम्यया ॥ देवकार्यार्थसिद्ध्यर्थंरावणस्यवधायच ॥६३॥ जातोरामइतिख्यातोमायामानुषवेषधृक् ॥ आस्तेदाशरथिर्भूत्वाचतुर्धापरमेश्वरः ॥ ६४ ॥ योगमायाऽपिसीतेतिजातावैतववेश्मनि ॥ अतस्त्वंराघवायैवदेहिसीतांप्रयत्नतः ॥ ६५ ॥ नान्येभ्यःपूर्वभार्यैषारामस्यपरमात्मनः ॥ इत्युक्त्वाप्रययौदेवगतिंदेवमुनिस्तदा ॥६६॥ तदारभ्यमयासीताविष्णोर्लक्ष्मीर्विभाव्यते ॥ कथंमयाराघवायदीयतेजानकीशुभा ॥६७॥ इतिचिंतासमाविष्टःकार्यमेकमचिंतयम् ॥ मत्पितामहगेहेतुन्यासभूतमिदंधनुः ॥ ६८ ॥ ईश्वरेणपुराक्षिप्तंपुरदाहादनंतरम् ॥ धनुरेतत्पणंकार्यमितिचिंत्यकृतंतथा ॥ ६९ ॥ सीतापाणिग्रहार्थायसर्वेषांमाननाशनम् ॥ त्वत्प्रसादान्मुनिश्रेष्ठरामोराजीवलोचनः ॥ ७० ॥ आगतोऽत्रधनुर्द्रष्टुंफलितोमेमनोरथः ॥ अद्यमेसफलंजन्मरामत्वांसहसीतया ॥ ७१ ॥ एकासनस्थंपश्यामिभ्राजमानंरविंयथा ॥ त्वत्पादांबुधरोब्रह्मासृष्टिचक्रप्रवर्तकः ॥ ७२॥ बलिस्त्वत्पादसलिलंधृत्वाभूद्दिविजाधिपः ॥ त्वत्पादपांसुसंस्पर्शादहल्याभर्तृशापतः ॥ ७३ ॥ सद्यएवविनिर्मुक्ताकोऽन्यस्त्वत्तोऽधिरक्षिता ॥ ७४ ॥ यत्पादपंकजपरागसुरागयोगिवृंदैर्जितंभवभयंजितकालचक्रैः ॥ यन्नामकीर्तनपराजितदुःखशोकादेवास्तमेवशरणंसततंप्रपद्ये ॥ ७५ ॥ इतिस्तुत्वानृपःप्रादाद्राघवायमहात्मने ॥ दीनाराणांकोटिशतंरथानामयुतंतदा ॥ ७६ ॥

यः ॥७१॥ त्वत्पादांबु गंगारूपम्॥ ७२॥७३ ॥ अधिरक्षिता अधिकोरक्षितेत्यर्थः ॥७४॥ यस्यरामस्यपादपंकजपरागेषुसुतरांरागोयेषांतैर्योगिवृंदैर्भवभयंसंसारभयंजितं देवाःयन्नामकीर्तनपराजितदुःखशोकाः जाताइतिशेषः ॥ ७५ ॥ दीनाराणामिति । दीनारोरूपकैरष्टाविंशत्यापरिकीर्तितः । सुवर्णसप्ततितमोभागो

रूपकइष्यते ॥ इतिविष्णुगुप्तोक्तेः । कात्यायनस्तु । कार्षापणैश्चतुर्भिस्तुविज्ञेयोधान्यकोबुधैः ॥ तेद्वादशसुवर्णस्तुदीनारस्तुत्रिकःस्मृतः ॥ इति । कार्षाप
णोदक्षिणस्यांदिशिरौप्यःप्रवर्तते । पणैर्निबद्धःपूर्वस्यांषोडशैवपणाःसतु ॥ इति । षोडशपणरूप्यंदक्षिणस्थःकार्षापणइत्यर्थः । अयुतंदशसाहस्रम् ॥ ७६ ॥
नियुतंदशलक्षम् ॥ ७७ ॥ मुक्तारत्नमयोज्ज्वलान्हारानित्यन्वयः ॥ ७८ ॥ पूजयित्वा यथोचितधनदानैरित्यर्थः ॥ ७९ ॥ ८० ॥ पातिव्रत्यंपुराणाद्यु
क्तपतिव्रताधर्मभर्त्रादिवाक्यानुल्लंघनादिरूपं वत्सेतिष्ठेत्येवंशिक्षयामासुरित्यर्थः ॥ ८१ ॥ आनकोदुंदुभिःतत्प्रभृतितूर्यसंबंधिघोषःस्वर्वासिभेर्यादिशब्दैःसंमूर्च्छितो

अश्वानांनियुतंप्रादाद्गजानांषट्शतंतथा ॥ पत्तीनांलक्षमेकंतुदासीनांत्रिशतंददौ ॥ ७७ ॥ दिव्यांबराणिहारांश्चमुक्तारत्नमयोज्ज्वलान्
सीतायैजनकःप्रादात्प्रीत्यादुहितृवत्सलः ॥ ७८ ॥ वसिष्ठादीन्सुसंपूज्यभरतंलक्ष्मणंतथा ॥ पूजयित्वायथान्यायंतथादशरथंनृपम् ॥
॥ ७९ ॥ प्रस्थापयामासनृपोराजानंरघुसत्तमम् ॥ सीतामालिंग्यरुदतींमातरःसाश्रुलोचनाः ॥ ८० ॥ श्वश्रूशुश्रूषणपरानित्यंराममनु
व्रता ॥ पातिव्रत्यमुपालंब्यतिष्ठवत्सेयथासुखम् ॥८१॥ प्रयाणकालेरघुनंदनस्यभेरीमृदंगानकतूर्यघोषः ॥ स्वर्वासिभेरीघनतूर्यशब्दैः
संमूर्च्छितोभूतभयंकरोऽभूत् ॥ ८२ ॥ इति श्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेबालकांडेजानकीपरिणयनंनामषष्ठःसर्गः ॥ ६ ॥
॥ सूतउवाच ॥ अथगच्छतिश्रीरामेमैथिलाद्योजनत्रयम् ॥ निमित्तान्यतिघोराणिददर्शनृपसत्तमः ॥ १ ॥ नत्वावसिष्ठंपप्रच्छकिमिदंमु
निपुंगव ॥ निमित्तानीहदृश्यंतेविषमाणिसमंततः ॥ २ ॥ वसिष्ठस्तमथप्राहभयमागामिसूच्यते ॥ पुनरप्यभयंतेऽद्यशीघ्रमेवभविष्यति
॥३॥ मृगाःप्रदक्षिणंयांतिपश्यत्वांशुभसूचकाः ॥ इत्येवंवदतस्तस्यववौघोरतरोऽनिलः ॥ ४ ॥ मुष्णंश्चक्षूंषिसर्वेषांपांसुवृष्टिभिरर्दयन् ॥
ततोव्रजन्ददर्शाग्रेतेजोराशिमुपस्थितम् ॥ ५ ॥ कोटिसूर्यप्रतीकाशंविद्युत्पुंजसमप्रभम् ॥ तेजोराशिंददर्शाथजामदग्न्यंप्रतापवान् ॥ ६ ॥

मिश्रितःसन्प्राणिनांभयंकरोऽभूत् । घनंकांस्यतालादि ॥८२॥ इति श्रीमत्सक० अध्यात्मरामायणाम्बुधिसेतौबालकांडेजानकीपरिणयनंनामषष्ठःसर्गः ॥६॥
मैथिलात्मैथिलपुरात् । घोराणिनिमित्तानिअशुभसूचकाउत्पाताः ॥ १ ॥ २ ॥ ३ ॥ मृगास्त्वांप्रदक्षिणंयांतिपश्येत्यन्वयः ॥ ४ ॥ मुष्णन्दर्शन
शक्तिरहितानिकुर्वन् ॥ ५ ॥ ६ ॥

॥ ७ ॥ अंतकमंतकर्तारंकालमिव ॥ ८ ॥ ९ ॥ १० ॥ राजानमनादृत्यरघूत्तममुवाचेत्यन्वयः । मेनाम्नामदीयनाम्नाप्रसिद्धःसन्पृथ्वींचरसि अतोमन्नामहार
कृत्वान्मच्छत्रुरसि । एवमपिक्षत्रियत्वाभिमानश्चेद्द्वंद्वयुद्धंप्रयच्छ ॥ ११ ॥ १२ ॥ त्वयियुद्धायोद्यतेऽपितावन्नयोत्स्ये यावत्तेपरीक्षांनप्राप्स्ये वैष्णवचापारो
पणेनतुत्वद्बलंविज्ञायत्वयायोत्स्यामीत्याह । तदायुद्धमिति । तत्रतवासामर्थ्येतुत्वदीयसकलवधः प्रशस्तइतिभावः ॥ १३ ॥ १४ ॥ सर्वेषामपिचक्षुषांसर्वसंबं
धिचक्षुषामित्यर्थः ॥ १५ ॥ १६ ॥ लक्ष्यंभेद्यम् ॥ १७ ॥ लोकान्तपोऽर्जितान् परलोकगातिमितियावत् । पादयुगंचरणयुगलम् । इहलोकेतीर्थादिगति

नीलमेघनिभंप्रांशुंजटामंडलमंडितम् ॥ धनुःपरशुपाणिंचसाक्षात्कालमिवांतकम् ॥ ७ ॥ कार्तवीर्यांतकंरामंदृप्तक्षत्रियमर्दनम् ॥ प्राप्तं
दशरथस्याग्रेकालमृत्युमिवापरम् ॥ ८ ॥ तंदृष्ट्वाभयसंत्रस्तोराजादशरथस्तदा ॥ अर्घ्यादिपूजांविस्मृत्यत्राहित्राहीतिचाब्रवीत् ॥ ९ ॥
दंडवत्प्रणिपत्याहपुत्रप्राणंप्रयच्छमे ॥ इतिब्रुवंतंराजानमनादृत्यरघूत्तमम् ॥ १० ॥ उवाचनिष्ठुरंवाक्यंक्रोधात्प्रचलितेंद्रियः ॥ त्वंरामइ
तिनाम्नामेचरसिक्षत्रियाधम ॥ ११ ॥ द्वंद्वयुद्धंप्रयच्छाशुयदित्वंक्षत्रियोऽसिवै ॥ पुराणंजर्जरंचापंभंक्त्वात्वंकत्थसेमुधा ॥ १२ ॥ अस्मिं
स्तुवैष्णवेचापेआरोपयसिचेद्गुणम् ॥ तदायुद्धंत्वयासार्धंकरोमिरघुवंशज ॥ १३ ॥ नोचेत्सर्वान्हनिष्यामिक्षत्रियांतकरोह्यहम् ॥ इति
ब्रुवतिवैतस्मिंश्चचालवसुधाभृशम् ॥ १४ ॥ अंधकारोबभूवाथसर्वेषामपिचक्षुषाम् ॥ रामोदाशरथिर्वीरोवीक्ष्यतंभार्गवंरुषा ॥ १५ ॥ ध
नुराच्छिद्यतद्धस्तादारोप्यगुणमंजसा ॥ तूणीराद्बाणमादायसंधायाकृष्यवीर्यवान् ॥ १६ ॥ उवाचभार्गवंरामंशृणुब्रह्मन्वचोमम ॥
लक्ष्यंदर्शयबाणस्यह्यमोघोममसायकः ॥ १७ ॥ लोकान्पादयुगंवापिवदशीघ्रंममाज्ञया ॥ अयंलोकःपरोवाथत्वयागंतुंनशक्यते ॥ १८ ॥
एवंत्वांहिप्रकर्तव्यंवदशीघ्रंममाज्ञया ॥ एवंवदतिं श्रीरामेभार्गवोविकृताननः ॥ १९ ॥ संस्मरन्पूर्ववृत्तांतमिदंवचनमब्रवीत् ॥ रामराममहाबाहोजानेत्वांपरमेश्वरम् ॥ २० ॥ पुराणपुरुषंविष्णुंजगत्सर्गलयोद्भवम् ॥ बाल्येऽहंतपसाविष्णुमाराधयितुमंजसा ॥ २१ ॥

मितियावत् । ममाज्ञयेत्यनेनस्वस्यस्वरूपाविर्भावंसूचयति । उक्तमेवार्थंस्फुटमाह । अयमिति । यथात्वयाअथैतदनंतरमयंलोकःपरोवागंतुंनशक्यते । एवंतथा
त्वांप्रतिकर्तव्यंममवर्ततेतच्छीघ्रंवदेत्यर्थः ॥ १८ ॥ विकृताननः । प्राप्तपराभवत्वादितिशेषः ॥ १९ ॥ २० ॥ पुराणपुरुषम् । अनादित्वात नवद्वारासुसर्वपूर्षु
शयनाच्च । विष्णुंव्यापकम् अंतर्बहिश्चसर्वत्रप्रविष्टंवा । जगत्सर्गलयोद्भवंजगतःसृष्टिसंहारस्थितयोयस्मात्तम् ॥ २१ ॥

॥ २२ ॥ २३ ॥ फलितंफलसमर्थंजातम् । मच्चिदंशेनमद्रूपचिदाश्रयशक्त्यंशेन ॥ २४ ॥ कार्तवीर्यपितृहणमिति । तपसः श्रमः तपोरूपश्रमः । राहोः शिरइतिवत् ॥ २५ ॥ २६ ॥ परयाशक्त्यात्वयिविद्यमानशक्त्यंशादधिकयाशक्त्या ततोदर्शनानंतरंमयात्वयिदत्तंमत्तेजःपुरायदापुनरादास्येतदेत्यन्वयः ॥ २७ ॥ ब्रह्मणोदिनंचतुर्युगसहस्राख्यम् ॥ २८ ॥ सएवपुराममवरदएव ॥ २९ ॥ ममप्रतीतोऽसिमयाप्रत्यभिज्ञातोसीत्यर्थः । ननुमत्प्रत्यभिज्ञायाःकिमेवंदौर्लभ्यंयेनैवंसंभ्रमस्तत्राह । ब्रह्मादिभिरिति । तदलभ्यत्वेहेतुःप्रकृतेःपारगइति ॥ ३० ॥ जन्मादिषड्भावाः जायतेऽस्तिवर्धतेविपरिणमतेऽपक्षीयतेविनश्यतीत्ये

चक्रतीर्थेशुभंगत्वातपसाविष्णुमन्वहम् ॥ अतोषयंमहात्मानंनारायणमनन्यधीः ॥२२॥ ततःप्रसन्नोदेवेशःशंखचक्रगदाधरः ॥ उवाच मांरघुश्रेष्ठप्रसन्नमुखपंकजः ॥२३॥ ॥ श्रीभगवानुवाच ॥ ॥ उत्तिष्ठतपसोब्रह्मन्फलितंतेतपोमहत् ॥ मच्चिदंशेनयुक्तस्त्वंजहिहैहयपुंगवम् ॥ ॥ २४ ॥ कार्तवीर्यंपितृहणंयदर्थंतपसःश्रमः ॥ ततस्त्रिःसप्तकृत्वस्त्वंहत्वाक्षत्रियमंडलम् ॥२५॥ कृत्स्नांभूमिंकश्यपायदत्त्वा शांतिमुपावह ॥ त्रेतामुखेदाशरथिर्भूत्वारामोऽहमव्ययः ॥ २६ ॥ उत्पत्स्येपरयाशक्त्यातदाद्रक्ष्यसिमांततः ॥ मत्तेजःपुनरादास्येत्वयिदत्तंमयापुरा ॥ २७ ॥ तदातपश्चरँल्लोकेतिष्ठत्वंब्रह्मणोदिनम् ॥ इत्युक्त्वांतर्दधेदेवस्तथासर्वंकृतंमया ॥ २८ ॥ सएवविष्णुस्त्वंरामजातोऽसिब्रह्मणार्थितः ॥ मयिस्थितंतुत्वत्तेजस्त्वयैवपुनराहृतम् ॥ २९ ॥ अद्यमेसफलंजन्मप्रतीतोऽसिममप्रभो ॥ ब्रह्मादिभिरलभ्यस्त्वंप्रकृतेःपारगोमतः ॥ ३० ॥ त्वयिजन्मादिषड्भावानसंत्यज्ञानसंभवाः ॥ निर्विकारोऽसिपूर्णस्त्वंगमनादिविवर्जितः ॥ ३१ ॥ यथाजलेफेनजालंधूमोवह्नौतथात्वयि ॥ त्वदाधारात्वद्विषयामायाकार्यंसृजत्यहो ॥ ३२ ॥

वंरूपाः षड्भावविकारास्तेयतस्त्वंपूर्णोज्ञानेनातोऽज्ञानसंभवास्तेत्वयिनसंतिअतस्त्वंनिर्विकारोगमनादिविवर्जितश्चासि ॥ ३१ ॥ ननुतेजोहरणादिक्रियायाइदानीमेवोक्तेःकथंनिष्क्रियत्वमतआह । यथेति । यथाशुद्धेएवजलादौफेनजालादिऔपाधिकंतथात्वयिक्रियौपाधिकीत्यर्थः । उपाधिमेवाह । त्वदाधारेति । अन्यान्प्रतित्वामावृणोतीति । त्वद्विषयाअस्वतंत्रतयात्वदधीनत्वात । त्वदाधाराचसेतिभावः ॥ ३२ ॥

( १ अभेदसंबन्धविवक्षायां षष्ठी । )

उक्तंत्वद्विषयत्वमेवदर्शयति । यावदिति । साकुतस्तत्राह । अविचारितसिद्धेति । अनादिसिद्धाविचारेणैवसिद्धेतिअनादिःसेतिभावः । सैवमायाविद्याब्र
ह्मज्ञानंतद्विरोधिनीतस्मिन्सतिनश्यतितदुत्पत्तिंप्रतिबध्नातिच । अतोविद्यापदेनोच्यत इत्यर्थः । विद्याविद्येश्रुतिप्रोक्तेएकत्वान्यधियौहिते । इतिअभियुक्तो
क्तेः ॥ ३३ ॥ कार्यंसृजत्यहोइत्युक्तंतत्कार्यंदर्शयति । अविद्येति । देहादिसंघातेआदिनेंद्रियादितत्संघातावच्छिन्नेंऽतःकरणेप्रतिबिंबिताअनिर्वाच्यसंबंधे
नसंबंधाच्चिच्छक्तिःप्राणादिप्रेरकत्वेनप्राणधारकतयाजीवइत्युच्यते । जीवप्राणधारणे । इतिधातोः ॥ ३४ ॥ ननुचिच्छक्तेरक्रियत्वेनजीवेकर्तृत्वादिव्य
वहारःकथमतआह । यावदिति । अभिमानोऽहामितिबुद्धिः । यावंद्विवेकाभावमूलकोदेहादिसंघातेऽहमितिअभिमानस्तावत्कर्तृत्वाद्यारोपेणतद्वानित्यर्थः
॥ ३५ ॥ विशिष्टेएवकर्तृत्वादीत्युक्तमर्थंप्रत्येकंतन्निषेधेनद्रढयति । आत्मनइति । संसृतिःकर्तृत्वभोक्तृत्वाद्यभिमानकृतःसंसारोनास्तिअपरिणामित्वादि

यावन्मायावृतालोकास्तावत्त्वांनविजानते ॥ अविचारितसिद्धैषाऽविद्याविद्याविरोधिनी ॥ ३३ ॥ अविद्याकृतदेहादिसंघातेप्रतिबिंबिता
चिच्छक्तिर्जीवलोकेऽस्मिञ्जीवइत्यभिधीयते ॥ ३४ ॥ यावद्देहमनःप्राणबुद्ध्यादिष्वभिमानवान् ॥ तावत्कर्तृत्वभोक्तृत्वसुखदुःखादि
भाग्भवेत् ॥ ३५ ॥ आत्मनःसंसृतिर्नास्तिबुद्धेर्ज्ञानंनजात्विति ॥ अविवेकाद्द्वयंयुंक्त्वासंसारीतिप्रवर्तते ॥ ३६ ॥ जडस्यचित्समायोगा
च्चित्त्वंभूयाच्चितेस्तथा ॥ जडसंगाज्जडत्वंहिजलाग्न्योर्मेलनंयथा ॥ ३७ ॥ यावत्त्वत्पादभक्तानांसंगसौख्यंनविंदति ॥ तावत्संसारदुःखौघा
न्ननिवर्तेन्नरःसदा ॥ ३८ ॥

तिभावः । एवंबुद्धेर्ज्ञानंन जडत्वादितिभावः । तस्मात्तद्द्वयंयुंक्त्वाऽहमितिबुद्ध्यागृहीत्वा तत्रहेतुरविवेकःसंसारीजीवइति । अहंकर्ताभोक्तेत्यादिरूपेणप्रवर्वते
व्यवहरति । तदुक्तम् । नबुद्धेरवबोधोऽस्तिनात्मनोविद्यतेक्रिया । अतोनान्यतरस्यापिजानातीतितुयुज्यते ॥ इति ॥ ३६ ॥ नन्वेवंबुद्धेश्चितीसंज्ञान
इतिधातुनिष्पन्नचित्तव्यवहारानुपपत्तिरतआह । जडस्येति नन्वेवमहमज्ञइतिव्यवहारानुपपत्तिरतआह ॥ तथाचितेर्जडसंयोगाज्जडत्वं संमेलनेमिथोऽन्योन्य
धर्मतिरोभावेदृष्टांतमाह जलाग्न्योर्मेघविद्युज्जलयोरित्यर्थः । विद्युतःप्रकाशंजातमपिजलमावृणोति जलस्वरूपंजडमपिअग्निसंयोगाद्विद्युद्रूपेणप्रकाशरूपतांप्राप्नो
तीत्यर्थः ॥ ३७ ॥ नन्वेवंयदिसंसृतस्तर्हिकथंमुच्यते तत्राह । यावदिति । संगसौख्यंसंगाज्जायमानंसुखंनविंदतिनप्राप्नोतितावदित्यर्थः । सौख्यमिति
स्वार्थेष्यञ् । निवर्तेदितिपरस्मैपदमार्षम् ॥ ३८ ॥

सतांसंगेनलब्धयाभक्त्यात्वांयदाजनाःसमुपासतेतदातेभ्यःमायाशनैर्मंदंयातिअपसरति । विक्षेपशक्तिंत्यजतीत्यर्थः । अतएवसातानैवंप्रतिपद्यते ॥ ३९ ॥ तवज्ञा
नमभेदेनयवतद्युक्तःसद्गुरुस्त्वद्भक्तियोगात्तेनलभ्यते तदनंतरंतादृशगुरोःसकाशाद्वाक्यज्ञानं तत्त्वमसीतिवाक्यार्थाखंडार्थज्ञानंत्वत्प्रसादाल्लब्ध्वाविमुच्यते । आचा
र्यवान्पुरुषोवेद । इतिश्रुतेः । उपदेक्ष्यंतितेज्ञानंज्ञानिनस्तत्त्वदर्शिनः । इतिस्मृतेश्च ॥ ४० ॥ मुक्तिशंकामुक्तिप्राप्तिसंभावनापिनतथासुखंनैवेत्यर्थः ॥ ४१ ॥
भक्तिकारणंभक्तिमत्संगः याभ्यांभक्तिमत्संगतज्जन्यभक्तिभ्यामविद्यासाक्षात्परंपरयाचमिलित्वानश्यति ॥ ४२ ॥ त्वद्धर्मस्तत्त्वज्ञानंतद्रूपामृतवर्षणशीलास्तदुपदे
ष्टारस्तेनतेषातत्त्वमर्थसिद्धम् ॥ ४३ ॥ कारुणिकेतिसंबोधनंप्रकृतोपयोगाय ॥ ४४ ॥ तवबाणायभूयात् त्वद्बाणनाश्यंभूयादित्यर्थः । अनेनसर्वकर्मक्षये

सत्संगलब्धयाभक्त्यायदात्वांसमुपासते ॥ तदामायाशनैर्यातितानवंप्रतिपद्यते॥३९॥ततस्त्वज्ज्ञानसंपन्नःसद्गुरुस्तेनलभ्यते ॥ वाक्यज्ञा
नंगुरोर्लब्ध्वात्वत्प्रसादाद्विमुच्यते ॥ ४० ॥ तस्मात्त्वद्भक्तिहीनानांकल्पकोटिशतैरपि ॥ नमुक्तिशंकाविज्ञानशंकानैवसुखंतथा ॥ ४१ ॥
अतस्त्वत्पादयुगलेभक्तिर्मेजन्मजन्मनि ॥ स्यात्त्वद्भक्तिमतांसंगोऽविद्यायाभ्यांविनश्यति ॥ ४२ ॥ लोकेत्वद्भक्तिनिरतास्त्वद्धर्मामृतव
र्षिणः ॥ पुनंतिलोकमखिलंकिंपुनःस्वकुलोद्भवान् ॥ ४३ ॥ नमोऽस्तुजगतांनाथनमस्तेभक्तिभावन ॥ नमःकारुणिकानंतरामचंद्रनमो
स्तुते ॥ ४४ ॥ देवयद्यत्कृतंपुण्यंमयालोकजिगीषया ॥ तत्सर्वंतवबाणायभूयाद्रामनमोस्तुते ॥ ४५ ॥ ततःप्रसन्नोभगवाञ्छ्रीरामःकरु
णामयः ॥ प्रसन्नोऽस्मितवब्रह्मन्यत्तेमनसिवर्तते ॥४६॥ दास्येतदखिलंकामंमाकुरुष्वात्रसंशयम् ॥ ततःप्रीतेनमनसाभार्गवोराममब्रवीत्
॥ ४७॥ यदिमेऽनुग्रहोरामतवास्तिमधुसूदन ॥ त्वद्भक्तसंगस्त्वत्पादेदृढाभक्तिःसदाऽस्तुमे ॥ ४८ ॥ स्तोत्रमेतत्पठेद्यस्तुभक्तिहीनोऽपिस
र्वदा ॥ त्वद्भक्तिस्तस्यविज्ञानंभूयादंतेस्मृतिस्तव ॥ ४९ ॥

णमुक्तिंदेहीतिव्यंग्यम् ॥ ४५ ॥ तद्व्यंग्यंबुद्ध्यातद्दानंभगवान्प्रतिजानीते । ततइत्यादि ॥ ४६ ॥ अत्रत्वकामदाने ॥ ४७ ॥ सोऽपिमुक्तिकारणसंपदं
प्रार्थयते । यदीति । मधुसूदनेत्यनेनमोक्षप्रतिबंधकमत्कर्मनाशनेत्वंसमर्थइतिव्यज्यते ॥ ४८ ॥ विज्ञानंत्वदभेदसाक्षात्कारः । इदंभक्तिफलं यदिकदाचिदि
दंनस्यात्तर्हिअंतेमरणकालेतवस्मृतिरवश्यंभूयादितिलोकोपकारायप्रार्थयते । अंतेयामतिःसागतिरितिन्यायात्तत्स्मृतौतल्लाभोऽवश्यंभावीतिभावः ॥ ४९ ॥

१ तनोर्भावं कृशत्वमित्यर्थः ।

॥ ५० ॥ मृतमिवागतम् । क्षत्रियकुलांतकापरावर्तनेनतथासंभावना । उत्सृजतउदसृजदित्यर्थः । अडभावआर्षः ॥ ५१ ॥ देवसंमिताःदेवतुल्याः ॥५२॥ ॥ ५३ ॥ ५४ ॥ युधाजितसंपूंज्यभरतशत्रंघ्नचांपिप्रेषयामासेत्यन्वयः ॥ ५५ ॥ पौलोम्यापुलोमापत्यभूतयाशच्याशक्रेणचदेवैमातेत्यर्थः ॥ ५६ ॥ साकेते अयोध्यायां लोकनाथेषुप्रथिताःप्रसिद्धागुणगणायस्यसः लोकैःसम्यग्गीताकीर्तिर्यस्य सकलजनसमूहस्यानंदसमूहरूपामूर्तिर्यस्य शतगुणानंदत्वात्तस्येतिभावः ।

तथेतिराघवेणोक्तःपरिक्रम्यप्रणम्यतम् ॥ पूजितस्तदनुज्ञातोमहेंद्राचलमन्वगात् ॥ ५० ॥ राजादशरथोहृष्टोरामंमृतमिवागतम् ॥ आलिंग्यालिंग्यहर्षेणनेत्राभ्यांजलमुत्सृजत् ॥ ५१ ॥ ततःप्रीतेनमनसास्वस्थचित्तःपुरंययौ ॥ रामलक्ष्मणशत्रुघ्नभरतादेवसंमिताः॥५२॥ स्वांस्वांभार्यामुपादायरेमिरेस्वस्वमंदिरे ॥ मातापितृभ्यांसंहृष्टोरामःसीतासमन्वितः ॥५३॥ रेमेवैकुंठभवनेश्रियासहयथाहरिः ॥ युधाजिन्नामकैकेयीभ्राताभरतमातुलः ॥ ५४ ॥ भरतंनेतुमागच्छत्स्वराज्यंप्रीतिसंयुतः ॥ प्रेषयामासभरतंराजास्नेहसमन्वितः ॥ शत्रुघ्नंचापि संपूज्ययुधाजितमरिंदमः ॥ ५५ ॥ कौसल्याशुशुभेदेवीरामेणसहसीतया ॥ देवमातेवपौलोम्याशच्याशक्रेणशोभना ॥ ५६ ॥ साकेते लोकनाथप्रथितगुणगणोलोकसंगीतकीर्तिःश्रीरामःसीतयास्तेऽखिलजननिकरानंदसंदोहमूर्तिः॥ नित्यश्रीर्निर्विकारोनिरवधिविभवोनित्यमायानिरासोमायाकार्यानुसारीमनुजइवसदाभातिदेवोऽखिलेशः ॥ ५७ ॥ इति श्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेबालकांडेपरशुरामपराभववर्णनंनामसप्तमःसर्गः॥७॥अध्यात्मबालकांडेचसर्गाःसप्तैवशंभुना ॥ दिष्टाःषष्ट्युत्तरत्रिंशच्छलोकामोक्षप्रदानृणाम्॥३६०॥

नित्यंश्रीःपराशक्तिर्यस्य अतएवनिरवधिविभवः नित्यंमायायाआवरणशक्तिरूपायानिरासोयस्मात् ॥ मायासर्वथायंप्रत्यनावरिकेतिभावः । मायाकार्यंसर्वमनुसरतिसत्तास्फूर्तिभ्यांव्याप्नोतितादृशःदेवोऽपिअखिलेशोऽपिमाययैवयोमनुजइवभाति ॥ ५७ ॥ इति श्रीमत्सकलराजाविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराजमानस्य हिम्मतिवर्मणःपुत्रस्य श्रीरामवर्मणःकृतौ अध्यात्मरामायणाम्बुधिसेतौबालकांडेसप्तमःसर्गः ॥ ७ ॥ श्रीसीतारामचन्द्रार्पणमस्तु ॥ ॥ ॥

१ अदितिः ।

इदमध्यात्मरामायणबालकाण्डं मुम्बय्यां खेमराज श्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" यन्त्रालयेऽङ्कयित्वा प्रकाशितम्।

संवत् १९६१, शके १८२६, सन् १९०५.

श्रीगणेशाय नमः ॥ प्रथमेत्वथसर्गेऽत्ररामोनारदसंस्तुतः । प्रतिज्ञारावणवधेकृतवानितिवर्ण्यते ॥ १ ॥ अथकांडेद्वितीयेनारदमुखेनरावणवधप्रवृत्तिरित्याह भगवान्शिवः । एकदेति ॥ १ ॥ कौस्तुभेनामुक्तायुक्ताभूषितावाकंधरायस्यतम् । कौस्तुभशब्देनात्रतन्नामकस्तदाकारोभूषणविशेषः ॥ २ ॥ तांबूल चर्वणादिभिर्विनोदयंतंक्रीडयंतंसीतामितिशेषः । द्रष्टुमर्थाद्राघवम् । यत्रराघवस्तत्रदेशेंऽबरात्आकाशादवतरत्अवातरदित्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥ संसारिणामेवदुर्लभम् । तत्रापिविषयासक्तचेतसांनितरामित्यर्थः ॥ ६ ॥ तादृशमपितवदर्शनंपूर्वजन्मकृतानियानिपुण्यानिपुण्यकर्माणितज्जन्यमहोदयैःशु

श्रीमहादेवउवाच ॥ एकदासुखमासीनंरामंस्वांतःपुराजिरे ॥ सर्वाभरणसंपन्नंरत्नसिंहासनेस्थितम् ॥ १ ॥ नीलोत्पलदलश्यामंकौस्तु भामुक्तकंधरम् ॥ सीतयारत्नदंडेनचामरेणाथवीजितम् ॥ २ ॥ विनोदयंतंतांबूलचर्वणादिभिरादरात् ॥ नारदोऽवतरद्द्रष्टुमंबराद्यत्रराघवः ॥ ३ ॥ शुद्धस्फटिकसंकाशःशरच्चंद्रइवामलः ॥ अतर्कितमुपायातोनारदोदिव्यदर्शनः ॥४॥ तंदृष्ट्वासहसोत्थायरामःप्रीत्याकृतांजलिः॥ ननामशिरसाभूमौसीतयासहभक्तिमान् ॥ ५ ॥ उवाचनारदंरामःप्रीत्यापरमयायुतः ॥ संसारिणांमुनिश्रेष्ठदुर्लभंतवदर्शनम् ॥ अस्माकं विषयासक्तचेतसांनितरांमुने ॥६॥ अवाप्तंमेपूर्वजन्मकृतपुण्यमहोदयैः ॥ संसारिणाऽपिहिमुनेलभ्यतेसत्समागमः ॥७॥ अतस्त्वद्दर्शना देवकृतार्थोऽस्मिमुनीश्वर ॥ किंकार्यंतेमयाकार्यंब्रूहितत्करवाणिभोः ॥ ८ ॥ अथतंनारदोऽप्याहराघवंभक्तवत्सलम् ॥ किंमोहयसिमां रामवाक्यैर्लोकानुसारिभिः ॥ ९ ॥ संसार्यहमितिप्रोक्तंसत्यमेतत्त्वयाविभो ॥ जगतामादिभूतायासामायागृहिणीतव ॥ १० ॥ त्वत्सन्नि कर्षाज्जायंतेतस्यांब्रह्मादयःप्रजाः ॥ त्वदाश्रयासदाभातिमायायात्रिगुणात्मिका ॥ ११ ॥

भादृष्टैरवाप्तमित्यर्थः । महतःफलस्योदयोयेभ्यस्तैरितिवाच्योऽर्थः । ननुसंसारिणांदुर्लभंवस्तुकथंत्वयालब्धंतत्राह । संसारिणेति । काकतालीयन्यायेनेति भावः ॥ ७ ॥ ८ ॥ ९ ॥ आदिभूतामूलप्रकृतिः । मायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरम् । इतिश्रुतेः ॥ १० ॥ त्वत्सन्निकर्षादिति ॥ अचेतन त्वेनतस्याश्चेतनसन्निकर्षापेक्षत्वादितिभावः । अतएवसात्वदाश्रयेति त्वत्सन्निकर्षेणतस्याःस्रष्टृत्वात्सात्वदाश्रयेत्यर्थः । त्रिगुणात्मिकासुखदुःखमोह स्वभावा सत्वरजस्तमोरूपगुणत्रयात्मिका ॥ ११ ॥

अतएवसगुणानुरूपास्तथागुणाःप्रजाःसूतेतादृश्यागृहिण्यायुक्तःलोकत्रयरूपगेहेगृहस्थस्त्वमित्युदाहृतः ॥ १२ ॥ इदानींसर्वंस्त्रीरूपंसीतैवसर्वंपुंरूपंत्वमेवेतिसा र्वात्म्येनस्तुवंस्त्वमेवगृहस्थइत्यर्थमुपपादयति । त्वमित्यादिना ॥ १३ ॥ पौलोमीशची अनलोऽग्निः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ विशिष्यकिंचि दुक्त्वासामान्येनोपसंहरति । लोकेइति ॥ १८ ॥ लोकत्रयगृहस्थत्वमुपसंहरति । तस्मादिति । युवाभ्यामन्यदितिशेषः । तत्सृष्ट्वातदेवानुप्राविशत् । इति श्रुत्यासर्वत्रेश्वरचैतन्येनैवचेतनत्वमितिभावः ॥ १९ ॥ तदेवोपपादयति । त्वदिति । त्वदाभासेनत्वत्संबंधेनोदितंसृष्ट्युन्मुखत्वंप्राप्तमीदृशमज्ञानंमायैवाव्या

सूतेऽजस्रंशुक्लकृष्णलोहिताःसर्वदाप्रजाः ॥ लोकत्रयमहागेहेगृहस्थस्त्वमुदाहृतः ॥ १२ ॥ त्वंविष्णुर्जानकीलक्ष्मीःशिवस्त्वंजानकीशि वा ॥ ब्रह्मात्वंजानकीवाणीसूर्यस्त्वंजानकीप्रभा ॥ १३ ॥ भवाञ्छशांकःसीतातुरोहिणीशुभलक्षणा ॥ शक्रस्त्वमेवपौलोमीसीतास्वाहाऽ नलोभवान् ॥ १४ ॥ यमस्त्वंकालरूपश्चसीतासंयमिनीप्रभो ॥ निर्ऋतिस्त्वंजगन्नाथतामसीजानकीशुभा ॥ १५ ॥ रामत्वमेववरुणोभा र्गवीजानकीशुभा ॥ वायुस्त्वंरामसीतातुसदागतिरितीरिता[1] ॥ १६ ॥ कुबेरस्त्वंरामसीतासर्वसंपत्प्रकीर्तिता ॥ रुद्राणीजानकीप्रोक्तारुद्र स्त्वंलोकनाशकृत् ॥ १७ ॥ लोकेस्त्रीवाचकंयावत्तत्सर्वंजानकीशुभा ॥ पुन्नामवाचकंयावत्तत्सर्वंत्वंहिराघव ॥ १८ ॥ तस्माँल्लोकत्रयेदे वयुवाभ्यांनास्तिकिंचन ॥ १९ ॥ त्वदाभासोदिताज्ञानमव्याकृतमितीर्यते ॥ तस्मान्महांस्ततःसूत्रंलिंगंसर्वात्मकंततः ॥ २० ॥ अहं कारश्चबुद्धिश्चपंचप्राणेंद्रियाणिच ॥ लिंगमित्युच्यतेप्राज्ञैर्जन्ममृत्युसुखादिमत् ॥ २१ ॥ सएवजीवसंज्ञश्चलोकेभातिजगन्मयः ॥ अवा च्यानाद्यविद्यैवकारणोपाधिरुच्यते ॥ २२ ॥

कृतपदेनोच्यते । महान्बुद्धितत्त्वंततःसूत्रमहंकारः ततः सर्वात्मकं सर्वकार्यात्मकंलिंगंलिंगदेहः ॥ २० ॥ सर्वात्मकत्वमाह । अहंकारश्चबुद्धिश्चेत्यादि । पंचेत्यस्यसूक्ष्मभूतानीतिशेषः । प्राणेंद्रियाणिपंचप्राणाःपंचेंद्रियाणि मनस्त्वहंकारेणैवसंगृहीतं तत्राहंकारोऽहमित्याकारोवृत्तिविशेषः बुद्धिरध्यवसायात्म कंमहत्तत्त्वम् कर्मेंद्रियाणिभतेष्वंतर्भूतानि तल्लिंगंलिंगदेहएवप्राज्ञैर्जन्ममृत्युमुखादिमदुच्यतेइत्यर्थः ॥ २१ ॥ सएवालिंगदेहाभिमान्येवेत्यर्थः । जगन्मयोहिरण्य गर्भः तत्समष्टिरूपत्वात्तस्येत्यर्थः । अवाच्यासत्त्वासत्त्वाभ्यामनिर्वाच्याऽनादिरुत्पत्तिरहिता कारणोपाधिः संसारकारणरूपकूटस्थस्यब्रह्मणउपाधिः ॥ २२ ॥

[1] सदा सर्वदा वर्तमाना गतिरित्यर्थः ।

स्थूलंस्थूलदेहस्तत्समष्ट्युपाधिर्विराट् सूक्ष्मंलिंगदेहस्तत्समष्ट्युपाधिर्हिरण्यगर्भः कारणोपाधिरीश्वरः एतैर्विशिष्टोजीवः । अंतर्यामितयाईशस्यापितत्रांतर्भावात् । उपाधित्रयविमुक्तोयःसपरमेश्वरः तुरीयइत्यर्थः । विराड्हिरण्यगर्भश्चकारणंचेत्युपाधयः । ईशस्ययत्रिभिर्हीनंतुरीयंतत्पदंविदुः ॥ इतिवार्तिकोक्तेः ॥ २३ ॥ तत्र स्थूलसूक्ष्मोपाधिभ्यांकारणोपाधेःसाक्षिणोभेदकमाह । जाग्रदिति । इंद्रियादिवृत्तिमतीजाग्रदवस्थाविश्वसाक्षिणी । इंद्रियवृत्त्यभावकालिकीअंतःकरणवासनानिमित्तार्थोपलंभरूपातैजससाक्षिणीस्वप्नावस्था । प्राज्ञसाक्षिणीनिद्रावृत्त्यतिरिक्तसर्ववृत्त्यभावरूपासुषुप्त्यवस्था । एतत्त्रयात्मिकायाःसंसृतेरविद्यात्मकत्वात्ततोविलक्षणश्चिन्मात्ररूपःसाक्षिकारणोपाधिस्त्वमित्यर्थः ॥ २४ ॥ जगज्जन्मादिकारणमपित्वमेवेत्याह । त्वत्तइति । कृत्स्नमविद्यासहितम् ॥ २५ ॥ रज्ज्वाविति । रज्जोरहित्वेनज्ञानाद्यथाभयंतथात्मानंजीवत्वेनजानतोभयंसंसाररूपं तस्याएवरज्जोरज्जुत्वेनज्ञानाद्यथाभयनिवृत्तिस्तथास्वस्यपरमात्मत्वेनज्ञानात्तन्निवृत्तिरित्यर्थः॥ २६॥

स्थूलंसूक्ष्मंकारणाख्यमुपाधित्रितयंचितेः ॥ एतैर्विशिष्टोजीवःस्याद्वियुक्तःपरमेश्वरः ॥ २३ ॥ जाग्रत्स्वप्नसुषुप्त्याख्यासंसृतिर्याप्रवर्तते ॥ तस्याविलक्षणःसाक्षीचिन्मात्रस्त्वंरघूत्तम ॥२४॥ त्वत्तएवजगज्जातंत्वयिसर्वंप्रतिष्ठितम् ॥ त्वय्येवलीयतेकृत्स्नंतस्मात्त्वंसर्वकारणम्॥ ॥ २५ ॥ रज्ज्वावहिमिवात्मानंजीवंज्ञात्वाभयंभवेत् ॥ परात्माऽहमितिज्ञात्वाभयदुःखैर्विमुच्यते ॥ २६ ॥ चिन्मात्रज्योतिषासर्वाःसर्वदेहेषुबुद्धयः ॥ त्वयायस्मात्प्रकाश्यंतेसर्वस्यात्माततोभवान् ॥ २७ ॥ अज्ञानान्न्यस्यतेसर्वंत्वयिरज्जौभुजंगवत् ॥ त्वज्ज्ञानाल्लीयतेसर्वंतस्माज्ज्ञानंसदाभ्यसेत् ॥ २८ ॥ त्वत्पादभक्तियुक्तानांविज्ञानंभवतिक्रमात् ॥ तस्मात्त्वद्भक्तियुक्तायेमुक्तिभाजस्तएवहि ॥ २९ ॥

चिन्मात्रज्योतीरूपेणभवतासर्वदेहेषुवर्तमानाः सर्वाबुद्धयोंऽतःकरणानियस्मात्प्रकाश्यंतेतत्तद्वृत्तिमंतिसंपाद्यंतेअतोभवान्सर्वस्यास्यात्मांऽतर्यामीत्यर्थः ॥ २७॥ अज्ञानात्त्वत्स्वरूपाज्ञानात्त्वयिइदंसर्वंजगत्न्यस्यतेआरोप्यते । जगद्रूपेणत्वंगृह्यसइत्यर्थः । यथाचरज्जुतत्त्वाज्ञानाद्भासमानस्यभुजंगस्यरज्जुज्ञानाल्लयः । एवंत्वत्स्वरूपज्ञानाज्जगतोलयः । अतस्तज्ज्ञानंसदाऽभ्यसेत् । तच्चिंतनंतत्कथनमन्योन्यंतत्प्रबोधनम् । एकांतेतत्परत्वंचतदाभ्यासंविदुर्बुधाः ॥ इत्युक्तमभ्यासंकुर्यात्॥ २८॥ त्वत्पादभक्तियुक्तानाम् । श्रवणंकीर्तनंविष्णोःस्मरणंपादसेवनम् । अर्चनंवंदनंदास्यंसख्यमात्मनिवेदनम् ॥ इत्येवंनवविधभक्तियुक्तानांक्रमाद्वैराग्यश्रवणादिक्रमेणविज्ञानमपरोक्षसाक्षात्कारोभवत्यतस्तएवमुक्तिभाजइत्यर्थः ॥ २९ ॥

नमोहयस्व स्वमाययत्यर्थः ॥ ३० ॥ ३१ ॥ नोदितोऽस्मित्वन्निकटेसंदेशंवक्तुंप्रेरितोऽस्मि ॥ ३२ ॥ ३३ ॥ भूभारहरणायकृतातेप्रतिज्ञाव्यर्था । स्यादिति शेषः ॥ ३४ ॥ तस्मात्तत्प्रतिज्ञावंवचःसत्यंकुरु । यतस्त्वमेवसत्यसंधःसत्यप्रतिज्ञः अविदितमितिच्छेदः विद्यतेइत्यत्रकाकुः क्वचिद्देशेकालेवाकिंचिद्वस्तुमेऽविदितं विद्यतेऽपितुनेत्यर्थः । सर्वंविदितमेवास्तेइत्यर्थः ॥ ३५ ॥ ३६ ॥ कालानुरोधेनेति। कालस्यमुख्यतायामेवैवस्थापितत्वादितिभावः। असुरमंडलंरक्षोमंडलरूपंभूभारम्



अहंत्वद्भक्तभक्तानांतद्भक्तानांचकिंकरः ॥ अतोमामनुगृह्णीष्वमोहयस्वनमांप्रभो ॥ ३० ॥ त्वन्नाभिकमलोत्पन्नोब्रह्मामेजनकःप्रभो ॥ अतस्तवाहंपौत्रोऽस्मिभक्तंमांपाहिराघव॥ ३१ ॥इत्युक्त्वाबहुशोनत्वास्वानंदाश्रुपरिप्लुतः ॥उवाचवचनंरामब्रह्मणानोदितोऽस्म्यहम्॥ ३२॥ रावणस्यवधार्थायजातोऽसिरघुसत्तम ॥ इदानींराज्यरक्षार्थंपितात्वामाभिषेक्ष्याति ॥ ३३ ॥ यदिराज्याभिसंसक्तोरावणंनहनिष्यसि ॥ प्रतिज्ञातेकृताराम भूभारहरणायवै ॥३४॥ तत्सत्यंकुरुराजेंद्रसत्यसंधस्त्वमेवहि ॥ श्रुत्वैतद्गदितंरामोनारदंप्राहसास्मितम् ॥ ३५ ॥ शृणुनारदमेकिंचिद्विद्यतेऽविदितंक्वचित् ॥ प्रतिज्ञातंचयत्पूर्वंकरिष्येतन्नसंशयः ॥ ३६ ॥ किंतुकालानुरोधेनतत्तत्प्रारब्धसंक्षयात् ॥ हरिष्येसर्वंभूभारंक्रमेणासुरमंडलम् ॥ ३७ ॥ रावणस्यविनाशार्थंश्वोगंतादंडकावनम् ॥ चतुर्दशसमास्तत्रह्युषित्वामुनिवेषधृक् ॥३८॥ सीतामिषेणतंदुष्टंसकुलंनाशयाम्यहम् ॥ एवंरामेप्रतिज्ञातेनारदःप्रमुमोदह ॥ ३९ ॥ प्रदक्षिणत्रयंकृत्वादंडवत्प्रणिपत्यतम् ॥ अनुज्ञातश्चरामेणययौदेवगतिंमुनिः ॥ ४० ॥ संवादंपठतिशृणोतिसंस्मरेद्वायोनित्यंमुनिवररामयोःसभक्त्या ॥ संप्राप्नोत्यमरसुदुर्लभंविमोक्षंकैवल्यंविरतिपुरःसरंक्रमेण ॥ ४१ ॥ इति श्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेअयोध्याकांडेप्रथमःसर्गः ॥ १ ॥

॥ ३७ ॥ ३८ ॥ ३९ ॥ देवगतिंदेवलोकमार्गम् ॥ ४० ॥ कैवल्यंविमोक्षंब्रह्मैकत्वलक्षणंमोक्षम् । विरतिर्वैराग्यम् ॥ ४१ ॥ ॥ इति श्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराजमानस्यहिम्मतिवर्मणःपुत्रस्यश्रीरामवर्मणःकृतौअध्यात्मरामायणसेतौअयोध्याकांडेप्रथमःसर्गः ॥ १ ॥

द्वितीयेराज्ञिरामस्याभिषेकंकर्तुमुद्यते । मंथरामोहिताराज्ञीविघ्नंचक्रइतीर्यते ॥ १ ॥ अथराजेति । रहसिएकांते ॥ १ ॥ नैगमाःनिगमेवणिक्पथेभवाः । यद्वा । निगमंवेदंतदर्थंवाविदंतितेनैगमाः ॥ २ ॥ ततःसर्वप्रजानुरागात् ॥ ३ ॥ भरतोमातुलमिति । अनेनकैकेयीप्रतिबंधशंकानिरासः भरतागमनपर्यंतमेन मभिषेक्ष्येतदागमनोत्तरमुभयोर्विभागंकरिष्यामीत्येवंतांसमाधास्यइतिभावः ॥ ४ ॥ संभारोऽभिषेकसामग्री । मंत्रयेति अधिवासनार्थमितिशेषः । उच्छ्रीयंतामुत्था प्यंतामित्यर्थः ॥ ५ ॥ तोरणानिउच्छ्रीयंतामित्यनुकर्षः ॥ ६ ॥ ७ ॥ ८ ॥ मध्यकक्षेमध्यद्वारे । षोडशेतिकन्यकान्वयि । वाल्मीकिनाऽपिकन्यानामष्ट

श्रीमहादेवउवाच ॥ अथराजादशरथःकदाचिद्रहसिस्थितः ॥ वसिष्ठंस्वकुलाचार्यमाहूयेदमभाषत ॥ १ ॥ भगवन्राममखिलाःप्रशं संतिमुहुर्मुहुः ॥ पौराश्चनैगमावृद्धामंत्रिणश्चविशेषतः ॥ २ ॥ ततःसर्वगुणोपेतंरामंराजीवलोचनम् ॥ ज्येष्ठंराज्येऽभिषेक्ष्यामिवृद्धोऽहंमु निपुंगव ॥ ३ ॥ भरतोमातुलंद्रष्टुंगतःशत्रुघ्नसंयुतः ॥ अभिषेक्ष्येश्वएवाशुभवांस्तच्चानुमोदताम् ॥ ४ ॥ संभाराःसंभ्रियंतांचगच्छमंत्रयरा घवम् ॥ उच्छ्रीयंतांपताकाश्चनानावर्णाःसमंततः ॥ ५ ॥ तोरणानिविचित्राणिस्वर्णमुक्तामयानिवै ॥ आहूयमंत्रिणंराजासुमंत्रंमंत्रिसत्त मम् ॥ ६ ॥ आज्ञापयतियद्यत्त्वांमुनिस्तत्तत्समानय ॥ यौवराज्येऽभिषेक्ष्यामिश्वोभूतेरघुनंदनम् ॥ ७ ॥ तथेतिहर्षात्समुनिंकिंकरोमी त्यभाषत ॥ तमुवाचमहातेजावसिष्ठोज्ञानिनांवरः ॥ ८ ॥ श्वःप्रभातेमध्यकक्षेकन्यकाःस्वर्णभूषिताः ॥ तिष्ठंतुषोडशगजःस्वर्णरत्नादिभू षितः ॥ ९ ॥ चतुर्दंतःसमायातुऐरावतकुलोद्भवः ॥ नानातीर्थोदकैःपूर्णाःस्वर्णकुंभाःसहस्रशः ॥ १० ॥ स्थाप्यंतांनववैयाघ्रचर्माणि त्रीणिचानय ॥ श्वेतच्छत्रंरत्नदंडंमुक्तामणिविराजितम् ॥ ११ ॥ दिव्यमाल्यानिवस्त्राणिदिव्यान्याभरणानिच ॥ मुनयःसत्कृतास्तत्रति ष्ठंतुकुशपाणयः ॥ १२ ॥ नर्तक्योवारमुख्याश्चगायकावेणुकास्तथा ॥ नानावादित्रकुशलावादयंतुनृपांगणे ॥ १३ ॥

संख्याद्विरुक्ता । अष्टौकन्याश्चरुचिरामत्तश्चवरवारणः । अष्टौकन्याश्चमांगल्याःसर्वाभरणभूषिताः ॥ इति । गजइत्युत्तरान्वयि ॥ ९ ॥ नानातीर्थोदकैःप्रयागा दितीर्थोदकैः ॥ १० ॥ व्याघ्रचर्माणिनववात्रीणिवा । भद्रपीठास्तरणार्थमित्यथः ॥ ११ ॥ दिव्यान्याभरणानिचेत्यत्रस्थाप्यंतामित्यनुकर्षः ॥ १२ ॥ वारमुख्याःवारःसंकेतदिनमेवमुख्यंभर्तृनियमेयासांताःवेश्याइत्यर्थः । वेणकाःवेणवादनशीलाः ॥ १३ ॥

हस्त्यश्वरथपादाताइत्युपपत्तिरुक्ता ॥ १४ ॥ नानाबलिभिःपूजोपकरणैः ॥ १५ ॥ १६ ॥ १७ ॥ आचार्यत्वादतिवृद्धत्वाच्चद्वारपालैरवारितोभवनंप्रवि
श्यांतः अंतःपुरंप्रविष्टइतिशेषः ॥ १८ ॥ पानीयमानिनाय । अर्घ्यपाद्यार्थमितिभावः ॥ १९ ॥ तदपःतत्पादप्रक्षालनजलम् ॥ २० ॥ अब्रवीत् । वसि
ष्ठमितिशेषः ॥ २१ ॥ त्वत्पादसलिलंगंगारूपंजलम् ॥ २२ ॥ उपदेशकृद्ब्राह्मणेष्वेवंभक्तिःकार्येतिलोकानुपदिशन्नित्यर्थः ॥ २३ ॥ भक्तिसिद्धयेइत्यनेनसर्वे



हस्त्यश्वरथपादाताबहिस्तिष्ठंतुसायुधाः ॥ नगरेयानितिष्ठंतिदेवतायतनानिच ॥ १४ ॥ तेषुप्रवर्ततांपूजानानाबलिभिरावृता ॥ राजानः
शीघ्रमायांतुनानोपायनपाणयः ॥ १५ ॥ इत्यादिश्यमुनिःश्रीमान्सुमंत्रंनृपमंत्रिणम् ॥ स्वयंजगामभवनंराघवस्यातिशोभनम् ॥ १६ ॥
रथमारुह्यभगवान्वसिष्ठोमुनिसत्तमः ॥ त्रीणिकक्षाण्यतिक्रम्यरथात्क्षितिमवातरत् ॥ १७ ॥ अंतःप्रविश्यभवनंस्वाचार्यत्वादवारितः ॥
गुरुमागतमाज्ञायरामस्तूर्णंकृतांजलिः ॥ १८ ॥ प्रत्युद्गम्यनमस्कृत्यदंडवद्भक्तिसंयुतः ॥ स्वर्णपात्रेणपानीयमानिनायाशुजानकी ॥ १९ ॥
रत्नासनेसमावेश्यपादौप्रक्षाल्यभक्तितः ॥ तदपःशिरसाधृत्वासीतयासहराघवः ॥ २० ॥ धन्योऽस्मीत्यब्रवीद्रामस्तवपादांबुधारणात् ॥
श्रीरामेणैवमुक्तस्तुप्रहसन्मुनिरब्रवीत ॥ २१ ॥ त्वत्पादसलिलंधृत्वाधन्योऽभूद्गिरिजापतिः ॥ ब्रह्माऽपिमत्पितातेहिपादतीर्थहताशुभः
॥ २२ ॥ इदानींभाससेयत्त्वंलोकानामुपदेशकृत् ॥ जानामित्वांपरात्मानंलक्ष्म्यासंजातमीश्वरम् ॥ २३ ॥ देवकार्यार्थसिद्ध्यर्थंभक्तानां
भक्तिसिद्धये ॥ रावणस्यवधार्थायजातंजानामिराघव ॥ २४ ॥ तथाऽपिदेवकार्यार्थंगुह्यंनोद्घाटयाम्यहम् ॥ यथात्वंमाययासर्वंकरोषिरघु
नंदन ॥ २५ ॥ तथैवानुविधास्येऽहंशिष्यस्त्वंगुरुरप्यहम् ॥ गुरुर्गुरूणांत्वंदेवपितॄणांत्वंपितामहः ॥ २६ ॥

तरस्वरूपापेक्षयारामस्वरूपभक्तिरेवसर्वेष्टसाधनमितिसूचितम् ॥ २४ ॥ त्वंमाययेति ॥ माययाच्छादितस्वस्वरूपोयथाव्यवहरसितथैवत्वयिशिष्यत्वेनगुरुर्भूत्वाहं
व्यवहरिष्यामीत्यर्थः ॥ २५ ॥ वास्तवमर्थमाह । गुरुरिति । गुरूणामस्मद्गुरूणांब्रह्मादीनाम् ॥ २६ ॥

तत्रैवहेतुमाह । अंतर्यामीति ॥ अंतःस्थितत्वात्सर्वनियामकः अगोचरःवाङ्मनसयोरप्यविषयः स्वाधीनसंभवत्वंमायाधिष्ठातृत्वात् ॥ २७ ॥ दूष्यजीवनंदुष्टजीवि
कारूपं पौरोहित्यंराजपुरोहितत्वम् ॥ २८ ॥ २९ ॥ त्वत्संबंधाकांक्षारूपाशा । संबंधमाह । आचार्यत्वसिद्धयइति ॥ ३० ॥ लब्धाचार्यकत्वाद्गुरुदक्षिणांया
चते । त्वदधीनेत्यादि ॥ ३१ ॥ गुरुनिष्कृतिकामःगुरौप्रत्युपकारकरणेच्छुः ॥ ३२ ॥ एवमयंमत्स्वरूपमन्यत्रापिप्रकटयिष्यतीतिशंकामुन्नीयाह । प्रसंगादि

अंतर्यामीजगद्यात्रावाहकस्त्वमगोचरः ॥ शुद्धसत्वमयंदेहंधृत्वास्वाधीनसंभवम् ॥ २७ ॥ मनुष्यइवलोकेऽस्मिन्भासित्वंयोगमायया ॥
पौरोहित्यमहंजानेविगर्ह्यंदूष्यजीवनम् ॥ २८ ॥ इक्ष्वाकूणांकुलेरामःपरमात्माजनिष्यते ॥ इतिज्ञातंमयापूर्वंब्रह्मणाकथितंपुरा ॥ २९ ॥
ततोऽहमाशयारामतवसंबंधकांक्षया ॥ अकार्षंगर्हितमपितवाचार्यत्वसिद्धये ॥ ३० ॥ ततोमनोरथोमेऽद्यफलितोरघुनंदन ॥ त्वदधीना
महामायासर्वलोकैकमोहिनी ॥ ३१ ॥ मांयथामोहयेन्नैवतथाकुरुरघूद्वह ॥ गुरुनिष्कृतिकामस्त्वंयदिदेह्येतदेवमे ॥ ३२ ॥ प्रसंगात्सर्व
मप्युक्तंनवाच्यंकुत्रचिन्मया ॥ राज्ञादशरथेनाहंप्रेषितोऽस्मिरघूद्वह ॥ ३३ ॥ त्वामामंत्रयितुंराज्येश्वोऽभिषेक्ष्यतिराघव ॥ अद्यत्वंसीतया
सार्धमुपवासंयथाविधि ॥ ३४ ॥ कृत्वाशुचिर्भूमिशायीभवरामजितेंद्रियः ॥ गच्छामिराजसान्निध्यंत्वंतुप्रातर्गमिष्यसि ॥ ३५ ॥ इत्यु
क्त्वारथमारुह्यययौराजगुरुर्द्रुतम् ॥ रामोऽपिलक्ष्मणंदृष्ट्वाप्रहसन्निदमब्रवीत् ॥ ३६ ॥ सौमित्रेयौवराज्येमेश्वोऽभिषेकोभविष्यति ॥
निमित्तमात्रमेवाहंकर्ताभोक्तात्वमेवहि ॥ ३७ ॥ ममत्वंहिबहिःप्राणोनात्रकार्याविचारणा ॥ ततोवसिष्ठेनयथाभाषितंतत्तथाऽकरोत् ॥
॥ ३८ ॥ वसिष्ठोऽपिनृपंगत्वाकृतंसर्वंन्यवेदयत् ॥ वसिष्ठस्यपुरोराज्ञाह्युक्तंरामाभिषेचनम् ॥ ३९ ॥ यदातदैवनगरेश्रुत्वाकश्चित्पुमा
न्गौ ॥ कौसल्यायैराममात्रेसुमित्रायैतथैवच ॥ ४० ॥

ति ॥ ३३ ॥ आमंत्रयितुंबोधयितुम् ॥ ३४ ॥ प्रातर्गमिष्यसि राजसान्निध्यंवनंचेतिभावः ॥ ३५ ॥ ३६ ॥ एतद्राज्यप्राप्तिफलंतवैवेत्याह । निमित्तमात्र
मिति । कर्ताराज्यकर्ता भोक्ताराज्यसुखभोक्ता । अनेनस्वस्यकर्तृत्वादिराहित्यमपिध्वनितम् ॥ ३७ ॥ ममत्वंहिबहिःप्राणइतिअनेनशेषांशरूपत्वात्तस्यप्राणधारक
त्वरूपंजीवत्वंदर्शितम् ॥ ३८ ॥ पुरःअग्रे ॥ ३९ ॥ नगरेविद्यमानःकश्चित्पुमान्राममात्रेसुमित्रायैचन्यवेदयत् ॥ ४० ॥

तस्मैतद्वार्ताहराय ॥ ४१ ॥ प्रतिश्रुतंप्रतिज्ञातम् ॥ ४२ ॥ दुर्गांदेवींसकलदुःखहरणक्षमत्वादितिभावः ॥ ४३ ॥ दैवींकुंभकर्णस्यनिद्रावरव्याहारादिना देवानामुपकर्त्रीमयोध्यायामयोध्याप्रदेशावच्छिन्नंभुवोलोकंगच्छेत्यन्वयः ॥ ४४ ॥ आदौमंथरांप्रविशस्वकैकेयीप्रेरणार्थम् । आर्षस्तङ् । ततःपरंराजप्रेरणार्थं कैकेयींप्रविश ॥४५॥ विघ्नेअभिषेकविघ्ने तथाचक्रेअयोध्यागमनंचक्रे । दैवीवाणीति शेषः ॥४६॥ सावाण्याविष्टा त्रिषकटावुरसिकंठेचवक्रा ॥४७॥४८॥

श्रुत्वातेहर्षसंपूर्णेददतुर्हारमुत्तमम् ॥ तस्मैततःप्रीतमनाःकौसल्यापुत्रवत्सला॥४१॥लक्ष्मींपर्यचरद्देवींरामस्यार्थप्रसिद्धये॥सत्यवादीदशरथःकरोत्येवप्रतिश्रुतम् ॥४२॥ कैकेयीवशगःकिंतुकामुकःकिंकरिष्यति ॥ इतिव्याकुलचित्तासादुर्गांदेवीमपूजयत् ॥४३॥ एतस्मिन्नंतरेदेवादैवींवाणीमचोदयन् ॥ गच्छदेविभुवोलोकमयोध्यायांप्रयत्नतः ॥४४॥ रामाभिषेकविघ्नार्थंयतस्वब्रह्मवाक्यतः ॥ मंथरांप्रविशस्वादौकैकेयींचततःपरम् ॥ ४५॥ ततोविघ्नेसमुत्पन्नेपुनरेहिदिवंशुभे ॥ तथेत्युक्त्वातथाचक्रेप्रविवेशाथमंथराम् ॥ ४६॥ साऽपिकुब्जात्रिवक्रातुप्रासादाग्रमथारुहत्॥नगरंपरितोदृष्ट्वासर्वतःसमलंकृतम्॥४७॥ नानातोरणसंबाधंपताकाभिरलंकृतम्॥सर्वोत्सवसमायुक्तंविस्मितापुनरागमत्॥४८॥धात्रींपप्रच्छमातःकिंनगरंसमलंकृतम्॥ नानोत्सवसमायुक्ताकौसल्याचातिहर्षिता॥४९॥ददातिविप्रमुख्येभ्योवस्त्राणिविविधानिच॥तामुवाचतदाधात्रीरामचंद्राभिषेचनम् ॥५०॥ श्वोभविष्यतितेनाद्यसर्वतोऽलंकृतंपुरम् ॥ तच्छ्रुत्वात्वरितंगत्वाकैकेयींवाक्यमब्रवीत् ॥५१॥ पर्यंकस्थांविशालाक्षीमेकांतेपर्यवस्थिताम् ॥ किंशेषेदुर्भगेमूढेमहद्भयमुपस्थितम् ॥५२॥ नजानीषेऽतिसौंदर्यमानिनीमत्तगामिनी ॥ ५३ ॥ रामस्यानुग्रहाद्राज्ञःश्वोऽभिषेकोभविष्यति ॥ तच्छ्रुत्वासहसोत्थायकैकेयी प्रियवादिनी ॥ ५४ ॥ तस्यैदिव्यंददौस्वर्णनूपुरंरत्नभूषितम् ॥ हर्षस्थानेकिमितिमेकथ्यतेभयमागतम् ॥ ५५ ॥ भरतादधिकोरामःप्रियकृन्मेप्रियंवदः ॥ कौसल्यांमांसमंपश्यन्सदाशुश्रूषतेहिमाम् ॥ ५६ ॥ रामाद्भयंकिमापन्नंतवमूढेवदस्वमे ॥ तच्छ्रुत्वाविषसादाथकुब्जाकारणवैरिणी ॥ ५७ ॥

किंकेनहेतुनानगरमलंकृतं केनचहेतुनाकौसल्योत्सवयुक्काददाति॥४९॥५०॥५१॥ पुत्रस्यराज्याप्राप्त्यादुर्भगेतवचिंताराहित्याच्चमूढे ॥५२॥५३॥ राज्ञोऽनुग्रहाद्रामस्याभिषेकोभविष्यतीत्यन्वयः ॥५४॥५५॥५६॥ कारणेनवाणीप्रवेशरूपेणवैरिणीवैरमापन्ना । अकारणवैरिणीतिच्छेदइतिकश्चित् ॥ ५७ ॥

यथार्थंसत्यमेवमयोच्यतेतेमहद्वयमागतमिति ॥ ५८ ॥ अतथ्यवादीतिच्छेदः । त्वमेवमेभियेत्यादिवाक्यंमिथ्याप्रलापएवतस्येत्यर्थः । कार्यंहितम् ॥
॥ ५९ ॥ अविदुःखावेशात्प्रेषयामासेतिपुनरुक्तिर्नदोषाय ॥ ६० ॥ ६१ ॥ प्राणैर्वाहाप्यतेत्याज्यते । वधोभविष्यतीत्यर्थः ॥ ६२ ॥ सपत्न्याःसका
शायत्पराभवस्तत्सेवादिरूपस्ततोमरणंश्रेयइत्यर्थः ॥ ६३ ॥ अभिषेचनेइतिविषयसप्तमी । नवपंचचतुर्दश ॥ ६४ ॥ हेराज्ञिअभयेऽभयस्थानेभयरहिते
तवपुत्रोरूढोराज्येदृढोभविष्यतीत्यर्थः । ननुवयसासर्वगुणैश्चज्येष्ठेविद्यमानेकथंकनीयसोमेपुत्रस्यराज्यमतआह । उपायमिति ॥ ६५ ॥ इंद्रेणस्वयंयाचितइ

शृणुमद्वचनंदेवियथार्थंतेमहद्वयम् ॥ त्वांतोषयन्सदाराजाप्रियवाक्यानिभाषते ॥ ५८ ॥ कामुकोऽतथ्यवादीचत्वांवाचापरितोषयन् ॥
कार्यंकरोतितस्यावैराममातुःसुपुष्कलम् ॥ ५९ ॥ मनस्येतान्निधायैवप्रेषयामासतेसुतम् ॥ भरतंमातुलकुलेप्रेषयामाससानुजम् ॥ ६० ॥
सुमित्रायाःसमीचीनंभविष्यतिनसंशयः ॥ लक्ष्मणोराममन्वेतिराज्यंसोऽनुभविष्यति ॥ ६१ ॥ भरतोराघवस्याग्रेकिंकरोवाभविष्यति ॥
विवास्यतेवानगरात्प्राणैर्वाहाप्यतेऽचिरात् ॥ ६२ ॥ त्वंतुदासीवकौसल्यांनित्यंपरिचारिष्यसि ॥ ततोऽपिमरणंश्रेयोयत्सपत्न्याःपराभ
वः ॥६३॥ अतःशीघ्रंयतस्वाद्यभरतस्याभिषेचने ॥ रामस्यवनवासार्थंवर्षाणिनवपंचच ॥ ६४॥ ततोरूढोऽभयेपुत्रस्तवराज्ञिभविष्यति॥
उपायंतेप्रवक्ष्यामिपूर्वमेवसुनिश्चितम् ॥ ६५ ॥ पुरादेवासुरेयुद्धेराजादशरथःस्वयम् ॥ इंद्रेणयाचितोधन्वीसहायार्थंमहारथः ॥ ६६ ॥जगा
मसेनयासार्द्धंत्वयासहशुभानने ॥ युद्धंप्रकुर्वतस्तस्यराक्षसैःसहधन्विनः॥६७॥तदाक्षकीलोन्यपतच्छिन्नस्तस्यनवेदसः ॥ त्वंतुहस्तंसमा
वेश्यकीलरंध्रेऽतिधैर्यतः॥६८॥ स्थितवत्यसितापांगीपतिप्राणपरीप्सया ॥ ततोहत्वाऽसुरान्सर्वान्ददर्शत्वामरिंदमः ॥ ६९ ॥ आश्चर्यंपर
मंलेभेत्वामालिंग्यमुदान्वितः ॥ वृणीष्वयत्तेमनसिवांछितंवरदोऽस्म्यहम् ॥ ७० ॥ वरद्वयंवृणीष्वत्वमेवंराजाऽवदत्स्वयम् ॥ त्वयोक्तोवर
दोराजन्यदिदत्तंवरद्वयम् ॥ ७१ ॥ त्वय्येवतिष्ठतुचिरंन्यासभूतंममानघ ॥ यदामेऽवसरोभूयात्तदादेहिवरद्वयम् ॥ ७२ ॥

त्यन्वयः ॥ ६६ ॥ ६७ ॥ अक्षकीलःरथाक्षकीलइत्यर्थः । तस्यच्छिन्नोन्यपतत्सदशरथोनवेद । तत्कीलरन्ध्रेकीलस्थानेस्वहस्तंदत्वात्वंस्थितवती
त्यन्वयः ॥ ६८ ॥ ६९ ॥ ७० ॥ राजाअवदत् । ततोवरदोराजात्वयोक्तः । किमुक्तस्तदाह । राजन्नित्यादि ॥ ७१ ॥ ममेति । वरद्वयमितिविशेषः ।
त्वयामह्यंदत्तंवरद्वयमित्यर्थः ॥ ७२ ॥

तथेत्युक्त्वाहेसुव्रतेमंदिरंव्रजयुद्धभूमेः शिबिरंव्रजेतिस्वयमुक्तवानितिशेषः । एतत्सर्वंत्वत्तएवश्रुतम् ॥ ७३ ॥ तूष्णीमातिष्ठमौनंकुरु । शतशःप्रार्थिताऽपित्वदुक्तंकरिष्यामीतिप्रतिज्ञापर्यंतंराज्ञासहमावदेत्यर्थः ॥ ७४ ॥ तदेवाह । यावदिति । सत्यंतत्पूर्वकंशपथपूर्वकमितियावत्तथाप्रतिज्ञायराजातेऽभीष्टंयावत्करोतितावन्मौनंकुर्वित्यर्थः ॥ ७५ ॥ दुःसंगेनजातविभ्रमाआहितेऽपिहितबुद्धिमती दुष्टादुष्टभावा ॥ ७६ ॥ वक्राऽपिमाद्धितत्वान्ममसुंदरीतत्संबोधनंवक्रसुंदरि ॥ ७७ ॥ ॥ ७८ ॥ समंततःपरिकीर्यइतस्ततःप्रक्षिप्य मलिनभमिलुंठनान्मलिनगात्रा ॥ ७९ ॥ यावद्रामगमनंतावदेवंशयनमेवसर्वथातदगमनेतुप्राणांस्त्यक्ष्येइत्यर्थः

तथेत्युक्त्वास्वयंराजामंदिरंव्रजसुव्रते ॥ त्वत्तःश्रुतंमयापूर्वमिदानींस्मृतिमागतम् ॥ ७३ ॥ अतःशीघ्रंप्रविश्याद्यक्रोधागारंरुषान्विता ॥ विमुच्यसर्वाभरणंसर्वतोविनिकीर्यच ॥ भूमावेवशयानात्वंतूष्णीमातिष्ठभामिनी ॥ ७४ ॥ यावत्सत्यंप्रतिज्ञायराजाऽभीष्टंकरोतिते ॥ श्रुत्वात्रिवक्रयोक्तंतत्तदाकेकयनंदिनी ॥ ७५ ॥ तथ्यमेवाखिलंमेनेदुःसंगाहितविभ्रमा ॥ तामाहकैकयीदुष्टाकुतस्तेबुद्धिरीदृशी ॥ ७६ ॥ एवंत्वांबुद्धिसंपन्नांनजानेवक्रसुंदरि ॥ भरतोयदिराजामेभविष्यतिसुतःप्रियः॥७७॥ ग्रामांश्छतंप्रदास्यामिममत्वंप्राणवल्लभा ॥ इत्युक्त्वाकोपभवनंप्रविश्यसहसारुषा ॥ ७८॥ विमुच्यसर्वाभरणंपरिकीर्यसमंततः ॥ भूमौशयानामलिनामलिनांबरधारिणी ॥७९॥ प्रोवाचशृणुमेकुब्जेयावद्रामोवनंव्रजेत् ॥ प्राणांस्त्यक्ष्येऽथवावक्ष्येशयिष्येतावदेवहि॥८०॥निश्चयंकुरुकल्याणिकल्याणंतेभविष्यति ॥ इत्युक्ताप्रययौकुब्जागृहंसाऽपितथाऽकरोत् ॥ ८१ ॥ धीरोऽत्यंतदयान्वितोऽपिसुगुणाचारान्वितोवाऽथवानीतिज्ञोविधिवाददेशिकपरोविद्याविवेकोऽथवा ॥ दुष्टानामतिपापभावितधियांसंगंसदाचेद्भजेत्तद्बुद्ध्यापरिभावितोव्रजतितत्साम्यंक्रमेणस्फुटम् ॥८२॥ अतःसंगःपरित्याज्योदुष्टानांसर्वदैवहि ॥ दुःसंगीच्यवतेस्वार्थाद्यथेयंराजकन्यका ॥८३॥ इतिश्रीमदध्यात्मरायाणेउमामहेश्वरसंवादेअयोध्याकांडेद्वितीयःसर्गः॥२॥

॥ ८० ॥ निश्चयमुक्तार्थविषयम् ॥ ८१ ॥ अथकैकेय्याःकुब्जासंगादिदमविचार्यकारित्वमित्यर्थविशेषंसामान्यरूपेणार्थान्तरन्यासेनदर्शयति । धीरइति । महामनाइत्यर्थः । सुगुणश्चासावाचारान्वितइत्यर्थः । वाशब्दश्चार्थे । विधिंवदतितादृशोयोदेशिकोगुरुस्तत्परस्तत्सेवापरःगुरुसेवयासकलविधेयनिषेध्यार्थज्ञइत्यर्थः । विद्यावस्तुतत्त्वज्ञानंतेनविवेकः कर्तव्याकर्तव्यविचारोयस्यसः ॥ ८२ ॥ ८३ ॥ ॥ इतिश्रीमत्सकल०सेतौअयोध्याकांडेद्वितीयःसर्गः ॥ २ ॥

ततइवि ॥ मंत्रिणःसुमंत्रादयःप्रकृतयोमुख्यपौराः ॥ १ ॥ तस्याःकैकेय्यामंदिरंप्रविष्टेमयिकैकेयीहसंतीमामुपयातिसाऽद्यकिंनदृश्यतेएतत्किमित्यन्वयः ॥ २ ॥
॥ ३ ॥ वःयुष्माकम् ॥ ४ ॥ ५ ॥ ६ ॥ मांकिंखेदयसेतत्रहेतुर्वतइति ॥ ७ ॥ किमर्थंतिष्ठसीतिशेषः ॥ ८ ॥ वांछितविधानप्रकारमेवाह । कोवेति ॥ ९ ॥
यथायेनप्रकारेणदंडनेनवधेनवातदवश्यंब्रूहि ॥ १० ॥ ममस्वांतंजानासि । स्वदुःखासहिष्णुत्वेनेतिशेषः । प्रियंमांस्वाधीनंजानासि । एवंपरिश्रमंविनाऽपित्वदुक्ता

॥ श्रीमहादेवउवाच ॥ ततोदशरथोराजारामाभ्युदयकारणात् ॥ आदिश्यमंत्रिप्रकृतीःसानंदोगृहमाविशत् ॥ १ ॥ तत्रादृष्ट्वाप्रियांराजा किमेतदितिविह्वलः ॥ यापुरामंदिरंतस्याःप्रविष्टेमयिशोभना ॥ २ ॥ हसंतीमामुपायातिसाकिंनैवाद्यदृश्यते ॥ इत्यात्मन्येवसंचिंत्यमन साऽतिविदूयता ॥ ३ ॥ पप्रच्छदासीनिकरंकुतोवःस्वामिनीशुभा ॥ नायातिमांयथापूर्वंमत्प्रियाप्रियदर्शना ॥ ४ ॥ ताऊचुःक्रोधभवनंप्र विष्टानैवविद्महे ॥ कारणंतत्रदेवत्वंगत्वानिश्चेतुमर्हसि ॥ ५ ॥ इत्युक्तोभयसंत्रस्तोराजातस्याःसमीपगः ॥ उपविश्यशनैर्देहंस्पृशन्वैपाणि नाऽब्रवीत् ॥ ६ ॥ किंशेषेवसुधापृष्ठेपर्यंकादीन्विहायच ॥ मांत्वंखेदयसेभीरुयतोमांनावभाषसे ॥ ७ ॥ अलंकारंपरित्यज्यभूमौमालिनवा ससा ॥ किमर्थंब्रूहिसकलंविधास्येतववांछितम् ॥ ८ ॥ कोवातवाहितंकर्तानारीवापुरुषोऽपिवा ॥ समेदंडश्चवध्यश्चभविष्यतिनसंशयः ॥ ९ ॥ ब्रूहिदेवियथाप्रीतिस्तदवश्यंममाग्रतः ॥ तदिदानींसाधयिष्येसुदुर्लभमपिक्षणात् ॥ १० ॥ जानासित्वंममस्वांतंप्रियंमांस्ववशे स्थितम् ॥ तथाऽपिमांखेदयसेवृथातवपरिश्रमः ॥ ११ ॥ ब्रूहिकंधनिनंकुर्यांदरिद्रंतेप्रियंकरम् ॥ धनिनंक्षणमात्रेणनिर्धनंचतवाहितम् ॥ ॥ १२ ॥ ब्रूहिकंवावधिष्यामिवधार्होवाविमोक्ष्यते ॥ किमत्रबहुनोक्तेनप्राणान्दास्यामितेप्रिये ॥ १३ ॥ ममप्राणात्प्रियतरोरामोराजीव लोचनः ॥ तस्योपरिशपेब्रूहित्वद्धितंतत्करोम्यहम् ॥ १४ ॥

र्थानुष्ठानंमयाकर्तव्यमेवेतिवृथाऽयंपरिश्रमइतिभावः ॥ ११ ॥ तेप्रियंकरंकंधनिनंकुर्याम् । अप्रियंकरंचदरिद्रंकुर्याम् ॥ धनिनंकुबेरतुल्यधनवंतमपिक्षणेनत्वदहि तंनिर्धनंकरिष्यामीतिशेषः ॥ १२ ॥ कंब्रह्मतुल्यमपिवधिष्यामि । वधार्हश्चोरादिरपित्वत्प्रियोविमोक्ष्यतेमयेतिशेषः ॥ १३ ॥ यत्तवहितंतत्करोमीतिशपे । राम शपथपूर्वकंप्रतिजानेइत्यर्थः ॥ १४ ॥

॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ किंचिद्विलंबेतप्रातःकालोत्तरंक्षणमपिविलंबेमयाप्राणत्यागःकर्तव्यइत्यर्थः ॥ २२ ॥ रोमहर्षणं श्रृण्वतांरोमांचोत्पादकमतिक्रूरत्वात् ॥ २३ ॥ परयाउत्कृष्टयाकैकेयीभियानेत्रेविमृज्याश्रुरहितेकृत्वा साश्रुनेत्रत्वंदृष्ट्वाऽतिक्रोधेनरामवधंप्रार्थयेदितिअधिकाभीः निवृत्त्येतिपाठेपतनवेलायांपराङ्मुखपतनादुष्करीत्याभियैवझटितिवित्संमुखीभूयेत्यर्थः । पुनर्मनुष्यदेहधरायामद्धार्यायाएवंक्रौर्यासंभवंपर्यालोच्यदुःस्वप्नइतिवितर्कः । जाग्रतःस्वप्नानुभवासंभवादाह । अथवाममैवचित्तस्यविभ्रमःअन्यार्थकस्यान्यार्थकत्वग्रहः ॥ २४ ॥ इतिविचार्येतिशेषः । पुरःस्थितांव्याघ्रीमिवपुरः

इतिब्रुवाणंराजानंशपंतंराघवोपरि ॥ शनैर्विमृज्यनेत्रेसाराजानंप्रत्यभाषत ॥ १५ ॥ यदिसत्यप्रतिज्ञोऽसिशपथंकुरुषेयदि ॥ याच्ञांमेस फलांकर्तुंशीघ्रमेवत्वमर्हसि ॥ १६ ॥ पूर्वंदेवासुरेयुद्धेमयात्वंपरिरक्षितः ॥ तदावरद्वयंदत्तंत्वयामेतुष्टचेतसा ॥ १७ ॥ तद्वयंन्यासभूतंमे स्थापितंत्वयिसुव्रत ॥ तत्रैकेनवरेणाशुभरतंमेप्रियंसुतम् ॥ १८ ॥ एभिःसंभृतसंभारैर्यौवराज्येऽभिषेचय ॥ अपरेणवरेणाशुरामोगच्छतु दंडकान् ॥ १९ ॥ मुनिवेषधरःश्रीमाञ्जटावल्कलभूषणः ॥ चतुर्दशसमास्तत्रकंदमूलफलाशनः ॥ २० ॥ पुनरायातुतस्यांतेवनेवातिष्ठतुस्वयम् ॥ प्रभातेगच्छतुवनंरामोराजीवलोचनः ॥ २१ ॥ यदिकिंचिद्विलंबेतप्राणांस्त्यक्ष्येतवाग्रतः ॥ भवसत्यप्रतिज्ञस्त्वमेतदेवम मप्रियम् ॥ २२ ॥ श्रुत्वैतद्दारुणंवाक्यंकैकेय्यारोमहर्षणम् ॥ निपपातमहीपालोवज्राहतइवाचलः ॥ २३ ॥ शनैरुन्मील्यनयनेविमृज्यप रयाभिया ॥ दुःस्वप्नोवामयादृष्टोह्यथवाचित्तविभ्रमः ॥ २४ ॥ इत्यालोक्यपुरःपत्नींव्याघ्रीमिवपुरःस्थिताम् ॥ किमिदंभाषसेभद्रेममप्राण हरंवचः ॥ २५ ॥ रामःकमपराधंतेकृतवान्कमलेक्षणः ॥ ममाग्रेराघवगुणान्वर्णयस्यनिशंशुभान् ॥ २६ ॥ कौसल्यांमांसमंपश्यञ्छु श्रूषांकुरुतेसदा ॥ इतिब्रुवंतीत्वंपूर्वमिदानींभाषसेऽन्यथा ॥ २७ ॥

पत्नींकैकेयीमालोक्यदृष्ट्वातद्वस्तुतत्त्वनिर्णयायतामाहेतिशेषः । किमाहेत्यत्राह । किमिदमिति । ममप्राणहरमित्यनेनस्ववैधव्यसंपादकत्वेनात्यंतंस्वानिष्टंकथंभाषसे इत्यर्थः॥ २५ ॥ ननुरामकृताातिदुःसहापराधवशात्स्वानिष्टेमेप्रवृत्तिस्तत्राह । रामइति । अपराधाकरणंप्रागुक्तत्वद्वाक्येनैवनिर्णीतामित्याह । ममेति ॥ २६ ॥ इदानीमन्यथाभाषसे अतःपूर्वापरविरोधादिदंत्वद्वचोऽश्रद्धेयमित्यर्थः ॥ २७ ॥

यदिराज्यलोभस्तेतत्राह । राज्यमिति । रामस्येहस्थितावपिनतेभयमित्यर्थः । वामेमद्विरुद्धाचरणशीले ॥ २८ ॥ साऽपिपूर्वंतादृशभाषणशीलाऽतिमृदुरपिकैके
यीदेववाण्यावेशवशाद्रक्तांतलोचनासतीराजानंप्रत्युवाच ॥ २९ ॥ उक्तंप्रतिज्ञापूर्वमुक्तम् ॥ ३० ॥ मिथ्याभाषणजन्योनरकोऽस्त्येवपुनःपापांतरजंनरकमपिदं
र्शयति । वनमिति । अजिनमेवचीरंऋषिवस्त्रंतेनयुक्तः ॥ ३१ ॥ विडंबसेश्लाघसे रामोपरीत्यनेनभगवच्छपथोमिथ्यात्वयाकृतइतिध्वनयति ॥ ३२ ॥ ३३ ॥

राज्यंगृहाणपुत्रायरामस्तिष्ठतुमंदिरे ॥ अनुगृह्णीष्वमांवामेरामान्नास्तिभयंतव ॥ २८ ॥ इत्युक्त्वाऽश्रुपरीताक्षःपादयोर्निपपातह ॥ कैके
यीप्रत्युवाचेदंसाऽपिरक्तांतलोचना ॥ २९ ॥ ॥ राजेंद्रकिंत्वंभ्रांतोऽसिउक्तंतद्भाषसेऽन्यथा ॥ मिथ्याकरोषिचेत्स्वीयंभाषितंनरकोभवे
त् ॥ ३० ॥ वनंनगच्छेद्यदिरामचंद्रःप्रभातकालेऽजिनचीरयुक्तः ॥ उद्बंधनंवाविषभक्षणंवाकृत्वामरिष्येपुरतस्तवाहम् ॥ ३१ ॥ सत्यप्र
तिज्ञोऽहमितीहलोकेविडंबसेसर्वसभांतरेषु ॥ रामोपरित्वंशपथंचकृत्वामिथ्याप्रतिज्ञोनरकंप्रयाहि ॥ ३२ ॥ इत्युक्तः प्रिययादीनोमग्नोदुः
खार्णवेनृपः ॥ मूर्च्छितःपतितोभूमौविसंज्ञोमृतकोयथा ॥ ३३ ॥ एवंरात्रिर्गतातस्यदुःखात्संवत्सरोपमा ॥ अरुणोदयकालेतुबंदिनोगायका
जगुः ॥ ३४ ॥ निवारयित्वातान्सर्वान्कैकेयीरोषमास्थिता ॥ ततःप्रभातसमयेमध्यकक्षमुपस्थिताः ॥ ३५ ॥ ब्राह्मणाःक्षत्रियावैश्याऋ
षयः कन्यकास्तथा ॥ छत्रंचचामरंदिव्यंगजोवाजीतथैच ॥ ३६ ॥ अन्याश्चवारमुख्यायाःपौरजानपदास्तथा ॥ वसिष्ठेनयथाऽऽज्ञप्तंत
त्सर्वंतत्रसंस्थितम् ॥ ३७ ॥ स्त्रियोबालाश्चवृद्धाश्चरात्रौनिद्रांनलेभिरे ॥ कदाद्रक्ष्यामहेरामंपीतकौशेयवाससम् ॥ ३८ ॥ सर्वाभरणसं
पन्नंकिरीटकटकोज्ज्वलम् ॥ कौस्तुभाभरणंश्यामंकंदर्पशतसुंदरम् ॥ ३९ ॥ अभिषिक्तंसमायातंगजारूढंस्मिताननम् ॥ श्वेतच्छ
त्रधरंतत्रलक्ष्मणंलक्षणान्वितम् ॥ ४० ॥ रामंकदावाद्रक्ष्यामःप्रभातंवाकदाभवेत् ॥ इत्युत्सुकधियःसर्वेबभूवुःपुरवासिनः ॥ ४१ ॥

॥ ३४ ॥ तान्बंद्यादीन्गणान्निवर्त्य रोषंरोषातिशयमास्थिताप्राप्ता प्रातःसमयेजातेऽपिराममाकार्यवनायनप्रेषयतीत्यधिकोरोषः ॥ ३५ ॥ ३६ ॥ ३७ ॥
॥ ३८ ॥ किरीटकटकानिउज्ज्वलानिशोभावंति यत्संबंधात्तम् ॥ ३९ ॥ ४० ॥ ४१ ॥

---

१ उद्बन्धनं वा विषभक्षणं वेत्यादिना स्त्रीवधसंपादनेन पातकेनेत्यभिप्रायोद्घाटः ।

चिंतयन्निति । प्रजानांतादृशींचिंतांज्ञात्वास्वयमपिचिंतयान्नित्यर्थः ॥ ४२ ॥ ४३ ॥ अन्यथाशोकवान् अस्वस्थश्च ॥ ४४ ॥ ४५ ॥ भामिनिकोपनेइत्यर्थः । कोपनासैवभामिनीतिनिघंटुः ॥ ४६ ॥ ४७ ॥ अतिवृद्धत्वात्प्रियत्वाच्चद्वारपालैरवारितः ॥ ४८ ॥ ४९ ॥ पश्यन्नेवपितृदर्शनत्वरयादर्शनमात्रेणचक्षुषैवतेषांशिष्टाचारंकुर्वन्नित्यर्थः ॥ ५० ॥ ससंभ्रमःसादरः ॥ ५१ ॥ दुःखातभाविरामविरहदुःखात् ॥ ५२ ॥ समाविशत्प्राविशत् ।

नेदानीमुत्थितोराजाकिमर्थंचेतिचिंतयन् ॥ सुमंत्रःशनकैःप्रायाद्यत्रराजाऽवतिष्ठते ॥ ४२ ॥ वर्धयञ्जयशब्देनप्रणमञ्छिरसानृपम् ॥ अतिखिन्नंनृपंदृष्ट्वाकैकेयींसमपृच्छत ॥ ४३ ॥ देविकैकेयिवर्धस्वाकिंराजादृश्यतेऽन्यथा ॥ तमाहकैकयीराजारात्रौनिद्रांनलब्धवान् ॥ ॥ ४४ ॥ रामरामेतिरामेतिराममेवानुचिंतयन् ॥ प्रजागरेणवैराजाह्यस्वस्थइवलक्ष्यते ॥ राममानयशीघ्रंत्वंराजाद्रष्टुमिहेच्छति ॥४५॥ सुमंत्रउवाच ॥ अश्रुत्वाराजवचनंकथंगच्छामिभामिनि ॥ तच्छ्रुत्वामंत्रिणोवाक्यंराजामंत्रिणमब्रवीत् ॥ ४६ ॥ सुमंत्रारामंद्रक्ष्यामिशीघ्रमानयसुंदरम् ॥ इत्युक्तस्त्वरितंगत्वासुमंत्रोराममंदिरम् ॥ ४७ ॥ अवारितःप्रविष्टोऽयंत्वरितंराममब्रवीत् ॥ शीघ्रमागच्छभद्रंतेरामराजीवलोचन ॥ ४८ ॥ पितुर्गेहंमयासार्धंराजात्वांद्रष्टुमिच्छति ॥ इत्युक्तोरथमारुह्यसंभ्रमात्त्वरितोययौ ॥ ४९ ॥ रामःसारथिनासार्धंलक्ष्मणेनसमन्वितः ॥ मध्यकक्षेवसिष्ठादीन्पश्यन्नेवत्वरान्वितः ॥ ५० ॥ पितुःसमीपंसंगम्यननामचरणौपितुः ॥ राममालिंगितुंराजासमुत्थायससंभ्रमः ॥ ५१ ॥ बाहूप्रसार्यरामेतिदुःखान्मध्येपपातह ॥ हाहेतिरामस्तंशीघ्रमालिंग्यांकेन्यवेशयत् ॥ ५२ ॥ राजानंमूर्छितंदृष्ट्वाचुक्रुशुःसर्वयोषितः ॥ किमर्थंरोदनमितिवसिष्ठोऽपिसमाविशत् ॥ ५३ ॥ रामःपप्रच्छकिमिदंराज्ञोदुःखस्यकारणम् ॥ एवंपृच्छतिरामेसाकैकेयीराममब्रवीत् ॥ ५४ ॥ त्वमेवकारणंह्यत्रराज्ञोदुःखोपशांतये ॥ किंचित्कार्यंत्वयारामकर्तव्यंनृपतेर्हितम् ॥ ॥ ५५ ॥ कुरुसत्यप्रतिज्ञस्त्वंराजानंसत्यवादिनम् ॥ राज्ञावरद्वयंदत्तंममसंतुष्टचेतसा ॥ ५६ ॥

राजगृहमितिशेषः ॥५३॥ ५४ ॥ राजदुःखोपशांतयेतदर्थंत्वमेवकारणम् । तदेवकारणत्वंसमर्थयति । किंचिदिति ॥ ५५ ॥ कार्यमेवाह । सत्यप्रतिज्ञइति । त्वंदंडकागमनविषयेसत्यप्रतिज्ञोभूत्वाइत्यर्थः ॥ ५६ ॥

तत्सर्वंतद्वरद्वयानुष्ठानंत्वदधीनम् । अतःसत्यपाशेनेति ॥ ५७ ॥ पुत्रशब्देनैतदुच्यते । तदेवदर्शयति । पुन्नाम्नोनरकात्पितात्रायतेयेनसपुत्रइत्यर्थः ॥ ५८ ॥
पिबेयंविषम् । पित्राज्ञमइतिशेषः ॥ ५९ ॥ यःकुरुतेसउत्तमइत्यर्थः ॥ ६० ॥ मलोमलसदृशः ॥ ६१ ॥ ६२ ॥ ६३ ॥ तैर्भरतोऽवश्यमभिषेच्यएवे
त्यन्वयः ॥ ६४ ॥ समाःवर्षाणि ॥६५॥६६॥ राजाकिंकेनकारणेनेहविषयेमांनवक्तितत्कारणंनजाने । अकर्तव्यतासंभावनायामप्यभावादितिभावः॥६७॥

त्वदधीनंतुतत्सर्वंवक्तुंत्वांलज्जतेनृपः ॥ सत्यपाशेनसंबद्धंपितरंत्रातुमर्हसि ॥५७॥ पुत्रशब्देनचैतद्धिनरकात्त्रायतेपिता ॥ रामस्तयो
दितंश्रुत्वाशूलेनाभिहतोयथा ॥ ५८ ॥ व्यथितःकैकयींप्राहकिंमामेवंप्रभाषसे ॥ पित्रर्थेजीवितंदास्येपिबेयंविषमुल्बणम् ॥५९ ॥ सीतां
त्यक्षेऽथकौसल्यांराज्यंचापित्यजाम्यहम् ॥ अनाज्ञप्तोऽपिकुरुतेपितुःकार्यंसउत्तमः ॥ ६० ॥ उक्तःकरोतियःपुत्रःसमध्यमउदाहृतः ॥
उक्तोऽपिकुरुतेनैवसपुत्रोमलउच्यते ॥ ६१ ॥ अतःकरोमितत्सर्वंयन्मामाहपितामम ॥ सत्यंसत्यंकरोम्येवरामोद्विर्नाभिभाषते ॥ ६२ ॥
इतिरामप्रतिज्ञांसाश्रुत्वावक्तुंप्रचक्रमे ॥ रामत्वदाभिषेकार्थंसंभाराःसंभृताश्चये ॥ ६३ ॥ तैरेवभरतोऽवश्यमभिषेच्यःप्रियोमम ॥ अपरेणव
रेणाशुचीरवासाजटाधरः ॥ ६४ ॥ वनंप्रयाहिशीघ्रंत्वमद्यैवपितुराज्ञया ॥ चतुर्दशसमास्तत्रवसमुन्यन्नभोजनः ॥६५ ॥ एतदेवपितुस्तेऽ
द्यकार्यंत्वंकर्तुमर्हसि ॥ राजातुलज्जतेवक्तुंत्वामेवंरघुनंदन ॥ ६६ ॥ श्रीरामउवाच ॥ भरतस्यैवराज्यंस्यादहंगच्छामिदंडकान् ॥ किंतु
राजानवक्तीहमांनजानेऽत्रकारणम् ॥ ६७ ॥ श्रुत्वैतद्रामवचनंदृष्ट्वारामंपुरःस्थितम् ॥ प्राहराजादशरथोदुःखितो दुःखितंवचः ॥ ६८ ॥
स्त्रीजितंभ्रांतहृदयमुन्मार्गपरिवर्तिनम् ॥ निगृह्यमांगृहाणेदंराज्यंपापंनतद्भवेत्॥६९॥ एवंचेदनृतंनैवमांस्पृशेद्रघुनंदन ॥ इत्युक्त्वादुःखसं
तप्तोविललापनृपस्तदा ॥ ७० ॥

दुःखितंराज्ञोऽवचनेनेतिविशेषः ॥ ६८ ॥ ज्येष्ठादाच्छिद्यकनिष्ठायराज्यदानरूपेउन्मार्गेवर्तमानमतएवभ्रांतहृदयंस्त्रीजितंच । पापंनतद्भवेदिति । गुरोरप्यव
लिप्तस्यकार्याकार्यमजानतः । उत्पथप्रतिपन्नस्यदंडएवविधीयते । इतिनीत्युक्तेः ॥ ६९ ॥ त्वयाबलात्कारेणग्रहणान्ममाप्येतद्वरदानानृतकृतो
नदोषइत्याह । एवंचेदिति ॥ ७० ॥

यद्यपितवजगन्नाथत्वाद्राज्यविपिनयोःसमतैवतथाऽपित्वद्वियोगेममप्राणास्त्वद्वल्लभत्वात्त्वयासहगमिष्यंतीत्याह । ममप्राणवल्लभेति ॥ ७१ ॥ विमृज्य निरस्ताश्रुकेकृत्वा ॥ ७२ ॥ शासत्वित्यार्षम् । मदनुजेनापिराज्यकरणेतस्यापित्वत्पुत्रत्वात्त्वद्भक्तत्वाच्चात्रदुःखंवृथेतिभावः ॥ ७३ ॥ ७४ ॥ ममसुखं तुविशिष्टम् । हेदेवत्वत्सत्यपालनरूपंकार्यंचभविष्यतीत्यधिकोलाभः विशेषणदेवानांकार्यंचरक्षोनाशरूपंभविष्यतीतिध्वनितम् । कैकेय्याश्चप्रियोऽतो महागुणःबहुगुणइत्यर्थः ॥ ७५ ॥ इदानीमेवेत्यर्थः । उपह्रीयंतांदूरीक्रियंताम् ॥ ७६ ॥ सुखमित्यनेनममवनगमनेदुःखलेशोऽपिनास्तीतिध्वनितम् ॥७७॥

हारामहाजगन्नाथहाममप्राणवल्लभ ॥ मांविसृज्यकथंघोरंविपिनंगंतुमर्हसि ॥ ७१ ॥ इतिरामंसमालिंग्यमुक्तकंठोरुरोदह ॥ विमृज्यनयने रामःपितुःसजलपाणिना ॥ ७२ ॥ आश्वासयामासनृपंशनैःसनयकोविदः ॥ किमत्रदुःखेनविभोराज्यंशासतुमेऽनुजः ॥ ७३ ॥ अहंप्रति ज्ञांनिस्तीर्यपुनर्यास्यामितेपुरम् ॥ राज्यात्कोटिगुणंसौख्यंममराजन्वनेसतः ॥७४॥ त्वत्सत्यपालनंदेवकार्यंचापिभविष्यति ॥ कैकेय्या श्चप्रियोराजन्वनवासोमहागुणः ॥ ७५ ॥ इदानींगंतुमिच्छामिव्येतुमातुश्चहृज्ज्वरः ॥ संभाराश्चोपह्रीयंतामभिषेकार्थमागताः ॥ ७६ ॥ मातरंचसमाश्वास्यअनुनीयचजानकीम् ॥ आगत्यपादौवंदित्वातवयास्येसुखंवनम् ॥७७॥इत्युक्त्वातुपरिक्रम्यमातरंद्रष्टुमाययौ ॥ कौस ल्याऽपिहरेःपूजांकुरुतेरामकारणात् ॥ ७८ ॥ होमंचकारयामासब्राह्मणेभ्योददौधनम् ॥ ध्यायतेविष्णुमेकाग्रमनसामौनमास्थिता ॥७९॥ अंतःस्थमेकंघनचित्प्रकाशंनिरस्तसर्वातिशयस्वरूपम् ॥ विष्णुंसदानंदमयंहृदब्जेसाभावयंतीनददर्शरामम् ॥८०॥ इति श्रीमदध्या० अयोध्याकांडेतृतीयःसर्गः ॥ ३ ॥

रामकारणात्रामाभिषेकविघ्ननिवृत्तिनिमित्तम् ॥ ७८ ॥ एकाग्रमनसोक्तफलार्थमेवविष्णुंध्यायतेच । आर्षमात्मनेपदम् ॥ ७९ ॥ अंतःस्थमंतर्या मितयाहृदयेस्थितम् । ध्येयंरूपमाह । घनेत्यादि । निरस्तेत्यादिनानिर्विकल्पकसमाधिस्थेत्युक्तम् । सकलविशेषरहितध्यानस्यैवनिर्विकल्पकत्वात् । निरस्तानिसर्वाणिअतिशयस्वरूपाणिभेदकस्वरूपाणियेनेत्यक्षरार्थः ॥ ८० ॥ इति श्रीमत्सकल०रामायणबुधिसेतौ अयोध्याकांडे तृतीयःसर्गः ॥ ३ ॥

चतुर्थेलक्ष्मणंक्रुद्धंसांत्वयित्वोपदेशतः । सीतयासहितोऽगच्छद्दंडकंचेतिवर्ण्यते ॥ १ ॥ ससंभ्रमासादरासुमित्राराज्ञींकौसल्यांबोधयामासेत्यन्वयः ॥ १ ॥
बहिर्दृष्टिप्रवाहिता त्यक्तसमाधिरित्यर्थः ॥ २ ॥ भुंक्ष्वपुत्रेतीतिअप्लुतवद्भावात्संधिः ॥ ३ ॥ भोजनावसरोनकृतः । पित्रेतिशेषः । निश्चितःकृतः । पित्रे
तिशेषः ॥ ४ ॥ ५ ॥ मुनिवेषःचीरवासस्त्वादिकम् । चिंतांमद्विषयांकर्तुंनार्हसि ॥ ६ ॥ संप्लुतामग्ना ॥ ७ ॥ क्षणार्धंवाक्षणार्धमपि ॥ ८ ॥
बालकमत्यंतबालम् । वत्सशब्दोहिगवापत्येरूढः ॥ ९ ॥ राजाराज्यंप्रयच्छतु । तस्यात्यंतमिच्छाविषयत्वात् । किमर्थामिति । नहितेनकिं

ततःसुमित्राद्दृष्ट्वैनंरामंराज्ञींससंभ्रमा ॥ कौसल्यांबोधयामासरामोऽयंसमुपस्थितः ॥ १ ॥ श्रुत्वैवरामनामैषाबहिर्दृष्टिप्रवाहिता ॥ रामंदृष्ट्वा
विशालाक्षमालिंग्यांकेन्यवेशयत् ॥ २ ॥ मूर्ध्न्यवघ्रायपस्पर्शगात्रंनीलोत्पलच्छवि ॥ भुंक्ष्वपुत्रेतिचप्राहमिष्टमन्नंक्षुधार्दितः ॥ ३ ॥ रामः
प्राहनमेमातर्भोजनावसरःकृतः ॥ दंडकागमनेशीघ्रंममकालोऽद्यनिश्चितः ॥ ४ ॥ कैकेयीवरदानेनसत्यसंधःपितामम ॥ भरतायददौ
राज्यंममाप्यारण्यमुत्तमम् ॥ ५ ॥ चतुर्दशसमास्तत्रह्युषित्वामुनिवेषधृक् ॥ आगमिष्येपुनःशीघ्रंनचिंतांकर्तुमर्हसि ॥ ६ ॥ तच्छ्रुत्वासह
सोद्विग्नामूर्छितापुनरुत्थिता ॥ आहरामंसुदुःखार्तादुःखसागरसंप्लुता ॥ ७ ॥ यदिरामवनंसत्यंयासिचेन्नयमामपि ॥ त्वद्विहीनाक्षणार्धं
वाजीवितंधारयेकथम् ॥ ८ ॥ यथागौर्बालकंवत्संत्यक्त्वानतिष्ठेन्नकुत्रचित् ॥ तथैवत्वांनशक्नोमित्यक्तुंप्राणात्प्रियंसुतम् ॥ ९ ॥ भरतायप्रस
न्नश्चेद्राज्यंराजाप्रयच्छतु ॥ किमर्थंवनवासायत्वामाज्ञापयातिप्रियम् ॥ १० ॥ कैकेय्यावरदोराजासर्वस्वंवाप्रयच्छतु ॥ त्वयाकिमपराद्धंहि
कैकेय्यावानृपस्यवा ॥ ११ ॥ पितागुरुर्यथारामतवाहमधिकाततः ॥ पित्राज्ञप्तोवनंगंतुंवारयेयमहंसुतम् ॥ १२ ॥ यदिगच्छसिमद्वाक्य
मुल्लंघ्यनृपवाक्यतः ॥ तदाप्राणान्परित्यज्यगच्छामियमसादनम् ॥ १३ ॥

चिद्भरतेष्टमितिभावः ॥ १० ॥ त्वयाकिमपराद्धम् । यत्त्वांवनायप्रस्थापयतीतिशेषः ॥ ११ ॥ यथापितागुरुस्तथाऽहमपितवगुरुः । यद्वा । ततोऽ
धिका । पितुर्दशगुणंमातागौरवेणातिरिच्यते । इतिस्मृतेः । एवंचमदाज्ञयावनागमनमेवोचितमितिभावः ॥ १२ ॥ तदाप्राणानिति । एवंचमातृवधदो
षोवनगमनेऽधिकइतिभावः ॥ १३ ॥

रुषादहन्निवेत्यन्वयः ॥ १४ ॥ भ्रांतमनसंराज्यलोभेन अतएवकैकेयीवशवर्तिनम् ॥ १५ ॥ पुरालोकान्प्रदहतःकालाग्निरुद्रस्येवेत्यर्थः । अनेनतदव
तारत्वंस्वस्यसूचितम् ॥ १६ ॥ तत्राभिषेकेविघ्नकारिणोनिहन्यामित्यर्थः ॥ १७ ॥ वेसर्वैकालाग्निरुद्रतुल्यत्वंतद्रूपत्वंचसत्यमेवजानामिकिंतुतस्यपरा
क्रमस्यसमयइदानींनकिंतुचतुर्दशेवर्षेइतिव्यंग्यम् ॥ १८ ॥ अथतत्रत्यजनप्रतारणायसंसारानित्यत्वप्रदर्शनेनरोषान्निवर्तयति । यदिदमिति । सर्वंजगत्
राज्यमंततःस्वदेहेंद्रियादिकंचनसत्यम् । तथाचकिंकस्यार्थेउपादेयंयेनैवंरोषःकार्यइतिभावः । यदिसत्यंभवेत्तदातेआयासःसफलोभवेदित्यन्वयः ॥ १९ ॥
मेघवितानंमेघसमूहः । एवंचभोग्यभोक्त्रोरुभयोरप्यस्थिरत्वात्सर्वंव्यर्थमितिभावः ॥ २० ॥ यथेति । यथासर्पगलवर्तीभेकस्तद्गलवर्तिकोमलमांसभो

लक्ष्मणोऽपिततःश्रुत्वाकौसल्यावचनंरुषा ॥ उवाचराघवंवीक्ष्यदहन्निवजगत्त्रयम् ॥ १४ ॥ उन्मत्तंभ्रांतमनसंकैकेयीवशवर्तिनम् ॥
बद्धानिहन्मिभरतंतद्बंधून्मातुलानपि ॥ १५ ॥ अद्यपश्यंतुमेशौर्यंलोकान्प्रदहतःपुरा ॥ रामत्वमभिषेकायकुरुयत्नमरिंदम ॥ १६ ॥
धनुष्पाणिरहंतत्रनिहन्यांविघ्नकारिणः ॥ इतिब्रुवंतंसौमित्रिमालिंग्यरघुनंदनः ॥ १७ ॥ शूरोऽसिरघुशार्दूलममात्यंतहितेरतः ॥ जाना
मिसर्वंतेसत्यंकिंतुतत्समयोनहि ॥ १८ ॥ यदिदंदृश्यतेसर्वंराज्यंदेहादिकंचयत् ॥ यदिसत्यंभवेत्तत्रआयासःसफलश्चते ॥ १९ ॥ भोगामे
घवितानस्थविद्युल्लेखेवचंचलाः ॥ आयुरप्यग्निसंतप्तलोहस्थजलबिंदुवत् ॥ २० ॥ यथाव्यालगलस्थोऽपिभेकोदंशानपेक्षते ॥ तथाका
लाहिनाग्रस्तोलोकोभोगानशाश्वतान् ॥ २१ ॥ करोतिदुःखेनहिकर्मतंत्रंशरीरभोगार्थमहर्निशंनरः ॥ देहस्तुभिन्नःपुरुषात्समीक्ष्यतेको
वात्रभोगःपुरुषेणभुज्यते ॥ २२ ॥

गायासन्नमपिस्वमृत्युमजानंस्तद्गलमांसदंशनमपेक्षतेइच्छतितथाकालाहिग्रस्तोलोकोभोगानिच्छतीत्यर्थः॥ २१॥ कर्मतंत्रंधनार्जनादिव्यापारंकाम्यंवैदिकंकर्मच ।
नन्वत्रकस्यभोगःशरीरस्यउतात्मनः । नाद्यइत्याह । देहस्त्विति । पुरुषाद्भेदवतस्तस्यात्यंतजडत्वात्सुखादिसाक्षात्काररूपभोगस्यतत्रासंभवइतिभावः ।
नांत्यइत्याह । कोवात्रेति । तस्यशुद्धस्वभावत्वेनापरिणामित्वात्तस्यभोगासंभवइतिभावः । अत्रदेहशब्देनचित्तमप्युपलक्ष्यते यद्यपितयोःपरस्परंविवेकाग्रहाच्चि
त्तस्यभोगस्तथाऽपिसभ्रांतिमूलकइतिहेयएवेतितात्पर्यम् ॥ २२ ॥

एवंभोगस्यापारमार्थिकत्वमुक्त्वेदानींवैराग्यायपुत्रादिसंगस्यास्थिरत्वमाह ॥ पित्रिति । प्रपापानीयशाला काष्ठौघयोरिवकाष्ठौघवत् ॥ २३ ॥ प्रतीतानि श्रिताएषःअभिमानःममधनादि अनेनचममचिरंभोगइत्यादिः ॥ २४ ॥ संसृतिःसंसारस्थितिःस्वप्नसदृशीअल्पकालमनुवर्तते तामुपादेयत्वेनमनुतइत्यर्थः ॥२५॥ कथंचिदिति । कथमपत्यिर्थः । नबुध्यतेममापिजरामृत्यूस्तइतिकथमपिनबुध्यतइत्यर्थः ॥ २६ ॥ पूर्वपूर्वभुक्तदिनरात्र्यपेक्षयोत्तरोत्तरस्यविशेषमपश्यन्अतो मूढमातिःकालवेगं वेपूर्वावस्थापहारकंनपश्यति अतोभोगाननुपततितेष्वासज्जते ॥ २७ ॥ आमघटः अपक्वघटः । सपत्नाःशत्रवः ॥ २८ ॥ आगतप्रायाहंकिंमूढो

पितृमातृसुतभ्रातृदारबंध्वादिसंगमः ॥ प्रपायामिवजंतूनांनद्यांकाष्ठौघवच्चलः ॥ २३ ॥ छायेवलक्ष्मीश्चपलाप्रतीतातारुण्यमंबूर्मिवदध्रुवं च ॥ स्वप्नोपमंस्त्रीसुखमायुरल्पंतथाऽपिजंतोरभिमानएषः ॥ २४ ॥ संसृतिःस्वप्नसदृशीसदारोगादिसंकुला ॥ गंधर्वनगरप्रख्यामूढ स्तामनुवर्तते ॥ २५ ॥ आयुष्यंक्षीयतेयस्मादादित्यस्यगतागतैः ॥ दृष्ट्वाऽन्येषांजरामृत्यूकथंचिन्नैवबुध्यते ॥ २६ ॥ सएवदिवसः सैवरात्रिरित्येवमूढधीः ॥ भोगाननुपतत्येवकालवेगंनपश्यति ॥ २७ ॥ प्रतिक्षणंक्षरत्येतदायुरामघटांबुवत् ॥ सपत्नाइवरोगौघाःशरीरं प्रहरंत्यहो ॥ २८ ॥ जराव्याघ्रीवपुरतस्तर्जयंत्यवतिष्ठते ॥ मृत्युःसहैवयात्येषसमयंसंप्रतीक्षते ॥ २९ ॥ देहेऽहंभावमापन्नोराजाऽहंलोक विश्रुतः ॥ इत्यस्मिन्मनुतेजंतुः कृमिविड्भस्मसंज्ञिते ॥ ३० ॥ त्वगस्थिमांसविण्मूत्ररेतोरक्तादिसंयुतः ॥ विकारीपरिणामीचदेहआ त्माकथंवद ॥ ३१ ॥ यमास्थायभवाँल्लोकंदग्धुमिच्छतिलक्ष्मण ॥ देहाभिमानिनःसर्वेदोषाःप्रादुर्भवंतिहि ॥ ३२ ॥

ऽसीवितर्जयंती मृत्युःसमयं प्रहर्तुंसंप्रतीक्षते सहतिष्ठन्नपि ॥ २९ ॥ देहेउपचयादिविशिष्टेकृमिविड्भस्मसंज्ञिते । भूस्थेआद्यासंज्ञा जंतुभिर्भक्षितेमध्यासंज्ञादग्धे अंत्या । तादृशेदेहेऽहंभावप्राप्तोऽहंराजेतिअस्मिँल्लोकेमनुते ॥ ३० ॥ अथदेहस्यात्मत्वंखंडयति ॥ त्वगिति । त्वगादिसंयुतत्वाद्विकारीरसादिधातुविकारवान् । परिणामी।बाल्याद्यवस्थापरिणामवान् । आत्मात्वविकारीअपरिणामीचेतिविपरीतःश्रुत्यादिभिरुक्तइतिभावः ॥ ३१ ॥ यंरागादिदोषसमूहम् । तेदोषादेहा भिमानिनःप्रादुर्भवंति । तस्मात्तंत्यजेतिभावः ॥ ३२ ॥

देहाभिमानिनोऽस्यरागादिदोषप्रादुर्भावकत्वतत्कारणाविद्यारूपत्वात्तस्येत्याह । देहोऽहमिति । देहइत्युपलक्षणमंतःकरणादेरपि । तदाह । चिदात्मेति ॥ ३३ ॥ संसृतेःसंसारमूलस्यरागादिदोषस्यशत्रवइति ॥ स्वजननाविद्योच्छेदकत्वाविद्याभ्यासेकामादयः शात्रवंकुर्वतीत्यर्थः ॥ ३४ ॥ प्रकृतोपयोगितयाक्रोधस्यैवमुक्तिविघातेप्राधान्यमाह । तत्रापीति । पित्रादिवधेनपातित्यंप्राप्तोनश्रवणाद्यधिकारीतिभावः ॥३५॥ मनस्तापःतज्जनकंहननाद्युपायान्वेषणमित्यर्थः ॥ ३६ ॥ महान्शत्रुःपरिणामेस्वप्राणापहारकत्वात् । क्रोधएवयमःसाक्षादितिपाठांतरम् । वैतरणीनदी । दुस्तरत्वात् । विषयलाभैःकथमप्यनपगमादितिभावः । "नजातुकामःकामानामुपभोगेनशाम्यति । इंधनैःकृष्णवर्त्मेवभूयएवाभिवर्धते" इत्युक्तेः । नंदनवनमानंदजनकत्वात् ॥ ३७ ॥ एवंशांतिसेवने ॥ ३८ ॥

देहोऽहमितियाबुद्धिरविद्यासाप्रकीर्तिता ॥ नाहंदेहश्चिदात्मेतिबुद्धिर्विद्येतिभण्यते ॥ ३३ ॥ अविद्यासंसृतेर्हेतुर्विद्यातस्यानिवर्तिका ॥ तस्माद्यत्नःसदाकार्योविद्याभ्यासेमुमुक्षुभिः ॥ कामक्रोधादयस्तत्रशत्रवःशत्रुसूदन ॥ ३४ ॥ तत्रापिक्रोधएवालंमोक्षविघ्नायसर्वदा ॥ येनाविष्टःपुमान्हंतिपितृभ्रातृसुहृत्सखीन् ॥ ३५ ॥ क्रोधमूलोमनस्तापःक्रोधःसंसारबंधनम् ॥ धर्मक्षयकरःक्रोधस्तस्मात्क्रोधंपरित्यज ॥ ३६ ॥ क्रोधएषमहाञ्छत्रुस्तृष्णावैतरणीनदी ॥ संतोषोनंदनवनंशांतिरेवहिकामधुक् ॥३७॥ तस्माच्छांतिंभजस्वाद्यशत्रुरेवंभवेन्नते॥ देहेंद्रियमनःप्राणबुद्ध्यादिभ्योविलक्षणः ॥ ३८ ॥ आत्माशुद्धःस्वयंज्योतिरविकारीनिराकृतिः ॥ यावद्देहेंद्रियप्राणैर्भिन्नत्वंनात्मनोविदुः ॥ ३९ ॥ तावत्संसारदुःखौघैःपीड्यंतेमृत्युसंयुताः ॥ तस्मात्त्वंसर्वदाभिन्नमात्मानंहृदिभावय ॥ ४० ॥ बुद्ध्यादिभ्योबहिःसर्वमनुवर्तस्वमाखिदः ॥ भुंजन्प्रारब्धमखिलंसुखंवादुःखमेववा ॥ ४१ ॥

तेभ्योवैलक्षण्यमेवाह । अविकारीनिराकृतिः देहादिस्तुसाकारइतिभावः ॥ ३९ ॥ तावदिति । अहंममेत्यभिमानसत्त्वादितिभावः । भिन्नंबुद्ध्यादिभ्यइत्यर्थः ॥ ४० ॥ बुद्ध्यादिभ्यः ल्यब्लोपेपंचमी । तदतिरिक्तोऽहमितिअंतर्जानन्नेवतानालंब्यबाहिर्लोकव्यवहारेसर्वलोकव्यवहारंलोकवदेवानुवर्तस्वकुरु । परंतुतत्रमाखिदःखेदंनकुरु । ननुलोकवत्कार्यकरणेतद्वत्खेदोऽवश्यंभाव्येवेत्यतआह । भुंजन्निति । अखिलंसुखंदुःखंवाप्रारब्धमित्येवंभुंजंस्तथाभावयन् ॥ ४१ ॥



१ आदिशब्देन मननानिदिध्यासनसंग्रहः ।

प्रवाहपतितोऽपिसंसारप्रवाहस्थोऽपिकार्यंव्यवहारंकुर्वन्नपितज्जन्यपापपुण्याभ्यांनलिप्यतेपृथग्जनोऽपि । एवंचतवतथाभावयतःसर्वथातदलेपइत्याह । बाह्येति ॥
॥ ४२ ॥ तदेवाह । एतदिति ॥ ४३ ॥ ४४ ॥ समागमंमेपुनरागममेवंभावयंतीप्रतीक्षस्वेत्यर्थः ॥ ४५ ॥ यथासरितांप्रवाहेपतितप्लवानांनस
दैकत्रसंवासःकिंतुक्षणमात्रंतथाकर्ममार्गैसंसारेवर्तमानानांपितृपुत्रादीनामपीत्यर्थः । एवंभावनायांचतुर्दशसमानांसंख्यादिवसगणनाक्षणार्धवत्अत्यल्पकालेनैवस

प्रवाहपतितःकार्यंकुर्वन्नपिनालिप्यसे ॥ बाह्येसर्वत्रकर्तृत्वमावहन्नपिराघव ॥ ४२ ॥ अंतःशुद्धस्वभावस्त्वंलिप्यसेनचकर्मभिः ॥ एतन्म
योदितंकृत्स्नंहृदिभावयसर्वदा ॥ ४३ ॥ संसारदुःखैरखिलैर्बाध्यसेनकदाचन ॥ त्वमप्येवंमयादिष्टंहृदिभावयनित्यदा ॥ ४४ ॥ समाग
मंप्रतीक्षस्वनदुःखैःपीड्यसेचिरम् ॥ नसदैकत्रसंवासःकर्ममार्गानुवर्तिनाम् ॥ ४५ ॥ यथाप्रवाहपतितप्लवानांसरितांतथा ॥ चतुर्दशसमा
संख्याक्षणार्धमिवजायते ॥ ४६ ॥ अनुमन्यस्वमामंबदुःखंसंत्यज्यदूरतः ॥ एवंचेत्सुखसंवासोभविष्यतिवनेमम ॥ ४७॥ इत्युक्त्वादंडव
न्मातुःपादयोरपतच्चिरम् ॥ उत्थाप्यांकेसमावेश्यआशीर्भिरभिनंदयत् ॥ ४८ ॥ सर्वेदेवाःसगंधर्वाब्रह्मविष्णुशिवादयः ॥ रक्षंतुत्वांसदा
यांतंतिष्ठंतंनिद्रयायुतम् ॥ ४९ ॥ इतिप्रस्थापयामाससमालिंग्यपुनःपुनः ॥ लक्ष्मणोऽपितदारामंनत्वाहर्षाश्रुगद्गदः ॥ ५० ॥ आहराम
ममांतस्थःसंशयोऽयंत्वयाहृतः ॥ यास्यामिपृष्ठतोरामसेवांकर्तुंतदादिश ॥ ५१ ॥ अनुगृह्णीष्वमांरामनोचेत्प्राणांस्त्यजाम्यहम् ॥ तथे
तिराघवोऽप्याहलक्ष्मणंयाहिमाचिरम् ॥ ५२ ॥

मात्ताभविष्यतीत्यर्थः ॥ ४६ ॥ एवंचेत्त्वदनुमत्यागमनंचेत्तदाममवनेसुखजनकःसंवासोभविष्यतीत्यर्थः ॥ ४७ ॥ चिरंयावदनुमतिपर्यंतंअभिनंद
यत्अभ्यनंदयत् । अडभावआर्षः ॥ ४८ ॥ तदेवाह । सर्वेइति । सदेत्यस्यविवरणं यांतमित्यादि ॥ ४९ ॥ ५० ॥ रामेतिपुनरुक्तिर्ह
र्षातिशयात् ॥ ५१ ॥ ५२ ॥

एवंलक्ष्मणमुक्त्वाप्रतस्थेमातृगृहादितिशेषः । ततस्तामतिप्रियांसीतांसमाधातुंविभुर्जगतःपतिर्गतः । स्वगृहमितिशेषः ॥ ५३ ॥ ५४ ॥ सेनयाविनाकुत्रगत
आगतोऽसीत्यन्वयः । कुतःकुतोहेतोर्नदृश्यतेइत्यर्थः । वादित्राणिनवाद्यंतेकुतइत्यनुकर्षः ॥ एवमग्रेऽपि ॥ ५५ ॥ सामंतराजेति । एकाकीकिमित्या
गतइत्यर्थः । पर्यायोक्तमलंकारः ॥ ५६ ॥ ५७ ॥ अद्यैवयास्यामीति । नोपहासोऽयमित्याह ॥ नमिथ्येति ॥ ५८ ॥ ५९ ॥ वरस्वरूपमाह ।

प्रतस्थेतांसमाधातुंगतःसीतापतिर्विभुः ॥ आगतंपतिमालोक्यसीतासस्मितभाषिणी ॥ ५३ ॥ स्वर्णपात्रस्थसलिलैःपादौप्रक्षाल्यभक्ति
तः ॥ पप्रच्छपतिमालोक्यदेवकिंसेनयाविना ॥ ५४ ॥ आगतोऽसिगतःकुत्रश्वेतच्छत्रंचतेकुतः ॥ वादित्राणिनवाद्यंतेकिरीटादिविवर्जि
तः ॥ ५५ ॥ सामंतराजसहितःसंभ्रमान्नागतोऽसिकिम् ॥ इतिस्मसीतयापृष्टोरामःसस्मितमब्रवीत् ॥ ५६ ॥ राज्ञामेदंडकारण्येराज्यंद
त्तंशुभेऽखिलम् ॥ अतस्तत्पालनार्थायशीघ्रंयास्यामिभामिनि ॥ ५७ ॥ अद्यैवयास्यामिवनंत्वंतुश्वश्रूसमीपगा ॥ शुश्रूषांकुरुमेमातुर्न
मिथ्यावादिनोवयम् ॥ ५८ ॥ इतिब्रुवंतंश्रीरामंसीताभीताऽब्रवीद्वचः ॥ किमर्थंवनराज्यंतेपित्रादत्तंमहात्मना ॥ ५९ ॥ तामाहरामःकै
केय्यैराजाप्रीतोवरंददौ ॥ भरतायददौराज्यंवनवासंममानघे ॥ ६० ॥ चतुर्दशसमास्तत्रवासोमेकिलयाचितः ॥ तयादेव्याददौराजास
त्यवादीदयापरः ॥ ६१ ॥ अतःशीघ्रंगमिष्यामिमाविघ्नंकुरुभामिनि ॥ श्रुत्वातद्रामवचनंजानकीप्रीतिसंयुता ॥ ६२ ॥ अहमग्रेगमि
ष्यामिवनंपश्चात्त्वमेष्यसि ॥ इत्याहमांविनागंतुंतवराघवनोचितम् ॥६३॥ तामाहराघवःप्रीतःस्वप्रियांप्रियवादिनीम् ॥ कथंवनंत्वांनेष्ये
ऽहंबहुव्याघ्रमृगाकुलम् ॥ ६४ ॥

भरतायेति ॥ ६० ॥ तयादेव्या याचितोऽतोमयिदयापरोऽपिराजासत्यवादीअवश्यंत्वदुक्तंदास्यामीतिप्रतिज्ञावाक्यस्यसत्यत्वंकर्तुंमे वनवासं ददौ ॥
॥ ६१ ॥ ६२ ॥ नोचितंशुद्धस्यतवमयाविनाकार्याक्षमत्वात् । विवाहकालेनातिचरिष्यामीतिप्रतिज्ञातत्वाच्च ॥ ६३ ॥ वननयनाभावेहेतुगर्भं
विशेषणंबहुव्याघ्रेत्यादि ॥ ६४ ॥

॥ ६५ ॥ ६६ ॥ फलादिकमपिसमयेदुर्लभमित्याह । कालेइत्यादि । नदृश्यतेवनेषुतृणाद्याच्छादनाज्जनसंचराभावाच्च ॥ यत्रापिदृश्यतेतत्रापिशर्करायान्वितः ॥ ६७ ॥ वासस्थानमप्यतिदुःखजनकमित्याह । गुहेत्यादि । सम्यग्बाध्यंतेरिपवोयत्रेतिसंबाधंदुर्गवासस्थानंगुहागह्वररूपम् । तद्यद्यपिरिपुपीडारहितंतथाऽपिझिल्लीदंशादियुतत्वात्तत्रस्थातुमशक्यमितिभावः ॥ ६८ ॥ तत्रापिपद्भ्यांगमनमतिदुःखमित्याह । पादेति ॥ ६९ ॥ ७० ॥ स्फुरद्वक्त्राअंतर्गतक्रोधवशात्तत्स्फुरणम् । तदेवाह । किंचित्कोपेति । अत्यागेहेतवोधर्मपत्नीमित्यादयः ॥ ७१ ॥ पतिव्रतात्वमेवोपपादयति । त्वदनन्यामिति । त्वत्तोऽन्यःपुरुषोनविद्यते

राक्षसाघोररूपाश्चसंतिमानुषभोजिनः ॥ सिंहव्याघ्रवराहाश्चसंचरंतिसमंततः ॥ ६५ ॥ कद्वम्लफलमूलानिभोजनार्थंसुमध्यमे ॥ अपूपानिव्यंजनानिविद्यंतेनकदाचन ॥ ६६ ॥ कालेकालेफलंवाऽपिविद्यतेकुत्रसुंदरि ॥ मार्गोनदृश्यतेक्वापिशर्कराकंटकान्वितः ॥ ६७ ॥ गुहागह्वरसंबाधंझिल्लीदंशादिभिर्युतम् ॥ एवंबहुविधंदोषंवनंदंडकसंज्ञितम् ॥ ६८ ॥ पादचारेणगंतव्यंशीतवातातपादिमत् ॥ राक्षसादीन्वनेदृष्ट्वाजीवितंहास्यसेऽचिरात् ॥ ६९ ॥ तस्माद्भद्रेगृहेतिष्ठशीघ्रंद्रक्ष्यासिमांपुनः ॥ रामस्यवचनंश्रुत्वासीतादुःखसमन्विता ॥ ७० ॥ प्रत्युवाचस्फुरद्वक्त्राकिंचित्कोपसमन्विता ॥ कथंमामिच्छसेत्युक्तुंधर्मपत्नींपतिव्रताम् ॥ ७१ ॥ त्वदनन्यामदोषांमांधर्मज्ञोऽसिदयापरः ॥ त्वत्समीपेस्थितांरामकोवामांधर्षयेद्वने ॥ ७२ ॥ फलमूलादिकंयद्यत्तवभुक्तावशेषितम् ॥ तदेवामृततुल्यंमेतेनतुष्टाऽऽरमाम्यहम्[1] ॥ ७३ ॥ त्वयासहचरंत्यामेकुशाःकाशाश्चकंटकाः ॥ पुष्पास्तरणतुल्यामेभविष्यंतिनसंशयः ॥ ७४ ॥

यस्यास्ताम् । यद्वा । त्वत्तोभेदरहिताशक्तिशक्तिमतोरभेदात् । अतएवादोषाम् । यापिरक्षोधर्षणादिविभीषिकासाऽपिमिथ्येत्याह । त्वत्समीपइति । यन्नामस्मरणेनरक्षांसिपलायंतेतस्यतवेत्यर्थः ॥ ७२ ॥ यदपिफलादीनांकटुत्वाद्युक्तंतत्परिहरति । फलेति । त्वद्भुक्तावशिष्टंविघसत्वादमृततुल्यमित्यर्थः । रेमामीत्यार्षपरस्मैपदम् ॥ ७३ ॥ चरंत्याःगच्छंत्याः अत्रत्वत्संगएवहेतुरितिभावः ॥ ७४ ॥

---

१ आरमामीति कृत्वा । व्याङ्परिभ्यो रमः । इति परस्मैपदं भविष्यतीति पुनष्टीकाकर्तुः स्थूललक्ष्यता प्रतिभासते ।

कार्यसाधिनीरक्षोवधादिकार्यसाधिकेतिव्यंग्यम् । वनगमनंचमेऽवश्यंभावीतिइतिहासकथनेनद्रढयति । बाल्यइति ॥ ७५ ॥७६॥ ७७ ॥ त्वत्सहायिनीसृष्टया दिसर्वकार्येष्वहमेवतेसहायेतिव्यंग्यम् ॥ ७८ ॥ ७९ ॥ गच्छगमनंकुरु । तत्रवनेतपस्विवेषेणहारादीनांकचित्स्थापनमावश्यकम् । तत्रसर्वस्थलेषुअपायसंभाव नासत्त्वान्निरपायस्थानंब्राह्मणेषुदानमित्याह । अरुंधत्याइति । वसिष्ठपत्न्यै । यत्रस्थापितमेतद्देहापायेऽपिलभ्यमितिभावः ॥ ८० ॥ वयमपितथैवकुर्मइत्याह



अहंत्वांक्लेशयेनैवभवेयंकार्यसाधिनी ॥ बाल्येमांवीक्ष्यकश्चिद्वैज्योतिःशास्त्रविशारदः ॥ ७५ ॥ प्राहतेविपिनेवासःपत्यासहभविष्यति ॥ सत्यवादीद्विजोभूयाद्गमिष्यामित्वयासह ॥ ७६ ॥ अन्यत्किंचित्प्रवक्ष्यामिश्रुत्वामांनयकाननम् ॥ रामायणानिबहुशःश्रुतानिबहुभि र्द्विजैः ॥ ७७ ॥ सीतांविनावनंरामोगतःकिंकुत्रचिद्वद ॥ अतस्त्वयागमिष्यामिसर्वथात्वत्सहायिनी ॥ ७८ ॥ यदिगच्छसिमांत्यक्त्वा प्राणांस्त्यक्ष्यामितेऽग्रतः ॥ इतितांनिश्चयंज्ञात्वासीतायारघुनंदनः ॥ ७९ ॥ अब्रवीद्देविगच्छत्वंवनंशीघ्रंमयासह ॥ अरुंधत्यैप्रयच्छा शुहारानाभरणानिच ॥ ८० ॥ ब्राह्मणेभ्योधनंसर्वंदत्त्वागच्छामहेवनम् ॥ इत्युक्त्वालक्ष्मणेनाशुद्विजानाहूयभक्तितः ॥ ८१ ॥ ददौगवां वृंदशतंधनानिवस्त्राणिदिव्यानिविभूषणानि ॥ कुटुंबवद्भ्यःश्रुतशीलवद्भ्योमुदाद्विजेभ्योरघुवंशकेतुः ॥ ८२ ॥ अरुंधत्यैददौसीतामु ख्यान्याभरणानिच ॥ रामोमातुःसेवकेभ्योददौधनमनेकधा ॥८३॥ स्वकांतःपुरवासिभ्यःसेवकेभ्यस्तथैवच ॥ पौरजानपदेभ्यश्चब्राह्मणे भ्यःसहस्रशः ॥ ८४ ॥ लक्ष्मणोऽपिसुमित्रांतुकौसल्यायैसमर्पयत् ॥ धनुष्पाणिःसमागत्यरामस्याग्रेव्यवस्थितः ॥ ८५ ॥ रामःसीताल क्ष्मणश्चजग्मुःसर्वेनृपालयम् ॥ ८६ ॥



ब्राह्मणेभ्यइति ॥ ८१ ॥ श्रुतंवेदाध्ययनम् । कुटुंबवत्त्वमिदंदानपात्रतासंपादकंविशेषणम् ॥ ८२ ॥ मातृसेवकेभ्योदानंमातृस्नेहेन ॥ ८३ ॥ ८४ ॥ समर्प यत् । ततइत्यध्याहारः । समागत्यरामस्यअग्रेस्थितइत्यन्वयः ॥ ८५ ॥ ततः । रामइति ॥ ८६ ॥

नृपपथेराजमार्गेकुतूहलेनपश्यंतिवितान्कुतूहलदृशःपौरान्सानंदंपश्यन् वेनतेषांदुःखनिरासः । पितुस्तत्कैकेय्याधिष्ठितमालयंगृहंप्राप ॥ ८७ ॥ ॥ इति श्रीमदध्यात्मरामायणेअयोध्याकांडेसेतौचतुर्थःसर्गः ॥ ४ ॥ ॥ सजानकिंजानक्यासहितंलक्ष्मणेनसममायांतमित्यन्वयः । तादृशंदृष्ट्वापरस्परंवीक्ष्योचुः परस्परमित्येव ॥ १ ॥ सत्यसंधंसत्यप्रतिज्ञम् ॥ २ ॥ अत्यजत्वनवासमाज्ञापितवान् सत्यव्रतासत्यवत्ता । वर्णलोपआर्षः । कैकेयीवापूर्वमत्यंतंरामेप्रीतिमतीकथंदुष्टा । जातेतिशेषः । यद्भरतस्यराज्यंरामस्यवनवासं च वृतवतीतिभावः ॥ ३ ॥ याचतांवालोभाद्भरतस्यराज्यंराममुच्यमानगुणंकथंकुतोहे

श्रीरामःसहसीतयानृपपथेगच्छञ्छनैःसानुजःपौराञ्जानपदान्कुतूहलदृशःसानंदमुद्वीक्षयन् ॥ श्यामःकामसहस्रसुंदरवपुःकांत्यादिशोभासयन्पादन्यासपवित्रिताऽखिलजगत्प्रापालयंतत्पितुः ॥८७॥ इति श्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेअयोध्याकांडेचतुर्थःसर्गः॥ ॥ ४ ॥ श्रीमहादेवउवाच ॥ आयांतंनगराद्दृष्ट्वामार्गेरामंसजानकिम् ॥ लक्ष्मणेनसमंवीक्ष्यऊचुःसर्वेपरस्परम् ॥ १ ॥ कैकेय्यावरदानादिश्रुत्वादुःखसमावृताः ॥ बतराजादशरथःसत्यसंधंप्रियंसुतम् ॥ २ ॥ स्त्रीहेतोरत्यजत्कामीतस्यसत्यव्रताकुतः ॥ कैकेयीवाकथंदुष्टारामंसत्यंप्रियंकरम् ॥३॥ विवासयामासकथंक्रूरकर्माऽतिमूढधीः ॥ हेजनानात्रवस्तव्यंगच्छामोऽद्यैवकाननम् ॥ ४ ॥ यत्ररामःसभार्यश्चसानुजोगंतुमिच्छति॥पश्यंतुजानकींसर्वेपादचारेणगच्छतीम् ॥ ५ ॥ पुंभिःकदाचिद्दृष्टावाजानकीलोकसुंदरी ॥ साऽपिपादेनगच्छंतीजनसंघेष्वनावृता ॥ ६ ॥ रामोऽपिपादचारेणगजाश्वादिविवर्जितः ॥ गच्छतिद्रक्ष्यथविभुंसर्वलोकैकसुंदरम् ॥ ७ ॥ राक्षसीकैकयीनाम्नीजातासर्वविनाशिनी ॥ रामस्यापिभवेद्दुःखंसीतायाःपादयानतः ॥८॥ बलवान्विधिरेवात्रपुंप्रयत्नोहिदुर्बलः ॥ इतिदुःखाकुलेवृंदेसाधूनांमुनिपुंगवः ॥ ९ ॥

तोर्विवासयामास अत्रहेतुंनपश्यामः । अतोनिष्प्रयोजनदुष्टत्ववज्जनवत्यस्मिन्देशेनवस्तव्यमित्याहुः । हेजनाइति ॥ ४ ॥ यत्रकानने पश्यंत्विति । तेनसर्वथादैवप्राबल्यंजानंत्वितिव्यंग्यम् ॥ ५ ॥ तदेवोपपादयति । पुंभिरिति । गच्छंतीत्यस्यदृश्यतामितिशेषः ॥ ६ ॥ द्रक्ष्यथ अस्याप्युक्तव्यंग्येएवतात्पर्यम् ॥७॥ राक्षसीति । यत्कृत्यारामस्यस्ववनवासादिकृतदुःखाभावेऽपिसीतायाःपादगमनकृतंदुःखंतस्यापिभवेदित्यन्वयः ॥ ८ ॥ उपसंहरति । बलवानिति । पर्यायोक्तमत्रालंकारः । साधूनांवृंदेसमूहे ॥ ९ ॥

तत्त्वतःतेषांतत्त्वंवच्मीत्यर्थः ॥ १० ॥ परोजडेभ्यः विष्णुर्व्यापकःवैकुंठनिलयोवाआदिमन्नारंजीवसमूहस्तद्रूपोहिरण्यगर्भस्तस्याप्ययनःपरायणःवेदलाभद्वारा सृष्ट्यादिसामर्थ्यदः योगमायायोगेनस्वसंबंधेनापरिच्छिन्नमपिमातिपरिच्छिनत्तिसा ॥ ११ ॥ एषमायागुणैरिति । एतेनमायिकएवायमाकारोनतुपांचभौतिकइत्युक्तम् ॥ १२ ॥ मायागुणैस्तत्तदाकारवत्त्वमेवाविवृणोति । एषएवेति । विश्वभावनोविश्वस्रष्टा ॥ १३ ॥ १४ ॥ लयस्यांतंलयस्यदैनंदिनप्रलयस्यआंतंसमाप्ति

अब्रवीद्रामदेवोऽथसाधूनांसंघमध्यगः ॥ मानुशोचथरामंवासीतांवावच्मितत्त्वतः ॥१०॥ एषरामःपरोविष्णुरादिनारायणःस्मृतः॥एषासाजानकीलक्ष्मीर्योगमायेतिविश्रुता ॥ ११ ॥ असौशेषस्तमन्वेतिलक्ष्मणाख्यश्वसांप्रतम् ॥ एषमायागुणैर्युक्तस्तत्तदाकारवानिव ॥ ॥ १२ ॥ एषएवरजोयुक्तोब्रह्माऽभूद्विश्वभावनः॥ सत्त्वाविष्टस्तथाविष्णुस्त्रिजगत्प्रतिपालकः ॥ १३ ॥ एषरुद्रस्तामसोंऽतेजगत्प्रलयकारणम् ॥ एषमत्स्यःपुराभूत्वाभक्तंवैवस्वतंमनुम् ॥ १४ ॥ नाव्यारोप्यलयस्यांतंपालयामासराघवः ॥ समुद्रमथनेपूर्वंमंदरेसुतलंगते ॥ १५ ॥ अधारयत्स्वपृष्ठेऽद्रिंकूर्मरूपीरघूत्तमः ॥ महीरसातलंयाताप्रलयेसूकरोऽभवत् ॥ १६ ॥ तोलयामासदंष्ट्राग्रेतांक्षोणींरघुनंदनः ॥ नारसिंहंवपुःकृत्वाप्रह्लादवरदःपुरा ॥ १७ ॥ त्रिलोककंटकंरक्षःपाटयामासतन्नखैः ॥ पुत्रराज्यंहृतंदृष्ट्वाह्यदित्यायाचितःपुरा ॥१८॥वामनत्वमुपागम्ययाञ्चयाचाहरत्पुनः ॥ दुष्टक्षत्रियभूभारनिवृत्त्यैभार्गवोऽभवत् ॥ १९ ॥ सएवजगतांनाथइदानींरामतांगतः ॥ रावणादीनिरक्षांसिकोटिशोनिहनिष्यति ॥२०॥ मानुषेणैवमरणंतस्यदृष्टंदुरात्मनः ॥ राज्ञादशरथेनापितपसाराधितोहरिः ॥ २१ ॥ पुत्रत्वाकांक्षयाविष्णोस्तदापुत्रोऽभवद्धरिः ॥ सएवविष्णुःश्रीरामोरावणादिवधायहि ॥२२॥ गंताऽद्यैववनंरामोलक्ष्मणेनसहायवान् ॥ एषासीताहरेर्मायासृष्टिस्थित्यंतकारिणी ॥ २३ ॥

पर्यंतम् ॥ १५ ॥ अद्रिंमंदरं यातायदेत्यादि प्रलयेसूकरस्तदेत्यादि ॥ १६ ॥ १७ ॥ तद्रक्षःप्रह्लादपीडकंरक्षः पुत्रराज्यमिंद्रराज्यंहृतंबलिना ॥ १८ ॥ याच्ञयाबलेःसकाशाद्भिक्षाव्याजेनाहरत्परावर्तितवान् ॥ १९ ॥ २० ॥ तस्यरावणस्य नन्वेवंदशरथगृहेएवावतारकरणेकिंबीजंतत्राह । राज्ञेति ॥ २१ ॥ पुत्रत्वाकांक्षयाविष्णोरिति । विष्णुर्मेपुत्रोभवत्वितीच्छयेत्यर्थः ॥ २२ ॥ २३ ॥

नारदःप्राह भूभारहरणोद्देश्यकंब्रह्मणःसंदेशवचइत्यर्थः ॥ २४ ॥ २५ ॥ रामोदुःखितोभविष्यतीत्यपिवृथाशंकैवेत्याह । रामेति । मृत्युभयाभावेइतरभयाभावः कैमुतिकन्यायसिद्धः । तन्नामजपकर्तुस्तत्त्वज्ञानोदयादितिभावः ॥ २६ ॥ तस्यदुःखशंकाकेत्यन्वयः । कलौतुनाम्नैवनामाभिलापेनैवमुक्तिस्तज्जनकंतत्त्वज्ञानं नान्येनयोगादिनेत्यर्थः ॥ २७ ॥ ईदृशस्यकिमर्थोदेहपरिग्रहस्तत्राह । मायेति । विडंबयतिस्वीयाचारेणसदाचारंलोकान्शिक्षयतिमातापितरौपुत्रानिव । फलां तरमप्याह । भक्तानामिति ॥ २८ ॥ राज्ञोऽभीष्टंविष्णोःस्वपुत्रत्वम् ॥ २९ ॥ हृत्संशयग्रंथिंहृदिविद्यमानंरामेमनुष्यत्वादिविषयंसंशयग्रंथिम् ॥ ३० ॥

राजावाकैकयीवाऽपिनात्रकारणमण्वपि॥ पूर्वेद्युर्नारदःप्राहभूभारहरणायच॥२४॥रामोऽप्याहस्वयंसाक्षाच्छ्वोगमिष्याम्यहंवनम्॥ अतो रामंसमुद्दिश्यचिंतांत्यजतबालिशाः ॥२५॥ रामरामेतियेनित्यंजपंतिमनुजाभुवि ॥ तेषांमृत्युभयादीनिनभवंतिकदाचन ॥२६॥ कापुन स्तस्यरामस्यदुःखशंकामहात्मनः ॥ रामनाम्नैवमुक्तिःस्यात्कलौनान्येनकेनचित् ॥ २७ ॥ मायामानुषरूपेणविडंबयतिलोककृत् ॥ भक्तानांभजनार्थायरावणस्यवधायच ॥ २८ ॥ राज्ञश्चाभीष्टसिद्ध्यर्थंमानुषंवपुराश्रितः ॥ इत्युक्त्वाविररामाथवामदेवोमहामुनिः ॥ ॥ २९ ॥ श्रुत्वातेऽपिद्विजाःसर्वेरामंज्ञात्वाहरिंविभुम् ॥ जहुर्हृत्संशयग्रंथिंराममेवान्वचिंतयन् ॥ ३० ॥ यइदंचिंतयेन्नित्यंरहस्यंरामसी तयोः ॥ तस्यरामेदृढाभक्तिर्भवेद्विज्ञानपूर्विका ॥ ३१ ॥ रहस्यंगोपनीयंवोयूयंवैराघवप्रियाः ॥ इत्युक्त्वाप्रययौविप्रस्तेऽपिरामंपरं विदुः ॥ ३२ ॥ ततोरामःसमाविश्यपितृगेहमवारितः ॥ सानुजःसीतयागत्वाकैकेयीमिदमब्रवीत् ॥ ३३ ॥ आगताःस्मोवयंमातस्त्र यस्तेसंमतंवनम् ॥ गंतुंकृतधियःशीघ्रमाज्ञापयतुनःपिता ॥ ३४ ॥ इत्युक्तासहसोत्थायचीराणिप्रददौस्वयम् ॥ रामायलक्ष्मणायाथसी तायैचपृथक्पृथक् ॥ ३५ ॥

॥ ३१ ॥ गोपनीयंपृथग्जनेष्वितिशेषः ॥ ३२ ॥ अवारितःपुत्रत्वात् । द्वारपालैरितिशेषः । गत्वाकैकेयीसमीपमितिशेषः ॥ ३३ ॥ तेसंमतंवनंदंडकारण्यं गंतुंकृतधियोनिश्चिताइत्यन्वयः । आज्ञापयतुपितेत्यनेनतदाज्ञांविनागमनेतस्यदुःखादौअहंदोषभाक्स्यामितिसूचितम् ॥ ३४ ॥ इत्युक्तारामेणकैकेयीसहसाझ टितिउत्थायरामायेत्यन्वयः । चीराणिवन्यपरिधेयानिवल्कलादीनि । जीर्णवासांसिवा ॥ ३५ ॥

तत्चीरपरिधानप्रकारस्वरूपम् ॥ ३६ ॥ हस्तेगृहीत्वाचीरमितिशेषः । तच्चीरंकैकेयीदत्तंचीरम् ॥ ३७ ॥ भर्त्सयन्कैकेयीमितिशेषः ॥ ३८ ॥ किंप्रयच्छसि । चीरमितिशेषः ॥ ३९ ॥ यदीति । त्वद्वराविषयभूताऽपियदिस्वेच्छयासमन्वेतिसम्यग्ग्लानिरहितमनुपश्चाद्गच्छतीत्यर्थः ॥ ४० ॥ वनदुःखंवनवासजंदुःखम् ॥ ४१ ॥ वनचरामुनयःप्रियायेषांते ॥ ४२ ॥ सीताशीघ्रमारुरोहेत्यनेनतस्याःकार्यसाधकउत्साहःसूचितः ॥ ४३ ॥ ४४ ॥ ४५ ॥ रथमचोदयत् ।

रामस्तुवस्त्राण्युत्सृज्यवन्यचीराणिपर्यधात् ॥ लक्ष्मणोऽपितथाचक्रेसीतातन्नविजानती ॥ ३६ ॥ हस्तेगृहीत्वारामस्यलज्जयामुखमैक्षत रामोगृहीत्वातच्चीरमंशुकेपर्यवेष्टयत् ॥ ३७ ॥ तद्दृष्ट्वारुरुदुःसर्वेराजदाराःसमंततः ॥ वसिष्ठस्तुतदाकर्ण्यरुदितंभर्त्सयन्रुषा ॥ ३८ ॥ कैकेयींप्राहदुर्वृत्तेरामएवत्वयावृतः ॥ वनवासायदुष्टेत्वंसीतायैकिंप्रयच्छसि ॥ ३९ ॥ यदिरामंसमन्वेतिसीताभक्त्यापतिव्रता ॥ दिव्यांबरधरानित्यंसर्वाभरणभूषिता ॥ ४० ॥ रमयत्वनिशंरामंवनदुःखनिवारिणी ॥ राजादशरथोऽप्याहसुमंत्रंरथमानय ॥ ४१ ॥ रथमारुह्य गच्छंतुवनंवनचरप्रियाः ॥ इत्युक्त्वाराममालोक्यसीतांचैवसलक्ष्मणम् ॥ ४२ ॥ दुःखान्निपतितोभूमौरुरोदाश्रुपरिप्लुतः ॥ आरुरोहरथंसीताशीघ्रंरामस्यपश्यतः ॥ ४३ ॥ रामःप्रदक्षिणंकृत्वापितरंरथमारुहत् ॥ लक्ष्मणःखड्गयुगलंधनुस्तूणीयुगंतथा ॥ ४४ ॥ गृहीत्वारथमारुह्यनोदयामाससारथिम् ॥ तिष्ठतिष्ठसुमंत्रेतिराजादशरथोऽब्रवीत् ॥ ४५ ॥ गच्छगच्छेतिरामेणनोदितोऽचोदयद्रथम् ॥ रामेदूरंगते राजामूर्च्छितःप्रापतद्भुवि ॥ ४६ ॥ पौरास्तुबालवृद्धाश्चवृद्धाब्राह्मणसत्तमाः ॥ तिष्ठतिष्ठेतिरामेतिक्रोशंतोरथमन्वयुः ॥ ४७ ॥ राजारुदित्वासुचिरंमांनयंतुगृहंप्रति ॥ कौसल्यायाराममातुरित्याहपरिचारकान् ॥ ४८ ॥ किंचित्कालंभवेत्तत्रजीवनंदुःखितस्यमे ॥ अतऊर्ध्वंनजीवामिचिरंरामंविनाकृतः ॥ ४९ ॥

राज्ञारामाधीनकृतत्वाद्राजाज्ञापेक्षयातदाज्ञैवप्रबलेतिमत्वेतिव्यंग्यम् । दूरंगतेदृष्टिपथमतिक्रांते ॥ ४६ ॥ वृद्धाइत्यस्यज्ञानवृद्धाइत्यर्थः ॥ ४७ ॥ राममातुरित्यादरसूचकंविशेषणम् ॥ ४८ ॥ दुःखितस्यमेयदिकंचित्कालंजीवनंभवेत्तदातत्ररामम्मातृगृहेएवान्यत्रतुक्षणमात्रमपितन्नसंभाव्यते । राममातृगृहेऽपिचिरंनैवतदित्याह । अतइति । विनाकृतःदैवेनेतिशेषः । अनेनदैवसंपादितंमरणंदुर्वारमितिध्वानितम् ॥ ४९ ॥

तूष्णीमेवस्वकृतापराधेनलज्जयेतिभावः ॥ ५० ॥ ५१ ॥ सीतयासहास्वपदित्यन्वयः । पालयामासजाग्रद्रामंररक्षेत्यर्थः ॥ ५२ ॥ रामंपुरंनेतुंयदिशक्ता
स्तदापरावृत्यनेष्यामोनोचेद्वनमेवगमिष्यामइतिनिश्चयमित्यर्थः ॥ ५३ ॥ क्लेशभागिनोवनगमनादितिभावः ॥ ५४ ॥ ५५ ॥ इत्याज्ञप्तः सुमंत्रोरथंवाहैर
योजयत् ॥ ५६ ॥ अयोध्याभिमुखमिति । तेषांप्रतारणायेदम् ॥ ५७ ॥ तदेवाह । रथनेमीति ॥ ५८ ॥ ५९ ॥ शृंगवेरंशृंगऋष्याश्रमस्तदविदूरत

ततोगृहंप्रविश्यैवकौसल्यायाःपपातह ॥ मूर्च्छितश्चाचिराद्बुद्ध्वातूष्णीमेवावतस्थिवान् ॥ ५० ॥ रामस्तुतमसातीरंगत्वातत्रावसत्सुखी ॥
जलंप्राश्यनिराहारोवृक्षमूलेऽस्वपद्विभुः ॥ ५१ ॥ सीतयासहधर्मात्माधनुष्पाणिस्तुलक्ष्मणः ॥ पालयामासधर्मज्ञःसुमंत्रेणसमन्वितः॥
॥ ५२ ॥ पौराःसर्वेसमागत्यस्थितास्तस्याविदूरतः ॥ शक्तारामंपुरंनेतुंनोचेद्गच्छामहेवनम् ॥ ५३ ॥ इतिनिश्चयमाज्ञायतेषांरामोऽति
विस्मितः ॥ नाहंगच्छामिनगरमेतैर्वैक्लेशभागिनः ॥ ५४ ॥ भविष्यंतीतिनिश्चित्यसुमंत्रमिदमब्रवीत् ॥ इदानीमेवगच्छामःसुमंत्ररथ
मानय ॥ ५५ ॥ इत्याज्ञप्तःसुमंत्रोऽपिरथंवाहैरयोजयत् ॥ आरुह्यरामःसीताचलक्ष्मणोऽपिययुर्द्रुतम् ॥ ५६ ॥ अयोध्याभिमुखंगत्वा
किंचिद्दूरंततोययुः ॥ तेऽपिराममदृष्ट्वैवप्रातरुत्थायदुःखिताः ॥ ५७ ॥ रथनेमिगतंमार्गंपश्यंतस्तेपुरंययुः ॥ हृदिरामंससीतंतेध्यायंत
स्तस्थुरन्वहम् ॥ ५८ ॥ सुमंत्रोऽपिरथंशीघ्रंनोदयामाससादरम् ॥ स्फीताञ्जनपदान्पश्यन्रामःसीतासमन्वितः ॥ ५९ ॥ गंगातीरंस
मागच्छच्छृंगवेराविदूरतः ॥ गंगांदृष्ट्वानमस्कृत्यस्नात्वासानंदमानसः ॥ ६० ॥ शिंशपावृक्षमूलेसनिषसादरघूत्तमः ॥ ततोगुहोजनैः
श्रुत्वारामागममहोत्सवम् ॥ ६१ ॥ सखायंस्वामिनंद्रष्टुंहर्षात्तूर्णंसमापतत् ॥ फलानिमधुपुष्पादिगृहीत्वाभक्तिसंयुतः ॥ ६२ ॥ राम
स्याग्रेविनिक्षिप्यदंडवत्प्रापतद्भुवि ॥ गुहमुत्थाप्यतंतूर्णंराघवःपरिषस्वजे ॥ ६३ ॥ संपृष्टकुशलोरामंगुहःप्रांजलिरब्रवीत् ॥ धन्योऽ
हमद्यमेजन्मनैषादंलोकपावन ॥ ६४ ॥

स्तत्पूर्वभागे ॥ ६० ॥ जनैःजनमुखैः ॥ ६१ ॥ अयंसखासमानख्यातिस्तत्समानज्ञानः । अनेनगुहस्यधर्मव्याधादिवत्तत्त्वज्ञत्वंसूचितम् । अथापि सत्यपि
भेदापगमेनाथतवाहंनमामकीनस्त्वमितिन्यायात्स्वामिनंद्रष्टुमिति ॥ ६२ ॥ ६३ ॥ नैषादमपिमेजन्मधन्यम् । त्वदंगस्पर्शादितिभावः ॥ ६४ ॥

तदेवाह । बभूवेति । एतत्तेकिंकरस्यनैषादराज्यंयत्त्वदधीनमतोऽत्रवसन्अस्मान्पालय । अत्रनतेपितुःस्वाम्यमित्यत्रवासेदोषाभावइतिभावः ॥ ६५ ॥ ६६ ॥
दासइत्यनेनभोज्याहारतासूचिता ॥६७॥ नवेक्ष्यामिनप्रवेक्ष्यामिइतिमेप्रतिज्ञेतिशेषः ॥ ६८ ॥ एवत्तेसर्वराज्यंममैवत्वंचमेसखैवतत्त्वज्ञत्वात् । तथाऽपिप्रतिज्ञा
रक्षणायतेग्रामंनप्रविशामीतिभावः ॥ ६९ ॥ समानाय्यगुहेनेतिशेषः । अथआनयनानंतरंवार्तानन्तरंवा ॥ ७० ॥ हिःपादपूरणे । लक्ष्मणेनयदास्तृतंतत्रोवासे

बभूवपरमानंदःस्पृष्ट्वातेंऽगंरघूत्तम ॥ नैषादराज्यमेतत्तेकिंकरस्यरघूत्तम ॥ ६५ ॥ त्वदधीनंवसन्नत्रपालयास्मान्रघूद्वह ॥ आगच्छयामो
नगरंपावनंकुरुमेगृहम् ॥ ६६ ॥ गृहाणफलमूलानित्वदर्थंसंचितानिमे ॥ अनुगृह्णीष्वभगवन्दासस्तेऽहंसुरोत्तम ॥ ६७ ॥ रामस्तमा
हसुप्रीतोवचनंशृणुमेसखे ॥ नवेक्ष्यामिगृहंग्रामंनववर्षाणिपंचच ॥ ६८ ॥ दत्तमन्येननोभुंजेफलमूलादिकिंचन ॥ राज्यंममैतत्तेसर्वंत्वं
सखामेऽतिवल्लभः ॥ ६९ ॥ वटक्षीरंसमानाय्यजटामुकुटमादरात् ॥ बबंधलक्ष्मणेनाथसहितोरघुनंदनः ॥ ७० ॥ जलमात्रंतुसंप्राश्य
सीतयासहराघवः ॥ आस्तृतंकुशपर्णाद्यैःशयनंलक्ष्मणेनहि ॥ ७१ ॥ उवासतत्रनगरप्रासादाग्रेयथापुरा ॥ सुष्वापतत्रवैदेह्यापर्यंकइव
संस्कृते ॥ ७२ ॥ ततोविदूरेपरिगृह्यचापंसबाणतूणीरधनुःसलक्ष्मणः ॥ ररक्षरामंपरितोविपश्यन्गुहेनसार्धंसशरासनेन ॥ ७३ ॥
इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेअयोध्याकांडेपंचमःसर्गः ॥ ५ ॥ ॥ सुप्तंरामंसमालोक्यगुहःसोऽश्रुपरिप्लुतः ॥ लक्ष्म
णंप्राहविनयाद्भ्रातःपश्यसिराघवम् ॥ १ ॥ शयानंकुशपत्रौघसंस्तरेसीतयासह ॥ यःशेतेस्वर्णपर्यंकेस्वास्तीर्णेभवनोत्तमे ॥ २ ॥ कै
केयीरामदुःखस्यकारणंविधिनाकृता ॥ मंथराबुद्धिमास्थायकैकेयीपापमाचरत् ॥ ३ ॥ तच्छ्रुत्वालक्ष्मणःप्राहसखेशृणुवचोमम ॥
कःकस्यहेतुर्दुःखस्यकश्चहेतुःसुखस्यवा ॥ ४ ॥

त्यन्वयः । स्थितइत्यर्थः ॥ ७१ ॥ ततोनिद्रासमयेसुष्वापेत्यर्थः ॥ ७२ ॥ परितोविपश्यन् दुष्टजंतूनितिशेषः ॥ ७३ ॥ ॥ इतिश्रीमत्सकलराज
विप० अध्यात्मरामायणांबुधिसेतौअयोध्याकांडेपंचमःसर्गः ॥ ५ ॥ ॥ षष्ठेगत्वाऽथवाल्मीकेराश्रमंतेनसंस्तुतः । मुनींद्रैःसहितस्तत्रावसत्सुखमितीर्यते ॥ १ ॥
सुप्तमिति ॥ १ ॥ कुशपत्रसमूहनिर्मितेसंस्तरेआस्तरणेइत्यर्थः । शोभनैरांकवादिभिरास्तीर्णे ॥ २ ॥ ३ ॥ कोहेतुः अन्योनकोऽपीत्यर्थः ॥ ४ ॥

कस्तर्हिहेतुस्तत्राह । स्वपूर्वेति ॥ ५ ॥ तदेवोपपादयति । सुखस्येति । स्वयमपितस्यनसंपादकइत्याह । अहमिति । अहंसुखादिजनकक्रियांकरोमीत्यपि
वृथाभिमानः । अस्वातंत्र्यादितिभावः । तदेवाह । स्वकर्मसूत्रेणग्रथितईश्वरेणेतिशेषः । यथासूत्रयुक्तांकाष्ठपुत्तलींसूत्रधारोनानाप्रकारसूत्रचालनेनानेक
विधक्रियावतींकरोतिएवंभगवान्कर्मरूपसूत्रचालनेनतथातथाकारयतीतिभावः ॥ ६ ॥ सुहृन्मित्रेसोपाधिनिरुपाधिभेदाद्भिन्ने एवमरिद्वेष्यौ एतेकर्मसुहृत्त्वा
दिप्रयोजकंकर्मस्वयमेवाचरन्येनसहृत्त्वादिभावोभवति एवंतत्रसुखदुःखादिविषयेऽपिविभाव्यते ज्ञायतइत्यर्थः ॥ ७ ॥ स्वकर्मवशगोनरःयद्यत्सुखंवादुःखं
वायथागतंयथाप्राप्तंभवतितत्तद्भुक्त्वास्वस्थमनाःरागद्वेषहीनोभवेत् ॥ ८ ॥ भोगागमेसुखभोगप्राप्तौ भोगविवर्जनेदुःखभोगाप्राप्तौ वांछामेवाभिनयति । आग

स्वपूर्वार्जितकर्मैवकारणंसुखदुःखयोः ॥ ५ ॥ सुखस्यदुःखस्यनकोऽपिदातापरोददातीतिकुबुद्धिरेषा ॥ अहंकरोमीतिवृथाऽभिमानः
स्वकर्मसूत्रग्रथितोहिलोकः ॥ ६ ॥ सुहृन्मित्रार्युदासीनद्वेष्यमध्यस्थबांधवाः ॥ स्वयमेवाचरन्कर्मतथातत्रविभाव्यते ॥ ७ ॥ सुखंवायदि
वादुःखंस्वकर्मवशगोनरः ॥ यद्यद्यथागतंतत्तद्भुक्त्वास्वस्थमनाभवेत् ॥ ८ ॥ नमेभोगागमेवांछानमेभोगविवर्जने ॥ आगच्छत्वथमाग
च्छत्वभोगवशगोभवे ॥ ९ ॥ यस्मिन्देशेचकालेचयस्माद्वायेनकेनवा ॥ कृतंशुभाशुभंकर्मभोज्यंतत्तत्रनान्यथा ॥ १० ॥ अलंहर्षविषा
दाभ्यांशुभाशुभफलोदये ॥ विधात्राविहितंयद्यत्तदलंघ्यंसुरासुरैः ॥ ११ ॥ सर्वदासुखदुःखाभ्यांनरःप्रत्यवरुद्ध्यते ॥ शरीरंपुण्यपापाभ्या
मुत्पन्नंसुखदुःखवत् ॥ १२ ॥ सुखस्यानंतरंदुःखंदुःखस्यानंतरंसुखम् ॥ द्वयमेतद्धिजंतूनामलंघ्यंदिनरात्रिवत् ॥ १३ ॥

च्छत्विति सुखमितिशेषः । मागच्छतुदुःखमितिशेषः । अतएवाहंभोगवशगोनभवे । अइतिनिषेधार्थकमव्ययंपृथक्पदम् । यथैवाहंतथैवरामोऽपीतिनकिं
चिदस्माकमेतत्कृतंदुःखमितिभावः ॥ ९ ॥ यस्मादिति । प्राप्यफलमितिशेषः । तत्तत्रेत्युपलक्षणंतस्मात्तेनेत्यपिबोध्यम् ॥ १० ॥ यद्यद्विधात्राविहितंतदलंघ्यमि
तिनिश्चित्यतत्तत्फलोदयेहर्षविषादाभ्यामलम् । एवंचास्मत्कृतेत्वयाविषादोनकार्यइतिभावः ॥ ११ ॥ आवश्यकश्चशरीरिणांतत्संबंधइत्याह । सर्वदेति ।
पुण्यपापजत्वाच्छरीरस्यतदवच्छेदेनसुखदुःखवत्त्वावश्यकत्वादयंनरःसदाताभ्यांप्रत्यवरुद्ध्यतेसंबद्ध्यते ॥ १२ ॥ संबंधप्रकारमाह । सुखस्यानंतरमिति ।
एवंचपुनःसुखमपिभाव्यमेवेतिभावः ॥ १३ ॥

इदानींपदार्थमात्रस्यत्रिगुणात्मकत्वेनसुखस्यापिदुःखात्मकत्वाद्धेयत्वमित्याह । सुखमध्यइति । तेनोभयमपिहेयमेवेति । तदुक्तंपतंजलिना । सर्वमेवदुःखं विवेकिनः । इति ॥ १४ ॥ उपसंहरति । तस्मादिति । इष्टप्राप्तौनहृष्यंति । अनिष्टप्राप्तौनमुह्यंतीत्यन्वयः । तत्रहेतुः सर्वमायेतिभावनात् । नह्यैंद्रजालिकमायाकृतेष्टानिष्टप्राप्तौहर्षमोहौतद्वदितिभावः ॥ १५ ॥ सलिलंस्पृष्ट्वेतिप्रातःकालिकसकलक्रियोपलक्षणम् ॥ १६ ॥ मेअवतारणायेतिशेषः ॥ १७ ॥ नौकारुह्यतामित्यन्वयः ॥ १८ ॥ वाहयेइति । नौकामितिशेषः ॥ १९ ॥ २० ॥ वाहयामासअरित्रादिभिश्चालयामास । परंपारंप्रापयितुमित्यर्थः

सुखमध्येस्थितंदुःखंदुःखमध्येस्थितंसुखम् ॥ द्वयमन्योन्यसंयुक्तंप्रोच्यतेजलपंकवत् ॥ १४ ॥ तस्माद्धैर्येणविद्वांसइष्टानिष्टोपपत्तिषु ॥ नहृष्यंतिनमुह्यंतिसर्वंमायेतिभावनात् ॥ १५ ॥ गुहलक्ष्मणयोरेवंभाषतोर्विमलंनभः ॥ बभूवरामःसलिलंस्पृष्ट्वाप्रातःसमाहितः ॥ १६ ॥ उवाचशीघ्रंसुदृढांनावमानयमेसखे ॥ श्रुत्वारामस्यवचनंनिषादाधिपतिर्गुहः ॥ १७ ॥ स्वयमेवदृढांनावमानिनायसुलक्षणाम् ॥ स्वामिन्नारुह्यतांनौकासीतयालक्ष्मणेनच ॥ १८ ॥ वाहयेज्ज्ञातिभिःसार्धमहमेवसमाहितः ॥ तथेतिराघवःसीतामारोप्यशुभलक्षणाम् ॥ १९ ॥ गुहस्यहस्तावालंब्यस्वयंचारुरुहदच्युतः ॥ आयुधादीन्समारोप्यलक्ष्मणोऽप्यारुरोहच ॥ २० ॥ गुहस्तान्वाहयामासज्ज्ञातिभिःसहितःस्वयम् ॥ गंगामध्येगतागंगांप्रार्थयामासजानकी ॥ २१ ॥ देविगंगेनमस्तुभ्यंनिवृत्तावनवासतः ॥ रामेणसहिताऽहंत्वांलक्ष्मणेनचपूजये ॥ २२ ॥ सुरामांसोपहारैश्चनानाबलिभिराहृता ॥ इत्युक्त्वापरकूलंतौशनैरुत्तीर्यजग्मतुः ॥ २३ ॥ गुहोऽपिराघवंप्राहगमिष्यामित्वयासह ॥ अनुज्ञांदेहिराजेंद्रनोचेत्प्राणांस्त्यजाम्यहम् ॥ २४ ॥ श्रुत्वानैषादिवचनंश्रीरामस्तमथाब्रवीत् ॥ चतुर्दशसमाःस्थित्वादंडकेपुनरप्यहम् ॥ २५ ॥ आयास्याम्युदितंसत्यंनासत्यंरामभाषितम् ॥ इत्युक्त्वालिंग्यतंभक्तंसमाश्वास्यपुनःपुनः ॥ २६ ॥ निवर्तयामासगुहंसोऽपिकृच्छ्राद्ययौगृहम् ॥ तत्रमेध्यंमृगंहत्वापक्त्वाहुत्वाचतेत्रयः ॥ २७ ॥

गंगामध्येगताजानकीगंगांप्रार्थयामासेत्यन्वयः ॥ २१ ॥ २२ ॥ आहृतासतीपूजये अनेनश्रद्धासूचिता ॥ २३ ॥ अनुज्ञांस्वसहगमनविषयाम् ॥ २४ ॥ नैषादिर्गुहः ॥ २५ ॥ नासत्यमपितुसत्यमेवेत्यर्थः । तेनान्यथानसंभावनीयमितिभावः ॥ २६ ॥ कृच्छ्रात्कृच्छ्रमत्रातिदुःखम् । तत्रगंगापरकूले मेध्यंमृगंभक्ष्यंमृगंहत्वा हुत्वावैश्वदेवेदेवताभ्यः ॥ २७ ॥

॥ २८ ॥ बहिराश्रमद्वारि ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ रामसामीप्यम् । स्वार्थेष्यत्र् । रामसमीपमित्यर्थः ॥ ३३ ॥ मेपर्णशालामागच्छेत्यन्वयः ॥ ३४ ॥ आनीयप्रापय्य ॥ ३५ ॥ तपसःपारंपूर्णतांगतोऽस्मिप्राप्तोऽस्मि । प्रमादात्कुर्वतां कर्मप्रच्यवेताध्वरेषुयत् । तद्विष्णोःस्मरणादेवसंपूर्णस्यादितिश्रुतिः ॥ इतिस्मृतेर्यस्यनामस्मरणेनापिसर्वकर्मपूर्णतातस्यसाक्षाद्दर्शनेकिंवक्तव्यमित्यर्थः । यद्वा । तपसःपारंफलंसर्वतपःफलमेतत्वयत्तवदर्शन

भुक्त्वावृक्षतलेसुप्त्वासुखमासततांनिशाम् ॥ ततोरामस्तुवैदेह्यालक्ष्मणेनसमन्वितः ॥२८॥ भरद्वाजाश्रमपदंगत्वाबहिरुपस्थितः ॥ तत्रैकंबटुकंदृष्ट्वारामःप्राहचहेबटो ॥ २९ ॥ रामोदाशरथिःसीतालक्ष्मणाभ्यांसमन्वितः ॥ आस्तेबहिर्वनस्येतिह्युच्यतांमुनिसन्निधौ ॥ ३० ॥ तच्छ्रुत्वासहसागत्वापादयोःपतितोमुनेः ॥ स्वामिन्रामःसमागत्यवनाद्बहिरवस्थितः ॥ ३१ ॥ सभार्यःसानुजःश्रीमानाहदमांदेवसन्निभः ॥ भरद्वाजायमुनयेज्ञापयस्वयथोचितम् ॥३२॥ तच्छ्रुत्वासहसोत्थायभरद्वाजोमुनीश्वरः ॥ गृहीत्वार्घ्यंचपाद्यंचरामसामीप्यमाययौ ॥३३॥ दृष्ट्वारामंयथान्यायंपूजयित्वासलक्ष्मणम् ॥ आहमेपर्णशालांभोरामराजीवलोचन ॥ ३४ ॥ आगच्छपादरजसापुनीहिरघुनंदन ॥ इत्युक्त्वोटजमानीयसीतयासहराघवौ ॥३५॥ भक्त्यापुनःपूजयित्वाचकारातिथ्यमुत्तमम् ॥ अद्याहंतपसःपारंगतोऽस्मितवसंगमात् ॥ ३६ ॥ ज्ञातंरामतवोदंतंभूतंचागामिकंचयत् ॥ जानामित्वांपरात्मानंमाययाकार्यमानुषम् ॥ ३७ ॥ यदर्थमवतीर्णोऽसिप्रार्थितोब्रह्मणापुरा ॥ यदर्थंवनवासस्तेयत्करिष्यसिवैपुरः ॥३८॥ जानामिज्ञानदृष्ट्याऽहंजातयात्वदुपासनात् ॥ इतःपरंत्वांकिंवक्ष्येकृतार्थोऽहंरघूत्तम ॥३९॥ यस्त्वांपश्यामिकाकुत्स्थंपुरुषंप्रकृतेःपरम् ॥ रामस्तमभिवाद्याहसीतालक्ष्मणसंयुतः ॥ ४० ॥ अनुग्राह्यास्त्वयाब्रह्मन्वयंक्षत्रियबांधवाः ॥ इतिसंभाष्यतेऽन्योन्यमुषित्वामुनिसन्निधौ ॥ ४१ ॥

मित्यर्थः ॥ ३६ ॥ भूतंभाविचतवोदंतंवृत्तांतोज्ञातः । तत्रभूतवृत्तांतज्ञानमभिनयति ॥ जानामीत्यादि ॥ ३७ ॥ यदर्थमिति । सर्वत्रयच्छब्दोरक्षोवधपरः ॥ ३८ ॥ ॥ ३९ ॥ प्रकृतेःपरंप्रकृतिगुणास्पृष्टमीश्वरम् ॥ ४० ॥ तेसीतारामलक्ष्मणभरद्वाजाः अन्योऽन्यंप्रागुक्तंसंभाष्यततोराम्रोमुनिसन्निधावुषित्वा ॥ ४१ ॥

यमुनायांकृताप्लवेनकृतस्नानेनमुनिनादृष्टमार्गेणदार्शितमार्गेणराघवोमार्गदर्शकैर्मुनिदारकैःसहयमुनामुत्तीर्य ॥ ४२ ॥ चित्रकूटाद्रिंप्रययौ । यत्रवाल्मीकेरा श्रमइत्यनेनतस्यप्राशस्त्यम् ॥ ४३ ॥ द्विजाःपक्षिणोब्राह्मणाश्च ॥ ४४ ॥ रमानाथंविष्णववतारम् ॥ ४५ ॥ कमनीयपद्मसदृशनेत्रम् ॥ ४६ ॥ विस्मयेनानिमिषेईक्षणेनेत्रेयस्यसः ॥ हर्षजाश्रुभिःपूर्णेलोचनेयस्यसः । क्रमेणैवंभावः ॥ ४७ ॥ लालितःइदंमधुरमिदंमधुरमिदंभुंक्ष्वेत्येवंप्रीत्याबोधितः ॥ ४८ ॥ ४९ ॥ यदिजानंतीत्यसंदिग्धेसंदिग्धवचनंवेदाश्चेत्प्रमाणंस्युरितिवत् । सर्वथाजानंत्येवातोऽत्रकारणकथनंविफलमितिभावः ॥ ५० ॥ तत्रयत्रत्वं

प्रातरुत्थाययमुनामुत्तीर्यमुनिदारकैः ॥ कृताप्लवेनमुनिनादृष्टमार्गेणराघवः ॥ ४२ ॥ प्रययौचित्रकूटाद्रिंवाल्मीकेर्यत्रचाश्रमः ॥ गत्वा रामोऽथवाल्मीकेराश्रमंऋषिसंकुलम् ॥ ४३ ॥ नानामृगद्विजाकीर्णंनित्यपुष्पफलाकुलम् ॥ तत्रदृष्ट्वासमासीनंवाल्मीकिंमुनिसत्तमम् ॥ ॥ ४४ ॥ ननामशिरसारामोलक्ष्मणेनचसीतया ॥ दृष्ट्वारामंरमानाथंवाल्मीकिर्लोकसुंदरम् ॥ ४५ ॥ जानकीलक्ष्मणोपेतंजटामुकुटमं डितम् ॥ कंदर्पसदृशाकारंकमनीयांबुजेक्षणम् ॥ ४६ ॥ दृष्ट्वैवसहसोत्तस्थौविस्मयानिमिषेक्षणः ॥ आलिंग्यपरमानंदंरामंहर्षाश्रुलोच नः ४७ ॥ पूजयित्वाजगत्पूज्यंभक्त्याऽर्घ्यादिभिरादृतः ॥ फलमूलैःसमधुरैर्भोजयित्वाचलालितः ॥ ४८ ॥ राघवःप्रांजलिःप्राह वाल्मीकिंविनयान्वितः ॥ पितुराज्ञांपुरस्कृत्यदंडकानागतावयम् ॥ ४९ ॥ भवंतोयदिजानंतिकिंवक्ष्यामोऽत्रकारणम् ॥ यत्रमेसुखवा सायभवेत्स्थानंवदस्वतत् ॥ ५० ॥ सीतयासहितःकालंकिंचित्तत्रनयाम्यहम् ॥ इत्युक्तोराघवेणासौमुनिःसस्मितमब्रवीत् ॥ ५१ ॥ त्वमेवसर्वलोकानांनिवासस्थानमुत्तमम् ॥ तवापिसर्वभूतानिनिवाससदनानिहि ॥५२॥ एवंसाधारणंस्थानमुक्तंतेरघुनंदन ॥ सीतयास हितस्येतिविशेषंपृच्छतस्तव ॥ ५३ ॥ तद्वक्ष्यामिरघुश्रेष्ठयत्तेनियतमंदिरम् ॥ शांतानांसमदृष्टीनामद्वेष्टॄणांचजंतुषु ॥ त्वामेवभजतांनि त्यंहृदयंतेऽधिमंदिरम् ॥ ५४ ॥

वदिष्यासितत्रेत्यर्थः ॥ ५१ ॥ त्वमेवेति । त्वद्विवर्तत्वाज्जगतइतिभावः ॥ तवापीति । अंतर्यामितयासर्वत्रतववासादितिभावः ॥ ५२ ॥ ५३ ॥ नियतमं दिरंसर्वदावासस्थानम् । समदृष्टीनांमित्रोदासीनशत्रुष्वितिशेषः । अतएवअद्वेष्टॄणांतेषांहृदयंतेऽधिकंसर्वोत्कृष्टंमंदिरमित्यर्थः । सर्वदातत्रवासादेवेतिभावः ॥५४॥

धर्माधर्मान्विहितनिषिद्धसकलकर्माणित्यक्त्वायस्त्वामेवभजतेतस्यहृद्धृदयंसीतयासहवस्तुंहेरामतेतवसुखमंदिरंसुखजनकंगृहम् ॥ ५५ ॥ निर्द्वंद्वोऽहंममेतिद्वंद्वरहि
तोऽतएवनिःस्पृहः ॥ ५६ ॥ नानाविधप्रकारेणतत्त्वज्ञलक्षणान्याह । निरहंकारिणइति । शांताःशमशीलाः लोष्टंमृत्पिंडःअश्मानःपद्मरागादयः कनकंचेदंस
ममनुपादेयत्वेनयेषांते ॥५७॥ मनःसंकल्पविकल्पात्मकम् बुद्धिर्निश्चयात्मिका द्वयमपियेनत्वय्येवदत्तंत्वद्विषयमेवयस्यसंकल्पादिकमितियावत् । संतुष्टःकथंचि
दशनाच्छादनलाभात्संतुष्टः त्वयिसंत्यक्तकर्मात्वदर्पणबुद्ध्याकृतकर्मा त्यक्तकाम्यकर्मेतियावत् ॥ ५८ ॥ अप्रियंदुःखम् । द्वेषहर्षाभावयोर्हेतुःसर्वत्रमाया
मयत्वनिश्चयः ॥ ५९ ॥ भावादिविकारानिति । भावोऽत्रजन्मतेनजन्मसत्ताविपरिणामवृद्ध्यपक्षयविनाशरूपान् विकारान्योदेहेपश्यतिनात्मनितंनित्यंवृद्धिक्षय

धर्माधर्मान्परित्यज्यत्वामेवभजतोऽनिशम् ॥ सीतयासहतेरामतस्यहृत्सुखमंदिरम् ॥ ५५ ॥ त्वन्मंत्रजापकोयस्तुत्वामेवशरणंगतः ॥
निर्द्वंद्वोनिःस्पृहस्तस्यहृदयंतेसुमंदिरम् ॥५६॥ निरहंकारिणःशांतायेरागद्वेषवर्जिताः ॥ समलोष्टाश्मकनकास्तेषांतेहृदयंगृहम् ॥५७॥
त्वयिदत्तमनोबुद्धिर्यःसंतुष्टःसदाभवेत् ॥ त्वयिसंत्यक्तकर्मायस्तन्मनस्तेशुभंगृहम् ॥ ५८ ॥ योनद्वेष्ट्यप्रियंप्राप्यप्रियंप्राप्यनहृष्यति ॥
सर्वंमायेतिनिश्चित्यत्वांभजेत्तन्मनोगृहम् ॥५९॥ षड्भावादिविकारान्योदेहेपश्यतिनात्मनि ॥ क्षुत्तृट्सुखंभयंदुःखंप्राणबुद्ध्योर्निरीक्षते॥
॥ ६० ॥ संसारधर्मैर्निर्मुक्तस्तस्यतेमानसंगृहम् ॥ ६१ ॥ पश्यंतियेसर्वगुहाशयस्थंत्वांचिद्घनंसत्यमनंतमेकम् ॥ अलेपकंसर्वगतं
वरेण्यंतेषांहृदब्जेसहसीतयावस ॥ ६२ ॥ निरंतराभ्यासदृढीकृतात्मनांत्वत्पादसेवापरिनिष्ठितानाम् ॥ त्वन्नामकीर्त्याहतकल्मषाणां
सीतासमेतस्यगृहंहृदब्जे ॥ ६३ ॥ रामत्वन्नाममहिमावर्ण्यतेकेनवाकथम् यत्प्रभावादहंरामब्रह्मर्षित्वमवाप्तवान् ॥ ६४ ॥

रहितमविनाशिनंपश्यतीत्यर्थः । क्षुत्तृड्भयंप्राणस्य सुखादिबुद्धेरितिविवेकः ॥ ६० ॥ संसारधर्मैस्तत्प्रयोजकैर्धर्मैःपुण्यपापैः ॥ ६१ ॥ सर्वागुहाःअन्न
मयप्राणमयमनोमयविज्ञानमयानंदमयरूपास्तद्रूपोयआशयःस्थानंतत्स्थंचिद्घनंचैतन्यरूपंसर्वगतमप्यलेपकंनभवतिलेपकंतत्सर्वंपश्यंति तत्रस्थितोऽपितद्गुणास्पृष्टइ
त्यर्थः ॥ ६२ ॥ निरंतरंध्यानाभ्यासेनत्वय्येवदृढीकृतस्त्वदेकविषयीकृतआत्माचित्तंयेषाम् । त्वत्पादसेवायांपरिनिष्ठितानांतत्पराणाम् ॥६३॥ त्वन्नाममहिमवर्ण
नस्यप्रकारः कर्ताचदुर्लभइत्याह । रामेति ॥ ६४ ॥

अत्रैवार्थेस्वविषयमितिहासमाह । अहमिति । किरातेषुतद्वसतिदेशेषु जन्ममात्रद्विजत्वेजन्ममात्रेणद्विजत्वमित्यर्थः । तत्रैवोपपत्तिमाह । शूद्राचाररतंइति ॥
॥ ६५ ॥ अजितात्मनइतिच्छेदः ॥ ६६ ॥ जीवानामंतकोपमोऽभवमित्यन्वयः ॥ ६७ ॥ ६८ ॥ अब्रुवम् । तानितिशेषः ॥ ६९ ॥ ७० ॥ ७१ ॥
पृथक्पृथक्पुत्रभार्यादिष्वेकैकंपृच्छेत्यर्थः ॥ ७२ ॥ यावदागमिष्यसितावद्वयंस्थास्यामहइतिनिश्चयइत्यर्थः ॥ ७३ ॥ फलभागिनस्तल्लब्धधनादिभोगभाजः ॥

अहंपुराकिरातेषुकिरातैःसहवर्धितः ॥ जन्ममात्रद्विजत्वंमेशूद्राचाररतःसदा ॥ ६५ ॥ शूद्रायांबहवःपुत्राउत्पन्नामेऽजितात्मनः ॥ ततश्चौरैश्चसंगम्यचौरोऽहमभवंपुरा ॥ ६६ ॥ धनुर्बाणधरोनित्यंजीवानामंतकोपमः ॥ एकदामुनयःसप्तदृष्टामहतिकानने ॥ ६७ ॥ साक्षान्मयाप्रकाशंतोज्वलनार्कसमप्रभाः ॥ तानन्वधावंलोभेनतेषांसर्वपरिच्छदान् ॥ ६८ ॥ ग्रहीतुकामस्तत्राहंतिष्ठतिष्ठेतिचाब्रुवम् ॥ दृष्ट्वामांमुनयोऽपृच्छन्किमायासिद्विजाधम ॥ ६९ ॥ अहंतानब्रुवंकिंचिदादातुंमुनिसत्तमाः ॥ पुत्रदारादयःसंतिबहवोमेबुभुक्षिताः ॥ ॥ ७० ॥ तेषांसंरक्षणार्थायचरामिगिरिकानने ॥ ततोमामूचुरव्यग्राःपृच्छगत्वाकुटुंबकम् ॥ ७१ ॥ योयोमयाप्रतिदिनंक्रियतेपापसंचयः ॥ यूयंतद्भागिनःकिंवानेतिवेतिपृथक्पृथक् ॥ ७२ ॥ वयंस्थास्यामहेतावदागमिष्यसिनिश्चयः ॥ तथेत्युक्त्वागृहंगत्वामुनिभिर्यदुदीरितम् ॥ ७३ ॥ अपृच्छंपुत्रदारादींस्तैरुक्तोऽहंरघूत्तम ॥ पापंतवैवतत्सर्ववयंतुफलभागिनः ॥ ७४ ॥ तच्छ्रुत्वाजातनिर्वेदोविचार्यपुनरागमम् ॥ मुनयोयत्रतिष्ठंतिकरुणापूर्णमानसाः ॥ ७५ ॥ मुनीनांदर्शनादेवशुद्धांतःकरणोऽभवम् ॥ धनुरादीन्परित्यज्यदंडवत्पतितोऽस्म्यहम् ॥ ७६ ॥ रक्षध्वंमांमुनिश्रेष्ठागच्छंतंनिरयार्णवम् ॥ इत्यग्रेपतितंदृष्ट्वामामूचुर्मुनिसत्तमाः ॥ ७७ ॥ उत्तिष्ठोत्तिष्ठभद्रंतेसफलःसत्समागमः ॥ उपदेक्ष्यामहेतुभ्यंकिंचित्तेनैवमोक्ष्यसे ॥ परस्परंसमालोच्यदुर्वृत्तोऽयंद्विजाधमः ॥ ७८ ॥ उपेक्ष्यएवसद्वृत्तैस्तथाऽपिशरणंगतः ॥ रक्षणीयःप्रयत्नेनमोक्षमार्गोपदेशतः ॥ ७९ ॥

॥ ७४ ॥ जातनिर्वेदस्तादृशकर्मकृतिस्वात्मनिजातापमानबुद्धिः विचार्य एतेपुत्रादयोनकुत्राप्युपकर्तारइतिविचार्यऋषिसन्निधिंपुनरागममागतः ॥ ७५॥ शुद्धांतःकरणःमलिनवृत्तिरहितः ॥ ७६ ॥ ७७ ॥ सतांसाधूनांसमागमःसफलःमोक्षरूपफलजनकः तदेवाह । यदुपेक्ष्यामहेतेनैवमोक्ष्यसे संसारदुःखादितिशेषः । यद्यपिदुर्वृत्तस्तथाऽपिरक्षणीयइत्युत्तरेणान्वयः ॥ ७८ ॥ ७९ ॥

व्यत्यस्तानिविपरीतपौर्वापर्याण्यक्षराणियस्मिंस्तादृशंरूपंयस्यतत् तेनामजपेत्यन्वयः । तदाकारोमरेति । एकाग्रमनसेतिजपेतिकर्तव्यतोपदेशः । अत्रमनसएका ग्रतावर्णविषयैव ॥ ८० ॥ ८१ ॥ अल्पकालजपमात्रस्यैवफलमाह । बाह्यंविस्मृतवानिति । अनेनतच्छब्दस्यापिस्मरणपूर्वकंतदर्थभूतांतर्यामिणं विषयतयालब्धवन्मेचित्तमितिसूचितम् । निश्चलरूपिणोनिष्क्रियशरीरस्य ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ यस्मात्तेइदानींवल्मीकात्संभवोऽतइदंतेद्वितीयं जन्मवल्मीकादभवत् अतस्त्वंवाल्मीकिरितिपूर्वेणान्वयः ॥ ८६ ॥ ईदृशःत्वत्सत्कार्यः लक्ष्मणेनेत्यस्यसहितमितिशेषः ॥ ८७ ॥ एवंभूतंरामंयत्त्वांप्रपश्यामि

इत्युक्त्वारामतेनामव्यत्यस्ताक्षरपूर्वकम् ॥ एकाग्रमनसाऽत्रैवमरेतिजपसर्वदा ॥ ८० ॥ आगच्छामःपुनर्यावत्तावदुक्तंसदाजप ॥ इत्यु क्त्वाप्रययुः सर्वेमुनयोदिव्यदर्शनाः ॥ ८१ ॥ अहंयथोपदिष्टंतैस्तथाऽकरवमंजसा ॥ जपन्नेकाग्रमनसाबाह्यंविस्मृतवानहम् ॥ ८२ ॥ एवंबहुतिथेकालेगतेनिश्चलरूपिणः ॥ सर्वसंगविहीनस्यवल्मीकोऽभून्ममोपरि ॥ ८३ ॥ ततोयुगसहस्रांतेऋषयःपुनरागमन् ॥ मामूचुर्नि ष्क्रमस्वेतितच्छुत्वातूर्णमुत्थितः ॥ ८४ ॥ वल्मीकान्निर्गतश्चाहंनीहारादिवभास्करः ॥ मामप्याहुर्मुनिगणावाल्मीकिस्त्वंमुनीश्वर ॥ ८५ ॥ वल्मीकात्संभवोयस्माद्द्वितीयंजन्मतेऽभवत् ॥ इत्युक्त्वातेययुर्दिव्यगतिंरघुकुलोत्तम ॥ ८६ ॥ अहंतेरामनाम्नश्चप्रभावादीदृशोऽभवम् ॥ अद्यसाक्षात्प्रपश्यामिससीतंलक्ष्मणेनच ॥ ८७ ॥ रामंराजीवपत्राक्षंत्वांमुक्तोनात्रसंशयः ॥ आगच्छरामभद्रंतेस्थलंवैदर्शयाम्यहम् ॥ ॥ ८८ ॥ एवमुक्त्वामुनिःश्रीमाँल्लक्ष्मणेनसमन्वितः ॥ शिष्यैःपरिवृतोगत्वामध्येपर्वतगंगयोः ॥ ८९ ॥ तत्रशालांसुविस्तीर्णांकारयामा सवासभूः ॥ प्राक्पश्चिमंदक्षिणोदक्छोभनंमंदिरद्वयम् ॥ ९० ॥ जानक्यासहितोरामोलक्ष्मणेनसमन्वितः ॥ तत्रतेदेवसदृशाह्य वसन्भवनोत्तमे ॥ ९१ ॥

तत्सर्वथामुक्तोभविष्यामिअत्रनसंशयः । अयंचप्रचेतोवंशजोरामायणकर्तृवाल्मीकेरन्यएवेतिबहवः ॥ ८८ ॥ मध्येपर्वतगंगयोरिति । स्थलंदर्शयामासेतिशेषः ॥ ८९ ॥ तत्रऋषिदर्शितस्थाने शालांमंदिरद्वयंचलक्ष्मणेनसमन्वितोरामःकारयामास । तत्पर्वतवासिभिर्भिल्लैरितिशेषः । वासभूरितिरामविशेषणम् । संसारस्य वासस्थानमपिस्ववासायस्थानंकारितवानित्याश्चर्योक्तिः ॥ ९० ॥ ९१ ॥

सप्रसिद्धोदेवपतिःशच्यादेवैश्चसहितोयथास्वर्गेआस्तेतथाससीतोमुनींद्रैःसहितोरामस्तत्रास्तइत्यर्थः ॥ ९२ ॥ ॥ इति श्रीमत्सकलराजविपदुद्धरणसमर्थेत्या दिवि० सेतौअयोध्याकांडेषष्ठःसर्गः ॥ ६ ॥ ॥ सप्तमेत्वथराजावैस्वशापोदंतमादितः । संप्रोच्योपरतःपश्चाद्भरतागमईर्यते ॥ १ ॥ सुमंत्रोऽपीति । रामं विनाकृतागमनाल्लज्जयावस्त्रेणमुखमाच्छाद्यप्रविवेश ॥ १ ॥ २ ॥ विह्वलःरामवियोगेनविह्वलचित्तः ॥ ३ ॥ ४ ॥ दुःखार्णवेत्वद्वियोगदुःखार्णवेमग्नमतएव म्रियमाणंनपश्यसिकिम् । पश्यसीत्यर्थः ॥ ५ ॥ एवंविलप्यदुःखसागरेनिमग्नोरुदन् । स्थितइतिशेषः । एवंरुदंतंतंमंत्रीअब्रवीत् ॥ ६ ॥ ७ ॥ प्रीत्यागुह

वाल्मीकिनातत्रसुपूजितोऽयंरामःससीतःसहलक्ष्मणेन ॥ देवैर्मुनींद्रैःसहितोमुदाऽऽस्तेस्वर्गेयथादेवपतिःसशच्या ॥ ९२॥ ॥ इतिश्री मदध्यात्मरामायणेउमामहेश्वरसंवादेअयोध्याकांडेषष्ठःसर्गः ॥ ६ ॥ श्रीमहादेवउवाच ॥ सुमंत्रोऽपितदायोध्यांदिनांतेप्रविवेशह ॥ वस्त्रे णमुखमाच्छाद्यबाष्पाकुलितलोचनः ॥ १ ॥ बहिरेवरथंस्थाप्यराजानंद्रष्टुमाययौ ॥ जयशब्देनराजानंस्तुत्वातं प्रणनामह ॥ २ ॥ ततो राजानमतंतंसुमंत्रंविह्वलोऽब्रवीत ॥ सुमंत्ररामःकुत्रास्तेसीतयालक्ष्मणेनच ॥ ३ ॥ कुत्रत्यक्तस्त्वयारामःकिंमांपापिनमब्रवीत् ॥ सीता वालक्ष्मणोवाऽपिनिर्दयंमांकिमब्रवीत ॥ ४ ॥ हारामहागुणनिधेहासीतेप्रियवादिनि ॥ दुःखार्णवेनिमग्नंमांम्रियमाणंनपश्यसि ॥ ५ ॥ वि लप्यैवंचिरंराजानिमग्नोदुःखसागरे ॥ एवंमंत्रीरुदंतंतंप्रांजलिर्वाक्यमब्रवीत् ॥ ६ ॥ रामःसीताचसौमित्रिर्मयानीतारथेनते ॥ शृंगवेरपुरा भ्याशेगंगाकूलेव्यवस्थिताः ॥ ७ ॥ गुहेनकिंचिदानीतंफलमूलादिकंचयत् ॥ स्पृष्ट्वाहस्तेनसंप्रीत्यानाग्रहीद्विससर्जतत् ॥८॥ वटक्षीरंस मानाय्यगुहेनरघुनंदनः ॥ जटामुकुटमाबद्धयमामाहनृपतेस्वयम् ॥ ९ ॥ सुमंतब्रूहिराजानंशोकस्तेऽस्तुनमत्कृते ॥ साकेताद‍धिकंसौ ख्यंविपिनेनोभविष्यति ॥ १० ॥ मातुर्मेवंदनंब्रूहिशोकंत्यजतुमत्कृते ॥ आश्वासयतुराजानंवृद्धंशोकपरिप्लुतम् ॥ ११ ॥

प्रीत्याहस्तेनस्पृष्ट्वानाग्रहीत् । संभावितकैकेयीपुत्रराज्येनाहारंकरिष्यामीविप्रतिज्ञावशादितिभावः ॥ ८ ॥ ९ ॥ राजानंब्रूहिवक्ष्यमाणंवंदनंचेतिशेषः । साकेतमयोध्या अधिकंसौख्यंत्वत्कृतशुभध्यानादितिशेषः । तच्चशोकत्यागेएवसंभवतीतिसर्वथाशोकस्त्याज्यइतिभावः ॥ १० ॥ भवतीशोकंत्यजतु । राजानमाश्वासयतुभवतीइतिचब्रहीत्यन्वयः ॥ ११ ॥

अश्रुपरीवाक्षीअश्रुव्याप्तनयना ॥ १२ ॥ श्वश्र्वोः श्वश्रूश्वशुरयोः । आर्षस्त्वेकशेषः । गताचलितेत्यर्थः ॥ १३ ॥ तेसीतारामलक्ष्मणाः । तावदहंस्थितः
उदकूलेइतिशेषः ॥ १४ ॥ १५ ॥ यदित्वंकैकेय्यैवरंदत्तवान्तार्हितस्यैवतत्पुत्रस्यैवराज्यंदेहि । राज्यस्योपादेयत्वात् । मत्पुत्रविवासनेतुनकारणमितिभावः ॥
॥ १६ ॥ तत्सर्वंकृत्वानिर्निमित्तमविचारितंतत्कृत्वेत्यर्थः । अग्निनाक्षतेस्पृष्टइव तेनातिदुःखितइत्यर्थः ॥ १७ ॥ अलमतिशयेन ॥ १८ ॥ बाल्यभावेननि

सीताचाश्रुपरीताक्षीमामाहनृपसत्तम ॥ दुःखगद्गदयावाचारामंकिंचिदवेक्षती ॥ १२ ॥ साष्टांगंप्रणिपातंमेब्रूहिश्वश्र्वोःपदांबुजे ॥ इतिप्र
रुदतीसीतागताकिंचिदवाङ्मुखी ॥ १३ ॥ ततस्तेऽश्रुपरीताक्षानावमारुरुहुस्तदा ॥ यावद्गंगांसमुत्तीर्यगतास्तावदहंस्थितः ॥ १४ ॥
ततोदुःखेनमहतापुनरेवाहमागतः ॥ ततोरुदंतीकौसल्याराजानमिदमब्रवीत् ॥ १५ ॥ कैकेय्यैप्रियभार्यायैप्रसन्नोदत्तवान्व
रम् ॥ त्वंराज्यंदेहितस्यैवमत्पुत्रःकिंविवासितः ॥ १६ ॥ कृत्वात्वमेवतत्सर्वमिदानींकिंनुरोदिषि ॥ कौसल्यावचनंश्रुत्वाक्षते
स्पृष्टइवाग्निना ॥ १७ ॥ पुनःशोकाश्रुपूर्णाक्षःकौसल्यामिदमब्रवीत् ॥ दुःखेनम्रियमाणंमांकिंपुनर्दुःखयस्यलम् ॥
॥ १८ ॥ इदानीमेवमेप्राणाउत्क्रमिष्यंतिनिश्चयः ॥ शप्तोऽहंबाल्यभावेनकेनचिन्मुनिनापुरा ॥ १९ ॥ पुराहंयौवनेदृप्तश्चा
पवाणधरोनिशि ॥ अचरंमृगयासक्तोनद्यास्तीरेमहावने ॥ २० ॥ तत्रार्धरात्रसमयेमुनिःकश्चित्तृषार्दितः ॥ पिपासार्दितयोः
पित्रोर्जलमानेतुमुद्यतः ॥ अपूरयज्जलेकुंभंतदाशब्दोऽभवन्महान् ॥ २१ ॥ गजःपिबतिपानीयमितिमत्वामहानिशि ॥ बाणंधनुषिसंधा
यशब्दवेधिनमक्षिपम् ॥ २२ ॥ हाहतोऽस्मीतितत्राभूच्छब्दोमानुषसूचकः ॥ कस्यापिनकृतोदोषोमयाकेनहतोविधे ॥२३॥ प्रतीक्षतेमां
माताचपिताचजलकांक्षया ॥ तच्छ्रुत्वाभयसंत्रस्तस्ततोऽहंपौरुषंवचः ॥ २४ ॥

षिद्धाचरणरूपबालकर्मणा ॥ १९ ॥ २० ॥ २१ ॥ अक्षिपमहमितिशेषः ॥ २२ ॥ मानुषसूचकःमानुषत्वसूचकः केनहतःअहमितिशेषः ॥ २३ ॥ अहं
तत्पौरुषंवचः श्रुत्वा भयसंत्रस्तस्ततस्तत्पार्श्वंशनैर्गत्वाऽब्रुवमितिशेषः ॥ २४ ॥

---

१ श्वशुरः श्वश्र्वा । इत्यनेनाविसंबाधेन भाव्यम् ।

॥ २५ ॥ २६ ॥ नस्पृशेत् न स्प्रक्ष्यतीत्यर्थः ॥ २७ ॥ यदिकुप्यत्यनेनतस्यकोपएवनास्तिअतिशांतत्वात् । तथाऽप्यशीघ्रगमनेनतृट्पीडितोयदिकदाचित्कु
प्यतीत्यर्थः ॥ २८ ॥ कृतंमद्वधम् ॥ २९ ॥ धृत्वागृहीत्वा दंपतीतन्मातापितरौ ॥ ३० ॥ ३१ ॥ किमुपेक्षसे । उपेक्षाऽनुचितेतिभावः । अनौचित्येहेतुर्भ
क्तिमानिति ॥ ३२ ॥ इतिचिंताव्याकुलौतावासाते तत्रतयोर्मध्येतत्पितामत्पदन्यासजंशब्दंश्रुत्वापुत्रकिंविलंबइत्यादिप्राह ॥ ३३ ॥ एवंलपतोरित्यनेनमाताप्ये

शनैर्गत्वाऽथतत्पार्श्वंस्वामिन्दशरथोऽस्म्यहम् ॥ अजानतामयाविद्धस्त्रातुमर्हसिमांमुने ॥ २५ ॥ इत्युक्त्वापादयोस्तस्यपतितो गद्गदा
क्षरः ॥ तदामामाहसमुनिर्माभैषीर्नृपसत्तम ॥ २६ ॥ ब्रह्महत्यास्पृशेन्नत्वांवैश्योऽहंतपसिस्थितः ॥ पितरौमांप्रतीक्षेतेक्षुत्तृड्भ्यांपरिपी
डितौ ॥ २७ ॥ तयोस्त्वमुदकंदेहिशीघ्रमेवाविचारयन् ॥ नचेत्त्वांभस्मसात्कुर्यात्पितामेयदिकुप्यति ॥ २८ ॥ जलंदत्वातुतौनत्वाकृतं
सर्वंनिवेदय ॥ शल्यमुद्धरमेदेहात्प्राणांस्त्यक्ष्यामिपीडितः ॥ २९ ॥ इत्युक्तोमुनिनाशीघ्रंबाणमुत्पाट्यदेहतः ॥ सजलंकलशंधृत्वागतोऽ
हंयत्रदंपती ॥ ३० ॥ अतिवृद्धावंधदृशौक्षुत्पिपासार्दितौनिशि ॥ नायातिसलिलंगृह्यपुत्रःकिंवाऽत्रकारणम् ॥ ३१ ॥ अनन्यगतिकौ
वृद्धौशोच्यौतृट्परिपीडितौ ॥ आवामुपेक्षतेकिंवाभक्तिमानावयोःसुतः ॥ ३२ ॥ इतिचिंताव्याकुलौतौमत्पादन्यासजंध्वनिम् ॥ श्रुत्वा
प्राहपितापुत्रकिंविलंबःकृतस्त्वया ॥ ३३ ॥ देह्यावयोःसुपानीयंपिबत्वमपिपुत्रक ॥ इत्येवंलपतोर्भीत्यासकाशमगमंशनैः ॥ ३४ ॥ पा
दयोःप्रणिपत्याहमब्रुवंविनयान्वितः ॥ नाहंपुत्रस्त्वयोध्यायाराजादशरथोऽस्म्यहम् ॥ ३५ ॥ पापोऽहंमृगयासक्तोरात्रौमृगविहिंसकः ॥
जलावताराद्दूरेऽहंस्थित्वाजलगतंध्वनिम् ॥ ३६ ॥ श्रुत्वाऽहंशब्दवेधित्वादेकंबाणमथात्यजम् ॥ इतोऽस्मीतिध्वनिंश्रुत्वाभयात्तत्राहमा
गतः ॥ ३७ ॥ जटाविकीर्यपतितंदृष्ट्वाऽहंमुनिदारकम् ॥ भीतोगृहीत्वातत्पादौरक्षरक्षेतिचाब्रुवम् ॥ ३८ ॥ माभैषीरितिमांप्राहब्रह्महत्या
भयंनते ॥ मत्पित्रोःसलिलंदत्त्वानत्वाप्रार्थयजीवितम् ॥ ३९ ॥ इत्युक्तोमुनिनातेनह्यागतोमुनिर्हिंसकः ॥ रक्षेतांमांदयायुक्तौयुवांहि
शरणागतम् ॥ ४० ॥ इतिश्रुत्वातुदुःखार्तौविलप्यबहुशोच्यतम् ॥ पतितौनोसुतोयत्रनयतत्राविलंबयन् ॥ ४१ ॥

वमेवाहेतिसूचितम् ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ आगतोयुष्मत्सन्निधावितिशेषः ॥ ४० ॥ पतितौभूम्यां ततोमामूचतुरितिशेषः ।
किमूचतुस्तदाह । नौसुतइति आवयोःसुतोयत्रतत्रावांनयेत्यर्थः ॥ ४१ ॥

॥ ४२ ॥ ४३ ॥ चितिंचितां तत्रचिवौ त्रयःपुत्रोमातापितरौचतस्य तत्रतदाज्ञयाऽग्निरुत्सृष्टोदत्तः ॥ ४४ ॥ पिताश्रावणस्येतिशेषः ॥ ४५ ॥ अनिवारितः
अशक्यनिवारणः भावेक्तः ॥ ४६ ॥ प्रत्येकविवक्षयात्वद्वियोगादित्येकवचनम् ॥ ४७ ॥ ४८ ॥ ४९ ॥ साश्वाःअश्वारूढाः ॥ ५० ॥ ममाज्ञयाभरतसमीपं

ततोनीतौसुतोयत्रमयातौवृद्धदंपती ॥ स्पृष्ट्वासुतंतौहस्ताभ्यांबहुशोऽथविलेपतुः ॥ ४२ ॥ हाहेतिक्रंदमानौतौपुत्रपुत्रेत्यवोचताम् ॥
जलंदेहीतिपुत्रेतिकिमर्थंनददास्यलम् ॥ ४३ ॥ ततोमामूचतुःशीघ्रंचितिंरचयभूपते ॥ मयातदैवरचिताचितिस्तत्रनिवेशिताः ॥ त्रय
स्तत्राग्निरुत्सृष्टोदग्धांस्तेत्रिदिवंययुः ॥ ४४ ॥ तत्रवृद्धःपिताआहत्वमप्येवंभविष्यसि ॥ पुत्रशोकेनमरणंप्राप्स्यसेवचनान्मम ॥ ४५ ॥
सइदानींममप्राप्तःशापकालोऽनिवारितः ॥ इत्युक्त्वाविललापाथराजाशोकसमाकुलः ॥ ४६ ॥ हारामपुत्रहासीतेहालक्ष्मणगुणाकर ॥
त्वद्वियोगादहंप्राप्तोमृत्युंकैकेयिसंभवम् ॥ ४७ ॥ वदन्नेवंदशरथःप्राणांस्त्यक्त्वादिवंगतः ॥ कौसल्याचसुमित्राचतथाऽन्याराजयोषितः
॥ ४८ ॥ चुक्रुशुश्चविलेपुश्चउरस्ताडनपूर्वकम् ॥ वसिष्ठःप्रययौतत्रप्रातर्मंत्रिभिरावृतः ॥ ४९ ॥ तैलद्रोण्यांदशरथंक्षिप्त्वादूतानथाब्रवी
त् ॥ गच्छतत्वरितंसाश्वायुधाजिन्नगरंप्रति ॥ ५० ॥ तत्रास्तेभरतःश्रीमाञ्छत्रुघ्नसहितःप्रभुः ॥ उच्यतांभरतःशीघ्रमागच्छेतिममाज्ञ
या ॥ ५१ ॥ अयोध्यांप्रतिराजानंकैकेयींचापिपश्यतु ॥ इत्युक्तास्त्वरितंदूतागत्वाभरतमातुलम् ॥ ५२ ॥ युधाजितंप्रणम्योचुर्भरतं
सानुजंप्रति ॥ वसिष्ठस्त्वाऽब्रवीद्राजन्भरतःसानुजःप्रभुः ॥ ५३ ॥ शीघ्रमागच्छतुपुरीमयोध्यामविचारयन् ॥ इत्याज्ञप्तोऽथभरतस्त्वरि
तंभयविह्वलः ॥ ५४ ॥ आययौगुरुणादिष्टःसहदूतैस्तुसानुजः ॥ राज्ञोवाराघवस्यापिदुःखंकिंचिदुपास्थितम् ॥ ५५ ॥ इतिचिंतापरोमा
र्गेचिंतयन्नगरंययौ ॥ नगरंभ्रष्टलक्ष्मीकंजनसंबाधवर्जितम् ॥ ५६ ॥ उत्सवैश्चपरित्यक्तंदृष्ट्वाचिंतापरोऽभवत् ॥ प्रविश्यराजभवनंराजल
क्ष्मीविवर्जितम् ॥ ५७ ॥ अपश्यत्कैकयींतत्रएकामेवासनेस्थिताम् ॥ ननामशिरसापादौमातुर्भक्तिसमन्वितः ॥ ५८ ॥

गत्वाशीघ्रमागच्छेतिभरतउच्यताम् ॥ ५१ ॥ अयोध्यांप्रतिआगत्यकैकेयींराजानंचभवान्पश्यत्विति चोच्यताम् ॥ ५२ ॥ त्वात्वांयुधाजितं सानुजंभरतंप्रतितद्वि
षये ॥ ५३ ॥ ५४ ॥ ५५ ॥ जनसंबाधोजनसंमर्दः ॥ ५६ ॥ ५७ ॥ एकामेवनतुराजसहिताम् ॥ ५८ ॥

॥ ५९ ॥ स्वकुलस्यस्वपितृकुलस्य ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ तांगतिमुत्तमलोकम् ॥ ६५ ॥ वृजिनार्णवेदुःखार्णवे ॥ ६६ ॥ रामाय राज्ञेमामसमर्प्यअयंमद्दत्त्वयाऽपिपालनीयइत्यनुक्त्वैव पतितंभूमौ ॥ ६७ ॥ आमृज्यमार्जिताश्रुकेकृत्वा ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ संभ्रमः आदरपू



आगतंभरतंदृष्ट्वाकैकेयीप्रेमसंभ्रमात् ॥ उत्थायालिंग्यरभसात्स्वांकमारोप्यसंस्थिता ॥५९॥ मूर्ध्न्यवघ्रायपप्रच्छकुशलंस्वकुलस्यसा॥ पितामेकुशलीभ्रातामाताचशुभलक्षणा ॥ ६० ॥ दिष्ट्यात्वमद्यकुशलीमयादृष्टोऽसिपुत्रक ॥ इतिपृष्टःसभरतोमात्राचिंताकुलेंद्रियः ॥ ॥ ६१ ॥ दूयमानेनमनसामातरंसमपृच्छत ॥ मातःपितामेकुत्रास्तेएकात्वमिहसंस्थिता ॥ ६२ ॥ त्वयाविनानमेतातःकदाचिद्रहसि स्थितः ॥ इदानींदृश्यतेनैवकुत्रतिष्ठतिमेवद ॥६३॥ अदृष्ट्वापितरंमेऽद्यभयंदुःखंचजायते ॥ अथाहकैकयीपुत्रंकिंदुःखेनतवानघ ॥६४॥ यागतिर्धर्मशीलानामश्वमेधादियाजिनाम् ॥ तांगतिंगतवानद्यपितातेपितृवत्सल ॥ ६५ ॥ तच्छ्रुत्वानिपपातोर्व्यांभरतःशोकविह्वलः ॥ हाताताक्कगतोऽसित्वंत्यक्त्वामांवृजिनार्णवे ॥ ६६ ॥ असमर्प्यैवरामायराज्ञेमांक्कगतोऽसिभोः ॥ इतिविलपितंपुत्रंपतितंमुक्तमूर्धजम् ॥ ॥ ६७ ॥ उत्थाप्यामृज्यनयनेकैकेयीपुत्रमब्रवीत् ॥ समाश्वसिहिभद्रंतेसर्वंसंपादितंमया ॥ ६८ ॥ तामाहभरतस्तातोम्रियमाणःकिमब्र वीत् ॥ तमाहकैकयीदेवीभरतंभयवर्जिता ॥ ६९ ॥ हारामरामसीतेतिलक्ष्मणेतिपुनःपुनः ॥ विलपन्नेवसुचिरंदेहंत्यक्त्वादिवंययौ ॥ ॥ ७० ॥ तामाहभरतोहेंऽबरामःसन्निंहितोनकिम् ॥ तदानींलक्ष्मणोवाऽपिसीतावाकुत्रतेगताः ॥ ७१ ॥ कैकेय्युवाच ॥ रामस्य यौवराज्यार्थंपित्रातेसंभ्रमःकृतः ॥ तवराज्यप्रदानायतदाऽहंविघ्नमाचरम् ॥ ७२ ॥ राज्ञादत्तंहिमेपूर्वंवरदेनवरद्वयम् ॥ याचितंतदिदा नींमेतयोरेकेनतेऽखिलम् ॥ ७३ ॥ राज्यंरामस्यचैकेनवनवासोमुनिव्रतम् ॥ ततःसत्यपरोराजाराज्यंदत्वातवैवहि ॥ ७४ ॥ रामंसंप्रेष यामासवनमेवपितातव ॥ सीताऽप्यनुगतारामंपातिव्रत्यमुपाश्रिता ॥ ७५ ॥ सौभ्रात्रंदर्शयन्राममनुयातोऽपिलक्ष्मणः ॥ वनंगतेषुसर्वे षुराजातानेवचिंतयन् ॥ ७६ ॥

र्वकउपक्रमः राज्यप्रदानायतवराज्यंप्रदापयितुम् । अंतर्भावितण्यर्थोंददातिः । विघ्नमाचरं रामयौवराज्याभिषेकस्येतिशेषः ॥ ७२ ॥ तदुपपत्ति माह । राज्ञेति ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥

॥ ७७ ॥ तंदृष्ट्वानिःसंज्ञंभरतंदृष्ट्वा अनेनभर्तृशोकादपिपुत्रशोकोगरीयानितिदर्शितम् ॥ ७८ ॥ चक्षुषाप्रदहन्निवपश्यन्नाहेतिशेषः । असंभाष्यत्वेहेतुर्भर्तृघाति
नीत्वम् ॥ ७९ ॥ पापेइति । त्वद्गर्भजातत्वात्पापवानहमस्मीतिसांप्रतंनिर्णीतमितिशेषः । अतोऽहमित्यादि ॥ ८० ॥ गमिष्यसिदेहत्यागोत्तरमितिशेषः
॥ ८१ ॥ तंस्वपुत्रवियोगकारणम् ॥ ८२ ॥ ८३ ॥ इदंसर्वंगृहवृत्तमेवमभूत् राज्ञोमरणंरामस्यवनगमनंचेत्यर्थः । एतत्सर्वंतेमातृचेष्टितम् । तच्चत्वमात्रो
क्तमेवभविष्यति । त्वयाचश्रुतमेवभविष्यतीत्यध्याहारेणान्वयः ॥ ८४ ॥ रघुरामचंद्रःरघुकुलजातोरामचंद्रइत्यर्थः ॥ ८५ ॥ परतःसर्वस्यपरतः

प्रलपन्रामरामेतिममारनृपसत्तमः ॥ इतिमातुर्वचःश्रुत्वावज्राहतइवद्रुमः ॥ ७७ ॥ पपातभूमौनिःसंज्ञस्तंदृष्ट्वादुःखितातदा ॥ कैकेयीपुनर
प्याहवत्सशोकेनाकिंतव ॥ ७८ ॥ राज्येमहतिसंप्राप्तेदुःखस्यावसरःकुतः ॥ इतिब्रुवंतीमालोक्यमातरंप्रदहन्निव ॥ ७९ ॥ असंभाष्याऽ
सिपापेमेघोरेत्वंभर्तृघातिनी ॥ पापेत्वद्गर्भजातोऽहंपापवानस्मिसांप्रतम् ॥ अहमग्निंप्रवेक्ष्यामिविषंवाभक्षयाम्यहम् ॥ ८० ॥ खड्गेनवाऽथ
चात्मानंहत्वायामियमक्षयम् ॥ भर्तृघातिनिदुष्टेत्वंकुंभीपाकंगमिष्यसि ॥ ८१ ॥ इतिनिर्भर्त्स्यकैकेयींकौसल्याभवनंययौ ॥ सापितं
भरतंदृष्ट्वामुक्तकंठारुरोदह ॥ ८२ ॥ पादयोःपतितस्तस्याभरतोऽपितदारुदत् ॥ आलिंग्यभरतंसाध्वीराममातायशस्विनी ॥ ८३ ॥
कृशाऽतिदीनवदनासाश्रुनेत्रेदमब्रवीत् ॥ पुत्रत्वयिगतेदूरमेवंसर्वमभूदिदम् ॥ उक्तंमात्राश्रुतंसर्वंत्वयातेमातृचेष्टितम् ॥ ८४ ॥ पुत्रःस
भार्योवनमेवयातःसलक्ष्मणोमेरघुरामचंद्रः ॥ चीरांबरोबद्धजटाकलापःसंत्यज्यमांदुःखसमुद्रमग्नाम् ॥ ८५ ॥ हारामहामेरघुवंशनाथ
जातोऽसिमेत्वंपरतःपरात्मा ॥ तथाऽपिदुःखंनजहातिमांवैविधिर्बलीयानितिमेमनीषा ॥ ८६ ॥ सएवंभरतोवीक्ष्यविलपंतींभृशंशुचा ॥
पादौगृहीत्वाप्राहेदंशृणुमातर्वचोमम ॥ ८७ ॥ कैकेय्यायत्कृतंकर्मरामराज्याभिषेचने ॥ अन्यद्वायदिजानामिसामयानोदितायदि ॥ ८८ ॥

सर्वतोऽधिकइतियावत् । परमात्मामेपुत्रोजातोऽसियद्यपितथाऽपिमांदुःखंनजहाति अतोविधिर्बलवानितिमेमनीषाबुद्धिः दुःखनिवर्तकसामग्र्यांसत्यामपिदुः
खानिवृत्तिर्विधिबलीयस्त्वकृतैवेतिभावः ॥ ८६ ॥ एवंविलपंतींवीक्ष्येत्यन्वयः ॥ ८७ ॥ रामराज्यस्याभिषेचनेयत्कृतंतद्वाअन्यद्वामद्राज्ययाचनारूपं
यदिजानामियदिवासाएतदर्थंमयानोदिताप्रेरितातदेत्यन्वयः ॥ ८८ ॥

॥ ८९ ॥ यद्यहमिमंवृत्तांतंजानामितदातदखिलंपापंममभूयादित्यन्वयः ॥ ९० ॥ जानामित्वद्धृदयमितिशेषः । समागममागमनम् ॥ ९१ ॥ ९२ ॥ ॥ ९३ ॥ त्रिदिवंगत्वेतिशेषः । देवेंद्रार्धासनंजगामप्राप ॥ ९४ ॥ अशोच्यत्वेहेतुगर्भविशेषणम् । मोक्षभाजनमिति । प्रकारांतरेणाप्यशोच्यत्वमाह । आत्मेति । नित्योऽव्ययइत्यस्यैवजन्मनाशादिवर्जितइतिविवरणम् ॥ ९५ ॥ शरीरस्यजडत्वान्नश्वरत्वादेवअशोच्यताइत्याह । शरीरमिति ॥ ९६ ॥ स्वात्मताडनपूर्वकम् स्वशरीरताडनपूर्वकमित्यर्थः ॥ ९७ ॥ ज्ञानिनांसंसारमसारत्वेनजानतांयदाकेनचिद्वियोगोभवतितदासवैराग्यहेतुःभवेत् । भवती

पापंमेऽस्तुतदामातर्ब्रह्महत्याशतोद्भवम् ॥ हत्वावसिष्ठंखड्गेनअरुंधत्यासमन्वितम् ॥ ८९ ॥ भूयात्तत्पापमखिलंममजानामियद्यहम् ॥ इत्येवंशपथंकृत्वारुरोदभरतस्तदा ॥९०॥ कौसल्यातमथालिंग्यपुत्रजानामिमाशुचः ॥ एतस्मिन्नंतरेश्रुत्वाभरतस्यसमागमम् ॥९१॥ वसिष्ठोमंत्रिभिःसार्धंप्रययौराजमंदिरम् ॥ रुदंतंभरतंदृष्ट्वावसिष्ठःप्राहसादरम् ॥ ९२ ॥ वृद्धोराजादशरथोज्ञानीसत्यपराक्रमः ॥ भुक्त्वा मर्त्यसुखंसर्वमिष्ट्वाविपुलदक्षिणैः ॥ ९३ ॥ अश्वमेधादिभिर्यज्ञैर्लब्ध्वारामंसुतंहरिम् ॥ अंतेजगामत्रिदिवंदेवेंद्रार्धासनंप्रभुः ॥९४॥ तंशोचसिवृथैवत्वमशोच्यंमोक्षभाजनम् ॥ आत्मानित्योऽव्ययःशुद्धोजन्मनाशादिवर्जितः॥९५॥ शरीरंजडमत्यर्थमपवित्रंविनश्वरम् ॥ ॥ विचार्यमाणेशोकस्यनावकाशःकथंचन ॥९६॥ पितावातनयोवाऽपियदिमृत्युवशंगतः ॥ मूढास्तमनुशोचंतिस्वात्मताडनपूर्वकम् ॥९७॥ निःसारेखलुसंसारेवियोगोज्ञानिनांयदा ॥ भवेद्वैराग्यहेतुःसशांतिसौख्यंतनोतिच ॥९८॥ जन्मवान्यदिलोकेऽस्मिंस्तर्हितंमृत्युरन्वगात् ॥ तस्मादपरिहार्योऽयंमृत्युर्जन्मवतांसदा ॥९९॥ स्वकर्मवशतःसर्वजंतूनांप्रभवाप्ययौ ॥ विजानन्नप्यविद्वान्यःकथंशोचतिबांधवान् ॥ १०० ॥ ब्रह्मांडकोटयोनष्टाःसृष्टयोबहुशोगताः ॥ शुष्यंतिसागराःसर्वेकैवास्थाक्षणजीविते ॥ १ ॥

त्यर्थः । शांत्यादिकर्ताच ॥ ९८ ॥ अथजातस्यध्रुवोमृत्युरित्याह । जन्मवानिति । अन्वगात् अनुगच्छत्येवेत्यर्थः ॥ ९९ ॥ यःअविद्वानपिअतत्त्वज्ञोऽपिसउत्पत्तिप्रलययोःसर्वजंतूनांकर्माधीनत्वंविजानन्कथंबांधवान्शोचति । किंपुनस्तत्त्वज्ञइतिभावः ॥ १०० ॥ शुष्यंति । वर्तमानसामीप्येलट् । क्षणजीवितेक्षणभंगुरेजीवितइत्यर्थः ॥ १ ॥

चलं चंचलं यत्पत्रं तदंते लग्नो योंऽबुबिंदुस्तद्वत्क्षणभंगुरम् अवेलायांबाल्येऽपिप्रत्ययोविश्वासः ॥ २ ॥ देहीजीवः प्राक्तनदेहसंपादितकर्मणायंदेहएतदेहसंपादितकर्मणा
चपुनर्देहइतिदेहवियोगोनकदाचिदात्मनइतिदेहशोकोवृथेतिभावः ॥ ३ ॥ पुनर्देहप्राप्तौदृष्टांतमाह । यथेति । नवंभजत्येवेत्युत्तरेणान्वयः ॥ ४ ॥ आत्मनस्तुनम
रणादीत्याह । आत्मानेति ॥५॥ आदिमध्यांतभावविकाराभावेनसर्वभावविकाररहित्यमित्याह । षड्भावरहितः अनंतः देशतः परिच्छेदरहितः प्रज्ञानंनिर्विषयज्ञा
नंतदेवविग्रहः शरीरंयस्यसः बुद्ध्यादिसाक्षीनिश्चयादिरूपसकलांतःकरणवृत्तिःसाक्षी लयोनाशस्तद्रहितः ॥ ६ ॥ समस्थितः सर्वत्रसमतयास्थितः सएवाहमित्यात्मानं

चलपत्रांतलग्नांबुबिंदुवत्क्षणभंगुरम् ॥ आयुस्त्यजत्यवेलायांकस्तत्रप्रत्ययस्तव ॥ २॥ देहीप्राक्तनदेहोत्थकर्मणादेहवान्पुनः ॥ तद्देहो
त्थेनचपुनरेवंदेहःसदात्मनः ॥ ३ ॥ यथात्यजतिवैजीर्णंवासोगृह्णातिनूतनम् ॥ तथाजीर्णंपरित्यज्यदेहीदेहंपुनर्नवम् ॥ ४ ॥ भजत्ये
वसदातत्रशोकस्यावसरःकुतः ॥ आत्मानम्रियतेजातुजायतेनचवर्धते ॥ ५ ॥ षड्भावरहितोऽनंतःसत्यप्रज्ञानविग्रहः ॥ आनंदरूपोबुद्ध्या
दिसाक्षीलयविवर्जितः॥ ६ ॥ एकएवपरोह्यात्माह्यद्वितीयःसमस्थितः ॥ इत्यात्मानंदृढंज्ञात्वात्यक्त्वाशोकंकुरुक्रियाम् ॥ ७ ॥ तैलद्रो
ण्याःपितुर्देहमुद्धृत्यसचिवैःसह ॥ कृत्यंकुरुयथान्यायमस्माभिःकुलनंदन ॥ ८ ॥ इतिसंबोधितःसाक्षाद्गुरुणाभरतस्तदा ॥
विसृज्याज्ञानजंशोकंचक्रेसविधिवत्क्रियाम् ॥ ९ ॥ गुरुणोक्तप्रकारेणआहिताग्नेर्यथाविधि ॥ संस्कृत्यसपितुर्देहंविधिदृष्टेनकर्मणा ॥१०॥
एकादशेऽहनिप्राप्तेब्राह्मणान्वेदपारगान् ॥ भोजयामासविधिवच्छतशोऽथसहस्रशः ॥११॥ उद्दिश्यपितरंतत्रब्राह्मणेभ्योधनंबहु ॥ ददौग
वांसहस्राणिग्रामान्नत्नांबराणिच॥१२॥ अवसत्स्वगृहेतत्ररामभेवानुचिंतयन् ॥ वसिष्ठेनसहभ्रात्रामंत्रिभिःपरिवारितः ॥ १३ ॥ रामेऽरण्यं
प्रयातेसहजनकसुतालक्ष्मणाभ्यांसुघोरंमातामेराक्षसीवप्रदहतिहृदयंदर्शनादेवसद्यः ॥ गच्छाम्यारण्यमद्यास्थिरमतिरखिलंदूरतोऽपास्य
राज्यंरामंसीतासमेतंस्मितरुचिरमुखंनित्यमेवानुसेवे॥११४॥इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेअयोध्याकांडेसप्तमःसर्गः॥७॥

ज्ञात्वाशोकंत्यक्त्वाक्रियांकुरु ॥ ७ ॥ तैलद्रोणीतैलपूर्णाकाष्ठांबुवाहिनी ॥ ८ ॥ ९ ॥ गुरुणावसिष्ठेन ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ अनुचिंतनप्रकार
मेवाह ॥ रामेइति । सुघोरमरण्यंप्रयातेइत्यन्वयः ॥ मेमाताराक्षसीवदर्शनाद्धृदयंप्रदहति । अतआरण्यमरण्यवंतंदेशंरामवासभतंगच्छामीत्यन्वयः ॥ ११४ ॥
॥ इति श्रीमत्सकलराजविपदुद्धरणसम० अध्यात्मरामायणसेतौअयोध्याकांडेसप्तमःसर्गः ॥ ७ ॥

अष्टमेतुवसिष्ठेनप्रोक्तोऽपिभरतःकिल । अनादृत्याधिराज्यंचजगामभ्रातृसंनिधौ ॥ १ ॥ देवसभासन्निभांतत्सदृशीम् ॥ १ ॥ चतुर्मुखोब्रह्मा ॥ २ ॥ ३ ॥ प्रतिज्ञाय अस्मान्सर्वान्प्रतिज्ञापयित्वाददौ ॥ ४ ॥ मुनिभिःक्रियमाणोऽभिषेकोऽयमभवत्वित्यन्वयः ॥ ५ ॥ अंजसाशीघ्रम् ॥ ६ ॥ हनिष्यामीति । तादृशवधस्यैवौचित्यादितिभावः । मातृगंधिनींतादृशीमपिमातृत्वसंबंधवतीमपीत्यर्थः ॥ ७ ॥ नोइतिप्रतिषेधे । नोसहिष्यतइत्यन्वयः । पादचारेणनतुवाहनेनेत्यर्थः ॥ ८ ॥

श्रीमहादेवउवाच ॥ वसिष्ठोमुनिभिःसार्द्धंमंत्रिभिःपरिवारितः ॥ राज्ञःसभांदेवसभासन्निभामविशाद्विभुः ॥ १ ॥ तत्रासनेसमासीनश्चतुर्मुखइवापरः ॥ आनीयभरतंतत्रउपवेश्यसहानुजम् ॥ २ ॥ अब्रवीद्वचनंदेशकालोचितमरिंदमम् ॥ वत्सराज्येऽभिषेक्ष्यामस्त्वामद्यपितृशासनात् ॥ ३ ॥ कैकेय्यायाचितंराज्यंत्वदर्थेपुरुषर्षभ ॥ सत्यसंधोदशरथःप्रतिज्ञायददौकिल ॥ ४ ॥ अभिषेकोभवत्वद्यमुनिभिर्मंत्रपूर्वकम् ॥ तच्छ्रुत्वाभरतोऽप्याहममराज्येनकिंमुने ॥ ५ ॥ रामोराजाधिराजश्चवयंतस्यैवकिंकराः ॥ श्वःप्रभातेगमिष्यामोराममानेतुमंजसा ॥ ६ ॥ अहंयूयंमातरश्चकैकेयींराक्षसींविना ॥ हनिष्याम्यधुनैवाहंकैकेयींमातृगंधिनीम् ॥ ७ ॥ किंतुमांनोरघुश्रेष्ठःस्त्रीहंतारंसहिष्यते ॥ तच्छ्रोभूतेगमिष्यामिपादचारेणदंडकान् ॥ ८ ॥ शत्रुघ्नसहितस्तूर्णंयूयमायांतुवानवा ॥ रामोयथावनेयातस्तथाऽहंवल्कलांबरः ॥ ९ ॥ फलमूलकृताहारः शत्रुघ्नसहितोमुने ॥ भूमिशायीजटाधारीयावद्रामोनिवर्तते ॥ १० ॥ इतिंनिश्चित्यभरतस्तूष्णीमेवावतस्थिवान् ॥ साधुसाध्वितितंसर्वेप्रशशंसुर्मुदान्विताः ॥ ११ ॥ ततःप्रभातेभरतंगच्छंतंसर्वसैनिकाः ॥ अनुजग्मुःसुमंत्रेणनोदिताःसाश्वकुंजराः ॥ १२ ॥ कौसल्याद्याराजदारावसिष्ठप्रमुखाद्विजाः ॥ छादयंतोभुवंसर्वेपृष्ठतःपार्श्वतोऽग्रतः ॥ १३ ॥ शृंगवेरपुरंगत्वागंगाकूलेसमंततः ॥ उवासमहतीसेनाशत्रुघ्नपरिचोदिता ॥ १४ ॥ आगतंभरतंश्रुत्वागुहःशंकितमानसः ॥ महत्यासेनयासार्धमागतोभरतःकिल ॥ १५ ॥ पापंकर्तुंनवायातिरामस्याविदितात्मनः ॥ गत्वातद्धृदयंज्ञेयंयदिशुद्धस्तारिष्यति ॥ १६ ॥

यावद्रामोनिवर्ततेतावदेवंतत्समानव्रतोभविष्यामीत्यर्थः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ पृष्ठतःपार्श्वतोऽग्रतोययुरितिशेषः ॥ १३ ॥ १४ ॥ शंकितमानसःकिमयंवनेस्थितस्यापिरामस्यवधार्थंयातीतिशंका । तदेवाह । महत्येति ॥ १५ ॥ अविदितात्मनःअविदितैवद्वृत्तांतस्यरामस्यपापंकर्तुंयातिनवायातीतिशंकितमानसइत्यर्थः ॥ यदिशुद्धस्तदातारिष्यतिगंगामित्यन्वयः ॥ १६ ॥

नोचेत्यद्यशुद्धस्तदामेज्ञातयेनावआकृष्यसर्वतोदिशंपश्यंतःसमायत्ताःसावधानास्तिष्ठंतु । तदुत्तरणप्रतिबंधायेतिशेषः ॥ १७ ॥ १८ ॥ उपायनानिराजयोग्या
निभक्ष्यादीनिस्वदेशस्थानिभरतस्याग्रेनिवेद्य । समंततोदृष्ट्वेतिशेषः । सैनिकेषुविकारिविकारपरीक्षणायसमंततोनिरीक्षणम् ॥ १९ ॥ २० ॥ २१ ॥
अनामयमारोग्यम् ॥ २२ ॥ यतोरामेणालिंगितोऽतोधन्योऽसि ॥ २३ ॥ २४ ॥ २५ ॥ यतोरामस्यप्रियतमोऽतोभाग्यवान् ॥ २६ ॥ २७ ॥ सी

गंगांनोचेत्समाकृष्यनावास्तिष्ठंतुसायुधाः ॥ ज्ञातयोमेसमायत्ताःपश्यंतःसर्वतोदिशम् ॥ १७ ॥ इतिसर्वान्समादिश्यगुहोभरतमागतः ॥
उपायनानिसंगृह्यविविधानिबहून्यपि ॥ १८ ॥ प्रययौज्ञातिभिःसार्धंबहुभिर्विविधायुधैः ॥ निवेद्योपायनान्यग्रेभरतस्यसमंततः ॥१९॥
दृष्ट्वाभरतमासीनंसानुजंसहमंत्रिभिः ॥ चीरांबरंघनश्यामंजटामुकुटधारिणम् ॥ २० ॥ राममेवानुशोचंतंरामरामेतिवादिनम् ॥ ननाम
शिरसाभूमौगुहोऽहमितिचाब्रवीत् ॥ २१॥ शीघ्रमुत्थाप्यभरतोगाढमालिंग्यसादरम् ॥ पृष्ट्वाऽनामयमव्यग्रःसखायमिदमब्रवीत् ॥ २२॥
भ्रातस्त्वंराघवेणात्रसमेतःसमवस्थितः ॥ रामेणालिंगितःसार्द्रनयनेनामलात्मना ॥२३॥धन्योऽसिकृतकृत्योऽसियत्त्वयापरिभाषितः ॥
रामोराजीवपत्राक्षोलक्ष्मणेनचसीतया ॥ २४ ॥ यत्ररामस्त्वयादृष्टस्तत्रमांनयसुव्रत ॥ सीतयासहितोयत्रसुप्तस्तद्दर्शयस्वमे ॥ २५ ॥
त्वंरामस्यप्रियतमोभक्तिमानसिभाग्यवान् ॥ इतिसंस्मृत्यसंस्मृत्यरामंसाश्रुविलोचनः ॥ २६ ॥ गुहेनसहितस्तत्रयत्ररामःस्थि
तोनिशि ॥ ययौददर्शशयनस्थलंकुशसमास्तृतम् ॥२७ ॥ सीताभरणसँल्लग्नस्वर्णबिंदुभिरंचितम् ॥ दुःखसंतप्तहृदयोभरतःपर्यदेवयत्
॥ २८ ॥ अहोऽतिसुकुमारीयासीताजनकनंदिनी ॥ प्रासादेरत्नपर्यंकेकोमलास्तरणेशुभे ॥ २९ ॥ रामेणसहिताशेतेसाकथंकुशविष्टरे
सीतारामेणसहितादुःखेनममदोषतः॥३०॥ धिङ्मांजातोऽस्मिकैकेय्यांपापराशिसमानतः ॥ मन्निमित्तमिदंक्लेशंरामस्यपरमात्मनः॥३१॥

ताभरणघर्षणेनसँल्लग्नायेस्वर्णबिंदवःतदाकारचिह्नानितैरंचितंयुक्तंशयनस्थलंदृष्ट्वापर्यदेवयत् । शुशोचेत्यर्थः ॥ २८ ॥ २९ ॥ साकथंममदोषतःकुशवि
ष्टरेशेते । रामेणसहितेतिपुनरुक्तिःशोकमेवपुष्णाति ॥ ३० ॥ पापराशिसमानतःपापराशिसमानायाम् । सार्वविभक्तिकस्तसिः । तादृश्यांकैकेय्यांयज्जा
तोऽस्मितस्मान्मांधिक् । इदंक्लेशम् । क्लेशशब्दोऽर्धर्चादिः ॥ ३१ ॥

हृष्टधीःहृष्टचित्तः ॥ ३२ ॥ आत्मानंनिंदन्रामंस्तौति । अहमिति ॥ ३३ ॥ ३४ ॥ ३५ ॥ मंदाकिन्याअविदूरतइतिच्छेदः । आर्षोदीर्घः । समीपइत्यर्थः । चित्रकूटमंदाकिन्योर्मध्येइतियावत् ॥ ३६ ॥ नंदात्समृद्धेः । फलमूलादिसमृद्धेरितियावत् । टुनदिसमृद्धावितिधात्वनुसारात् ॥ ३७ ॥ पंचशतानिसमानयदित्यन्वयः । हेतिपादपूरणे ॥ ३८ ॥ ससैन्यस्यभरतस्यतर्तुंतरणार्थमत्यादरप्रदर्शनायभरतोत्तरणायराजनावंराजयोग्यांनावंस्वयमेवानिनाय ॥ ३९ ॥

अहोऽतिसफलंजन्मलक्ष्मणस्यमहात्मनः ॥ राममेवसदाऽन्वेतिवनस्थमपिहृष्टधीः ॥ ३२ ॥ अहंरामस्यदासायेतेषांदासस्याकिंकरः ॥ यदिस्यांसफलंजन्ममममभूयान्नसंशयः ॥ ३३ ॥ भ्रातर्जानासियदितत्कथयस्वममाखिलम् ॥ यत्रातिष्ठतितत्राहंगच्छाम्यानेतुमंजसा ॥ ३४ ॥ गुहस्तंशुद्धहृदयंज्ञात्वासस्नेहमब्रवीत् ॥ देवत्वमेवधन्योऽसियस्यतेभक्तिरीदृशी ॥ ३५ ॥ रामेराजीवपत्राक्षेसीतायांलक्ष्मणेतथा ॥ चित्रकूटाद्रिनिकटेमंदाकिन्याविदूरतः ॥ ३६ ॥ मुनीनामाश्रमपदेरामस्तिष्ठतिसानुजः ॥ जानक्यासहितोनंदात्सुखमास्तेकिलप्रभुः ॥ ३७ ॥ तत्रगच्छामहेशीघ्रंगंगांतर्तुमिहार्हसि ॥ इत्युक्त्वात्वरितंगत्वानावःप्रंचशतानिह ॥ ३८ ॥ समानयत्ससैन्यस्यतर्तुंगंगांमहानदीम् ॥ स्वयमेवानिनायैकांराजनावंगुहस्तदा ॥ ३९ ॥ आरोप्यभरतंतत्रशत्रुघ्नंराममातरम् ॥ वसिष्ठंचतथाऽन्यत्रकैकेयींचान्ययोषितः ॥ ४० ॥ तीर्त्वागंगांययौशीघ्रंभरद्वाजाश्रमंप्रति ॥ दूरेस्थाप्यमहासैन्यंभरतःसानुजोययौ ॥ ४१ ॥ आश्रमेमुनिमासीनंज्वलंतमिवपावकम् ॥ दृष्ट्वाननामभरतःसाष्टांगमतिभक्तितः ॥ ४२ ॥ ज्ञात्वादाशरथिंप्रीत्यापूजयामासमौनिराट् ॥ पप्रच्छकुशलंदृष्ट्वाजटावल्कलधारिणम् ॥ ४३ ॥ राज्यंप्रशासतस्तेऽद्यकिमेतद्वल्कलादिकम् ॥ आगतोऽसिकिमर्थंत्वंविपिनंमुनिसेवितम् ॥ ४४ ॥ भरद्वाजवचःश्रुत्वाभरतः साश्रुलोचनः ॥ सर्वंजानासिभगवन्सर्वभूताशयस्थितः ॥ ४५ ॥ तथाऽपिपृच्छसेकिंचित्तदनुग्रहएवमे ॥ कैकेय्यायत्कृतंकर्मरामराज्यविघातनम् ॥ ४६ ॥

तथाकैकेयीमन्ययोषितश्चान्यत्रान्यराजनावीत्यर्थः । रामेदुष्टत्वाचरणप्रयुक्तोऽयंकैकेय्याअनादरः । अतारयदितिशेषः ॥ ४० ॥ भरद्वाजाश्रमपर्यंतंसेनयासहगत्वाततःसेनयाआश्रमोपरोधोमाभूदितिकिंचिद्दूरेसंस्थाप्यस्वयंसानुजोययौ । भरद्वाजाश्रमद्वारंप्रतीतिशेषः ॥ ४१ ॥ ४२ ॥ जटादिधारिणंदृष्ट्वावक्ष्यमाणंपप्रच्छ ॥ ४३ ॥ ४४ ॥ सर्वभूताशयस्थितः । सर्वभूताशयस्थेनांतर्यामिणातत्त्वज्ञतयाऽभेदादितिभावः ॥ ४५ ॥ ४६ ॥

नजानामीत्यर्थंशपथेनप्रत्याययति । भवत्पादेति ॥ ४७ ॥ ज्ञातुमर्हसीति । इत्याहेतिशेषः ॥ ४८ ॥ शाश्वतःकिंकरइत्यनेनरवस्यचक्रावतारत्वंसूचितम् ॥
॥ ४९ ॥ ५० ॥ दासोऽहमतिनीचवत्अतिनम्रःसन्सेवे । सेविष्येइत्यर्थः । वर्त्तमानसामीप्येलट् ॥ ५१ ॥ भरतस्येत्युदीरितंवचइत्यन्वयः । शेषेषष्ठी
॥ ५२ ॥ लक्ष्मणादपिपरोऽधिकइत्यर्थः । रामेइतिविषयसप्तमी ॥ ५३ ॥ ५४ ॥ यथाज्ञापयतीतिच्छंदोभंगआर्षः ॥ ५५ ॥ यस्ययन्मनोरथविषयमिष्टंत

वनवासादिकंवापिनहिजानामिकिंचन ॥ भवत्पादयुगंमेऽद्यप्रमाणंमुनिसत्तम ॥ ४७ ॥ इत्युक्त्वापादयुगलंमुनेःस्पृष्ट्वाऽर्तमानसः ॥ ज्ञा
तुमर्हसिमांदेवशुद्धोवाऽशुद्धएववा ॥ ४८ ॥ ममराज्येनकिंस्वामिन्रामेतिष्ठतिराजनि ॥ किंकरोऽहंमुनिश्रेष्ठरामचंद्रस्यशाश्वतः ॥ ४९ ॥
अतोगत्वामुनिश्रेष्ठरामस्यचरणांतिके ॥ पतित्वाराज्यसंभारान्समर्प्यात्रैवराघवम् ॥ ५० ॥ अभिषेक्ष्येवसिष्ठाद्यैःपौरजानपदैःसह ॥
नेष्येऽयोध्यांरमानाथंदासःसेवेऽतिनीचवत् ॥५१॥ इत्युदीरितमाकर्ण्यभरतस्यवचोमुनिः ॥ आलिंग्यमूर्ध्न्यवघ्रायप्रशशंससविस्मयः॥
॥ ५२ ॥ वत्सज्ञातंपुरैवैतद्भविष्यंज्ञानचक्षुषा ॥ माशुचस्त्वंपरोभक्तःश्रीरामेलक्ष्मणादपि ॥ ५३ ॥ आतिथ्यंकर्तुमिच्छामिससैन्यस्य
तवानघ ॥ अद्यभुक्त्वाससैन्यस्त्वंश्वोगंतारामसन्निधिम् ॥ ५४ ॥ यथाज्ञापयतिभवांस्तथेतिभरतोऽब्रवीत् ॥ भरद्वाजस्त्वपःस्पृष्ट्वामौ
नीहोमगृहेस्थितः ॥ ५५ ॥ दध्यौकामदुघांकामवर्षिणींकामदोमुनिः ॥ असृजत्कामधुक्सर्वंयथाकाममलौकिकम् ॥ ५६ ॥ भरतस्य
ससैन्यस्ययथेष्टंचमनोरथम् ॥ तथाववर्षसकलंतृप्तास्तेसर्वसैनिकाः ॥ ५७ ॥ वसिष्ठंपूजयित्वाऽग्रेशास्त्रदृष्टेनकर्मणा ॥ पश्चात्ससैन्यंभ
रतंतर्पयामासयोगिराट्॥५८॥उषित्वादिनमेकंतुआश्रमेस्वर्गसन्निभे ॥ अभिवाद्यपुनःप्रातर्भरद्वाजंसहानुजः ॥५९॥भरतस्तुकृतानुज्ञःप्रय
यौरामसन्निधिम् ॥ चित्रकूटमनुप्राप्यदूरेसंस्थाप्यसैनिकान् ॥ रामसंदर्शनाकांक्षीप्रययौभरतःस्वयम् ॥६०॥ शत्रुघ्नेनसुमंत्रेणगुहेनचपरं
तपः ॥ तपस्विमंडलंसर्वंविचिन्वानोन्यवर्तत॥६१॥अदृष्ट्वारामभवनमपृच्छदृषिमंडलम्॥कुत्रास्तेसीतयासार्धंलक्ष्मणेनरघूत्तमः॥६२॥

त्सर्वमलौकिकंलौकिकसामग्रीजन्यविलक्षणमसृजत् ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ प्रययौभरतः । रामाश्रमद्वारंप्रतीतिशेषः ॥ ६० ॥ शत्रुघ्नादिभिःसह
सर्वंतपस्विमंडलंतपस्विनामाश्रममंडलंविचिन्वानोरामाश्रममलब्ध्वान्यवर्ततनिवृत्तव्यापारएवासीत् ॥ ६१ ॥ तत्रऋषिमंडलमपृच्छत् ॥ ६२ ॥

विविक्तमेकांतदेशवर्ति ॥ ६३ ॥ कदलीखंडःकदलीसमूहः ॥ ६४ ॥ एवंमुनिभिर्दर्शितरघुश्रेष्ठभवनमग्रतोभरतःसमालोक्यमंत्रिणासहहर्षाद्ययाविातिसंबंधः ॥ ६५ ॥ रामाभिरामंरामेणरामवासेनाभिरामम् ॥ ६६ ॥ इतिश्रीमत्सकलराजविपदुद्ध० सेतौ० अयोध्याकांडेअष्टमःसर्गः ॥ ८ ॥ ॥ नवमेभरतोगत्वा श्रीरामस्यैवसान्निधौ । तेनसार्धंगंतुमनानागमद्गुरुबोधितः ॥ १ ॥ सीतारामपदयुक्तत्वादिविशिष्टमाश्रमपदसमीपमाश्रमस्थानसमीपदेशंगत्वा ॥ १ ॥ तत्रवज्रांकु

ऊचुरग्रेगिरेःपश्चाद्गंगायाउत्तरेतटे ॥ विविक्तंरामसदनंरम्यकाननमंडितम् ॥ ६३ ॥ सफलैराम्रपनसैःकदलीखंडसंवृतम् ॥ चंपकैःकोविदारैश्चपुन्नागैर्विपुलैस्तथा ॥ ६४ ॥ एवंदर्शितमालोक्यमुनिभिर्भरतोऽग्रतः ॥ हर्षाद्ययौरघुश्रेष्ठभवनंमंत्रिणासह ॥ ६५ ॥ ददर्शदूरादतिभासुरंशुभंरामस्यगेहंमुनिवृंदसेवितम् ॥ वृक्षाग्रसँल्लग्नसुवल्कलाजिनंरामाभिरामंभरतःसहानुजः ॥ ६६ ॥ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेअयोध्याकांडे अष्टमःसर्गः॥८॥ ॥अथगत्वाऽऽश्रमपदसमीपंभरतोमुदा॥सीतारामपदैर्युक्तंपवित्रमतिशोभनम्॥१॥ सतत्रवज्रांकुशवारिजांचितध्वजादिचिह्नानिपदानिसर्वतः ॥ ददर्शरामस्यभुवोऽतिमंगलान्यचेष्टयत्पादरजःसुसानुजः ॥ २ ॥ अहोसुधन्योऽहममूनिरामपादारविंदांकितभूतलानि ॥ पश्यामियत्पादरजोविमृग्यंब्रह्मादिदेवैःश्रुतिभिश्चनित्यम् ॥ ३ ॥ इत्यद्भुतप्रेमरसाप्लुताशयोविगाढचेतारघुनाथभावने ॥ आनंदजाश्रुस्नपितस्तनांतरःशनैरवापाश्रमसान्निधिंहरेः ॥ ४ ॥ सतत्रदृष्ट्वारघुनाथमास्थितंदूर्वादलश्यामलमायतेक्षणम् ॥ जटाकिरीटंनववल्कलांबरंप्रसन्नवक्त्रंतरुणारुणद्युतिम् ॥ ५ ॥ विलोकयंतंजनकात्मजांशुभांसौमित्रिणासेवितपादपंकजम् ॥ तदाऽभिदुद्रावरघूत्तमंशुचाहर्षाच्चतत्पादयुगंत्वराऽग्रहीत् ॥ ६ ॥ रामस्तमाकृष्यसुदीर्घबाहुदोर्भ्यांपरिष्वज्यसिषिंचनेत्रजैः ॥ जलैरथांकोपरिसंन्यवेशयत्पुनःपुनःसंपरिषस्वजेविभुः ॥ ७ ॥ अथतामातरःसर्वाःसमाजग्मुस्त्वरान्विताः ॥ राघवंद्रष्टुकामास्तास्तृषार्तागौर्यथाजलम् ॥ ८ ॥

शकमलपूजितध्वजादिचिह्नयुतानिपदानिददर्श । ध्वजेपूजितत्वंस्पष्टरेखत्वम् दृष्ट्वाचतत्पादचिह्नितदेशरजःसुअचेष्टयत्लुलुठे ॥ २ ॥ यत्पादरजइत्यादिव्याख्यातंप्राक् ॥ ३ ॥ अद्भुतोयःप्रेमरसःप्रीतिरसस्तेनाप्लुतोव्याप्तआशयोंऽतःकरणंयस्य रघुनाथभावनेविगाढचेताःतत्परचित्तइत्यर्थः ॥ ४ ॥ ५ ॥ त्वरात्वरयेत्यर्थः ॥ ६ ॥ ७ ॥ तृषार्तागौर्यथाजलंप्रतिगच्छतिएवंमातरोराघवंप्रतिजग्मुः ॥ ८ ॥

साश्रुयथातथाववंदे । साचपुत्रमालिंग्यभर्तृवियोगस्मरणेनातीवदुःखिता । आसीदितिशेषः ॥ ९ ॥ इतराश्चजननीस्तथासाश्रुनत्वा । स्थितइतिशेषः ॥ १० ॥
धन्योऽस्मि । त्वद्दर्शनादितिभावः । यथार्हंयथायोग्यम् ॥ ११ ॥ पितामेकुशलीतिप्रश्नः । स्ववियोगेकुशलमसंभाव्यमित्याशयेनाह । किंवेति । तथैवसंभावन
याह । अतिदुःखितःप्राणवियोगजनकपीडयापीडितःकिमाह ॥ १२ ॥ रामरामेतीत्यादिवदन्निति शेषः ॥ १३ ॥ कर्णशूलाभंकर्णयोःशूलरोगतुल्यम् ॥ १४ ॥
घृणाकरदयासमुद्र ॥ १५ ॥ अतोभृशंरामविलापादप्यधिकमित्यर्थः ॥ १६ ॥ शांतवचनैःपूर्वराजवियोगचरितैःसंसारानित्यताप्रतिपादकैर्वचनैस्तत्त्वज्ञा

रामःस्वमातरंवीक्ष्यद्रुतमुत्थायपादयोः ॥ ववंदेसाश्रुसापुत्रमालिंग्यातीवदुःखिता ॥ ९ ॥ इतराश्चतथानत्वाजननीरघुनंदनः ॥ ततः
समागतंदृष्ट्वावसिष्ठंमुनिपुंगवम् ॥ १० ॥ साष्टांगंप्रणिपत्याहधन्योऽस्मीतिपुनःपुनः ॥ यथाऽर्हमुपवेश्याहसर्वानेवरघूद्वहः ॥ ११ ॥
पितामेकुशलीकिंवामांकिमाहातिदुःखितः ॥ वसिष्ठस्तमुवाचेदंपितातेरघुनंदन ॥ १२ ॥ त्वद्वियोगाभितप्तात्मात्वामेवपरिचिंतयन् ॥
रामरामेतिसीतेतिलक्ष्मणेतिममारह ॥ १३ ॥ श्रुत्वातत्कर्णशूलाभंगुरोर्वचनमंजसा ॥ हाहतोऽस्मीतिपतितोरुदन्रामःसलक्ष्मणः ॥
॥ १४ ॥ ततोऽनुरुरुदुः सर्वामातरश्चतथाऽपरे ॥ हाताततमांपरित्यज्यक्कगतोऽसिघृणाकर ॥ १५ ॥ अनाथोऽस्मिमहाबाहोमांकोवाला
लयेदितः ॥ सीताचलक्ष्मणश्चैवविलेपतुरतोभृशम् ॥ १६ ॥ वसिष्ठःशांतवचनैःशमयामासतांशुचम् ॥ ततोमंदाकिनींगत्वास्नात्वाते
वीतकल्मषाः ॥ १७ ॥ राज्ञेददुर्जलंतत्रसर्वेतेजलकांक्षिणे ॥ पिंडान्निर्वापयामासरामोलक्ष्मणसंयुतः ॥ १८ ॥ इंगुदीफलपिण्याकरचिता
न्मधुसंप्लुतान् ॥ वयंयदन्नाःपितरस्तदन्नाःस्मृतिनोदिताः ॥ १९ ॥ इतिदुःखाश्रुपूर्णाक्षःपुनःस्नात्वागृहंययौ ॥ सर्वेरुदित्वासुचिरंस्ना
त्वाजग्मुस्तथाऽऽश्रमम् ॥ २० ॥ तस्मिंस्तुदिवसेसर्वेउपवासंप्रचक्रिरे ॥ ततःपरेद्युर्विमलेस्नात्वामंदाकिनीजले ॥ २१ ॥ उपविष्टंसमा
गम्यभरतोराममब्रवीत् ॥ रामराममहाभागस्वात्मानमभिषेचय ॥ २२ ॥ राज्यंपालयपित्र्यंतेज्येष्ठस्त्वंमेपितातथा ॥ क्षत्रियाणामयं
धर्मोयत्प्रजापरिपालनम् ॥ २३ ॥

नोपदेशैश्च ॥ १७ ॥ जलकांक्षिणे रामादितिशेषः ॥ १८ ॥ इंगुदीतापसतरुः । ननुराजायोग्यमेतत्तत्राह । वयमिति ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ पित्र्यंपितुरागतम् ।
यथापिताज्येष्ठस्त्वंमेतथापितृसदृशः । एवंचपितरिजीवतियथाराज्यानधिकारस्तथात्वयिजीवत्यपीतिभावः । किंचतवाप्ययमेवधर्मइत्याह । क्षत्रियाणामिति ॥ २३ ॥

तस्मादिक्ष्वेति । तंतवे वंशाविच्छेदाय ॥ २४ ॥ यन्मेमातुःकिंचिद्दुष्कृतंवत्स्मर्तुंनार्हसीतिसंबंधः ॥ २५ ॥ २६ ॥ अतिभक्तितःभरतस्यातिभक्तिंदृष्ट्वेत्यर्थः ॥ २७ ॥ त्वदुक्तंतथैवसत्यमेवतथाऽपिपित्राज्ञापालनंमेआवश्यकमित्याह । किंत्विति । नवपंचचतुर्दश ॥ २८ ॥ अखिलंदत्तमित्यब्रवीदित्यन्वयः ॥ २९ ॥ ॥ ३० ॥ अतियत्नतःपितृवचनकर्तव्यत्वेहेतुमाह । पितुरिति । स्वतंत्रःस्वेच्छाचारी ॥ ३१ ॥ ३२ ॥ कामुकत्वादेवमूढधीः यदिवक्ष्यति यद्वक्ष्यतीत्यर्थः ।

इक्ष्वायज्ञैर्बहुविधैःपुत्रानुत्पाद्यतंतवे ॥ राज्येपुत्रंसमारोप्यगमिष्यसिततोवनम् ॥ २४ ॥ इदानींवनवासस्यकालोनैवप्रसीदमे ॥ मातुर्मेदुष्कृतंकिंचित्स्मर्तुंनार्हसिपाहिनः ॥ २५ ॥ इत्युक्त्वाचरणौभ्रातुःशिरस्याधायभक्तितः ॥ रामस्यपुरतःसाक्षाद्दंडवत्पतितोभुवि ॥२६॥ उत्थाप्यराघवःशीघ्रमारोप्यांकेऽतिभक्तितः ॥ उवाचभरतंरामःस्नेहार्द्रनयनःशनैः ॥ २७ ॥ शृणुवत्सप्रवक्ष्यामित्वयोक्तंयत्तथैवतत् ॥ किंतुमामब्रवीत्तातोनववर्षाणिपंचच ॥ २८ ॥ उषित्वादंडकारण्येपुरंपश्चात्समाविश ॥ इदानींभरतायेदंराज्यंदत्तंमयाऽखिलम् ॥ २९॥ ततःपित्रैवमुव्यक्तंराज्यंदत्तंतवैवहि ॥ दंडकारण्यराज्यंमेदत्तंपित्रातथैवच ॥ ३० ॥ अतःपितुर्वचःकार्यमावाभ्यामतियत्नतः ॥ पितुर्वचनमुल्लंघ्यस्वतंत्रोयस्तुवर्तते ॥ ३१ ॥ सजीवन्नेवमृतकोदेहांतेनिरयंव्रजेत् ॥ तस्माद्राज्यंप्रशाधित्वंवयंदंडकपालकाः ॥ ३२ ॥ भरतस्त्वब्रवीद्रामंकामुकोमूढधीःपिता ॥ स्त्रीजितोभ्रांतहृदयउन्मत्तोयदिवक्ष्यति ॥ तत्सत्यमितिनग्राह्यंभ्रांतवाक्यंयथासुधीः ॥ ३३ ॥ रामउवाच ॥ नस्त्रीजितः पिताब्रूयान्नकामीनैवमूढधीः ॥ पूर्वंप्रतिश्रुतंतस्यैसत्यवादीददौभयात् ॥ ३४ ॥ असत्याद्भीतिरधिकामहतांनरकादपि ॥ करोमीत्यहमप्येतत्सत्यंतस्यैप्रतिश्रुतम् ॥ ३५ ॥ कथंवाक्यमहंकुर्यामसत्यंराघवोहिसन् ॥ इत्युदीरितमाकर्ण्यरामस्यभरतोऽब्रवीत् ॥ ३६ ॥

सुधीःपुरुषोयथाभ्रांतवाक्यंसत्यमितिनगृह्णातितथात्वयोक्तविशिष्टपितृवाक्यंनग्राह्यमित्यर्थः ॥ ३३ ॥ ब्रूयात् उक्तवानित्यर्थः । नञ्त्रयमेकैकमपितत्रासंभवि किंपुनःसमुदितमितिबोधयितुम् । प्रतिश्रुतंप्रतिज्ञातम् । भयात्प्रतिज्ञाभंगभयात् ॥ ३४ ॥ यतोमहतांनरकादप्यधिकाऽसत्याद्भीतिः । तेषांफलवोऽप्युपायेऽतिभयमित्यर्थः । अहमपिराघवएवसन्तस्यैकैकेय्यैसत्यंकरोमिवनवासादिकमित्येतत्प्रतिश्रुतंवाक्यंकथमसत्यंकुर्यामित्यर्थः ॥ ३५ ॥ ३६ ॥

तथैवत्वत्प्रतिनिधितयात्वद्वदेवेत्यर्थः ॥ ३७ ॥ व्यत्ययंराज्यवनवासयोरित्यर्थः ॥ ३८ ॥ आगमिष्यामिवनमितिशेषः ॥ ३९ ॥ निश्चयंकृत्वोवाचेतिशेषः । आतपेइत्यनेनसर्वथाजीविताशापरित्यागः । प्राङ्मुखउपविवेश । संधिरार्षः ॥ ४० ॥ नेत्रांतसंज्ञांनेत्रांतेनास्योत्थापनंकुर्वितिसूचनाम् ॥ ४१ ॥ ४२ ॥ सा

तथैवचीरवसनोवनेवत्स्यामिसुव्रत ॥ चतुर्दशसमास्त्वंतुराज्यंकुरुयथासुखम् ॥ ३७ ॥ रामउवाच ॥ पित्रादत्तंतवैवैतद्राज्यंमह्यंवनंददौ ॥ व्यत्ययंयद्यहंकुर्यामसत्यंपूर्ववत्स्थितम् ॥ ३८ ॥ भरतउवाच ॥ अहमप्यागमिष्यामिसेवेत्वांलक्ष्मणोयथा ॥ नोचेत्प्रायोपवेशेनत्यजाम्येतत्कलेवरम् ॥ ३९ ॥ इत्येवंनिश्चयंकृत्वादर्भानास्तीर्यचातपे ॥ मनसापिविनिश्चित्यप्राङ्मुखोपविवेशसः ॥ ४० ॥ भरतस्यापिनिर्बंधंदृष्ट्वारामोऽतिविस्मितः ॥ नेत्रांतसंज्ञांगुरवेचकाररघुनंदनः ॥ ४१ ॥ एकांतेभरतंप्राहवसिष्ठोज्ञानिनांवरः ॥ वत्सगुह्यंशृणुष्वेदंममवाक्यात्सुनिश्चितम् ॥ ४२ ॥ रामोनारायणःसाक्षाद्ब्रह्मणायाचितःपुरा ॥ रावणस्यवधार्थायजातोदशरथात्मजः ॥ ४३ ॥ योगमायाऽपिसीतेतिजाताजनकनंदिनी ॥ शेषोऽपिलक्ष्मणोजातोराममन्वेतिसर्वदा ॥ ४४ ॥ रावणंहंतुकामास्तेगमिष्यंतिनसंशयः ॥ कैकेय्यावरदानादियच्चान्निष्ठुरभाषणम् ॥ ४५ ॥ सर्वंदेवकृतंनोचेदेवंसाभाषयेत्कथम् ॥ तस्मात्त्यजाग्रहंतातरामस्यविनिवर्तने ॥ ४६ ॥ निवर्तस्वमहासैन्यैर्भ्रातृभिःसहितःपुरम् ॥ रावणंसकुलंहत्वाशीघ्रमेवागमिष्यति ॥ ४७ ॥ इतिश्रुत्वागुरोर्वाक्यंभरतोविस्मयान्वितः ॥ गत्वासमीपंरामस्यविस्मयोत्फुल्ललोचनः ॥ ४८ ॥ पादुकेदेहिराजेंद्रराज्यायतवपूजिते ॥ तयोःसेवांकरोम्येवयावदागमनंतव ॥ ४९ ॥ इत्युक्त्वापादुकेदिव्येयोजयामासपादयोः ॥ रामस्यतेददौरामोभरतायातिभक्तितः ॥ ५० ॥ गृहीत्वापादुकेदिव्येभरतोरत्नभूषिते ॥ रामंपुनःपरिक्रम्यप्रणनामपुनःपुनः ॥ ५१ ॥ भरतःपुनराहेदंभक्त्यागद्गदयागिरा ॥ नवपंचसमांतेतुप्रथमेदिवसेयदि ॥ ५२ ॥ नागमिष्यसिचेद्रामप्रविशामिमहानलम् ॥ बाढमित्येवतंरामोभरतंसंन्यवर्तयत् ॥ ५३ ॥

क्षात्नारायणःसर्वांतर्यामीत्यर्थः ॥ ४३ ॥ योगमायातच्छक्तिरूपा ॥ ४४ ॥ ४५ ॥ सादशरथस्त्रीअत्यंतंरामेप्रीतिमतीच ॥ ४६ ॥ ४७ ॥ ४८ ॥ राज्याय राज्यपालनसामर्थ्यलाभाय ॥ ४९ ॥ ५० ॥ ५१ ॥ नवपंचसमांतेचतुर्दशवर्षांते ॥ ५२ ॥ ५३ ॥

॥ ५४ ॥ स्रवन्नेत्रजलासतीआकुलाकृतापराधत्वादतिव्याकुलेत्यर्थः । राज्यविघातनं राज्यविघातः ॥ ५५ ॥ मायामोहितचेतसेत्यनेनवस्तुतोममापराधएवनेतिसूचितमंगीकृत्यापिस्वापराधमाह । क्षमस्वेति । क्षमैवसारःसर्वगुणप्रधानंयेषामित्यर्थः ॥५६॥ संप्रतिमायापगमंध्वनयति । त्वमिति । नन्वहंमनुष्योनपरमात्मेतिचेत्तत्राह । मायेति । एषावेमायैवेतिभावः । त्वयैवेति । तस्मादंतर्याम्येवत्वमितिभावः । एवंचत्वत्प्रेरणयैवतथाकृतवत्यामेनापराधइतिध्वनिः ॥ ५७ ॥ तदेवोपपादयति । त्वदिति । स्वतोऽस्वतंत्रंत्वत्प्रेरणांविनाकिंकरोति । नकिमपिकरोतीतिभावः । कुहकोविस्मापकःगुप्ततयातत्सूत्रचालनेनतन्नर्तनाद्विस्मयोत्पादकइतियावत् ॥ ५८ ॥ त्वदधीनेति अनेनमायायास्तत्कार्यस्यातिजडत्वंसूचितम् । नन्वेवंस्वदुःखफलकंत्वत्प्रेरणंमयाकथंकर्तव्यंतत्राह । देवकार्यंकरिष्यतेति॥ ॥ ५९ ममया । शेषेषष्ठी । प्रतीतोऽसिवास्तवस्वरूपेणज्ञातोऽसि । इदमपित्वत्प्रसादादेवेतिभावः । अन्यथादेवानामप्यविषयस्यकथंमज्ज्ञानविषयतास्यादितिभावः ॥ ६० ॥ अतःप्रार्थयते । पाहीति । पु[?]वित्तादिविषयस्नेहरूपंपाशमित्यर्थः ॥ ६१ ॥ त्वज्ज्ञानामलखड्गेनेतिपूर्वान्वयि ॥६२॥६३॥

ससैन्यःसवसिष्ठश्चशत्रुघ्नसहितःसुधीः ॥ मातृभिर्मंत्रिभिःसार्धंगमनायोपचक्रमे ॥५४॥ कैकेयीराममेकान्तेस्रवन्नेत्रजलाकुला ॥ प्रांजलिःप्राहहेरामतवराज्यविघातनम् ॥५५॥ कृतंमयादुष्टधियामायामोहितचेतसा ॥ क्षमस्वममदौरात्म्यंक्षमासाराहिसाधवः ॥ ५६ ॥ त्वंसाक्षाद्विष्णुरव्यक्तःपरमात्मासनातनः ॥ मायामानुषरूपेणमोहयस्यखिलंजगत् ॥ त्वयैवप्रेरितोलोकःकुरुतेसाध्वसाधुवा ॥ ५७ ॥ त्वदधीनमिदंविश्वमस्वतंत्रंकरोतिकिम् ॥ यथाकृत्रिमनर्तक्योनृत्यंतिकुहकेच्छया ॥ ५८ ॥ त्वदधीनातथामायानर्तकीबहुरूपिणी ॥ त्वयैवप्रेरिताऽहंचदेवकार्यंकरिष्यता ॥ ५९ ॥ पापिष्ठंपापमनसाकर्माचरमरिंदम ॥ अद्यप्रतीतोऽसिममदेवानामप्यगोचरः ॥ ६० ॥ पाहिविश्वेश्वरानंतजगन्नाथनमोऽस्तुते ॥ छिंधिस्नेहमयंपाशंपुत्रवित्तादिगोचरम् ॥ ६१ ॥ त्वज्ज्ञानामलखड्गेनत्वामहंशरणंगता ॥ कैकेय्यावचनंश्रुत्वारामःसस्मितमब्रवीत् ॥ ६२ ॥ यदाहमांमहाभागेनानृतंसत्यमेवतत् ॥ मयैवप्रेरितावाणीतववक्त्राद्विनिर्गता ॥ ६३ ॥

देवकार्यरूपार्थस्यसिद्ध्यर्थमित्यर्थः॥६४॥मद्भक्त्यासर्वविषयेषुस्नेहत्यागपूर्वकमहर्निशंमद्भावनमेवमद्भक्तिस्तया।ममरागद्वेषाभावान्मत्तोभयंमास्त्वित्याह।अहमिति।
ममद्वेष्योवाप्रियोवानास्ति कल्पकस्येवमायाविनोयथा स्वमायाकल्पितपदार्थेषुद्वेषप्रीतिराहित्यम्। स्वकल्पितत्वेनमिथ्यात्वनिश्चयात्। तथाममापिसर्वत्रमिथ्यात्व
निश्चयात्। नद्वेषरागाविति। नमत्तस्तेभयमितिभावः। तथाऽप्ययंमेस्वभावइत्याह।भजतोऽन्विति। अतोनवैषम्यनैर्घृण्ये ॥ ६५ ॥ ६६ ॥ नतुतत्वतःअहंताद
शइतिशेषः। भवापहमित्यनेनभयांतरस्यावकाशएवनेतिसूचितम् ॥ ६७ ॥ मांस्मरंतीतिष्ठमांजगत्प्रेरकत्वेनस्मरंतीतिष्ठ। एवंचस्वस्मिन्नस्वतंत्रत्वाभिमानापगमा

देवकार्यार्थसिद्ध्यर्थमत्रदोषःकुतस्तव ॥ गच्छत्वंहृदिमांनित्यंभावयंतीदिवानिशम् ॥ ६४ ॥ सर्वत्रविगतस्नेहामद्भक्त्यामोक्ष्यसेऽचिरा
त् ॥ अहंसर्वत्रसमदृग्द्वेष्योवाप्रियएववा ॥ ६५ ॥ नास्तिमेकल्पकस्येवभजतोऽनुभजाम्यहम् ॥ मन्मायामोहितधियोमामंबमनुजा
कृतिम् ॥ ६६ ॥ सुखदुःखाद्यनुगतंजानंतिनतुतत्त्वतः ॥ दिष्ट्यामद्गोचरंज्ञानमुत्पन्नंतेभवापहम् ॥ ६७ ॥ स्मरंतीतिष्ठभवनेलिप्यसेन
चकर्मभिः ॥ इत्युक्तासापरिक्रम्यरामंसानंदविस्मया ॥ ६८ ॥ प्रणम्यशतशोभूमौययौगेहंमुदान्विता ॥ भरतस्तुसहामात्यैर्मातृभिर्गुरु
णासह ॥ ६९ ॥ अयोध्यामगमच्छीघ्रंराममेवानुचिंतयन् ॥ पौरजानपदान्सर्वानयोध्यायामुदारधीः॥ ७० ॥ स्थापयित्वायथान्यायंनं
दिग्रामंययौस्वयम् ॥ तत्रसिंहासनेनित्यंपादुकेस्थाप्यभक्तितः ॥ ७१ ॥ पूजयित्वायथारामंगंधपुष्पाक्षतादिभिः ॥ राजोपचारैरखिलैः
प्रत्यहंनियतव्रतः॥७२॥फलमूलाशनोदांतोजटावल्कलधारकः॥अधःशायीब्रह्मचारीशत्रुघ्नसहितस्तदा ॥७३॥ राजकार्याणिसर्वाणिया
वंतिपृथिवीतले ॥ तानिपादुकयोःसम्यङ्निवेदयतिराघवः ॥ ७४ ॥ गणयन्दिवसान्येवरामागमनकांक्षया ॥ स्थितोरामार्पितमनाःसा
क्षाद्ब्रह्ममुनिर्यथा ॥ ७५ ॥ रामस्तुचित्रकूटाद्रौवसन्मुनिभिरावृतः ॥ सीतयालक्ष्मणेनापिकिंचित्कालमुपावसत् ॥ ७६ ॥

न्नकर्मभिर्लिप्यसे सोऽभिमानएवकर्मलेपकइतिभावः ॥ ६८ ॥ ६९ ॥ ७० ॥ स्थाप्यस्थापयित्वा। आर्षोल्यप् ॥ ७१ ॥ राजोपचारैःराजयोग्यैःपुष्पादि
भीराममिवतेपूजयित्वेत्यर्थः ॥ ७२ ॥ भरतस्यापिरामसमव्रतत्वमाह। फलेति। दांतोजितेंद्रियः ॥ ७३ ॥ ७४ ॥ ब्रह्ममुनिःब्रह्मर्षिः ॥ ७५ ॥ रामःचित्र
कूटाद्रौमुनिभिःसीतयालक्ष्मणेनावृतोवसन्नपिकिंचित्कालमेवोपावसदित्यन्वयः। एवेत्यस्याध्याहारः। नबहुकालमित्यर्थः ॥ ७६ ॥

वत्रहेतुमाह । नागराश्चेति । लक्ष्मणेनचेति सहेतिशेषः ॥ ७७ ॥ कार्यंरावणवधरूपम् ॥ ७८ ॥ जनसंबाधवर्जितंनागरजनसंबाधहीनम् ॥ ७९ ॥ गत्वा अत्राश्रममितिशेषः । अत्रिंदंडवत्प्रणम्यरामोऽहमभिवादयेइत्याहेत्यन्वयः ॥८० ॥ प्रसंगादागत्यापित्वद्दर्शनेनाहंधन्यःकिंवक्तव्यंत्वद्दर्शनोद्देशेनैवागतोधन्यइति ॥ ८१ ॥ परंहरिमंतर्यामिरूपम् । उपासनाभिस्त्वत्सारूप्यंयेगतास्तद्व्यवच्छेदायपरमिति ॥ ८२ ॥ लक्ष्मणंचैवेति । दृष्टेतिशेषः । वाक्यमब्रवीत् । राममिति

नागराश्चसदायांतिरामदर्शनलालसाः ॥ चित्रकूटस्थितंज्ञात्वासीतयालक्ष्मणेनच ॥ ७७ ॥ दृष्ट्वातज्जनसंबाधंरामस्तत्याजतंगिरिम् ॥ दंडकारण्यगमनेकार्यमप्यनुचिंतयन् ॥ ७८ ॥ अन्वगात्सीतयाभ्रात्राह्यत्रेराश्रममुत्तमम् ॥ सर्वत्रसुखसंवासंजनसंबाधवर्जितम् ॥ ७९॥ गत्वामुनिमुपासीनंभासयंतंतपोवनम् ॥ दंडवत्प्रणिपत्याहरामोऽहमभिवादये ॥ ८० ॥ पितुराज्ञांपुरस्कृत्यदंडकानहमागतः ॥ वनवासमिषेणापिधन्योऽहंदर्शनात्तव ॥ ८१ ॥ श्रुत्वारामस्यवचनंरामंज्ञात्वाहरिंपरम् ॥ पूजयामासविधिवद्भक्त्यापरमयामुनिः ॥ ८२ ॥ वन्यैःफलैःकृतातिथ्यमुपविष्टंरघूत्तमम् ॥ सीतांचलक्ष्मणंचैवसंतुष्टोवाक्यमब्रवीत् ॥ ८३ ॥ भार्यामेऽतीवसंवृद्धाह्यनसूयेतिविश्रुता ॥ तपश्चरंतीसुचिरंधर्मज्ञाधर्मवत्सला॥८४॥अंतस्तिष्ठतितांसीतापश्यत्वरिनिषूदन ॥ तथेतिजानकींप्राहरामोराजीवलोचनः ॥८५॥गच्छदेवींनमस्कृत्यशीघ्रमेहिपुनःशुभे ॥ तथेतिरामवचनंसीताचापितथाऽकरोत् ॥ ८६ ॥ दंडवत्पतितामग्रेसीतांदृष्ट्वाऽतिहृष्टधीः ॥ अनसूयासमालिंग्यवत्सेसीतेतिसादरम् ॥ ८७ ॥ दिव्येददौकुंडलेद्वेनिर्मितेविश्वकर्मणा ॥ दुकूलेद्वेददौतस्यैनिर्मलेभक्तिसंयुता ॥ ८८ ॥ अंगरागंचसीतायैददौदिव्यंशुभानना ॥ नत्यक्ष्यतेऽङ्गरागेणशोभात्वांकमलानने ॥ ८९ ॥ पातिव्रत्यंपुरस्कृत्यराममन्वेहिजानकि ॥ कुशलीराघवोयातुत्वयासहपुनर्गृहम् ॥ ९० ॥

शेषः ॥ ८३ ॥ अतीवसंवृद्धाअत्यंतवृद्धतरा धर्मवत्सलाधर्मप्रिया ॥ ८४ ॥ ८५ ॥ सीतारामवचनंतथाअवश्यमित्यंगीकृत्यतथाऽकरोत्तत्समीपगमनमकरोत् ॥ ८६ ॥ सीतेइतिच्छेदः । संधिरार्षः ॥ ८७ ॥ भक्तिसंयतासाक्षादीश्वरीयमितिभक्तिमती ॥ ८८ ॥ नत्यक्ष्यतेकदाचिदपीतिशेषः ॥ ८९ ॥ अथशिक्षयति । पातिव्रत्यमिति । अथाशिषमाह । कुशलीति ॥ ९० ॥

॥ ९१ ॥ सुरदेहोवामनादिः मानुषोदेहोरामादिः तिर्यग्देहोमत्स्यादिः । नचदेहेति । मायिकत्वादितिभावः । त्वत्तोबिभेतीति । त्वज्ज्ञाननाश्यत्वादितिभा

भोजयित्वायथान्यायंरामंसीतासमन्वितम् ॥ लक्ष्मणंचतदारामंपुनःप्राहकृतांजलिः ॥ ९१ ॥ रामत्वमेवभुवनानिविधायतेषांसंरक्षणा यसुरमानुषतिर्यगादीन् ॥ देहान्बिभर्षिनचदेहगुणैर्विलिप्तस्त्वत्तोबिभेत्यखिलमोहकरीचमाया ॥ ९२ ॥ इतिश्रीमदध्यात्मरामाय णेउमामहेश्वरसंवादेअयोध्याकांडेनवमःसर्गः ॥ ९ ॥ ॥श्रीः॥ अयोध्याकांडेनवसर्गाणांसप्तशतश्लोकाः ॥ ७०० ॥ ॥

वः ॥ ९२ ॥ ॥ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराजमानस्याहिम्मतिवर्मणः पुत्रस्य श्रीरामवर्मणः कृतावध्यात्मरामायण सेतौ अयोध्याकांडे नवमः सर्गः ॥ ९ ॥ ॥ द्वितीयोऽयं काण्डः समाप्तः ॥ २ ॥

इदमध्यात्मरामायणायोध्याकांडं मुम्बय्यां श्रीकृष्णदासात्मजेन
खेमराजेन स्वकीये 'श्रीवेंकटेश्वर' यन्त्रालयेऽङ्कित्वा प्रकाशितम्.
संवत् १९६१, शके १८२६, सन् १९०५.

श्रीगणेशाय नमः ॥ ॥ अथेति ॥ दिनंदिनशेषम् ॥ १ ॥ यत्रदंडकंविपिनंमुनिमंडलमंडितंतत्रगच्छामहे त्वमाज्ञातुंतत्राज्ञांकर्तुम् ॥ २ ॥ ३ ॥ मार्गद्रष्टामार्मदर्शयिता लोकानुसारिणःलोकवदज्ञत्वंनाटयतः ॥ ४ ॥ वारितःनिवर्तध्वमितिप्रार्थितः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ रामाभिनंदिताःरामे णानंदपूर्वकंगच्छतेतिदत्तानुमतयः ॥ ९ ॥ झिल्लीझंकारोझिल्लीशब्दः ॥ १० ॥ ११ ॥ सहितेन युवाभ्यांमिलितेन गंतव्यमित्युक्तमितिशेषः । दधत

श्रीमहादेव उवाच ॥ ॥ अथतत्रदिनंस्थित्वाप्रभातेरघुनंदनः ॥ स्नात्वामुनिंसमामंत्र्यप्रयाणायोपचक्रमे ॥ १ ॥ मुनेगच्छामहेसर्वेमु निमंडलमंडितम् ॥ विपिनंदंडकंयत्रत्वमाज्ञातुमिहार्हसि ॥ २ ॥ मार्गप्रदर्शनार्थायशिष्यानाज्ञप्तुमर्हसि ॥ श्रुत्वारामस्यवचनंप्रहस्यात्रि र्महायशाः ॥ प्राहतत्ररघुश्रेष्ठंरामरामसुराश्रय ॥ ३ ॥ सर्वस्यमार्गद्रष्टात्वंतवकोमार्गदर्शकः ॥ तथापिदर्शयिष्यंतितवलोकानुसारिणः ॥ ४ ॥ इतिशिष्यान्समादिश्यस्वयंकिंचित्तमन्वगात् ॥ रामेणवारितःप्रीत्याअत्रिःस्वभवनंययौ ॥ ५ ॥ क्रोशमात्रंततोगत्वाददर्शमहतींनदीम् ॥ अत्रेःशिष्यानुवाचेदंरामोराजीवलोचनः ॥ ६ ॥ नद्याःसंतरणेकश्चिदुपायोविद्यतेनवा ॥ ऊचुस्तेविद्यतेनौकासुदृढारघुनंदन ॥ ७ ॥ ता रयिष्यामहेयुष्मान्वयमेवक्षणादिह ॥ ततोनाविसमारोप्यसीतांराघवलक्ष्मणौ ॥ ८ ॥ क्षणात्संतारयामासुर्नदींमुनिकुमारकाः ॥ रामा भिनंदिताःसर्वेजग्मुरत्रेरथाश्रमम् ॥ ९ ॥ तावेत्यविपिनंघोरंझिल्लीझंकारनादितम् ॥ नानामृगगणाकीर्णंसिंहव्याघ्रादिभीषणम् ॥ १० ॥ राक्षसैर्घोररूपैश्चसेवितंरोमहर्षणम् ॥ प्रविश्यविपिनंघोरंरामोलक्ष्मणमब्रवीत् ॥ ११ ॥ इतःपरंप्रयत्नेनगंतव्यंसहितेनमे ॥ धनुर्गुणेन संयोज्यशरानपिकरेदधत् ॥ १२ ॥ अग्रेयास्याम्यहंपश्चात्त्वमन्वेहिधनुर्धरः ॥ आवयोर्मध्यगासीतामायेवात्मपरात्मनोः ॥ १३ ॥ चक्षुश्चारयसर्वत्रदृष्टंरक्षोभयंमहत् ॥ विद्यतेदंडकारण्येश्रुतपूर्वमरिंदम ॥ १४ ॥ इत्येवंभाषमाणौतौजग्मतुःसार्धयोजनम् ॥ तत्रैकापु ष्करिण्यास्तेकह्लारकुमुदोत्पलैः ॥ १५ ॥

आदधदित्यर्थः ॥ १२ ॥ साहित्यप्रकारमेवाह । अग्रइति । आत्मपरात्मनोर्जीवेशयोर्मध्यगा । आश्रयत्वविषयत्वाभ्यांसंबद्धामायेवेत्यर्थः ॥ १३ ॥ दृष्टमप शकुनैःसूचितम् ॥ ननुशकुनादिषुकोविश्वासस्तत्राह । श्रुतपूर्वमिति । दंडकारण्यंपूर्वमृषीणांमुखाच्छ्रुतंरक्षोभयंविद्यतेशाकनैश्चतन्निश्चितमित्यर्थः ॥ १४ ॥ कह्ला रशीतोदकादियुक्तापुष्करिणीतत्रास्ते ॥ १५ ॥

साशोभमानावैर्व्यदृश्यतेत्यर्थः ॥ १६ ॥ महासत्त्वंमहाशरीरंप्राणिनम् ॥ १७ ॥ करालदंष्ट्रायुतंवदनंयस्यतत् वामांसेवामस्कंधेन्यस्तशूलाग्रेग्रथिताअनेक मानुषायेनतत् ॥ १८ ॥ गजव्याघ्रमहिषमितिसमाहारद्वंद्वः । ज्याआरोपितायस्मिंस्तत् ॥ १९ ॥ अग्रेसंमुखदेशेवर्तमानोऽस्मदभिमुखमायाति भीरूणांभयमावहन्नित्यनेननास्माकंभयमितिध्वनितम् ॥ २० ॥ अचलइवरामःस्थितइत्यन्वयः ॥ २१ ॥ २२ ॥ २३ ॥ वक्रप्रविष्टकवलोपमावि

अंबुजैः[1]शीतलोदेनशोभमानाव्यदृश्यत ॥ तत्समीपमथोगत्वापीत्वातत्सलिलंशुभम् ॥ १६ ॥ ऊषुस्तेसलिलाभ्याशेक्षणंछायामुपाश्रिताः ॥ ततोददृशुरायांतंमहासत्त्वंभयानकम् ॥ १७ ॥ करालदंष्ट्रवदनंभीषयंतंस्वगर्जितैः ॥ वामांसेन्यस्तशूलाग्रग्रथितानेकमानुषम् ॥ ॥ १८ ॥ भक्षयंतंगजव्याघ्रमहिषंवनगोचरम् ॥ ज्यारोपितंधनुर्धृत्वारामोलक्ष्मणमब्रवीत् ॥१९॥ पश्यभ्रातर्महाकायोराक्षसोऽयमुपागतः ॥ आयात्यभिमुखंनोऽग्रेभीरूणांभयमावहन् ॥ २० ॥ सज्जीकृतधनुस्तिष्ठमाभैर्जनकनंदिनि ॥ इत्युक्त्वाबाणमादायस्थितोरामइवाचलः ॥ २१ ॥ सतुदृष्ट्वारमानाथंलक्ष्मणंजानकींतदा ॥ अट्टहासंततःकृत्वाभीषयन्निदमब्रवीत् ॥ २२ ॥ कौयुवांबाणतूणीरजटावल्कलधारिणौ ॥ मुनिवेषधरौबालौस्त्रीसहायौसुदुर्मदौ ॥ २३ ॥ सुंदरौवतमेवक्त्रप्रविष्टकवलोपमौ ॥ किमर्थमागतौघोरंवनंव्यालनिषेवितम् ॥ २४ ॥ श्रुत्वारक्षोवचोरामःस्मयमानउवाचतम् ॥ अहंरामस्त्वयंभ्रातालक्ष्मणोममसंमतः ॥ २५ ॥ एषासीताममप्राणवल्लभावयमागताः ॥ पितृवाक्यंपुरस्कृत्यशिक्षणार्थंभवादृशाम् ॥ २६ ॥ श्रुत्वातद्रामवचनमट्टहासमथाकरोत् ॥ व्यादायवक्त्रंबाहुभ्यांशूलमादायसत्वरः ॥ २७ ॥ मांनजानासिरामत्वंविराधंलोकविश्रुतम् ॥ मद्भयान्मुनयःसर्वेत्यक्त्वावनमितोगताः ॥ २८ ॥ यदिजीवितुमिच्छास्तित्यक्त्वासीतांनिरायुधौ ॥ पलायतंनचेच्छीघ्रंभक्षयामियुवामहम् ॥ २९ ॥

त्यनेनसुकरवधत्वंध्वनयति । व्यालादुष्टाहिंस्रजीवाः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ जीवितुमिच्छास्ति । युवयोरितिशेषः । शीघ्रंपलायतं नोचेद्भक्षयामीत्यन्वयः ॥ २९ ॥



१ कह्लारादिभिः ।

॥ ३० ॥ ३१ ॥ ३२ ॥ सर्पइवेति । उरसैवेतिभावः ॥ ३३ ॥ रुधिरौघेणसहतच्छिरोभूतलेपपातेत्यन्वयः ॥ ३४ ॥ ३५ ॥ विराधकायान्निःसृतइति शेषः । विमलांबरंनिर्मलवस्त्रंतेनावृतः चामीकरंसुवर्णम् ॥ ३६ ॥ भवप्रवाहस्यसंसारप्रवाहस्योपरमोनाशोयस्मात्तं घृणायाःदयायाः आकरमुत्पत्तिस्थानं प्रपन्नानांशरणागतानांसर्वपीडानाशकम् ॥ ३७ ॥ राजीवंकमलम् । अकारणकोपमूर्तिनानिर्निमित्तकोपमूर्त्तिना ॥ ३८ ॥ मेकर्णपुटंत्वदीयंकथामृतंपात्वि त्यन्वयः । पिबतुसादरंशृणोत्वित्यर्थः । पिवादेशाभावआर्षः । एवंमदंगजातंसर्वंभवदीयमेवास्तु । भवत्सेवापरमेवास्त्वित्यर्थः ॥ ३९ ॥ ४० ॥ आत्मनिस्वस्वरू

इत्युक्त्वाराक्षसःसीतामादातुमभिदुद्रुवे ॥ रामश्चिच्छेदतद्बाहूशरेणप्रहसन्निव ॥ ३० ॥ ततःक्रोधपरीतात्माव्यादायविकटंमुखम् ॥ राम मभ्यद्रवद्रामश्चिच्छेदपरिधावतः ॥ ३१ ॥ पदद्वयंविराधस्यतदद्भुतमिवाभवत् ॥ ३२ ॥ ततःसर्पइवास्येनग्रसितुंराममापतत् ॥ ततोऽ र्धचंद्राकारेणबाणेनास्यमहच्छिरः ॥ ३३ ॥ चिच्छेदरुधिरौघेणपपातधरणीतले ॥ ततःसीतासमालिंग्यप्रशशंसरघूत्तमम् ॥ ३४ ॥त तोदुंदुभयोनेदुर्दिविदेवगणेरिताः ॥ ननृतुश्चाप्सराहृष्टाजगुर्गंधर्वकिन्नराः ॥ ३५ ॥ विराधकायादतिसुंदराकृतिर्विभ्राजमानोविमलांब रावृतः ॥ प्रतप्तचामीकरचारुभूषणोव्यदृश्यताग्रेगगनेरविर्यथा ॥ ३६ ॥ प्रणम्यरामंप्रणतार्तिहारिणंभवप्रवाहोपरमंघृणाकरम् ॥ प्रण म्यभूयःप्रणनामदंडवत्प्रपन्नसर्वार्तिहरंप्रसन्नधीः ॥ ३७॥ विराधउवाच ॥ श्रीरामराजीवदलायताक्षविद्याधरोऽहंविमलप्रकाशः ॥ दुर्वास साऽकारणकोपमूर्तिनाशप्तःपुरासोऽद्यविमोचितस्त्वया ॥ ३८ ॥ इतःपरंत्वच्चरणारविंदयोःस्मृतिःसदामेऽस्तुभवोपशांतये ॥ त्वन्नामसं कीर्तनमेववाणीकरोतुमेकर्णपुटंत्वदीयम् ॥ ३९ ॥ कथामृतंपातुकरद्वयंतेपादारविंदार्चनमेवकुर्यात् ॥ शिरश्चतेपादयुगप्रणामंकरोतुनि त्यंभवदीयमेवम् ॥ ४० ॥ नमस्तुभ्यंभगवतेविशुद्धज्ञानमूर्तये ॥ आत्मारामायरामायसीतारामायवेधसे ॥ ४१ ॥ प्रपन्नंपाहिमांरामया स्यामित्वदनुज्ञया ॥ देवलोकंरघुश्रेष्ठमायामांमावृणोतुते ॥ ४२ ॥ इतिविज्ञापितस्तेनप्रसन्नोरघुनंदनः ॥ ददौवरंतदाप्रीतोविराधायम हामतिः ॥ ४३ ॥ गच्छविद्याधराशेषमायादोषगुणाजिताः ॥ त्वयामद्दर्शनात्सद्योमुक्तोज्ञानवतांवरः ॥ ४४ ॥

पेआरमतितस्मैसर्वदातदनुसंधानवतेइत्यर्थः ॥ ४१ ॥ इदानींप्रार्थयते । मायेत्यादि ॥ ४२ ॥ ४३ ॥ अशेषामायादोषरूपालोकेगुणास्तत्त्वेन लोकेप्रसिद्धास्त्व यामद्दर्शनाज्जिताः अथत्वंज्ञानवतांवरोभूत्वामुक्तोभविष्यसीतिशेषः ॥ ४४ ॥

परंमोक्षंयाहिप्राप्नुहि ॥ ४५ ॥ रामेणरक्षोनिधनंकृतंतेननिधनेनतस्यरक्षसः शापाद्विमुक्तिःकृता तस्यैवंवरदानंचकृतं यतस्तेनपुनरेवविद्याधरत्वंलब्धमतो रामंगृणन्नरोऽखिलार्थानेतिप्राप्नोति ॥ ४६ ॥ ॥ इति श्रीमत्सकलराजविपदुद्धरण० अध्यात्मरामायणांबुधिसेतौअरण्यकांडेप्रथमःसर्गः ॥ १ ॥ विराधेइति ॥ १ ॥ आयातमागतम् ॥ २ ॥ अभिगम्यसंमुखागमनपूर्वकंतमानीयउपवेशयत् । अडभावआर्षः ॥ ३ ॥ आसंस्थितः तपसेतपःकर्तुं कृतनिश्चयः ॥ ४ ॥ तवसंदर्शनाकांक्षीइहैवासमितिपूर्वेणान्वयः । यतस्त्वंपरमेश्वरः मोक्षदः ॥ ५ ॥ विरक्तःसन्नशोभनंपुण्यंहिंसारहितत्वात्तपस्तत्फ

मद्भक्तिर्दुर्लभालोकेजाताचेन्मुक्तिदायतः ॥ अतस्त्वंभक्तिसंपन्नःपरंयाहिममाज्ञया ॥ ४५॥ रामेणरक्षोनिधनंसुघोरंशापाद्विमुक्तिर्वरदानमेवम् ॥ विद्याधरत्वंपुनरेवलब्धंरामंगृणन्नेतिनरोऽखिलार्थान् ॥ ४६ ॥ ॥इति श्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेअरण्यकांडेप्रथमःसर्गः ॥ १ ॥ विराधेस्वर्गतेरामोलक्ष्मणेनचसीतया ॥ जगामशरभंगस्यवनंसर्वसुखावहम् ॥ १ ॥ शरभंगस्ततोदृष्ट्वारामंसौमित्रिणासह ॥ आयातंसीतयासार्धंसंभ्रमादुत्थितःसुधीः ॥२॥ अभिगम्यसुसंपूज्यविष्टरेषूपवेशयत् ॥ आतिथ्यमकरोत्तेषांकंदमूलफलादिभिः ॥ ३ ॥ प्रीत्याऽऽहशरभंगोऽपिरामंभक्तपरायणम् ॥ बहुकालमिहैवासंतपसेकृतनिश्चयः ॥ ४ ॥ तवसंदर्शनाकांक्षीरामत्वंपरमेश्वरः ॥ अद्यमत्तपसासिद्धंयत्पुण्यंबहुविद्यते ॥ तत्सर्वंतवदास्यामिततोमुक्तिंव्रजाम्यहम् ॥ ५ ॥ समर्प्यरामस्यमहत्सुपुण्यफलंविरक्तःशरभंगयोगी ॥ चितिंसमारोहयदप्रमेयंरामंससीतंसहसाप्रणम्य ॥ ६ ॥ ध्यायंश्चिरंराममशेषहृत्स्थंदूर्वादलश्यामलमंबुजाक्षम् ॥ चीरांबरंस्निग्धजटाकलापंसीतासहायंसहलक्ष्मणंतम् ॥ ७ ॥ कोवादयालुःस्मृतकामधेनुरन्योजगत्यांरघुनायकादहो ॥ स्मृतोमयानित्यमनन्यभाजाज्ञात्वास्मृतिंमेस्वयमेवयातः ॥ ८ ॥ पश्यत्विदानींदेवेशोरामोदाशरथिःप्रभुः ॥ दग्ध्वास्वदेहंगच्छामिब्रह्मलोकमकल्मषः ॥ ९ ॥ अयोध्याधिपतिर्मेऽस्तुहृदयेराघवःसदा ॥ यद्वामांकेस्थितासीतामेघस्येवतडिल्लता ॥ १० ॥

लंरामस्यसमर्प्यदत्वासहसातत्क्षणमेवाचीतिंसमारोहयत्समारुहत् । निवृत्तप्रेषणाण्णिच् ॥ ६ ॥ अशेषहृत्स्थंसर्वांतर्यामिणम् । सहलक्ष्मणम् । समस्तत्वेऽपि वोपसर्जनस्येतिसादेशाभावः ॥ ७ ॥ स्मृतकामधेनुःस्मृतःसन्कामधेनुस्तत्तुल्यः । सर्वमनोरथपूरकत्वात् । यातः आगतः ॥ ८ ॥ ब्रह्मलोकमुपासकत्वान्मोक्षद्वारभूतम् ॥ ९ ॥ १० ॥

पुरतःस्थितंदृष्ट्वातादृशमेवहृदयेध्यात्वा च ॥ ११ ॥ लोकपतेःकार्यब्रह्मणःहिरण्यगर्भस्य शरभंगनिवेशनंतदाश्रममाजग्मुरित्यन्वयः ॥ १२ ॥ भूमौदंडवत्प
तिताःप्रणेमुः ॥ १३ ॥ १४ ॥ लक्ष्मणंशेषांशमित्यन्वयः ॥ १५ ॥ अतः भूमिदुःखहरणार्थमवतीर्णत्वात्आदौखरादिवधेनास्मद्दुःखंमोक्तुमर्हसि ॥१६॥
सुमित्रासुतजानकीभ्यांसहवनानिद्रष्टुमागच्छ । तदातद्दर्शनेसति ॥ १७ ॥ १८ ॥ अस्थिभूतानिअतिशुष्काणि ॥ १९ ॥ २० ॥ समाधितःसमाधिना

इतिरामंचिरंध्यात्वादृष्ट्वाचपुरतःस्थितम् ॥ प्रज्वाल्यसहसावह्निंदग्ध्वापंचात्मकंवपुः ॥११ ॥ दिव्यदेहधरःसाक्षाद्ययौलोकपतेःपदम् ॥
ततोमुनिगणाःसर्वेदंडकारण्यवासिनः ॥ आजग्मूराघवंद्रष्टुंशरभंगनिवेशनम् ॥ १२ ॥ दृष्ट्वामुनिसमूहंतंजानकीरामलक्ष्मणाः ॥ प्रणेमुः
सहसाभूमौमायामानुषरूपिणः ॥ १३ ॥ आशीर्भिरभिनंद्याथरामंसर्वेहृदिस्थितम् ॥ ऊचुःप्रांजलयःसर्वेधनुर्बाणधरंहरिम् ॥१४॥ भूमे
र्भारावतारायजातोसिब्रह्मणाऽर्थितः ॥ जानीमस्त्वांहरिंलक्ष्मींजानकींलक्ष्मणंतथा ॥ १५ ॥ शेषांशंशंखचक्रेद्वेभरतंसानुजंतथा ॥ अत
श्चादौऋषीणांत्वंदुःखंमोक्तुमिहार्हसि ॥ १६ ॥ आगच्छयामोमुनिसेवितानिवनानिसर्वाणिरघूत्तमक्रमात् ॥ द्रष्टुंसुमित्रासुतजानकीभ्यां
तदादयास्मासुदृढाभविष्यति ॥ १७ ॥ इतिविज्ञापितोरामःकृतांजलिपुटैर्विभुः ॥ जगाममुनिभिः सार्धंद्रष्टुंमुनिवनानिसः ॥१८॥ ददर्श
तत्रपतितान्यनेकानिशिरांसिसः ॥ अस्थिभूतानिसर्वत्ररामोवचनमब्रवीत् ॥१९ ॥ अस्थीनिकेषामेतानिकिमर्थंपतितानिवै ॥ तमूचुर्मु
नयोरामऋषीणांमस्तकानिहि ॥ २० ॥ राक्षसैर्भक्षितानीशप्रमत्तानांसमाधितः ॥ अंतरायंमुनीनांतेपश्यंतोऽनुचरंतिहि ॥ २१ ॥ श्रु
त्वावाक्यंमुनीनांसभयदैन्यसमन्वितम् ॥ प्रतिज्ञामकरोद्रामोवधायाशेषरक्षसाम् ॥२२॥ पूज्यमानःसदातत्रमुनिभिर्वनवासिभिः ॥ जा
नक्यासहितोरामोलक्ष्मणेनसमन्वितः ॥ २३ ॥

प्रमत्तानांतद्दर्शनेपलायनायसमर्थानाम् अंतरायंसमाधिरूपम् । अप्रायत्यमितिपाठे समाधितःप्रमत्तानांहीनानांत्यक्तसमाधीनामित्यर्थः । अप्रायत्यंसमाधित्यागरू
पम् । समाधौहिभगवदेकरूपत्वाद्रक्षांसिनास्कंदंतीतिभावः ॥ २१ ॥ २२ ॥ २३ ॥

॥ २४ ॥ सर्वैर्ऋतुगुणैःसंपन्नत्वादेवसर्वकालेसुखजनकम् ॥ २५ ॥ भक्त्याप्रेम्णाउत्कंठितेरामस्यपुनःपुनर्दर्शनेच्छावतीलोचनेयस्यसः ॥ २६ ॥ हेअभि
रामपरमसुंदररामत्वन्मंत्रजापीअहंसततंतवदासदासोभूयामितिशेषः । अप्रमेयदेशकालापरिच्छेद्य शिवब्रह्मसमाश्रितचरण संसारसमुद्रतरणेऽमलपोतरूपौपादौ
यस्य । त्वच्चरणाश्रितानांसंसारसागरोत्तरणमकिंचित्करमेवेतिभावः ॥ २७ ॥ सर्वजगतामगोचरोऽपित्वंमलभूतोयःपुद्गलपिंडःशरीरंतत्रयोमोहः अहंगौ
रइत्याद्यहंताबुद्धिस्तद्रूपपाशेनानुबद्धंचित्तंयस्यतंमामद्य त्वन्माययासुतकलत्रगृहरूपेंऽधकूपेनिमग्नं निरीक्ष्यस्वयमागतोऽसिइत्याश्चर्यम् । तेनकरुणावत्त्वमित्या

उवासकतिचित्तत्रवर्षाणिरघुनंदनः ॥ एवंक्रमेणसंपश्यन्नृषीणामाश्रमान्विभुः ॥ २४ ॥ सुतीक्ष्णस्याश्रमंप्रागात्प्रख्यातमृषिसंकुलम् ॥
सर्वर्तुगुणसंपन्नंसर्वकालसुखावहम् ॥ २५ ॥ राममागतमाकर्ण्यसुतीक्ष्णःस्वयमागतः ॥ अगस्त्यशिष्योरामस्यमंत्रोपासनतत्परः ॥ वि
धिवत्पूजयामासभक्त्युत्कंठितलोचनः ॥ २६ ॥ सुतीक्ष्णउवाच ॥ त्वन्मंत्रजाप्यहमनंतगुणाप्रमेयसीतापतेशिवविरिंचिसमाश्रितां
घ्रे ॥ संसारसिंधुतरणामलपोतपादरामाभिरामसततंतवदासदासः ॥ २७ ॥ मामद्यसर्वजगतामविगोचरस्त्वंत्वन्माययासुतकलत्रगृहां
धकूपे ॥ मग्नंनिरीक्ष्यमलपुद्गलपिंडमोहपाशानुबद्धहृदयंस्वयमागतोऽसि ॥ २८ ॥ त्वंसर्वभूतहृदयेषुकृतालयोऽपित्वन्मंत्रजाप्यविमुखे
षुतनोषिमायाम् ॥ त्वन्मंत्रसाधनपरेष्वपयातिमायासेवानुरूपफलदोऽसियथामहीपः ॥ २९ ॥ विश्वस्यसृष्टिलयसंस्थितिहेतुरेकस्त्वंमा
ययात्रिगुणयाविधिरीशविष्णू ॥ भासीशमोहितधियांविविधाकृतिस्त्वंयद्वद्रविःसलिलपात्रगतोह्यनेकः ॥ ३० ॥ प्रत्यक्षतोऽद्यभवतश्चर
णारविंदंपश्यामिरामतमसःपरतःस्थितस्य ॥ दृग्रूपतस्त्वमसतामविगोचरोऽपित्वन्मंत्रपूतहृदयेषुसदाप्रसन्नः ॥ ३१ ॥

शयः ॥ २८ ॥ जाप्यंजपस्तद्विमुखेषु यथामहीपोराजासेवानुरूपफलदस्तथात्वमसीत्यर्थः ॥ २९ ॥ विश्वसृष्ट्यादिहेतुस्त्वमेकएव त्रिगुणयामाययोपाधि
भूतयात्वमेवविधिरिति ईशःशिवइति विष्णुरितिभासीत्यन्वयः । विविधाकृतिस्त्वम् । तत्तद्ध्यानादौप्रसिद्धमेवतेषांतथात्त्वम् । तच्चेदमनेकत्वंतवमिथ्यैवेत्याह
यद्वदिति ॥ ३० ॥ तमसःपरतःतद्धीनेशुद्धसत्त्वप्रधानेचित्तेस्थितस्येत्यर्थः । दृग्रूपतःदृग्रूपस्यद्रष्टेरित्यर्थः । सार्वविभक्तिकस्तसिः । प्रसन्नःदृग्विषयोभव
सीतिशेषः ॥ ३१ ॥

अरूपिणः अरूपस्यापि । छांदसइनिः । मायाविडंबनेनमायाव्यवहारेणकृतम् । स्पष्टमन्यत् ॥ ३२ ॥ नियतसेवितेति । नियमेनसेवितेत्यर्थः । मद्भागधेयंमदृष्टारब्धंशरीरमितियावत् । अनेनशरीराणांपरादृष्टमात्रजन्यत्वंसूचितम् ॥ ३३ ॥ जानंतु । अन्येऽपियोगिनइतिशेषः । देशेत्यादि । देशकालाद्यपरिच्छिन्नमित्यर्थः । घनेति । चैतन्यमात्ररूपमित्यर्थः । प्रत्यक्षतइति । ममतुपरिदृश्यमानेऽत्रैवप्रीतिर्नतुपरेवाङ्मनसागोचरेइत्यर्थः ॥ ३४ ॥ ३५ ॥ मद्दृतेमद्भक्तिंविनेत्यर्थः । तलोपश्छांदसः ।

पश्यामिरामतवरूपमरूपिणोऽपिमायाविडंबनकृतंसुमनुष्यवेषम् ॥ कंदर्पकोटिसुभगंकमनीयचापबाणंदयार्द्रहृदयंस्मितचारुवक्त्रम् ॥ ॥ ३२ ॥ सीतासमेतमजिनांबरमप्रधृष्यंसौमित्रिणानियतसेवितपादपद्मम् ॥ नीलोत्पलद्युतिमनंतगुणंप्रशांतंतद्भागधेयमनिशंप्रणमामिरामम् ॥ ३३ ॥ जानंतुरामतवरूपमशेषदेशकालाद्युपाधिरहितंघनचित्प्रकाशम् ॥ प्रत्यक्षतोऽद्यममगोचरमेतदेवरूपंविभातुहृदयेनपरंविकांक्षे ॥ ३४ ॥ इत्येवंस्तुवतस्तस्यरामःसस्मितमब्रवीत् ॥ श्रीरामउवाच ॥ मुनेजानामितेचित्तंनिर्मलंमदुपासनात् ॥ ३५ ॥ अतोऽहमागतोद्रष्टुंमदृतेनान्यसाधनम् ॥ मन्मन्त्रोपासकालोकेमामेवशरणंगताः ॥ ३६ ॥ निरपेक्षानान्यगतास्तेषांदृश्योऽहमन्वहम् ॥ स्तोत्रमेतत्पठेद्यस्तुत्वत्कृतंमत्प्रियंसदा ॥ ३७ ॥ सद्भक्तिर्मेभवेत्तस्यज्ञानंचविमलंभवेत् ॥ त्वंममोपासनादेवविमुक्तोऽसीहसर्वतः ॥ ३८ ॥ देहांतेममसायुज्यंलप्स्यसेनात्रसंशयः ॥ गुरुंतेद्रष्टुमिच्छामिह्यगस्त्यंमुनिनायकम् ॥ किंचित्कालंतत्रवस्तुंमनोमेत्वरयत्यलम् ॥ ३९ ॥ सुतीक्ष्णोऽपितथेत्याहश्वोगमिष्यसिराघव ॥ अहमप्यागमिष्यामिचिरादृष्टोमहामुनिः ॥ ४० ॥ अथप्रभातेमुनिनासमेतोरामःससीतःसहलक्ष्मणेन ॥ अगस्त्यसंभाषणलोलमानसःशनैरगस्त्यानुजमंदिरंययौ ॥ ४१ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेअरण्यकांडेद्वितीयः सर्गः ॥ २ ॥ श्रीमहादेव उवाच ॥ अथरामःसुतीक्ष्णेनजानक्यालक्ष्मणेनच ॥ अगस्त्यस्यानुजस्थानंमध्याह्नेसमपद्यत ॥ १ ॥

अन्यत्साधनम् । तदेवाह । मन्मंत्रेत्यादिना ॥ ३६ ॥ ३७ ॥ तस्यमेमयिसद्भक्तिःसतीभक्तिर्भवेत् ॥ ३८ ॥ ३९ ॥ चिरादृष्टोमयापीतिशेषः ॥ ४० ॥ अगस्त्यसंभाषणेलोलमत्युत्कटेच्छावन्मानसंयस्यसइत्यर्थः ॥ ४१ ॥ इति श्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराजमानस्यहिम्मतिवर्मणः पुत्रस्यश्रीरामवर्मणः कृतौअध्यात्मरामायणाम्बुधिसेतौअरण्यकांडेद्वितीयः सर्गः ॥ २ ॥ ॥ अथेति । अगस्त्यानुजोऽग्निजिह्वनामाऋषिः ॥ १ ॥

---

१—अग्निजिह्वाश्रमम् ।

अगस्त्यमंडलंतदाश्रमम् ॥ २ ॥ ३ ॥ देवर्षिभिरितिच्छंदोभंगआर्षः । मुनिमंदिरैःसर्वतोऽलंकृतमित्यन्वयः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ व्याख्यातोराममंत्रार्थोयेनतम् । प्रययौ । मुनेःसमीपमितिशेषः ॥ ८ ॥ ९ ॥ कांक्षमाणः तमेवेत्यनुकर्षः ॥ १० ॥ ११ ॥ १२ ॥ सीतयेत्यादेःसहेतिशेषः ॥



तेनसंपूजितः सम्यग्भुक्त्वामूलफलादिकम् ॥ परेद्युःप्रातरुत्थायजग्मुस्तेऽगस्त्यमंडलम् ॥ २ ॥ सर्वर्तुफलपुष्पाढ्यंनानामृगगणैर्युतम् ॥ पक्षिसंघैश्चविविधैर्नादितंनंदनोपमम् ॥ ३ ॥ ब्रह्मर्षिभिर्देवर्षिभिःसेवितंमुनिमंदिरैः ॥ सर्वतोऽलंकृतंसाक्षाद्ब्रह्मलोकमिवापरम् ॥ ४ ॥ बहिरेवाश्रमस्याथस्थित्वारामोऽब्रवीन्मुनिम् ॥ सुतीक्ष्णगच्छत्वंशीघ्रमागतंमांनिवेदय ॥५॥ अगस्त्यमुनिवर्यायसीतयालक्ष्मणेनच ॥ महाप्रसादइत्युक्त्वासुतीक्ष्णःप्रययौगुरोः ॥६॥ आश्रमंत्वरयातत्रऋषिसंघसमावृतम् ॥ उपविष्टंरामभक्तैर्विशेषेणसमायुतम् ॥ ७ ॥ व्याख्यातराममंत्रार्थंशिष्येभ्यश्चातिभक्तितः ॥ दृष्ट्वागस्त्यंमुनिश्रेष्ठंसुतीक्ष्णःप्रययौमुनेः ॥ ८ ॥ दंडवत्प्रणिपत्याहविनयावनतःसुधीः ॥ रामोदाशरथिर्ब्रह्मन्सीतयालक्ष्मणेनच ॥ आगतोदर्शनार्थंतेबहिस्तिष्ठतिसांजलिः ॥ ९ ॥ अगस्त्यउवाच ॥ शीघ्रमानयभद्रंतेरामंमम हृदिस्थितम् ॥ तमेवध्यायमानोऽहंकांक्षमाणोऽत्रसंस्थितः ॥ १० ॥ इत्युक्त्वास्वयमुत्थायमुनिभिःसहितोद्रुतम् ॥ अभ्ययात्परयाभक्त्या गत्वाराममथाब्रवीत् ॥ ११ ॥ आगच्छरामभद्रंतेदिष्ट्यातेऽद्यसमागमः ॥ प्रियातिथिर्ममप्राप्तोऽस्यद्यमेसफलंदिनम् ॥ १२ ॥ रामोऽपि मुनिमायांतंदृष्ट्वाहर्षसमाकुलः ॥ सीतयालक्ष्मणेनापिदंडवत्पतितोभुवि ॥ १३ ॥ द्रुतमुत्थाप्यमुनिराड्राममालिंग्यभक्तितः ॥ तद्गात्रस्पर्शजाह्लादस्रवन्नेत्रजलाकुलः ॥ १४ ॥ गृहीत्वाकरमेकेनकरेणरघुनंदनम् ॥ जगामस्वाश्रमंहृष्टोमनसामुनिपुंगवः ॥ १५ ॥ सुखोपविष्टंसंपूज्य पूजयाबहुविस्तरम् ॥ भोजयित्वायथान्यायंभोज्यैर्वन्यैरनेकधा ॥ १६ ॥ सुखोपविष्टमेकांतेरामंशशिनिभाननम् ॥ कृतांजलिरुवाचेदम गस्त्योभगवानृषिः ॥ १७ ॥



॥ १३ ॥ तद्गात्रस्पर्शजाह्लादेनस्रवद्यन्नेत्रजलंतेनाकूलः ॥ १४ ॥ रघुनंदनंरघुनंदनस्येत्यर्थः ॥ १५ ॥ वन्यैर्भोज्यैर्भोजयित्वेत्यन्वयः ॥ १६ ॥ १७ ॥

॥ १८ ॥ हेरामतवदर्शनाकांक्षीतपश्चरन् तदादितत्कालमारभ्यवसामीत्यन्वयः ॥ १९ ॥ अथभगवत्स्वरूपंशिष्यान्बोधयितुमन्यथात्वशंकावारणायभगवदग्र एवाह । सृष्टेःप्रागिति ॥ त्वमेकएवासीः निर्विकल्पःविकल्परूपसकलप्रपंचहीनः । तत्रहेतुः अनुपाधिकइति । उपाध्यसंबद्धइत्यर्थः । ननुकिंसर्वथोपाधिर्ना स्त्येवेति नेत्याह । त्वदिति । अस्त्येवसापरंतुस्वकल्पितत्वत्संबंधहीनासा । अतस्त्वमनुपाधिकइत्याशयः ॥ २० ॥ अथसृष्टिमुपक्रमते । त्वामिति । त्वानिर्गुणमेवसंतंयदासाशक्तिःस्वकल्पितसंबंधेनत्वामावृणोतित्वत्संबंधामात्मानंमनुतेनतुकदाचिदपित्वंतत्संबंधमात्मानंमनुषेअतोनिर्गुणमेवेत्युक्तम् । तदातांमाया मव्याकृतमित्याहुः ॥ २१ ॥ तस्यास्तदवस्थायांनामांतराण्यप्याह । मूलप्रकृतिरित्यादि । तदुक्तंकपिलेन । मूलप्रकृतिरविकृतिः इत्यादिना ॥ २२ ॥ सात्वत्संबंधामात्मानंमन्वानाअतएवत्वयासंक्षोभ्यमाणा संक्षोभश्चात्रतत्कल्पितसंबंधएवेतिबोध्यम् । महत्तत्त्वमिति । सविकारात्प्रधानात्तुमहत्तत्त्वमजायत । महा

त्वदागमनमेवाहंप्रतीक्षन्समवस्थितः ॥ यदाक्षीरसमुद्रांतेब्रह्मणाप्रार्थितःपुरा ॥ १८ ॥ भूमेर्भारापनुत्त्यर्थंरावणस्यवधायच ॥ तदादिद र्शनाकांक्षीतवरामतपश्चरन् ॥ वसामिमुनिभिःसार्धंत्वामेवपरिचिंतयन् ॥ १९ ॥ सृष्टेःप्रागेकएवासीर्निर्विकल्पोऽनुपाधिकः ॥ त्वदाश्र यात्वद्विषयामायातेशक्तिरुच्यते ॥ २० ॥ त्वामेवनिर्गुणंशक्तिरावृणोतियदातदा ॥ अव्याकृतमितिप्राहुर्वेदांतपरिनिष्ठिताः ॥ २१ ॥ मूलप्रकृतिरित्येकेप्राहुर्मायेतिकेचन ॥ अविद्यासंसृतिर्बंधइत्यादिबहुधोच्यते ॥ २२ ॥ त्वयासंक्षोभ्यमाणासामहत्तत्त्वंप्रसूयते ॥ महत्त त्त्वादहंकारस्त्वयासंचोदितादभूत् ॥२३॥ अहंकारोमहत्तत्त्वसंवृतस्त्रिविधोऽभवत् ॥ सात्त्विकोराजसश्चैवतामसश्चेतिभण्यते ॥ २४ ॥

नितियतःख्यातिर्लोकानाजायतेसदा ॥ इतिस्मृतेः । निश्चयोऽस्यसाधारणीवृत्तिःएतदभिमानिनिहिरण्यगर्भेऽपिमहानितिशब्दः । सर्वेषांस्वस्वबुद्धिरूपाः प्रतिनिय तोपाधयश्चास्यैवमहत्तत्त्वस्यांशा अस्यानेकबुद्धिमंडलरूपत्वादितिबोध्यम् । त्वयासंचोदितात्प्रेरितान्महत्तत्त्वादहंकारोऽभूत् । सचाहंममेत्यभिमानवृत्तिकमंतः करणद्रव्यम् । अहंकारोऽभिमानश्चकर्तामंताचसस्मृतः ॥ इतिकौर्मोक्तेः । अभिमानोऽभिमानवृत्तिकइत्यर्थः ॥२३॥ महत्तत्त्वसंवृतस्तदुपादानकत्वात् यथाघटो मृदा । सत्त्वाद्युपाधिकत्वेनत्रैविध्यम् । मूलप्रकृतेस्त्रिगुणत्वेनतत्कार्यत्वान्महत्तत्त्वस्यत्रिगुणत्वम् । सात्त्विकोराजसश्चैवतामसश्चत्रिधामहान् ॥ इतिस्मृतेः । तत्कार्यत्वाच्चाहंकारस्यत्रैविध्यम् । एवमग्रेऽपिबोध्यम् ॥ २४ ॥

सूक्ष्मतन्मात्राणिशब्दस्पर्शरूपरसगंधवन्मात्राणि अतःसूक्ष्मतन्मात्रेभ्यःस्थूलानिभूवानि तत्रशब्दतन्मात्रादाकाशम् स्पर्शतन्मात्रात्पूर्वसहिताद्वायुः ताभ्यांस
हिताद्रूपतन्मात्रात्तेजः तैःसहिताद्रसतन्मात्राज्जलम् एतैःसहितादंधतन्मात्रात्पृथिवीत्याद्यस्मद्गुरुकृतसांख्यतंत्रवृत्तौविस्तरः । तदेवाह । क्रमोत्तरगुणानीति ।
क्रमेणाधिकगुणानि आकाशंशब्दमात्रगुणम् वायुःशब्दस्पर्शगुणः तेजःशब्दस्पर्शरूपगुणम् जलंशब्दस्पर्शरूपरसगुणम् भूःशब्दस्पर्शरूपरसगंधगुणेति ॥ २५ ॥
राजसादहंकारादिंद्रियाणिराजसाहंकारोपादानकानीत्यर्थः । तानिचवाक्पाणिपादपायूपस्थरूपाणिकर्मेंद्रियाणि पंच । चक्षुःश्रोत्रत्वग्रसनघ्राणाख्यानिज्ञानें
द्रियाणिपंचेत्येवंदश वचनादानविहरणानंदोत्सर्गाश्चकर्मेंद्रियाणांवृत्तयः । ज्ञानेंद्रियाणांचसविकल्पकानीर्विकल्पकोभयरूपज्ञानरूपावृत्तिःतत्रनिर्विकल्पकंकिं
चिदिदमितिज्ञानम् । देवतामनश्चसात्त्विकाः । सात्त्विकाहंकारोपादानाइत्यर्थः । देवताः ताश्चचक्षुषोरविः श्रोत्रस्यदिक् त्वचोवायुः रसनस्यवरुणः घ्राण

तामसात्सूक्ष्मतन्मात्राण्यासन्भूतान्यतःपरम् ॥ स्थूलानिक्रमशोरामक्रमोत्तरगुणानिह ॥ २५ ॥ राजसानींद्रियाण्येवसात्त्विकादेवताम
नः ॥ तेभ्योऽभवत्सूत्ररूपंलिंगंसर्वगतंमहत् ॥ २६ ॥ ततोविराट्समुत्पन्नःस्थूलाद्भूतकदंबकात् ॥ विराजःपुरुषात्सर्वंजगत्स्थावरजंग
मम् ॥ २७ ॥ देवतिर्यङ्मनुष्याश्चकालकर्मक्रमेणतु ॥ त्वंरजोगुणतोब्रह्माजगतःसर्वकारणम् ॥ २८ ॥

स्याश्विनौ वाचोऽग्निः पाण्योरिंद्रः पादयोरुपेंद्रः पायोर्मित्रः उपस्थस्यकोब्रह्मेति मनइंद्रियमपिअवांतरत्वात्पृथगुक्तम् । सूत्ररूपंप्राणादि । क्रियाशक्तेःप्राणादेरेव
सूत्रव्यवहारात् । तदात्मकंहिरण्यगर्भरूपंलिंगंसर्वकार्यकर्तृत्वात्सर्वसूक्ष्मसमष्टिरूपमभवदित्यर्थः ॥ २६ ॥ ततोविराट् स्थूलसमष्टिरयम् । तदाह । स्थूलाद्भूत
कदंबकादिति । इदमिंद्रियादेरप्युपलक्षणम् । तस्मादेवविराजःपुरुषात्सर्वंस्थावरंजंगमंचाभिव्यक्तमित्यर्थः ॥ २७ ॥ तत्रजंगममाह । देवेत्यादि । कालकर्मक्र
मेण । कालक्रमेणयथा हेमंतेव्रीहयो वसंतेयवादि । कर्मक्रमेणकालसहकृतेनतिर्यङ्मनुष्यदेवत्वप्राप्तिः । उपाधिभेदेनब्रह्मादिरूपोऽपित्वमेवेत्याह । रजोगुणतःतद्रूपो
पाधेः जगतः सर्वकारणम् । सर्वस्यजगतःकारणमित्यर्थः । आर्षत्वात्समासः ॥ २८ ॥

---

१–एतट्टीकाकर्तृगुरुश्च श्रीनागेशभट्टोऽवधेयः । यच्च–टीकोपक्रमे उक्तं–भट्टनागेशशिष्येणेति ।

अस्यलयेनाशनिमित्तंत्वमेवरुद्रस्तमउपाधिकइत्यर्थः । एवंत्वन्मायायागुणभेदैःसत्त्वरजस्तमोभिरेवतत्तत्प्राधान्येनबुद्धेर्जाग्रदादयोवृत्तयइत्यर्थः । त्वंत्वेतदव
स्थात्रयरहितइत्याह । तासामिति । स्वमसुषुप्त्योरभावात्तत्प्रतिद्वंद्विजाग्रदवस्थायाअप्यभावइतिभावः ॥ २९ ॥ ३० ॥ सृष्टिलीलामित्युपलक्षणंस्थि
त्यादेरपि । यदाईहसेइच्छसितदामायामंगीकरोषितत्कल्पितंतत्कृतसंबंधंमन्यसे तदावस्तुतोऽगुणोऽपिगुणवानिवाभासीतिशेषः ॥ ३१ ॥ तवमायैवसंसा
रस्यमोक्षस्यचदानेसमर्थेत्याह । रामेति । विद्यातत्त्वज्ञानम् । अविद्यासंसारस्थूलकारणम् । तदुक्तंमार्कंडेयेन । साविद्यापरमामुक्तेर्हेतुभूतासनातनी ।
संसारबंधहेतुश्च सैवसर्वेश्वरेश्वरी ॥ इति ॥ ३२ ॥ विद्यामयाःतत्त्वज्ञानप्रधानाःसंतोऽपिप्रारब्धकर्मणोविक्षेपेणपुनःपुनस्तदनुसंधानवंतइत्यर्थः ॥ ३३ ॥

सत्त्वाद्विष्णुस्त्वमेवास्यपालकःसद्भिरुच्यते ॥ लयेरुद्रस्त्वमेवास्यत्वन्मायागुणभेदतः ॥ २९ ॥ जाग्रत्स्वप्नसुषुप्त्याख्यावृत्तयोबुद्धिजै
र्गुणैः ॥ तासांविलक्षणोरामस्त्वंसाक्षीचिन्मयोऽव्ययः ॥ ३० ॥ सृष्टिलीलांयदाकर्तुमीहसेरघुनंदन ॥ अंगीकरोषिमायांत्वंतदावैगुण
वानिव ॥ ३१ ॥ राममायाद्विधाभातिविद्याविद्येतितेसदा ॥ प्रवृत्तिमार्गनिरताअविद्यावशवर्तिनः ॥ निवृत्तिमार्गनिरतावेदांतार्थविचारकाः
॥ ३२ ॥ त्वद्भक्तिनिरतायेचतेवैविद्यामयाःस्मृताः ॥ अविद्यावशगायेतुनित्यंसंसारिणश्चते ॥ विद्याभ्यासरतायेतुनित्यमुक्तास्तएवहि
॥ ३३ ॥ लोकेत्वद्भक्तिनिरतास्त्वन्मंत्रोपासकाश्चये ॥ विद्याप्रादुर्भवेत्तेषांनेतरेषांकदाचन ॥ ३४ ॥ अतस्त्वद्भक्तिसंपन्नामुक्ताएवनसंश
यः ॥ त्वद्भक्त्यमृतहीनानांमोक्षःस्वप्नेऽपिनोभवेत् ॥ ३५ ॥ किंरामबहुनोक्तेनसारंकिंचिद्ब्रवीमिते ॥ साधुसंगतिरेवात्रमोक्षहेतुरुदाहृ
ता ॥ ३६ ॥ साधवःसमचित्तायेनिःस्पृहाविगतैषिणः ॥ दांताःप्रशांतास्त्वद्भक्तानिवृत्ताखिलकामनाः ॥ ३७ ॥

विद्याप्राप्तावसाधारणंहेतुमाह । लोकइति ॥ ३४ ॥ मुक्ताएव । तेषांतत्त्वज्ञानस्यावश्यंभावित्वादितिभावः । व्यतिरेकमप्याह । त्वद्भक्तीति ॥ ३५ ॥
भक्तिरेवकथमितिचेत्तस्याअपिकिंचिद्धुतंकारणमस्तीत्याह । किंरामेति । तेइत्यस्याग्रतइतिशेषः । स्वशिष्यविश्वासार्थंभवदग्रतएवदुक्तिः ॥ ३६ ॥
साधुस्वरूपज्ञानेएवतत्संगतिःशक्येत्यतस्तल्लक्षणमाह । साधवइति । समचित्ताःशत्रुमित्रयोरागद्वेषहीनचित्ताः अतएवनिःस्पृहाःरागद्वेषकारणभूतस्पृहाहीनाः
विगतैषिणःत्यक्तपुत्रवित्तादीच्छाः दांता बहिरिंद्रियनिग्रहवंतःशांता अंतरिंद्रियांतःकरणनिग्रहवंतःविगतैषिणइत्यस्यैव व्याख्यानानिवृत्ताखिलकामनाइति ॥ ३७ ॥

---

१ इतीत्यध्याहृत्य भावेऽर्थे प्रथमपुरुषोक्तिसंगतिः । अन्यथा युष्मच्छब्दप्रयोगान्मध्यमपुरुषप्रसंगः ।

इष्टेति । समाः हर्षविषादरहिताः संगवार्जिताः दुःसंगरहिताः । संन्यस्तेत्यादि । त्यक्तकाम्यनित्यसकलकर्माणः । तदेवाह । सर्वदाब्रह्मतत्पराः ॥ ३८ ॥
यमादयोयमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधयोयोगशास्त्रोक्ताः यर्हियदातेषांसत्संगमोभवेत्तदात्वत्कथाश्रवणरतिःसमुदेतीत्यन्वयः ॥ ३९ ॥
ततोभक्तिरवश्यंममभूयात् लब्धाचमानस्यात्वित्याकाराश्चित्तवृत्तिविशेषःप्रेमाख्यस्तथाप्रेमवतस्त्वज्ज्ञानंस्फुटमेवोदेतीत्यन्वयः ॥ ४० ॥ अयमाद्योमुख्यश्च
तुरैःकुशलैःसेवितोमुक्तेर्मार्गःतस्माद्हेराघवत्वयिप्रेमलक्षणासद्भक्तिर्मेसदाभूयात् ॥ ४१ ॥ हेहरेत्वद्भक्तेषुविशेषतः संगोभूयादित्यनुषंगः ॥ ४२ ॥ ऋतवःसफला

इष्टप्राप्तिविपत्त्योश्चसमाःसंगविवर्जिताः॥संन्यस्ताखिलकर्माणःसर्वदाब्रह्मतत्पराः॥३८॥ यमादिगुणसंपन्नाःसंतुष्टायेनकेनचित् ॥ सत्सं
गमोभवेद्यर्हित्वत्कथाश्रवणेरतिः ॥३९॥ समुदेतिततोभक्तिस्त्वयिरामसनातने ॥ त्वद्भक्तावुपपन्नायांविज्ञानंविपुलंस्फुटम् ॥ ४० ॥ उदे
तिमुक्तिमार्गोऽयमाद्यश्चतुरसेवितः ॥ तस्माद्राघवसद्भक्तिस्त्वयिमेप्रेमलक्षणा ॥ ४१ ॥ सदाभूयाद्धरेसंगस्त्वद्भक्तेषुविशेषतः ॥ अद्यमेसफ
लंजन्मभवत्संदर्शनादभूत् ॥४२॥ अद्यमेक्रतवःसर्वेबभूवुःसफलाःप्रभो ॥ दीर्घकालंमयातप्तमनन्यमतिनातपः ॥ तस्येहतपसोरामफलं
तवयदर्चनम् ॥ ४३ ॥ सदामेसीतयासार्धंहृदयेवसराघव ॥ गच्छतस्तिष्ठतोवापिस्मृतिःस्यान्मेसदात्वयि ॥४४॥ इतिस्तुत्वारमाना
थमगस्त्योमुनिसत्तमः ॥ ददौचापंमहेंद्रेणरामार्थेस्थापितंपुरा ॥ ४५ ॥ अक्षय्यौबाणतूणीरौखड्गोरत्नविभूषितः ॥ जहिराघवभूभारभूतं
राक्षसमंडलम् ॥ ४६ ॥ यदर्थमवतीर्णोऽसिमाययामनुजाकृतिः ॥ इतोयोजनयुग्मेतुपुण्यकाननमंडितः ॥ ४७ ॥ अस्तिपंचवटीनाम्नाआ
श्रमोगौतमीतटे ॥ नेतव्यस्तत्रतेकालःशेषोरघुकुलोद्वह ॥ ४८ ॥ तत्रैवबहुकार्याणिदेवानांकुरुसत्पते ॥ ४९ ॥ श्रुत्वातदागस्त्यसुभाषि
तंवचःस्तोत्रंचतत्त्वार्थसमन्वितंविभुः ॥ मुनिंसमाभाष्यमुदान्वितोययौप्रदर्शितंमार्गमशेषविद्धरिः ॥ ५० ॥ इतिश्रीमदध्यात्मरामायणे
उमामहेश्वरसंवादेअरण्यकांडेतृतीयःसर्गः ॥ ३ ॥

बभूवुः त्वत्प्रीतिरेवक्रतूनांमुख्यंफलंसाचमदाश्रमेआगमनात्त्वयाव्यक्तीकृता । उक्तमेवार्थंभंग्यंतरेणाह । दीर्घेति ॥ ४३ ॥ अथस्वेष्टंप्रार्थयते । सदेति ॥ ४४ ॥
॥ ४५ ॥ बाणतूणीरौ बाणपूर्णौतूणीरौ ॥ ४६ ॥ ४७ ॥ ४८ ॥ अशेषविदपिमानुष्यंनाटयन्प्रदर्शितंमार्गंययौ ॥ ४९॥५०॥ इति श्रीमत्सकलराजविपदु
द्धरणसमर्थेत्यादिबिरुदावली० अध्यात्मरामायणाब्धिसेतौअरण्यकांडेतृतीयःसर्गः ॥ ३ ॥

मार्गेइति ॥ ददर्श दृष्ट्वाचकिमेतदितिविस्मितः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ वत्स्ये । वसामीत्यर्थः । आर्षःप्रयोगः ॥ ५ ॥ ६ ॥ गृध्रमहाराजेतिषष्ठीतत्पु
रुषः । अत्रैववनेवसन्मेप्रियंकुर्विंतिसंबंधः ॥ ७ ॥ आमंत्रितंसम्यक्बोधितंगृध्रमालिंग्येत्यर्थः ॥८॥ तेगौतमीतीरंगोदावरीतीरंगत्वापंचवट्यांपंचवटसमीपेस्थि
ताः ततस्तत्ररामोलक्ष्मणेनसुविस्तरंमंदिरंकारयामास ॥ ९ ॥ गंगायाः गंगात्रगौतम्येव ॥ १० ॥ जनसंबाधोजनसमूहः निष्क्रांतारुजापीडायस्मात्तादृशस्थले

श्रीमहादेव उवाच ॥ मार्गेव्रजन्ददर्शाथशैलशृंगमिवस्थितम् ॥ वृद्धंजटायुषंरामःकिमेतदितिविस्मितः ॥ १ ॥ धनुरानयसौमित्रेराक्षसो
ऽयंपुरःस्थितः ॥ इत्याहलक्ष्मणंरामोहनिष्याम्यृषिभक्षकम् ॥२॥ तच्छ्रुत्वारामवचनंगृध्रराड्भयपीडितः ॥ वधार्होऽहंनतेरामपितुस्तेहंप्रि
यःसखा ॥ ३ ॥ जटायुर्नामभद्रंतेगृध्रोऽहंप्रियकृत्तव ॥ ४ ॥ पंचवट्यामहंवत्स्येतवैवप्रियकाम्यया ॥ मृगयायांकदाचित्तुप्रयातेलक्ष्मणे
ऽपिच ॥५॥ सीताजनककन्यामेरक्षितव्याप्रयत्नतः ॥ श्रुत्वातद्गृध्रवचनंरामःसस्नेहमब्रवीत् ॥ ६ ॥ साधुगृध्रमहाराजतथैवकुरुमेप्रियम् ॥
अत्रैवमेसमीपस्थोनातिदूरेवनेवसन् ॥७॥ इत्यामंत्रितमालिंग्यययौपंचवटींप्रभुः ॥ लक्ष्मणेनसहभ्रात्रासीतयारघुनंदनः ॥८॥ गत्वातेगौ
तमीतीरंपंचवट्यांसुविस्तरम् ॥ मंदिरंकारयामासलक्ष्मणेनसुबुद्धिना ॥ ९ ॥ तत्रतेन्यवसन्सर्वेगंगायाउत्तरेतटे ॥ कदंबपनसाम्रादिफ
लवृक्षसमाकुले ॥ १० ॥ विविक्तेजनसंबाधवर्जितेनीरुजस्थले ॥ विनोदयञ्जनकजांलक्ष्मणेनविपश्चिता ॥ ११ ॥ अध्युवाससुखंरामो
देवलोकइवामरः ॥ कंदमूलफलादीनिलक्ष्मणोऽनुदिनंतयोः ॥ १२ ॥ आनीयप्रददौरामसेवातत्परमानसः ॥ धनुर्बाणधरोनित्यंरात्रौजा
गर्तिसर्वतः ॥१३॥ स्नानंकुर्वंत्यनुदिनंत्रयस्तेगौतमीजले ॥ उभयोर्मध्यगासीताकुरुतेचगमागमौ ॥१४॥ आनीयसलिलंनित्यंलक्ष्मणः
प्रीतमानसः ॥ सेवतेऽहरहःप्रीत्याएवमासन्सुखंत्रयः ॥ १५ ॥ एकदालक्ष्मणोराममेकांतेसमुपस्थितम् ॥ विनयावनतोभूत्वापप्रच्छपरमे
श्वरम् ॥ १६ ॥ भगवञ्छ्रोतुमिच्छामिमोक्षस्यैकांतिकींगतिम् ॥ त्वत्तःकमलपत्राक्षसंक्षेपाद्वक्तुमर्हसि ॥ १७ ॥ ज्ञानंविज्ञानसहितंभक्ति
वैराग्यबृंहितम् ॥ आचक्ष्वमेरघुश्रेष्ठवक्तानान्योऽस्तिभूतले ॥ १८ ॥

लक्ष्मणेनसहअध्युवासेतिसंबंधः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ ऐकांतिकींगतिमव्यभिचारिकारणमित्यर्थः ॥ १७ ॥ ननुमोक्षकार
णंज्ञानमितिप्रसिद्धमेवेतिचेत्तत्स्वरूपमेवप्रश्नविषयइत्याह । ज्ञानमिति । ज्ञानंश्रवणमननजन्यं विज्ञानंनिदिध्यासनजम् । भक्तिर्ज्ञानविषयेप्रेमउक्तस्वरूपम् वैराग्यंतद
तिरिक्तेप्रेमाभावरूपम् ॥ १८ ॥

वैकल्पिकंभ्रमंविकल्पमेववैकल्पिकम् । विनयादित्वाट्ठक् । शब्दज्ञानानुपातीवस्तुशून्योविकल्पः । इतियोगसूत्रोक्तविकल्परूपंभ्रमम् । यथाशशशृंगादिययपि तदलीकमेवतथाऽपिशशशृंगादिशब्दप्रयोगस्तद्बोधश्चभवत्येवतद्वदेवसर्वोऽपिव्यवहारः संसाररूपस्तंयज्ज्ञानेनजह्यात्तद्रूपंवक्ष्यामीत्यन्वयः ॥ १९ ॥ तदुपयोगि तयावक्ष्यमाणान्यन्यानिनाममात्रेणक्रमतउद्दिशति । आदाविति ॥ २० ॥ तत्रमायास्वरूपमाह । अनात्मनीति । आत्मबुद्धिःअहमितिबुद्धिः ॥ २१ ॥ परि कल्प्यतेअवस्तुभूतएवदृश्यते अथतादृशशक्तिमत्त्वंमायायादर्शयति रूपेइति । पूर्वमित्यनेनतयोरूपयोरनादित्वंदर्शयति ॥ २२ ॥ केतेरूपेतत्राह । विक्षेपावरणेइति । विक्षेपशक्तिरावरणशक्तिश्चेत्यर्थः । प्रथमंविक्षेपरूपंलिंगंमहत्तत्त्वमाद्यंयस्यतच्चतद्ब्रह्मपर्यंतम् । चतुर्मुखब्रह्मांतमित्यर्थः ॥ २३ ॥ अपरमावरणरूपम् । तस्यान्वर्थ त्वमाह । अखिलमिति । सर्वज्ञानरूपावरकत्वादावरणव्यवहारस्तत्रेतिभावः । ननुमायाकुत्राधिष्ठानेइदंजगत्कल्पितवतीतत्राह । परमात्मनीति । तद्रूपंचैतन्यमा

श्रीरामउवाच ॥ शृणुवक्ष्यामितेवत्सगुह्याद्गुह्यतरंपरम् ॥ यद्विज्ञायनरोजह्यात्सद्योवैकल्पिकंभ्रमम् ॥१९॥ आदौमायास्वरूपंतेवक्ष्यामि तदनंतरम् ॥ ज्ञानस्यसाधनंपश्चाज्ज्ञानंविज्ञानसंयुतम् ॥२०॥ ज्ञेयंचपरमात्मानंयज्ज्ञात्वामुच्यतेभयात् ॥ अनात्मनिशरीरादावात्मबु द्धिस्तुयाभवेत ॥२१॥ सैवमायातयैवासौसंसारःपरिकल्प्यते ॥ रूपेद्वेनिश्चितेपूर्वंमायायाःकुलनंदन ॥२२॥ विक्षेपावरणेतत्रप्रथमंकल्पये ज्जगत् ॥ लिंगाद्यब्रह्मपर्यंतंस्थूलसूक्ष्मविभेदतः ॥ २३ ॥ अपरंत्वखिलंज्ञानरूपमावृत्यातिष्ठति ॥ माययाकल्पितंविश्वंपरमात्मनिकेवले ॥२४॥ रज्जौभुजंगवद्भ्रांत्याविचारेनास्तिकिंचन ॥ श्रूयतेदृश्यतेयद्यत्स्मर्यतेवानरैःसदा ॥ २५ ॥ असदेवहितत्सर्वंयथास्वप्नमनोरथौ ॥ देहएवहिसंसारवृक्षमूलंदृढंस्मृतम् ॥ २६ ॥ तन्मूलःपुत्रदारादिबंधःकिंतेऽन्यथात्मनः ॥ २७ ॥ देहस्तुस्थूलभूतानांपंचतन्मात्रपंचकम् ॥ अहंकारश्चबुद्धिश्चइंद्रियाणितथादश ॥ २८ ॥ चिदाभासोमनश्चैवमूलप्रकृतिरेवच ॥ एतत्क्षेत्रमितिज्ञेयंदेहइत्यभिधीयते ॥ २९ ॥

च्छायजगद्रूपंदर्शितामित्यर्थः ॥ २४ ॥ तत्रदृष्टांतमाह । रज्जाविति । रज्ज्वज्ञानंयथारज्जुमाच्छाद्यभुजंगंकल्पयतितद्वत् । विचारेविचारणेऽधिष्ठानतत्त्वज्ञाने ॥ ॥ २५ ॥ सर्वस्यमिथ्यात्वेदृष्टांतौ । स्वप्नेश्रुतंदृष्टंस्मृतंचसर्वंमिथ्याजागरेऽनुभवात्तद्वत् । देहएवेति । तस्यैवसर्वसंसारकारणकर्मोत्पादकत्वादितिभावः ॥ ॥ २६ ॥ तदाह । तन्मूलइति । अन्यथादेहाभावेतेपुत्रादयआत्मनःकिंभवंति । नकिमपीत्यर्थः ॥ २७ ॥ तत्रसूक्ष्मस्थूलदेहावेकीकृत्याह । देहइति । स्थू लभूतपंचकंस्थूलदेहः अहंकारबुद्धिदशेंद्रियाणिमनःपंचतन्मात्राणिचइत्येतावानष्टादशात्मकोलिंगदेहःसूक्ष्मः ॥ २८ ॥ चिदाभासइतितस्यविशेषणम् । चिदाभा सतेअहमितिबुद्ध्याविषयीक्रियतइत्यर्थः । मूलप्रकृतिस्त्वैश्वरोदेहः एतत्संघस्यजडत्वाद्देहक्षेत्रादिसंज्ञा ॥ २९ ॥

जीवःसएवपरमात्मा ॥ ३० ॥ अत्रजीवेपरमात्मनिच तथाऽत्रमानाभावःदेशतःकालतश्चपरिच्छेदाभावः । अथतद्विज्ञानसाधनान्याह । दंभेत्यादि ॥ ३१ ॥
परोवि । परकृताक्षेपादिनिंदादितत्सहनम् । मनोवाक्कायकृतसद्भक्त्याप्रेम्णासद्गुरुसेवनम् ॥ ३२ ॥ बाह्याभ्यंतरसंशुद्धिःउक्तरूपेव सत्क्रियादिषुस्थिरताअ
वश्यकर्तव्यताबुद्धिःपरानिष्ठाचिंतनंमनोदंडः पराक्षेपाकरणंवाग्दंडः पराहिंसाकायदंडः निरीहताइच्छाराहित्यम् ॥ ३३ ॥ जन्मजराद्यालोचनंपरेषांतदा
लोचनमूलकंवैराग्यंपुत्रादिष्वसक्तिः । तस्यैवव्याख्यानंस्नेहशून्यत्वम् ॥ ३४ ॥ चित्तस्यसमताहर्षविषादराहित्यम् । अनन्यविषयातन्मात्रविषया ॥ ३५ ॥
जनसंबाधोजनसमूहः प्राकृतैःसांसारिकैः अरतिःअप्रीतिः ॥ ३६ ॥ आत्मज्ञानेतत्साधनेश्रवणादावुद्योगआदरपूर्वकोयत्नःवेदांतार्थस्यावलोकनंश्रवणं

एतैर्विलक्षणोजीवःपरमात्मानिरामयः ॥ तस्यजीवस्यविज्ञानेसाधनान्यपिमेशृणु ॥३०॥ जीवश्चपरमात्माचपर्यायोनात्रभेदधीः ॥ मा
नाभावस्तथादंभाहिंसादिपरिवर्जनम्॥३१॥ पराक्षेपादिसहनंसर्वत्रावक्रतातथा ॥ मनोवाक्कायसद्भक्त्यासद्गुरोःपरिसेवनम् ॥३२॥ बाह्या
भ्यंतरसंशुद्धिस्थिरतासत्क्रियादिषु ॥ मनोवाक्कायदंडश्चविषयेषुनिरीहता ॥ ३३ ॥ निरहंकारताजन्मजराद्यालोचनंतथा ॥ असक्तिःस्ने
हशून्यत्वंपुत्रदारधनादिषु ॥ ३४ ॥ इष्टानिष्टागमेनित्यंचित्तस्यसमतातथा ॥ मयिसर्वात्मगेरामेह्यनन्यविषयामतिः ॥३५॥ जनसंबा
धरहितशुद्धदेशानिषेवणम् ॥ प्राकृतैर्जनसंघैश्चह्यरतिःसर्वदाभवेत् ॥ ३६ ॥ आत्मज्ञानेसदोद्योगोवेदांतार्थावलोकनम् ॥ उक्तैरेतैर्भवेज्ज्ञा
नंविपरीतैर्विपर्ययः ॥ ३७ ॥ बुद्धिप्राणमनोदेहाऽहंकृतिभ्योविलक्षणः ॥ चिदात्माऽहंनित्यशुद्धबुद्धएवेतिनिश्चयम् ॥ ३८ ॥ येनज्ञाने
नसंविन्तेतज्ज्ञानंनिश्चितंचमे ॥ विज्ञानंचतदेवैतत्साक्षादनुभवेद्यदा ॥ ३९ ॥ आत्मासर्वत्रपूर्णःस्याच्चिदानंदात्मकोऽव्ययः ॥ बुद्ध्याद्यु
पाधिरहितःपरिणामादिवर्जितः ॥ ४० ॥

विचारश्च विपर्ययःसंसारः ॥ ३७ ॥ बुद्ध्यादिभ्योविलक्षणइत्यादिनिश्चयम् ॥ ३८ ॥ येनज्ञानेनययाशब्दादिजवृत्त्यासंविन्तेलभतेतज्ज्ञानमितिमे
निश्चितंनिश्चयः तदेवैतत्यदासाक्षादनुभवेत् निदिध्यासनपरिपाकेअपरोक्षमनुभवेत्तदाविज्ञानमित्युच्यते ॥ ३९ ॥ अथात्मनउक्तंबुद्ध्यादिभ्योवैलक्षण्यंदर्श
यति । आत्मेति । चिदेवानंदस्तदात्मकः । यद्वा । चित्आनंदसमृद्धिस्तदात्मकः बुद्ध्याद्युपाधिभिस्तद्धर्मैरागादिभीरहितःहीनःपरिणामोरूपांतरापत्तिस्तद्वर्जितः
आदिपदेनजडत्वाभास्यत्वादि ॥ ४० ॥

सएवसर्वभासकइत्याह । स्वप्रकाशेनेति । सत्यज्ञानादीति । सत्यंज्ञानमनंतंब्रह्म । इत्यादिश्रुत्युक्तलक्षणः ॥ ४१ ॥ स्वप्रभःस्वभासनेइतरभासकानपेक्ष
द्रष्टासर्वसाक्षी विज्ञानेनप्रागुक्तेनावगम्यतेविषयीक्रियते तस्यज्ञानस्यमुख्यंकारणमाह । आचार्येति । आचार्यकृततत्त्वमस्यादिशास्त्रोपदेशाज्जीवपरयोरात्मनो
र्यदैक्यज्ञानंतदपरोक्षानुभवोभवेत् तदैवमूलाविद्याकार्यैस्थूलंकरणमिंद्रियं तैः सहपरात्मनिलीयते ॥ ४२ ॥ ४३ ॥ सैवावस्थामुक्तिर्मूलाविद्यालयएवमु
क्तिरित्यर्थः ॥ ४४ ॥ आत्मनःशुद्धस्यसर्वथाऽविद्याऽस्पृष्टस्यभेदरहितस्यऐक्यज्ञानमविद्यालयइत्यपिव्यवहारःकंठचामीकरन्यायेनगौणइत्यर्थः । यथाकंठ
स्थंचामीकरमन्यत्रान्विष्यतिनष्टंतदितिबुद्ध्या अरेकंठेएवास्तेइतिकेनचिदुक्तेलब्धंतदितिव्यवहरतितद्वत् । एवंज्ञानादिसहितंमेपरात्मनोमोक्षस्वरूपंतेकथितम् ।

स्वप्रकाशेनदेहादीन्भासयन्ननपावृतः ॥ एकएवाद्वितीयश्चसत्यज्ञानादिलक्षणः ॥ ४१ ॥ असंगःस्वप्रभोद्रष्टाविज्ञानेनावगम्यते ॥ आचा
र्यशास्त्रोपदेशादैक्यज्ञानंयदाभवेत् ॥ ४२ ॥ आत्मनोर्जीवपरयोर्मूलाविद्यातदैवहि ॥ लीयतेकार्यकरणैःसहैवपरमात्मनि ॥४३॥ साव
स्थामुक्तिरित्युक्ताह्युपचारोऽयमात्मनि ॥ इदंमोक्षस्वरूपंतेकथितंरघुनंदन ॥ ४४ ॥ ज्ञानविज्ञानवैराग्यसहितंमेपरात्मनः ॥ किंत्वेतद्दु
र्लभंमन्येमद्भक्तिविमुखात्मनाम् ॥ ४५ ॥ चक्षुष्मतामपियथारात्रौसम्यङ्नदृश्यते ॥ पदंदीपसमेतानांदृश्यतेसम्यगेवहि ॥ ४६ ॥ एवं
मद्भक्तियुक्तानामात्मासम्यक्प्रकाशते ॥ मद्भक्तेःकारणंकिंचिद्वक्ष्यामिशृणुतत्त्वतः ॥ ४७॥ मद्भक्तसंगोमत्सेवामद्भक्तानांनिरंतरम् ॥
एकादश्युपवासादिममपर्वानुमोदनम् ॥४८॥ मत्कथाश्रवणेपाठेव्याख्यानेसर्वदारतिः ॥ मत्पूजापरिनिष्ठाचममनामानुकीर्तनम् ॥४९॥

यामोक्षावस्थोक्तातदेवमेस्वरूपमित्यर्थः । मद्भक्तिविमुखात्मनांमत्प्रेमहीनानाम् ॥ ४५ ॥ यथासनेत्राणामपिरात्रौपदंचोरादिपदंनदृश्यतेनदृग्विषयोभवति
दीपसमेतानांतुतेषांतद्दृग्विषयोभवति ॥ ४६ ॥ एवंभक्तियुक्तानांसम्यग्मत्प्रकाशोभवति ॥ ४७ ॥ अथप्रतिज्ञातानिभक्तिकारणान्याहमद्भक्तेति ।
मद्भक्तानांनिरंतरामित्यत्रसेवेत्यनुषज्यते । एकादश्युपवासादितदनुष्ठानमित्यर्थः । ममयानिपर्वाणिउत्सवदिनानिरामनवम्यादीनितेषामनुमोदनंतेषूत्सवकरण
म् ॥ ४८ ॥ परिनिष्ठातत्परता ॥ ४९ ॥

ततोमद्भक्तेरधिकंज्ञानसाधनंकिमवशिष्यते । नकिमप्यस्तीत्यर्थः ॥ ५० ॥ तदेवस्फुटमाह । अतइति ॥ ५१ ॥ ५२ ॥ ५३ ॥ अज्ञानपटलकृतंध्वां
तमित्यर्थः ॥ ५४ ॥ ममभक्तानामतएवयोगिनांमद्भक्तियोगवताम् । सुविमलंस्वांतंहृदयंयेषांतेचतेऽतिशांतात्मानश्चातिशांतचित्ताश्चतेषाम् । मत्सेवायामभिरतः
प्रीतियुतआत्माचित्तंयेषांविमलज्ञानरूपआत्मायेषांज्ञानविषयस्तेषाम् । उद्यताज्ञानविषयेउद्यमशालिनीमतिर्यस्यसः । सतांसेवनेऽनन्यधीस्तत्परइत्यर्थः । तस्या
निशमहंदृश्योभवे । आत्मनेपदमार्षम् । नान्यथातादृशसंगंविनानमद्दर्शनंनापिमोक्षइत्यर्थः ॥ ५५ ॥ ॥ इत्यध्यात्मरामायणसेतौ अरण्यकांडे चतुर्थः

एवंसततयुक्तानांभक्तिरव्यभिचारिणी ॥ मयिसंजायतेनित्यंततःकिमवशिष्यते ॥ ५० ॥ अतोमद्भक्तियुक्तस्यज्ञानंविज्ञानमेवच ॥ वैरा
ग्यंचभवेच्छीघ्रंततोमुक्तिमवाप्नुयात् ॥ ५१ ॥ कथितंसर्वमेतत्तेतवप्रश्नानसारतः ॥ अस्मिन्मनःसमाधाययस्तिष्ठेत्सतुमुक्तिभाक् ॥५२॥
नवक्तव्यमिदंयत्नान्मद्भक्तिविमुखायहि ॥ मद्भक्तायप्रदातव्यमाहूयापिप्रयत्नतः ॥ ५३ ॥ यइदंतुपठेन्नित्यंश्रद्धाभक्तिसमन्वितः ॥ अज्ञा
नपटलध्वांतंविधूयपरिमुच्यते ॥५४॥ भक्तानांममयोगिनांसुविमलस्वांतातिशांतात्मनांमत्सेवाभिरतात्मनांचविमलज्ञानात्मनांसर्वदा ॥
संगंयःकुरुतेसदोद्यतमतिःसत्सेवनानन्यधीर्मोक्षस्तस्यकरस्थितोऽहमनिशंदृश्योभवेनान्यथा ॥५५॥ इति श्रीमदध्यात्मरामायणेउमा
महेश्वरसंवादेऽरण्यकांडेचतुर्थःसर्गः ॥४॥ ॥ तस्मिन्कालेमहारण्येराक्षसीकामरूपिणी ॥ विचचारमहासत्त्वाजनस्थाननिवासिनी ॥१॥
एकदागौतमीतीरेपंचवट्याःसमीपतः ॥ पद्मवज्रांकुशांकानिपदानिजगतीपतेः ॥ २ ॥ दृष्ट्वाकामपरीतात्मापादसौंदर्यमोहिता ॥ पश्यं
तीसाशनैरायाद्राघवस्यनिवेशनम् ॥ ३ ॥ तत्रसातंरमानाथंसीतयासहसंस्थितम् ॥ कंदर्पसदृशंरामंदृष्ट्वाकामविमोहिता ॥ ४ ॥ राक्षसी
राघवंप्राहकस्यत्वंकःकिमाश्रमे ॥ युक्तोजटावल्कलाद्यैःसाध्यंकिंतेऽत्रमेवद ॥ ५ ॥ अहंशूर्पणखानामराक्षसीकामरूपिणी ॥ भगिनीरा
क्षसेंद्रस्यरावणस्यमहात्मनः ॥ ६ ॥

सर्गः ॥ ४ ॥ ॥ तस्मिन्निति । महासत्त्वामहाबला ॥ १ ॥ पद्मेत्यादितच्चिह्नानितद्युक्तानीत्यर्थः ॥ २ ॥ कामपरीतात्माकामव्याप्तचित्ता पश्यंती ।
तत्पदानीत्यर्थः । तेनैवचिह्नेनराघवाश्रममायात् ॥ ३ ॥ ४ ॥ कःकिंनामा जटावल्कलाद्यैर्युक्तःआश्रमेकिंवससीतिशेषः । अत्रवासेनकिंसाध्यंतच्चवद ॥ ५ ॥
अथतत्प्रश्नंविनैवतज्जिज्ञासांसंभाव्यस्वस्योत्तमकलत्वादिचबोधयितुंस्वस्वरूपमाह । अहमिति ॥ ६ ॥

खरेणभ्रात्रासहितेत्यन्वयः । सर्वंवनमितिशेषः ॥ ७ ॥ ८ ॥ ९ ॥ तेकिंकृत्यंमयाकार्यंकरणीयंतद्ब्रूहीत्यन्वयः ॥ १० ॥ गिरिकानने समाहारद्वंद्वः । गिरिषुकाननेषुचेत्यर्थः ॥ ११ ॥ अनपायिनीसर्वथात्यक्तमशक्याक्षणमप्यविभक्ताच ॥ १२ ॥ तदेवाह । त्वंत्विति ॥ १३ ॥ तेनैवसहसंचर । गिरिकाननेष्विवेतिशेषः ॥ १४ ॥ संगच्छावःमिथुनीभावंप्राप्नुवः ॥ १५ ॥ १६ ॥ १७ ॥ क्रोधात् । अवददितिशेषः । किमवदत्तदाह । रामेत्यादि । अनवस्थि

खरेणसहिताभ्रात्रावसाम्यत्रैवकानने ॥ राज्ञादत्तंचमेसर्वंमुनिभक्षावसाम्यहम् ॥ ७ ॥ त्वांतुवेदितुमिच्छामिवदमेवदतांवर ॥ तामाहराम नामाहमयोध्याधिपतेःसुतः ॥ ८ ॥ एषामेसुंदरीभार्यासीताजनकनंदिनी ॥ सतुभ्राताकनीयान्मेलक्ष्मणोऽतीवसुंदरः ॥९॥ किंकृत्यंते मयाब्रूहिकार्यंभुवनसुंदरि ॥ इतिरामवचःश्रुत्वाकामार्तासाऽब्रवीदिदम् ॥ १० ॥ एहिराममयासार्धंरमस्वगिरिकानने ॥ कामार्ताऽहंनश क्नोमित्यक्तुंत्वांकमलेक्षणम् ॥ ११ ॥ रामःसीतांकटाक्षेणपश्यन्सस्मितमब्रवीत् ॥ भार्याममैषाकल्याणीविद्यतेह्यनपायिनी ॥ १२ ॥ त्वंतुसापत्न्यदुःखेनकथंस्थास्यसिसुंदरि ॥ बहिरास्तेममभ्रातालक्ष्मणोऽतीवसुंदरः ॥ १३ ॥ तवानुरूपोभवितापतिस्तेनैवसंचर ॥ इत्युक्तालक्ष्मणंप्राहपतिर्मेभवसुंदर ॥ १४ ॥ भ्रातुराज्ञांपुरस्कृत्यसंगच्छावोऽद्यमाचिरम् ॥ इत्याहराक्षसीघोरालक्ष्मणंकाममोहिता ॥ १५ ॥ तामाहलक्ष्मणःसाध्विदासोऽहंतस्यधीमतः ॥ दासीभविष्यसित्वंतुततोदुःखतरंनुकिम् ॥ १६ ॥ तमेवगच्छभद्रंतेसतुराजाऽखिलेश्वरः ॥ तच्छ्रुत्वापुनरप्यागाद्राघवंदुष्टमानसा ॥ १७ ॥ क्रोधाद्रामकिमर्थंमांभ्रामयस्यनवस्थितः ॥ इदानीमेवतांसीतांभक्षयामितवाग्रतः॥१८॥ इत्युक्त्वाविकटाकाराजानकीमनुधावती ॥ ततोरामाज्ञयाखड्गमादायपरिगृह्यताम् ॥ १९ ॥ चिच्छेदनासांकर्णौचलक्ष्मणोऽलघुविक्रमः ॥ ततोघोरध्वनिंकृत्वारुधिराक्तवपुर्द्रुतम् ॥ २० ॥ क्रंदमानापपाताग्रेखरस्यपरुषाक्षरा ॥ किमेतदितितामाहखरःखरतराक्षरः ॥२१॥ केनैवंकारिताऽसित्वंमृत्योर्वक्त्रानुवर्तिना ॥ वदमेतंवधिष्यामिकालकल्पमपिक्षणात् ॥ २२ ॥

तःसत्येवचसीतिशेषः । यत्स्त्रीत्यामामेवंभ्रामयसितामित्यर्थः ॥ १८ ॥ तांपरिगृह्यधृत्वा ॥ १९ ॥ २० ॥ परुषाक्षराखरधिकृतिबोधककठोरवाक् ॥ २१ ॥ एवंनासाकर्णविहीना तन्मेवद तमहंवधिष्यामीत्यन्वयः ॥ २२ ॥

॥ २३ ॥ तेनरामेणचोदितःप्रेरितः ॥ २४ ॥ २५ ॥ प्रागात्प्रस्थितः ॥ २६ ॥ रामस्यसमीपंगंतुंचोदयामास । वधकांक्षयेत्यस्यरामस्यवधकांक्षयेत्यर्थः । [1]त्वंवधेच्छयेतितत्त्वार्थः ॥ २७ ॥ २८ ॥ २९ ॥ सीतांनीत्वागृहीत्वेत्यर्थः ॥ ३० ॥ शापितोऽसिममोपरिमदीयः[2]शपथइत्यर्थः ॥ ३१ ॥ यत्तःसन्नद्धः ॥

तमाहराक्षसीरामःसीतालक्ष्मणसंयुतः ॥ दंडकंनिर्भयंकुर्वन्नास्तेगोदावरीतटे ॥ २३ ॥ मामेवंकृतवांस्तस्यभ्रातातेनैवचोदितः ॥ यदि त्वंकुलजातोऽसिवीरोसिजहितौरिपू ॥ २४ ॥ तयोस्तुरुधिरंपास्येभक्षयैतौसुदुर्मदौ ॥ नोचेत्प्राणान्परित्यज्ययास्यामियमसादनम् ॥ ॥ २५ ॥ तच्छुत्वात्वरितंप्रागात्खरःक्रोधेनमूर्च्छितः ॥ चतुर्दशसहस्राणिरक्षसांभीमकर्मणाम् ॥ २६ ॥ चोदयामासरामस्यसमीपंवधकांक्षया ॥ खरश्चत्रिशिराश्चैवदूषणश्चैवराक्षसः ॥२७॥ सर्वैरामंययुःशीघ्रंनानाप्रहरणोद्यताः ॥ श्रुत्वाकोलाहलंतेषांरामः सौमित्रिमब्रवीत् ॥ ॥ २८ ॥ श्रूयतेविपुलःशब्दोनूनमायांतिराक्षसाः ॥ भविष्यतिमहद्युद्धंनूनमद्यमयासह ॥२९॥ सीतांनीत्वागुहांगत्वातत्रतिष्ठमहाबल ॥ हंतुमिच्छाम्यहंसर्वान्राक्षसान्घोररूपिणः ॥ ३० ॥ अत्रकिंचिन्नवक्तव्यंशापितोऽसिममोपरि ॥ तथेतिसीतामादायलक्ष्मणोगह्वरंययौ ॥ ॥ ३१ ॥ रामःपरिकरंबद्ध्वाधनुरादायनिष्ठुरम ॥ तूणी[3]रावक्षयशरौबद्ध्वायत्तोऽभवत्प्रभुः ॥ ३२ ॥ ततआगत्यरक्षांसिरामस्योपरिचिक्षिपुः ॥ आयुधानिविचित्राणिपाषाणान्पादपानपि ॥ ३३ ॥ तानिचिच्छेदरामोऽपिलीलयातिलशः क्षणात् ॥ ततोबाणसहस्रेणहत्वाता न्सर्वराक्षसान् ॥ ३४ ॥ खरंत्रिशिरसंचैवदूषणंचैवराक्षसम् ॥ जघानप्रहरार्द्धेनसर्वानेवरघूत्तमः ॥ ३५ ॥ लक्ष्मणोऽपिगुहामध्यात्सीता मादायराघवे ॥ समर्प्यराक्षसान्दृष्ट्वाहतान्विस्मयमाययौ ॥ ३६ ॥ सीतारामंसमालिंग्यप्रसन्नमुखपंकजा ॥ शस्त्रव्रणानिचांगेषुममार्ज जनकात्मजा ॥ ३७ ॥ साऽपिदुद्रावदृष्ट्वातान्हतान्राक्षसपुंगवान् ॥ लंकांगत्वासभामध्येक्रोशंतीपादसान्निधौ ॥ ३८ ॥

॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ शस्त्रव्रणानिमार्जितरुधिराणिपर्णगर्वानिसत्यसंकल्पत्वाच्चकारेत्यर्थः ॥ ३७ ॥ रावणस्यपादसन्निधावुर्व्यां पपातेत्यन्वयः ॥ ३८ ॥

---

१ पारमार्थिकोऽयमर्थः । यत्त्वेषां चतुर्दशसहस्ररक्षसां वधकाङ्क्षयेति । २–तवेति शेषः । ३–अगस्त्यमुनिदत्तौ ।

॥ ३९ ॥ विरूपकरणंवैरूप्यमितयावत् ॥ ४० ॥ अथवाकुबेरेणकृतंतद्ब्रूहीत्यन्वयः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ किमर्थंकस्मैप्रयोजनाय कथं
केनप्रकारेणासुराःखरादयोहताः तेषांरामादीनाम् ॥ ४५ ॥ पंचवटीनाम । आश्रमइतिशेषः ॥ ४६ ॥ ४७ ॥ ४८ ॥ द्योतयंतीशोभयंती ॥ ४९ ॥

रावणस्यपपाताग्र्यांभगिनीतस्यरक्षसः ॥ दृष्ट्वातांरावणःप्राहभगिनींभयविह्वलाम् ॥ ३९ ॥ उत्तिष्ठोत्तिष्ठवत्सेत्वंविरूपकरणंतव ॥
कृतंशक्रेणवाभद्रेयमेनवरुणेनवा ॥ ४० ॥ कुबेरेणाथवाब्रूहिभस्मीकुर्यांक्षणेनतम् ॥ राक्षसीतमुवाचेदंत्वंप्रमत्तोविमूढधीः ॥ ४१ ॥
पानासक्तःस्त्रीविजितःषंढःसर्वत्रलक्ष्यसे ॥ चारचक्षुर्विहीनस्त्वंकथंराजाभविष्यासि ॥ ४२ ॥ खरश्चनिहतःसंख्येदूषणस्त्रिशिरास्तथा ॥
चतुर्दशसहस्राणिराक्षसानांमहात्मनाम् ॥४३॥ निहतानिक्षणेनैवरामेणासुरशत्रुणा ॥ जनस्थानमशेषेणमुनीनांनिर्भयंकृतम् ॥ नजाना
सिविमूढस्त्वमतएवमयोच्यते ॥ ४४ ॥ रावणउवाच ॥ कोवारामःकिमर्थंवाकथंतेनासुराहताः ॥ सम्यक्कथयमेतेषांमूलघातंकरोम्यहम् ॥
॥४५॥ शूर्पणखोवाच ॥ जनस्थानादहंयाताकदाचिद्गौतमीतटे ॥ तत्रपंचवटीनामपुराम्मुनिजनाश्रया ॥४६॥ तत्राश्रमेमयादृष्टोरामोरा
जीवलोचनः ॥ धनुर्बाणधरःश्रीमाञ्जटावल्कलमंडितः ॥४७॥ कनीयाननुजस्तस्यलक्ष्मणोऽपितथाविधः ॥ तस्यभार्याविशालाक्षी
रूपिणीश्रीरिवापरा ॥४८॥ देवगंधर्वनागानांमनुष्याणांतथाविधा ॥ नदृष्टानश्रुताराजन्द्योतयंतीवनंशुभा ॥ ४९ ॥ आनेतुमहमुद्युक्ता
तांभार्यार्थंतवानघ ॥ लक्ष्मणोनामतद्भ्राताचिच्छेदममनासिकाम् ॥ ५० ॥ कर्णौचनोदितस्तेनरामेणसमहाबलः ॥ ततोऽहमतिदुःखेन
रुदतीखरमन्वगाम् ॥ ५१ ॥ सोऽपिरामंसमासाद्ययुद्धंराक्षसयूथपैः ॥ ततः क्षणेनरामेणतेनैवबलशालिना ॥ ५२ ॥ सर्वेतेनविनष्टावैराक्ष
साभीमविक्रमाः ॥ यदिरामोमनःकुर्यात्त्रैलोक्यंनिमिषार्धतः ॥ ५३ ॥ भस्मीकुर्यान्नसंदेहइतिभातिममप्रभो ॥ यदिसातवभार्यास्यात्स
फलंतवजीवितम् ॥ ५४ ॥ अतोयतस्वराजेन्द्रयथातेवल्लभाभवेत् ॥ सीताराजीवपत्राक्षीसर्वलोकैकसुंदरी ॥ ५५ ॥ साक्षाद्रामस्यपुरतः
स्थातुंत्वंनक्षमःप्रभो ॥ माययामोहयित्वातुप्राप्स्यसेतांरघूत्तमम् ॥ ५६ ॥

॥ ५० ॥ ५१ ॥ राक्षसयूथपैःसहयुद्धमकरोदितिशेषः ॥ ५२ ॥ विनष्टाःविनाशिताइत्यर्थः । अंतर्भावितण्यर्थः ॥ ५३ ॥ ५४ ॥ ५५ ॥ रघूत्तमंमा
ययामोहयित्वातांप्राप्स्यसे इत्यन्वयः ॥ ५६ ॥

तत्शूर्पणखावाक्यम् सूक्तैर्वाक्यैर्दानादिभिर्भगिनीमाश्वास्यस्वगृहंप्रविवेशेत्यन्वयः ॥५७॥ नष्टःनाशितः शोकावेशादुक्तमेवपुनराह । भ्रातेति । बलंशारीरम् वीर्यं
मांतरंबलम् दर्पोऽहंकारः ॥ ५८ ॥ परेशःपरमात्मा बलौघैर्वानरसमूहैः द्रुहिणेनब्रह्मणा ॥ ५९ ॥ अतःअल्पराज्यहान्यामहत्तरराज्यप्राप्तेः ॥ ६० ॥
भक्त्याद्रुतमल्पकालकृतयाशीघ्रंनप्रसीदेत् एतद्राज्यत्याजनपूर्वंमहद्राज्यंनप्रापयेत् ॥६१॥ ॥ इति श्रीमत्सकलराजवि० अध्यात्मरामायणाम्बुधिसेतौअरण्य

श्रुत्वातत्सूक्तवाक्यैश्चदानमानादिभिस्तथा॥आश्वास्यभगिनींराजाप्रविवेशस्वकंगृहम् ॥ तत्रचिंतापरोभूत्वानिद्रांरात्रौनलब्धवान्॥५७॥
एकेनरामेणकथंमनुष्यमात्रेणनष्टःसबलःखरोमे ॥ भ्राताकथंमेबलवीर्यदर्पयुतोविनष्टोबतराघवेण ॥ ५८ ॥ यद्वानरामोमनुजःपरेशोमां
हंतुकामःसबलंबलौघैः ॥ संप्रार्थितोऽयंद्रुहिणेनपूर्वंमनुष्यरूपोऽद्यरघोःकुलेऽभूत् ॥ ५९ ॥ वध्योयदिस्यांपरमात्मनाऽहंवैकुंठराज्यंपरि
पालयेऽहम्॥ नोचेदिदंराक्षसराज्यमेवभोक्ष्येचिरंराममतोव्रजामि ॥६०॥ इत्थंविचिंत्याखिलराक्षसेंद्रोरामंविदित्वापरमेश्वरंहरिम्॥ विरो
धबुद्ध्यैवहरिंप्रयामिद्रुतंनभक्त्याभगवान्प्रसीदेत् ॥ ६१ ॥ ॥ इति श्रीमदध्यात्मरामायणेउमाहेश्वरसंवादेऽरण्यकांडेपंचमःसर्गः ॥५॥
विचिंत्यैवंनिशायांसप्रभातेरथमास्थितः ॥ रावणोमनसाकार्यमेकंनिश्चित्यबुद्धिमान् ॥ १ ॥ ययौमारीचसदनंपरंपारमुदन्वतः ॥
मारीचस्तत्रमुनिवज्जटावल्कलधारकः ॥ २ ॥ ध्यायन्हृदिपरात्मानंनिर्गुणंगुणभासकम् ॥ समाधिविरमेऽपश्यद्रावणंगृहमागतम् ॥३॥
द्रुतमुत्थायचालिंग्यपूजयित्वायथाविधि ॥ कृतातिथ्यंसुखासीनंमारीचोवाक्यमब्रवीत् ॥ ४॥ समागमनमेतत्तेरथेनैकेनरावण ॥ चिंता
परइवाभासिहृदिकार्यंविचिंतयन् ॥ ५ ॥ ब्रूहिमेनहिगोप्यंचेत्करवाणितवप्रियम् ॥ न्याय्यंचेद्ब्रूहिराजेंद्रवृजिनंमांस्पृशेन्नहि ॥ ६॥ रावण
उवाच ॥ अस्तिराजादशरथःसाकेताधिपतिःकिल ॥ रामनामासुतस्तस्यज्येष्ठःसत्यपराक्रमः ॥ ७ ॥

कांडेपंचमःसर्गः ॥ ५ ॥ एकंकार्यंसीताहरणेनरामतोमृत्युरूपम् ॥१॥ २ ॥ गुणाःप्रकृतिस्तत्कार्याणितद्भासकम् ॥ ३ ॥ ४ ॥ एतदेकेनरथेनसमागमनं
किमर्थम् । तद्ब्रूहीतिशेषः । हृदिकिंचित्कार्यंविचिंतयन् चिंतापरइवाभासि तत्कार्यंकिमितिब्रूहीत्यन्वयः ॥ ५॥ न्याय्यंधर्म्यम् । हि यतोयत्कार्यकरणेमांवृजिनं
पापंनस्पृशेत् ॥ ६ ॥ साकेतमयोध्या ॥ ७ ॥

वनविशेषणंवनजनप्रियमिति ॥ ८ ॥ ९ ॥ १० ॥ कर्णौंचिच्छेदतथाऽपिनिर्भयइत्यन्वयः ॥ ११ ॥ १२ ॥ मायामृगःमाययाविचित्रमृगरूपधरः ॥ ॥ १३ ॥ सहायंसहायत्वम् ॥१४॥ इदंवचःसीतोत्तमाब्रवीसाहर्त्तव्येत्येवंरूपम् । योदुरुपदेशेनत्वन्नाशंप्रतीक्षतेद्रष्टुमिच्छतिसएवशत्रुर्नरामःसएववध्यश्चेत्यर्थः ॥ ॥ १५ ॥ रामस्यपौरुषंस्मृत्वाऽद्यापिमेचित्तंविकलमितिशेषः । स्मर्यमाणंपौरुषंकिंचिदेवनिदर्शनायाह । बालोऽपीति । कौशिकस्ययज्ञरक्षणायागतोबा

विवासयामाससुतंवनंवनजनप्रियम् ॥ भार्ययासहितंभ्रात्रालक्ष्मणेनसमन्वितम् ॥८॥ सआस्तेविपिनेघोरेपंचवट्याश्रमेशुभे ॥ तस्यभार्या विशालाक्षीसीतालोकविमोहिनी ॥ ९ ॥ रामोनिरपराधान्मेराक्षसान्भीमविक्रमान् ॥ खरंचहत्वाविपिनेसुखमास्तेऽतिनिर्भयः ॥ १० ॥ भगिन्यामेशूर्पणख्यानिर्दोषायाश्चनासिकाम् ॥ कर्णौंचिच्छेददुष्टात्मावनेतिष्ठतिनिर्भयः ॥ ११ ॥ अतस्त्वयासहायेनगत्वातत्प्राणवल्लभाम् ॥ आनयिष्यामिविपिनेरहितेराघवेणताम् ॥१२॥ त्वंतुमायामृगोभूत्वाह्याश्रमादपनेष्यसि॥रामंचलक्ष्मणंचैवतदासीतांहराम्यहम्॥ ॥ १३ ॥ त्वंतुतावत्सहायंमेकृत्वास्थास्यसिपूर्ववत् ॥ इत्येवंभाषमाणंतंरावणंवीक्ष्यविस्मितः ॥ १४ ॥ केनेदमुपदिष्टंतेमूलघातकरंवचः॥ सएवशत्रुर्वध्यश्चयस्त्वन्नाशंप्रतीक्षते ॥१५॥ रामस्यपारुषंस्मृत्वाचित्तमद्यापिरावण ॥ बालोऽपिमांकौशिकस्ययज्ञसंरक्षणायसः ॥१६॥ आगतस्त्विषुणैकेनपातयामाससागरे ॥ योजनानांशतंरामस्तदादिभयविह्वलः ॥ १७ ॥ स्मृत्वास्मृत्वातदेवाहंरामंपश्यामिसर्वतः ॥ ॥ १८ ॥ दंडकेऽपिपुनरप्यहंवनेपूर्ववैरमनुचिंतयन्हृदि ॥ तीक्ष्णशृंगमृगरूपमेकदामादृशैर्बहुभिरावृतोऽभ्ययाम् ॥ १९ ॥ राघवंजनकजासमान्वितंलक्ष्मणेनसहितंत्वरान्वितः ॥ आगतोऽहमथहंतुमुद्यतोमांविलोक्यशरमेकमक्षिपत् ॥ २० ॥ तेनविद्धहृदयोऽहमुद्भ्रमन्राक्षसेंद्रपतितोऽस्मिसागरे ॥ तत्प्रभृत्यहमिदंसमाश्रितःस्थानमूर्जितमिदंभयार्दितः ॥ २१ ॥ राममेवसततंविभावयेभीतभीतइवभोगराशितः॥ राजरत्नरमणीरथादिकंश्रोत्रयोर्यदिगतंभयंभवेत् ॥ २२ ॥

लोऽपिरामस्त्वेकेनेषुणाऽनेकयोजनशतमुल्लंघ्यमांसागरेपातयामास तदेवरामकर्माहंस्मृत्वारामंसर्वतः सर्वत्रपश्यामि ॥ १६ ॥ १७ ॥ १८ ॥ तीक्ष्णशृंगमृगरूपम् । धृत्वेतिशेषः ॥ १९ ॥ २० ॥ तेनशरेण ऊर्जितंरामागमननिश्चयेननिर्भयम् ॥ २१ ॥ यद्वस्तुभोगसमहसाधनंवतोऽपिभीतभीतःअत्यंतंभीतइवराममेवभावये । तदेवोपपादयति । राजेति । रेफवत्त्वेनभोगसाधनानामप्येषांश्रवणंरामस्मारकतयाभयजनकमितिभावः ॥ २२ ॥

रामागमनशंकयाबाह्यकार्यंपरित्यज्यनिद्राणोऽपिराममेवाचिंतयन् । स्वपेइतिआत्मनेपदमार्षम् ॥ २३ ॥ तदास्वप्नदृष्टिगतराघवंस्वाप्नज्ञानविषयंराघवंपश्य
न्नेवबोधितोविगतनिद्रआस्थितआसनेभवेयमितिशेषः । राघवंप्रत्याग्रहंविमुच्येत्यन्वयः । चिरागतंचिरेणवृद्धिंप्राप्तंराक्षसकुलंरक्ष । एवंविरोधेनतत्स्मृतौसक
लमेवरक्षःकुलंनश्यति ॥ २४ ॥ राघवेतद्विषये विरोधमतिंविरोधसंपादिकांमतिम् ॥ २५ ॥ पुनरपितद्विरोधान्निवृत्तयेइतिहासांतरमाह । अहमिति ।

रामआगतइहेतिशंकयाबाह्यकार्यमपिसर्वमत्यजम्॥निद्रयापरिवृतोयदास्वपेराममेवमनसाऽनुचिंतयन्॥२३॥स्वप्नदृष्टिगतराघवंतदाबो
धितोविगतनिद्रआस्थितः॥तद्भवानपिविमुच्यचाग्रहंराघवंप्रतिगृहंप्रयाहिभो ॥ रक्षराक्षसकुलंचिरागतंतत्स्मृतौसकलमेवनश्यति॥२४॥
तवाहितंवदतोममभाषितंपरिगृहाणपरात्मनिराघवे ॥ त्यजविरोधमतिंभजभक्तितः परमकारुणिकोरघुनंदनः ॥२५॥ अहमशेषमिदंमुनि
वाक्यतोऽशृणवमादियुगेपरमेश्वरः ॥ ब्रह्मणाऽर्थितउवाचतंहरिःकिंतवेप्सितमहंकरवाणितत् ॥ २६ ॥ ब्रह्मणोक्तमरविंदलोचनत्वंप्रयाहि
भुविमानुषंवपुः ॥ दशरथात्मजभावमंजसाजहिरिपुंदशकंधरंहरे ॥ २७ ॥ अतोनमानुषोरामःसाक्षान्नारायणोऽव्ययः ॥ मायामानुषवे
षेणवनंयातोऽतिनिर्भयः ॥ २८ ॥ भूभारहरणार्थायगच्छताततगृहंसुखम् ॥ श्रुत्वामारीचवचनंरावणः प्रत्यभाषत ॥ २९ ॥ परमात्मा
यदारामःप्रार्थितोब्रह्मणाकिल ॥ मांहंतुंमानुषोभूत्वायत्नादिहसमागतः ॥ ३० ॥ करिष्यत्यचिरादेवसत्यसंकल्पईश्वरः ॥ अतोऽहंय
त्नतः सीतामानेष्याम्येवराघवात् ॥ ३१ ॥ वधेप्राप्तेरणेवीरप्राप्स्यामिपरमंपदम् ॥ यद्वारामंरणेहत्वासीतांप्राप्स्यामिनिर्भयः ॥ ३२ ॥
अतोत्तिष्ठमहाभागविचित्रमृगरूपधृक् ॥ रामंसलक्ष्मणंशीघ्रमाश्रमादतिदूरतः ॥ ३३ ॥ आक्रम्यगच्छत्वंशीघ्रंसुखंतिष्ठयथापुरा ॥
अतःपरंचेद्यत्किंचिद्भाषसेमद्विभीषणम् ॥ ३४ ॥

मुनिरत्रनारदः । आदियुगेसत्ययुगे तत् वदेतिशेषः ॥ २६ ॥ मानुषंवपुर्धृत्वेतिशेषः । दशरथात्मजभावंदशरथपुत्रत्वंप्राप्यांजसाशीघ्रमेव ॥२७॥२८॥२९॥
॥ ३० ॥ सत्यःसंकल्प इच्छायस्यसः राघवात्राघवंवंचयित्वेत्यर्थः ॥ ३१ ॥ मयारामाद्वधेप्राप्तेसतिहेवीराहंपरमंपदंप्राप्स्यामि ॥ ३२ ॥ अतोत्तिष्ठअतउ
त्तिष्ठ । संधिरार्षः ॥ ३३ ॥ यथापुरायथापूर्वम् आश्रमेसुखंतिष्ठइत्यन्वयः ॥ ३४ ॥

॥ ३५ ॥ भवार्णवान्मुक्तोभविष्यामीतिशेषः ध्रुवंनिरयोभवेदितिशेषः ॥ ३६ ॥ रामान्मरणमेवसम्यगितिनिश्चित्य ॥ ३७ ॥ गतौमारीचरावणौ जांबू
नदंसुवर्णम् ॥ ३८॥ विमुग्धंसुंदरमास्यंयस्यसः ॥ ३९ ॥ ४० ॥ पुनर्भयावृतःपलायते ॥ ४१ ॥ ॥ इति श्रीमत्सकलराजविपदुद्धरणस० सेतौअरण्य

हनिष्याम्यसिनाऽनेनत्वामत्रैवनसंशयः ॥ मारीचस्तद्वचःश्रुत्वास्वात्मन्येवानुचिंतयत् ॥ ३५ ॥ यदिमांराघवोहन्यात्तदामुक्तोभवार्णवा
त् ॥ मांहन्याद्यदिचेद्दुष्टस्तदामेनिरयोध्रुवम् ॥ ३६ ॥ इतिनिश्चित्यमरणंरामादुत्थायवेगतः ॥ अब्रवीद्रावणंराजन्करोम्याज्ञांतवप्रभो
॥ ३७ ॥ इत्युक्त्वारथमास्थायगतौरामाश्रमंप्रति ॥ शुद्धजांबूनदप्रख्योमृगोऽभूद्रौप्यबिंदुकः ॥ ३८ ॥ रत्नशृंगोमणिखुरोनीलरत्न
विलोचनः ॥ विद्युत्प्रभोविमुग्धास्योविचचारवनांतरे ॥ ३९ ॥ रामाश्रमपदस्यांतेसीतादृष्टिपथेचरन् ॥४०॥ क्षणंचधावत्यवतिष्ठतेक्षणं
समीपमागत्यपुनर्भयावृतः ॥ एवंसमायामृगवेषरूपधृक्चचारसीतांपरिमोहयन्खलः ॥ ४१ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसं
वादेऽरण्यकांडेषष्ठःसर्गः ॥ ६ ॥ ॥ अथरामोऽपितत्सर्वंज्ञात्वारावणचेष्टितम् ॥ उवाचसीतामेकांतेशृणुजानकिमेवचः ॥ १ ॥
रावणोभिक्षुरूपेणआगमिष्यतितेंऽतिकम् ॥ त्वंतुच्छायांत्वदाकारांस्थापयित्वोटजेविश ॥ २ ॥ अग्नावदृश्यरूपेणवर्षंतिष्ठममाज्ञया ॥
रावणस्यवधांतेमांपूर्ववत्प्राप्स्यसेशुभे ॥ ३ ॥ श्रुत्वारामोदितंवाक्यंसाऽपितत्रतथाकरोत् ॥ मायासीतांबहिःस्थाप्यस्वयमंतर्दधेऽनले
॥ ४ ॥ मायासीतातदापश्यन्मृगंमायाविनिर्मितम् ॥ हसंतीराममभ्येत्यप्रोवाचविनयान्विता ॥ ५ ॥ पश्यराममृगंचित्रंकानकंरत्नभूषि
तम् ॥ विचित्रबिंदुभिर्युक्तंचरंतमकुतोभयम् ॥ ६ ॥ बद्ध्वादेहिममक्रीडामृगोभवतुसुंदरः॥ तथेतिधनुरादायगच्छँल्लक्ष्मणमब्रवीत् ॥ ७॥
रक्षत्वमतियत्नेनसीतांमत्प्राणवल्लभाम् ॥ मायिनःसंतिविपिनेराक्षसाघोरदर्शनाः ॥ ८ ॥

कांडेषष्ठः सर्गः ॥ ६ ॥ ॥ अथेति ॥ १ ॥ त्वदाकारांतवाकारइवाकारोयस्यास्तांस्थापयित्वा बहिरितिशेषः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ अयंसुं
दरःक्रीडार्थोमृगःक्रीडामृगोभवत्वित्यन्वयः ॥ ७ ॥ मायिनःछलकर्तारः ॥ ८ ॥

१–अत्राडभाव आर्षः । अन्वचिंतयादित्यपेक्षितपाठेऽपि च्छन्दो नानुभज्यते ।

अवहितःसावधानःमृगरूपधरोऽयंमारीचएवनमृगोऽत्रनसंदेहो१ऽत्रएतदुद्देशेनमागाः एवंभूतोमृगः कुतोनकुत्रापीत्यर्थः ॥ ९ ॥ १० ॥ कुतोनअतोऽहमि
त्यादिर्गमिष्यामीत्यंदेः ॥ ११ ॥ जगदाकृतिः जगद्रूपेणपरिणम्यमाना ॥ १२ ॥ हरीरामइतिस्वभक्तवचःसत्यंकर्तुंमारीचंजानन्नपिसीताप्रियार्थायसीता
प्रियरूपमर्थमुद्दिश्यमृगंययौ । अनुययावित्यर्थः । अत्रमारीचस्यरामान्मरणंश्रेयइतिजानतः स्वस्मिन्प्रेमवत्तयास्वभक्तत्वंनिर्णीयतस्यतंमनोरथंपूरयितुंराघ

अतोऽत्रावहितःसाध्वींरक्षसीतामनिंदिताम् ॥ लक्ष्मणोराममाहेदंदेवायंमृगरूपधृक् ॥ मारीचोऽत्रनसंदेहएवंभूतोमृगःकुतः ॥९॥ श्रीराम
उवाच ॥ यदिमारीचएवायंतदाहन्मिनसंशयः॥मृगश्चेदानयिष्यामिसीताविश्रामहेतवे॥१०॥गमिष्यामिमृगंबद्ध्वाह्यानयिष्यामिसत्वरः॥
त्वंप्रयत्नेनसंतिष्ठसीतासंरक्षणोद्यतः॥११॥इत्युक्त्वाप्रययौरामोमायामृगमनुद्रुतः॥मायायदाश्रयालोकमोहिनीजगदाकृतिः॥१२॥निर्वि
कारश्चिदात्माऽपिपूर्णोऽपिमृगमन्वगात् ॥ भक्तानुकंपीभगवानितिसत्यंवचोहरिः ॥१३॥कर्तुंसीताप्रियार्थायजानन्नपिमृगंययौ॥अन्यथा
पूर्णकामस्यरामस्यविदितात्मनः ॥ १४ ॥ मृगेणवास्त्रियावाऽपिकिंकार्यंपरमात्मनः॥ कदाचिद्दृश्यतेऽभ्याशेक्षणंधावतिलीयते॥१५॥
दृश्यतेचततोदूरादेवंराममपाहरत् ॥ ततोरामोऽपिविज्ञायराक्षसोऽयमितिस्फुटम् ॥ १६ ॥ विव्याधशरमादायराक्षसंमृगरूपिणम् ॥ प
पातरुधिराक्तास्योमारीचःपूर्वरूपधृक् ॥ १७ ॥ हाहतोऽस्मिमहाबाहोत्राहिलक्ष्मणमांद्रुतम् ॥ इत्युक्त्वारामवद्वाचापपातरुधिराशनः
॥ १८ ॥ यन्नामाज्ञोपिमरणेस्मृत्वातत्साम्यमाप्नुयात् ॥ किमुताग्रेहरिंपश्यंस्तेनैवनिहतोऽसुरः ॥ १९ ॥ तद्देहादुत्थितंतेजःसर्वलोक
स्यपश्यतः ॥ राममेवाविशद्देवाविस्मयंपरमंययुः ॥ २० ॥

वस्यपूर्वविचारेणनिर्णीतभक्तस्यमनोरथंपूरयितुंचतदनुकंपयागतइतितात्पर्यम् ॥ १३ ॥ १४ ॥ अभ्याशेसमीपे ॥ १५ ॥ १६ ॥ १७ ॥ रामव
द्वाचारामवाक्तुल्यवाचा ॥ १८ ॥ सचभगवत्सायुज्यंप्राप्तइत्याह । यदिति । तंपश्यंस्तेनहतोऽसुरःसायुज्यंप्राप्तइतिकिमुवक्तव्यमिति ॥ १९ ॥ तदेवस्प
ष्टमाह । तद्देहादिति । तस्यरामप्रवेशंदृष्ट्वादेवाः परमंविस्मयंययुः । राममहिमविषयेइतिशेषः ॥ २० ॥

---

१–संबन्धि ।

तदेवाह । किमिति । किंप्राप्तः किंफलंप्राप्तः ॥ २१ ॥ रामभयादेवसर्वगृहादिकंपरित्यज्यपूर्वमपिरामंस्मरन् । स्थितइतिशेषः ॥ २२ ॥ तादृशःसत त्स्मृतिदूरीकृताशेषपापोंऽतेरामेणनिहतोरामंपश्यन्नराममेवप्राप । अत्रभगवद्भयमेववैराग्यादिज्ञानांतसकलमुक्तिसाधनसंपादकंजातमितिसूचितम् । मुख्यतयैतदेव सर्वसाधनमितिमंतव्यम् ॥ २३ ॥ २४ ॥ २५ ॥ किंममारएवंकिमर्थंमृतः किंभवेत्किमवस्थाभवेत् ॥ २६ ॥ २७ ॥ तदेवस्पष्टमाह । भीताभीतेवेत्यर्थः ।

किंकर्मकृत्वाकिंप्राप्तःपातकीमुनिहिंसकः ॥ अथवाराघवस्यायंमहिमानात्रसंशयः ॥ २१ ॥ रामबाणेनसंविद्धःपूर्वराममनुस्मरन् ॥ भयात्सर्वंपरित्यज्यगृहवित्तादिकंचयत् ॥ २२ ॥ हृदिरामंसदाध्यात्वानिर्धूताशेषकल्मषः ॥ अंतेरामेणनिहतःपश्यन्राममवापसः ॥२३॥ द्विजोवाराक्षसोऽवापिपापीवा धार्मिकोऽपिवा ॥ त्यजन्कलेबरंरामंस्मृत्वायातिपरंपदम् ॥२४॥ इतितेऽन्योन्यमाभाष्यततोदेवादिवंययुः ॥ रामस्तच्चिंतयामासम्रियमाणोऽसुराधमः ॥ २५ ॥ हालक्ष्मणेतिमद्वाक्यमनुकुर्वन्ममारकिम् ॥ श्रुत्वामद्वाक्यसदृशंवाक्यंसीताऽपिकिंभवेत् ॥ २६ ॥ इतिचिंतापरीतात्मारामोदूरान्न्यवर्तत ॥ सीतातद्भाषितंश्रुत्वामारीचस्यदुरात्मनः ॥ २७ ॥ भीताऽतिदुःखसंविग्नालक्ष्मणंत्विदमब्रवीत् ॥ गच्छलक्ष्मणवेगेनभ्राताතेऽसुरपीडितः ॥ २८ ॥ हालक्ष्मणेतिवचनंभ्रातुस्तेनशृणोषिकिम् ॥ तामाहलक्ष्मणोदेविरामवाक्यंनतद्भवेत् ॥ २९ ॥ यःकश्चिद्राक्षसोदेविम्रियमाणोऽब्रवीद्वचः ॥ रामस्त्रैलोक्यमपियःक्रुद्धोनाशयतिक्षणात् ॥ ३० ॥ सकथंदीनवचनंभाषतेऽमरपूजितः ॥ क्रुद्धालक्ष्मणमालोक्यसीताबाष्पविलोचना ॥ ३१ ॥ प्राहलक्ष्मणदुर्बुद्धेभ्रातुर्व्यसनमिच्छसि ॥ प्रेषितोभरतेनैवरामनाशाभिकांक्षिणा ॥ ३२ ॥ मांनेतुमागतोऽसित्वंरामनाशउपस्थिते ॥ नप्राप्स्यसेत्वंमामद्यपश्यप्राणांस्त्यजाम्यहम् ॥ ३३ ॥ नजानातीदृशंरामस्त्वांभार्याहरणोद्यतम् ॥ रामादन्यंनस्पृशामित्वांवाभरतमेववा ॥३४॥ इत्युक्त्वावध्यमानासास्वबाहुभ्यांरुरोदह ॥ तच्छ्रुत्वालक्ष्मणःकर्णौपिधायातीवदुःखितः ॥ ३५ ॥

यद्वा । अस्यामायासीतात्वात्तन्माययैववास्तवीभीतिः ॥ २८ ॥ तत्रामवाक्यंन तस्यभयलेशाभावात् ॥ २९ ॥ किंतुम्रियमाणस्यराक्षसस्येदंवचः तदेवाह । रामइति ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ स्वबाहुभ्यामात्मानंवध्यमानाताडयमानारुरोद कर्णौपिधायईदृशंपापमेषावदतीतितस्यश्रवणायोग्यत्वात्कर्णविधानम् ॥ ३५ ॥

नाशमदर्शनम् ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ तेप्रियम् । त्वद्योग्यातिथ्यकरणेनेतिशेषः ॥ ४० ॥ ततस्त्वद्वृत्तांतश्रवणानंतरम् ॥ ४१ ॥ ४२ ॥
॥ ४३ ॥ ४४ ॥ त्वांपुरंस्वनगरंलंकारूपंनेतुमागतइत्यन्वयः ॥ ४५ ॥ ४६ ॥ यद्यस्मात्एवंभाषसेततोराघवान्नाशमेष्यसि ॥ ४७ ॥ सहानुजोरामः

मामेवंभाषसेचंडिधिक्त्वांनाशमुपैष्यसि ॥ इत्युक्त्वावनदेवीभ्यःसमर्प्यजनकात्मजाम् ॥३६॥ ययौदुःखातिसंविग्नोराममेवशनैःशनैः॥त
तोऽतरंसमालोक्यरावणोभिक्षुवेषधृक् ॥ ३७ ॥ सीतासमीपमगमत्स्फुरद्दंडकमंडलुः ॥ सीतातमवलोक्याशुनत्वासंपूज्यभक्तितः
॥ ३८ ॥ कंदमूलफलादीनिदत्त्वास्वागतमब्रवीत् ॥ मुनेभुंक्ष्वफलादीनिविश्रमस्वयथासुखम् ॥ ३९ ॥ इदानीमेवभर्तामेह्यागमिष्यति
तेप्रियम् ॥ करिष्यतिविशेषेणतिष्ठत्वंयदिरोचते ॥ ४० ॥ भिक्षुरुवाच ॥ कात्वंकमलपत्राक्षिकोवाभर्तातवानघे ॥ किमर्थमत्रतेवासो
वनेराक्षससेविते ॥ ब्रूहिभद्रेततःसर्वंस्ववृत्तांतंनिवेदये ॥ ४१ ॥ सीतोवाच ॥ अयोध्याधिपतिःश्रीमान्राजादशरथोमहान् ॥ तस्यज्येष्ठः
सुतोरामःसर्वलक्षणलक्षितः ॥ ४२ ॥ तस्याहंधर्मतःपत्नीसीताजनकनन्दिनी ॥ तस्यभ्राताकनीयांश्चलक्ष्मणोभ्रातृवत्सलः ॥ ४३ ॥
पितुराज्ञांपुरस्कृत्यदंडकेवस्तुमागतः ॥ चतुर्दशसमास्त्वांतुज्ञातुमिच्छामिमेवद ॥ ४४ ॥ भिक्षुरुवाच ॥ पौलस्त्यतनयोऽहंतुराव
णोराक्षसाधिपः ॥ त्वत्कामपरितप्तोऽहंत्वांनेतुंपुरमागतः ॥ ४५ ॥ मुनिवेषेणरामेणकिंकरिष्यासिमांभज ॥ भुंक्ष्वभोगान्मयासार्धंत्यज
दुःखंवनोद्भवम् ॥ ४६ ॥ श्रुत्वातद्वचनंसीताभीताकिंचिदुवाचतम् ॥ यदेवंभाषसेमांत्वंनाशमेष्यसिराघवात् ॥ ४७ ॥ आगमिष्यतिरा
मोऽपिक्षणंतिष्ठसहानुजः ॥ मांकोधर्षयितुंशक्तोहरेर्भार्यांशशोयथा ॥ ४८ ॥ रामबाणैर्विभिन्नस्त्वंपतिष्यसिमहीतले ॥ इतिसीतावचः
श्रुत्वारावणःक्रोधमूर्छितः ॥ ४९ ॥ स्वरूपंदर्शयामासमहापर्वतसन्निभम् ॥ दशास्यंविंशतिभुजंकालमेघसमद्युति ॥ ५० ॥ तदृष्ट्वावनदे
व्यश्चभूतानिचवितत्रसुः ॥ ततोविदार्यधरणींनखैरुद्धृत्यबाहुभिः ॥ ५१ ॥

आगमिष्यतीत्यन्वयः । हरेःसिंहस्य शशकःक्षुद्रमृगः ४८ ॥ ४९ ॥ ५० ॥ तद्रावणस्वरूपम् । नखैर्धरणींविदार्यभूसंबद्धायाश्चालयितुमशक्यत्वात् ।
बाहुभिस्तामुद्धृत्यभुवःसकशात्उपरिकृत्वा ॥ ५१ ॥

---

१–णश् अदर्शने इतिधातो रूपम् ।

तोलयित्वाबाहुभ्यांभारमनुमीय ॥ ५२ ॥ पश्यंती आसीदितिशेषः ॥ ५३ ॥ ५४ ॥ मंत्रपूतंपुरोडाशंमुषित्वाशुनकइवलोकनाथस्यरामस्यभार्यां हत्वाममाग्रतःक्वगच्छतीत्यन्वयः ॥ ५५ ॥ ५६ ॥ ५७ ॥ अन्यरथेनमायाकल्पितेनसीतामादायागच्छदितिशेषः ॥ ५८ ॥ क्रोशंतीसीता मांनपश्यसिमांकिंनपश्यसीत्यर्थः । एवंविललापेतिशेषः॥ ५९ ॥ ६० ॥ ६१ ॥ जगाम रावणइतिशेषः ॥ ६२ ॥ आभरणादिकंविमुच्यउत्तरीयार्धखंडेनबद्ध्वारामा

तोलयित्वारथेक्षिप्त्वाययौक्षिप्रंविहायसा ॥ हारामहालक्ष्मणेतिरुदंतीजनकात्मजा ॥ ५२ ॥ भयोद्विग्नमनादीनापश्यंतीभुवमेवसा ॥ श्रुत्वातत्क्रंदितंदीनंसीतायाःपक्षिसत्तमः ॥ ५३ ॥ जटायुरुत्थितःशीघ्रंनगाग्रात्तीक्ष्णतुंडकः ॥ तिष्ठतिष्ठेतितंप्राहकोगच्छतिममाग्रतः ॥ ५४ ॥ मुषित्वालोकनाथस्यभार्यांशून्याद्वनालयात् ॥ शुनकोमंत्रपूतंत्वंपुरोडाशमिवाध्वरे ॥ ५५ ॥ इत्युक्त्वातीक्ष्णतुंडेनचूर्णयामासतद्रथम् ॥ वाहान्विभेदपादाभ्यांचूर्णयामासतद्धनुः ॥ ५६ ॥ ततःसीतांपरित्यज्यरावणःखड्गमाददे ॥ चिच्छेदपक्षौसामर्षःपक्षिराजस्यधीमतः ॥ ५७ ॥ पपातकिंचिच्छेषेणप्राणेनभुविपक्षिराट् ॥ पुनरन्यरथेनाशुसीतामादायरावणः ॥ ५८ ॥ क्रोशंतीरामरामेतित्रातारंनाधिगच्छती ॥ हारामहाजगन्नाथमांनपश्यसिदुःखिताम् ॥ ५९ ॥ रक्षसानीयमानांस्वांभार्यांमोचयराघव ॥ हालक्ष्मणमहाभागत्राहिमामपराधिनीम् ॥ ६० ॥ वाक्छरेणहतस्त्वंमेक्षंतुमर्हसिदेवर ॥ इत्येवंक्रोशमानांतांरामागमनशंकया ॥६१॥ जगामवायुवेगेनसीतामादायसत्वरः ॥ विहायसानीयमानासीताऽपश्यदधोमुखी ॥ ६२ ॥ पर्वताग्रस्थितान्पंचवानरान्वारिजानना ॥ उत्तरीयार्धखंडेनविमुच्याभरणादिकम् ॥ ६३ ॥ बद्ध्वाचिक्षेपरामायकथयंत्वितिपर्वते ॥ ततःसमुद्रमुल्लंघ्यलंकांगत्वासरावणः ॥ ६४ ॥ स्वांतःपुरेरहस्येतामशोकविपिनेऽक्षिपत् ॥ राक्षसीभिःपरिवृतांमातृबुद्ध्याऽनुपालयत् ॥ ६५ ॥

यकथयंत्वितिपर्वतेचिक्षेप । अनेनस्त्रीचरित्रस्याशक्यवक्तव्यतासूचिता ॥ ६३ ॥ ६४ ॥ रहसिएकांतेगुप्तदेशे अनुपालयत् । अन्वपालयदित्यर्थः । अडभावआर्षः ॥ ६५ ॥



१–५८ श्लोकटीकायामगच्छदितिशेषइत्युक्तं खलु, परन्तु 'क्रोशन्तीत्यादीनां द्वितीयान्तत्वमाश्रित्य ६१ श्लोकस्थतामित्यनेन विशेषणयित्वा ६२ श्लोकस्थजगामेत्यनेनान्वेतित्यर्थः करणीयः तेन ५९ स्थैवं बिललापेतिशेषइत्यपिमास्तु ' इति मांप्रति भाति ( क्रोशंतीरयादीनां द्वितीयांतत्वस्यापि सावकाशत्वात् )

परिकर्मशरीरसंस्कारादि ॥ ६६ ॥ ॥ इतिश्रीमत्सकल० सेतौअरण्यकांडेसप्तमः सर्गः ॥ ७ ॥ ॥ रामइति । तंसीतारक्षकत्वेनस्वयंस्थापितं लक्ष्मणमित्यर्थः ॥ १ ॥ स्वात्मनिस्वचित्ते ॥ २ ॥ ननुलक्ष्मणोयद्यपिनजानातितथाऽपित्वंजानास्येवतत्राह । ज्ञात्वापीति ॥ ३ ॥ तादृशशोकफल माह । यद्यहमिति ॥ ४ ॥ असुरालयंलंकाम् ॥ ५ ॥ नीत्वाप्राप्यअयोध्यांयातागंता ॥ एतत्किमर्थंज्ञानगोपनंतत्राह । ब्रह्मणाप्रार्थितोऽहंमनुष्यभावे

कृशाऽतिदीनापरिकर्मवर्जितादुःखेनशुष्यद्वदनातिविह्वला ॥ हारामरामेतिविलप्यमानासीतास्थितताराक्षसवृंदमध्ये ॥ ६६ ॥ इति श्रीम दध्यात्मरामायणेउमामहेश्वरसंवादेऽरण्यकांडेसप्तमःसर्गः ॥ ७ ॥ श्रीमहादेव उवाच ॥ रामोमायाविनंहत्वाराक्षसंकामरूपिणम् ॥ प्रत स्थेस्वाश्रमंगंतुंततोदूराद्ददर्शतम् ॥ १ ॥ आयांतंलक्ष्मणंदीनंमुखेनपरिशुष्यता ॥ राघवश्चिंतयामासस्वात्मन्येवमहामतिः ॥ २ ॥ लक्ष्म णस्तन्नजानातिमायासीतांमयाकृताम् ॥ ज्ञात्वाप्येनंवंचयित्वाशोचामिप्राकृतोयथा ॥ ३ ॥ यद्यहंविरतोभूत्वातूष्णींस्थास्यामिमंदिरे ॥ तदा राक्षसकोटीनांवधोपायःकथंभवेत् ॥ ४ ॥ यदिशोचामितांदुःखसंतप्तःकामुकोयथा ॥ तदाक्रमेणानुचिन्वन्सीतांयास्येऽसुरालयम् ॥ रावणं सकुलंहत्वासीतामग्नौस्थितांपुनः ॥ ५ ॥ मयैवस्थापितांनीत्वायाता[१]ऽयोध्यामतंद्रितः ॥ अहंमनुष्यभावेनजातोऽस्मिब्रह्मणाऽर्थितः ॥ ॥ ६ ॥ मनुष्यभावमापन्नःकिंचित्कालंवसामि[२]कौ ॥ ततोमायामनुष्यस्यचरितंमेऽनुशृण्वताम् ॥ ७ ॥ मुक्तिःस्यादप्रयासेनभक्तिमार्गानुव र्तिनाम् ॥ निश्चित्यैवंतदादृष्ट्वालक्ष्मणंवाक्यमब्रवीत् ॥ ८ ॥ किमर्थमागतोऽसित्वंसीतांत्यक्त्वाममाप्रियाम् ॥ नीतावाभक्षितावाऽपिराक्ष सैर्जनकात्मजा ॥ ९ ॥ लक्ष्मणःप्रांजलिःप्राहसीतायादुर्वचोरुदन् ॥ हालक्ष्मणेतिवचनंराक्षसोक्तंश्रुतंतया ॥ १० ॥

नजातोऽस्मिएवंचतद्भावसंरक्षणायैतदितिभावः ॥ ६ ॥ ननुरावणवधोत्तरंपुनरयोध्यागमनेनतत्रस्थानेनवानफलंतत्राह । मनुष्यभावमिति । भक्तमुक्तिरेवत त्फलमितिभावः ॥ ७ ॥ ८ ॥ नीतावेति । आवयोरसान्निध्येऽवश्यमेवमवस्थाप्राप्तेतिभावः ॥ ९ ॥ १० ॥

---

१ छान्दसं प्रथमपुरुषैकवचनं, यातास्मि गन्तास्मि—इत्येष एवार्थः । २—पृथिव्याम् ।

॥ ११ ॥ मयासांत्विताप्तांप्रोवाचेत्यन्वयः । यदुक्तंसीतयेतिशेषः ॥ १२ ॥ तथाऽपिस्त्रीस्वभावादेवंतदुक्तावपि ॥ १३ ॥ सत्यंकृत्वासत्यंमत्वेत्यर्थः । यत्शुभाननांत्यक्त्वाआगतंतदनुचितंकृतमित्यन्वयः ॥ १४ ॥ १५ ॥ मद्विमोहार्थंममोहार्थंक्व कचित् विलीयसेकिमित्यर्थः ॥ १६ ॥ आचिन्वन् अन्वेषयन् कुतःकुत्रेत्यर्थः । क्वचित्कुत्रेत्येवपाठः ॥ १७ ॥ मृगाइत्यादिसंबोधनानि । नकुत्रचिद्ददर्शेतिशेषः ॥ १८ ॥ सर्वथासर्वप्रकारेणपश्यन्नपिक्वापिदेशेनापश्यत् यदानंदस्तन्मयःसर्वशक्तिसमृद्धोवातामन्वशोचत् यदचलोऽप्यनुधावति तत्कर्तृकःशोकोऽचलकर्तृकंधावनंतदेतदाश्चर्यमितिभावः ॥ १९ ॥

त्वद्वाक्यसदृशंश्रुत्वामांगच्छेतित्वराब्रवीत् ॥ रुदतीसामयाप्रोक्तादेविराक्षसभाषितम् ॥ नेदंरामस्यवचनंस्वस्थाभवशुचिस्मिते ॥११॥ इत्येवंसांत्विताप्तासाध्वीमयाप्रोवाचमांपुनः ॥ यदुक्तंदुर्वचोरामनवाच्यंपुरतस्तव ॥ १२ ॥ कर्णौपिधायनिर्गत्ययातोऽहंत्वांसमीक्षितुम् ॥ रामस्तुलक्ष्मणंप्राहतथाऽप्यनुचितंकृतम् ॥ १३ ॥ त्वयास्त्रीभाषितंसत्यंकृत्वात्यक्त्वाशुभाननाम् ॥ नीतावाभक्षितावाऽपिराक्षसैर्नात्र संशयः ॥ १४ ॥ इतिचिंतापरोरामःस्वाश्रमंत्वरितोययौ ॥ तत्रादृष्ट्वाजनकजांविललापातिदुःखितः ॥ १५ ॥ हाप्रियेक्वगताऽसित्वंनासि पूर्ववदाश्रमे ॥ अथवामद्विमोहार्थंलीलयाक्वविलीयसे ॥१६॥ इत्याचिन्वन्वनंसर्वंनापश्यज्जानकींतदा ॥ वनदेव्यःकुतःसीतांब्रुवंतुममव ल्लभाम् ॥ १७ ॥ मृगाश्चपक्षिणोवृक्षादर्शयंतुममप्रियाम् ॥ इत्येवंविलपन्नेवरामसीतांनकुत्रचित् ॥ १८ ॥ सर्वज्ञःसर्वथाक्वापिनापश्यद्र घुनंदनः ॥ आनंदोऽप्यन्वशोचत्तामचलोऽप्यनुधावति ॥१९॥ निर्ममोनिरहंकारोऽप्यखंडानंदरूपवान् ॥ ममजायेतिसीतेतिविललापा तिदुःखितः ॥२०॥ एवंमायामनुचरन्नसक्तोऽपिरघूत्तमः ॥ आसक्तएवमूढानांभातितत्त्वविदांनहि ॥ २१ ॥ एवंविचिन्वन्सकलंवनंरामः सलक्ष्मणः ॥ भग्नंरथंछत्रचापंकूबरंपतितंभुवि ॥ २२ ॥ दृष्ट्वालक्ष्मणमाहेदंपश्यलक्ष्मणकेनाचित् ॥ नीयमानांजनकजांतंजित्वान्यो जहारताम् ॥ २३ ॥

निर्मलत्वादिगुणोऽपिममजायेतिविललाप । मायागृहीतमनुष्यत्वस्यलोकान्सत्यत्वेनप्रत्याययितुमितिभावः । अतिदुःखितःसइव ॥ २० ॥ तदेवाह । एवमिति । असक्तोऽपिआसक्तिरहितोऽपि ॥ २१ ॥ छत्रचापमित्यत्रभग्नमित्यनुकर्षः ॥ २२ ॥ नीयमानांजनकजांदृष्ट्वाऽन्यस्तंजित्वातांजहारत चिह्नमिदंपश्येत्यन्वयः ॥ २३ ॥

पर्वतसन्निभंतत्सदृशंरुधिराक्तवपुरितिकर्मधारयः ॥ २४ ॥ विविक्तेएकांते ॥ २५ ॥ २६ ॥ २७ ॥ रावणमितिपूर्वान्वयि । छित्वाहंस्थितइतिशेषः ॥ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ म्रियमाणेनमेमयेत्यर्थः ॥ ३४ ॥ पुनःस्पृशेत्यन्वयः । येनस्पर्शेनतेपदंयास्यामीत्यन्वयः ॥ ३५ ॥

ततःकंचिद्भुवोभागंगत्वापर्वतसन्निभम् ॥ रुधिराक्तवपुर्दृष्ट्वारामोवाक्यमथाब्रवीत् ॥ २४ ॥ एषनैभक्षयित्वातांजानकींशुभदर्शनाम् ॥ शेतेविविक्तेऽतितृप्तःपश्यहन्मिनिशाचरम् ॥ २५ ॥ चापमानयशीघ्रंमेबाणंचरघुनंदन ॥ तच्छ्रुत्वारामवचनंजटायुःप्राहभीतवत् ॥२६॥ मांनमारयभद्रंतेम्रियमाणंस्वकर्मणा ॥ अहंजटायुस्तेभार्याहारिणंसमनुद्रुतः ॥ २७ ॥ रावणंतत्रयुद्धंमेबभूवारिविमर्दन ॥ तस्यवाहान्र थंचापंछित्त्वाऽहंतेनघातितः ॥ २८ ॥ पतितोऽस्मिजगन्नाथप्राणांस्त्यक्ष्यामिपश्यताम् ॥ तच्छ्रुत्वाराघवोदीनंकंठप्राणंददर्शह ॥ २९ ॥ हस्ताभ्यांसंस्पृशन्रामोदुःखाश्रुवृतलोचनः ॥ ३० ॥ जटायोब्रूहिमेभार्याकेननीताशुभानना ॥ मत्कार्यार्थंहतोऽसित्वमतोमेप्रियबांधवः ॥ ३१ ॥ जटायुःसन्नयावाचावक्राद्रक्तंसमुद्वमन् ॥ उवाचरावणोरामराक्षसोभीमविक्रमः ॥ ३२ ॥ आदायमैथिलींसीतांदक्षिणाभिमुखो ययौ ॥ इतोवक्तुंनमेशक्तिःप्राणांस्त्यक्ष्यामितेऽग्रतः ॥ ३३ ॥ दिष्ट्यादृष्टोसिरामत्वांमृयमाणेनमेनघ ॥ परमात्माऽसिविष्णुस्त्वंमाया मनुजरूपधृक् ॥ ३४ ॥ अंतकालेऽपिदृष्ट्वात्वांमुक्तोऽहंरघुसत्तम ॥ हस्ताभ्यांस्पृशमांरामपुनर्यास्यामितेपदम् ॥ ३५ ॥ तथेतिरामःप स्पर्शतदंगंपाणिनास्मयन् ॥ ततःप्राणान्परित्यज्यजटायुःपतितोभुवि ॥३६॥ रामस्तमनुशोचित्वाबंधुवत्साश्रुलोचनः ॥ लक्ष्मणेनस मानाय्यकाष्ठानिप्रददाहतम् ॥ ३७ ॥ स्नात्वादुःखेनरामोऽपिलक्ष्मणेनसमन्वितः ॥ हत्वावनेमृगंतत्रमांसखंडान्समंततः ॥३८॥ शाद्व लेप्राक्षिपद्रामःपृथक्पृथगनेकधा ॥ भक्षंतुपक्षिणःसर्वेतृप्तोभवतुपक्षिराट् ॥ ३९ ॥ इत्युक्त्वाराघवःप्राहजटायोगच्छमत्पदम् ॥ मत्सारू प्यंभजस्वाद्यसर्वलोकस्यपश्यतः ॥ ४० ॥ ततोऽनंतरमेवासौदिव्यरूपधरःशुभः ॥ विमानवरमारुह्यभास्वरंभानुसन्निभम् ॥ ४१ ॥

स्मयन्पक्षिणोऽप्येवंपराक्रमएवंज्ञानमित्याश्चर्यवान् ॥ ३६ ॥ बंधुवदनुशोचित्वाअनेनतिरश्चामपिप्रीत्यादाहौचित्यमितिदर्शितम् ॥ ३७ ॥ ३८ ॥ भक्षंतुभक्षयंतु ॥ ३९ ॥ इत्युक्त्वाइतिसंकल्प्य ॥ ४० ॥ ४१ ॥

द्योतयन् । आकाशमितिशेषः ॥ ४२ ॥ राममाभाष्यरामंसंबोध्य ॥ ४३ ॥ अगणितगुणमनंतशक्तित्वात् । अप्रमेयंदेशकालापरिच्छेद्यंसंयमोनाशःआ
दिनाजन्मउपरमःशांतिरेवपरमाशोभायस्मिन्नृतम् ॥ ४४ ॥ निरवधिसुखम् । तदातिरिक्तेषुब्रह्मांतेषुसुखंसावधिकमितिभावः । इंदिरालक्ष्मीतत्कटाक्षाय
स्मिंस्तम् । क्षपितेति । सुरेंद्रादिसेवाप्रीतेनयेनतदीयदुःखंक्षपितमित्यर्थः ॥ ४५ ॥ ईहितप्रदानंभक्तेहितप्रदानस्वभावम् सुरागमूलेशोभनोरागःप्रीतिस्तस्य
मूलमाश्रयश्चित्तंतत्रकृतस्थानम् ॥ ४६ ॥ भवविपिनस्यदवाग्निभूतंनामधेयंयस्यतम् रवितनयायमुनातत्सदृशंतद्वर्णम् ॥ ४७ ॥ अविरतंभवस्यसंसारस्य

शंखचक्रगदापद्मकिरीटवरभूषणैः ॥ द्योतयन्स्वप्रकाशेनपीतांबरधरोऽमलः ॥ ४२ ॥ चतुर्भिःपार्षदैर्विष्णोस्तादृशैरभिपूजितः ॥ स्तू
यमानोयोगिगणैराममाभाष्यसत्वरः ॥ कृतांजलिपुटोभूत्वातुष्टावरघुनंदनम् ॥ ४३ ॥ जटायुरुवाच ॥ अगणितगुणमप्रमेयमाद्यंसक
लजगत्स्थितिसंयमादिहेतुम् ॥ उपरमपरमंपरात्मभूतंसततमहंप्रणतोऽस्मिरामचंद्रम् ॥ ४४ ॥ निरवधिसुखमिंदिराकटाक्षंक्षपितसुरें
द्रचतुर्मुखादिदुःखम् ॥ नरवरमनिशंनतोऽस्मिरामंवरदमहंवरचापबाणहस्तम् ॥ ४५ ॥ त्रिभुवनकमनीयरूपमीड्यंरविशतभासुरमी
हितप्रदानम् ॥ शरणदमनिशंसुरागमूलेकृतनिलयंरघुनंदनंप्रपद्ये ॥४६॥ भवविपिनदवाग्निनामधेयंभवमुखदैवतदैवतंदयालुम् ॥ दनुज
पतिसहस्रकोटिनाशंरवितनयासदृशंहरिंप्रपद्ये ॥ ४७ ॥ अविरतभवभावनातिदूरंभवविमुखैर्मुनिभिःसदैवदृश्यम् ॥ भवजलधिसुतार
णांघ्रिपोतंशरणमहंरघुनंदनंप्रपद्ये ॥ ४८ ॥ गिरिशगिरिसुतामनोनिवासंगिरिवरधारिणमीहिताभिरामम् ॥ सुरवरदनुजेंद्रसेवितांघ्रिंसुर
वरदंरघुनायकंप्रपद्ये ॥ ४९ ॥ परधनपरदारवर्जितानांपरगुणभूतिषुतुष्टमानसानाम् ॥ परहितनिरतात्मनांसुसेव्यंरघुवरमंबुजलोचनं
प्रपद्ये॥५०॥स्मितरुचिरविकासिताननाब्जमतिसुलभंसुरराजनीलनीलम् ॥ सितजलरुहचारुनेत्रशोभंरघुपतिमीशगुरोर्गुरुंप्रपद्ये ॥५१॥

भावनायेषांतेषामातिदूरः भवसमुद्रस्यसुतारणेंऽघ्रिरूपःपोतोयस्यतम् ॥ ४८ ॥ गिरिशःशिवः गिरिसुतापार्वतीतयोर्मनसिनिवासोयस्यतम् । गिरिवरधारिणम् ।
अयमेवकृष्णोभावीतिभावः । ईहितैश्चेष्टितैरभिराममभिरामचेष्टितमितियावत् । सुराणांवरदम् ॥ ४९ ॥ परगुणादिषुतुष्टमीर्ष्यारहितंमानसंयेषाम् ॥ ५० ॥
स्मितेनेषद्धासेनरुचिरंविकासितमाननाब्जंयस्य सुरराजनीलइंद्रनीलमणिःईशगुरोर्ब्रह्मणः ॥ ५१ ॥

यथैकोऽपिरविरुदपात्रेष्वनेकइव एवमेकोऽपित्वंगुणभेदाद्ब्रह्मादिसंज्ञकः अमरपतिरिंद्रस्तस्यस्तुतिपात्रम् । तत्कृतस्तुतिविषयमित्यर्थः ॥ ५२ ॥ रतिपतिः कामः ततोऽपिशतकोटिगुणंसुंदरमंगंयस्य शतपथोमाध्यंदिनानांब्राह्मणंतद्गोचरयातत्रोक्तप्रकारयाभावनयाऽविदूरंलभ्यमितियावत् । तदेवाह । यतिपतीत्यादि ॥ ५३ ॥ ५४ ॥ ५५ ॥ ब्रह्मसुपूजितंपदंवैकुंठम् ॥ ५६ ॥ इति श्रीमत्सकल० सेतौअरण्यकांडेअष्टमः सर्गः ॥ ८ ॥ विपिनांतरमन्यद्वनम्

हरिकमलजशंभुरूपभेदात्त्वमिहविभासिगुणत्रयानुवृत्तः ॥ रविरिवजलपूरितोदपात्रेष्वमरपतिस्तुतिपात्रमीशमीडे ॥ ५२ ॥ रतिपतिशतकोटिसुंदरांगंशतपथगोचरभावनाऽविदूरम् ॥ यतिपतिहृदयेसदाविभातंरघुपतिमार्तिहरंप्रभुंपपद्ये ॥५३॥ इत्येवंस्तुवतस्तस्यप्रसन्नोऽभूद्रघूत्तमः ॥ उवाचगच्छभद्रंतेममविष्णोःपरंपदम् ॥ ५४ ॥ शृणोतियइदंस्तोत्रंलिखेद्वानियतःपठेत् ॥ सयातिममसारूप्यंमरणेमत्स्मृतिंलभेत् ॥ ५५ ॥ इतिराघवभाषितंतदाश्रुतवान्हर्षसमाकुलोद्विजः ॥ रघुनंदनसाम्यमास्थितःप्रययौब्रह्मसुपूजितंपदम् ॥ ५६ ॥ इति श्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेऽरण्यकांडेऽष्टमःसर्गः ॥ ८ ॥ ॥ ततोरामोलक्ष्मणेनजगामाविपिनांतरम् ॥ पुनर्दुःखंसमाश्रित्यसीतान्वेषणतत्परः ॥ १ ॥ तत्राद्भुतसमाकारोराक्षसःप्रत्यदृश्यत ॥ वक्षस्येवमहावक्त्रश्चक्षुरादिविवर्जितः ॥ २ ॥ बाहूयोजनमात्रेणव्यापृतौतस्यरक्षसः ॥ कबंधोनामदैत्येंद्रःसर्वसत्त्वविहिंसकः ॥ ३ ॥ तद्बाह्वोर्मध्यदेशेतौचरंतौरामलक्ष्मणौ ॥ ददर्शतुर्महासत्त्वंतद्बाहुपरिवेष्टितौ ॥ ४ ॥ रामःप्रोवाचविहसन्पश्यलक्ष्मणराक्षसम् ॥ शिरःपादविहीनोऽयंयस्यवक्षसिचाननम् ॥ ५ ॥ बाहुभ्यांलभ्यतेयद्यत्तत्तद्भक्षन्स्थितोध्रुवम् ॥ आवामप्येतयोर्बाह्वोर्मध्येसंकलितौध्रुवम् ॥ ६ ॥ गंतुमन्यत्रमार्गोनदृश्यतेरघुनंदन ॥ किंकर्तव्यमितोऽस्माभिरिदानींभक्षयेत्सनौ ॥ ७ ॥

दुःखंसमाश्रित्याभिनीय ॥ १ ॥ अद्भुतसमाकारःआश्चर्याकृतिः महद्वक्त्रंयस्यसः ॥ २ ॥ व्यापृतौव्यापारवंतौ ॥ ३ ॥ ४ ॥ ५ ॥ संकलितौप्राप्तौ ॥ ॥ ६ ॥ नौ आवाम् ॥ ७ ॥

---

१ पक्षीजटायुः । २–आर्षोऽत्रगुणः । ददृशतुरित्यपेक्षितम् ।

छिंद्यांछिंद्यावइत्यर्थः । आर्षमेकवचनम् ॥ ८ ॥ ९ ॥ मद्वाहुच्छेदसमर्थौलोकेभूलोकेकुतःअसंभाविताववेव तथादिविवियमामेषुदेवेष्वपि असंभावितौ तद्युवां काविव्याश्चर्येणप्रश्नः ॥ १० ॥ ११ ॥ अहंरामस्तस्यपुत्रइत्यन्वयः ॥ १२ ॥ मृगययामृगयासक्त्यायातौदूरंयातावित्यर्थः । रक्षसानीतांसीतांविचिन्वंता वित्यन्वयः ॥ १३ ॥ अत्रतवबाहुभ्यांवेष्टितौजातौप्राणरिरक्षयातवभुजौच्छिन्नौ । स्ववृत्तांतमुक्त्वातद्वृत्तांतपृच्छति । त्वंचकइति ॥ १४ ॥ १५ ॥ वरनार्यः

लक्ष्मणस्तमुवाचेदंकिंविचारेणराघव ॥ आवामेकैकमव्यग्रौछिंद्यावरक्षोभुजौध्रुवम् ॥ ८ ॥ तथेतिरामःखड्गेनभुजंदक्षिणमच्छिनत् ॥ तथै वलक्ष्मणोवामंचिच्छेदभुजमंजसा ॥ ९ ॥ ततोऽतिविस्मितोदैत्यःकौयुवांसुरपुंगवौ ॥ मद्वाहुच्छेदकौलोकेदिविदेवेषुवाकुतः ॥ १० ॥ ततोऽब्रवीद्धसन्नेवरामोराजीवलोचनः ॥ अयोध्याधिपतिःश्रीमान्राजादशरथोमहान् ॥ ११ ॥ रामोऽहंतस्यपुत्रोऽसौभ्राताामेलक्ष्मणःसु धीः ॥ ममभार्याजनकजासीतात्रैलोक्यसुंदरी ॥ १२ ॥ आवांमृगययायातौतदाकेनापिरक्षसा ॥ नीतांसीतांविचिन्वंतौचागतौघोरका नने ॥ १३ ॥ बाहुभ्यांवेष्टितावत्रतवप्राणरिरक्षया ॥ छिन्नौतवभुजौत्वंचकोवाविकटरूपधृक् ॥ १४ ॥ कबंधउवाच ॥ धन्योऽहंयदिराम स्त्वमागतोऽसिममांतिकम् ॥ पुरागंधर्वराजोऽहंरूपयौवनदर्पितः ॥ १५ ॥ विचरँल्लोकमखिलंवरनारीमनोहरः ॥ तपसाब्रह्मणोलब्धमव ध्यत्वंरघूत्तम ॥ १६ ॥ अष्टावक्रंमुनिंदृष्ट्वाकदाचिदहसंपुरा ॥ क्रुद्धोऽसावाहदुष्टत्वंराक्षसोभवदुर्मते ॥ १७ ॥ अष्टावक्रःपुनःप्राहवंदितो मेदयापरः ॥ शापस्यांतंचमेप्राहतपसाद्योतितप्रभः ॥ १८ ॥ त्रेतायुगेदाशरथिर्भूत्वानारायणःस्वयम् ॥ आगमिष्यतितेबाहूछिंद्येतेयोज नायतौ ॥ १९ ॥ तेनशापाद्विनिर्मुक्तोभविष्यसियथापुरा ॥ इतिशप्तोऽहमद्राक्षंराक्षसींतनुमात्मनः ॥ २० ॥ कदाचिद्देवराजानमभ्यद्रव महंरुषा ॥ सोऽपिवज्रेणमांरामाशिरोदेशेऽभ्यताडयत् ॥ २१ ॥ तदाशिरोगतंकुक्षिंपादौचरघुनंदन ॥ ब्रह्मदत्तवरान्मृत्युर्नाभून्मेवज्रताड नात् ॥ २२ ॥ मुखाभावेकथंजीवेदयमित्यमराधिपम् ॥ ऊचुःसर्वेदयाविष्टामांविलोक्यास्यवर्जितम् ॥ २३ ॥

उत्तमस्त्रियः अवध्यत्वंलब्धम् । मयेतिशेषः ॥ १६ ॥ १७ ॥ १८ ॥ तेनयदातेबाहूच्छिद्येतेतदाशापाद्विनिर्मुक्तोभविष्यसीतिसंबंधः ॥ १९ ॥ २० ॥ कदाचिदिति । राक्षसतनुप्राप्त्यनंतरमितिशेषः ॥ २१ ॥ तदावज्रेणताडनेशिरःकुक्षिंगतम् पादौचगतौनष्टावित्यनुकर्षः ॥ २२ ॥ २३ ॥

इतोव्रजेति । ऊरुभ्यामेवारिंगान्निविशेषः ॥ २४ ॥ बाहुभ्यांगृहीत्वेतिशेषः ॥ २५ ॥ श्वभ्रास्येगर्तोपरिभागेअग्नींधनावृतेअग्नियुक्तेंधनावृते ॥ २६ ॥ भार्यामार्गंभार्यालाभोपायम् ॥ २७ ॥ ततोदेहात् । दह्यमानदेहादित्यर्थः । कंदर्पसदृशः पुरुषउत्थितइत्यर्थः ॥ २८ ॥ २९ ॥ अतिसंभ्रमात्अत्यादरात् । अनंतदेशापरिच्छेद्यम् अनाद्यंतमाद्यंतरहितम् । तेनकालापरिच्छेद्यत्वमुक्तम् । मनोवाचामिति । यतोवाचोनिवर्तंतेअप्राप्यमनसासह । इति श्रुतेः ॥ ३० ॥ देहद्वयंहिरण्यगर्भविराड्रूपंस्थूलंसूक्ष्मंच ततोविलक्षणंदृग्रूपंकेवलज्ञानरूपंतेसूक्ष्मंरूपंतदव्यक्तंसर्वथायोगिभिर्दुर्ज्ञेयम् इतरतसर्वंजडम् ।

ततोमांप्राहमघवाजठरेतेमुखंभवेत् ॥ बाहूतेयोजनायामौभविष्यतइतोव्रज ॥ २४ ॥ इत्युक्तोऽत्रवसन्नित्यंबाहुभ्यांवनगोचरान् ॥ भक्षयाम्यधुनाबाहूखंडितौमेत्वयाऽनघ ॥ २५ ॥ इतःपरंमांश्वभ्रास्येनिक्षिपाग्नींधनावृते ॥ अग्निनादह्यमानोऽहंत्वयारघुकुलोत्तम ॥ २६ ॥ पूर्वंरूपमनुप्राप्यभार्यामार्गंवदामिते ॥ इत्युक्तेलक्ष्मणेनाशुश्वभ्रंनिर्मायतत्रतम् ॥ २७ ॥ निक्षिप्यप्रादहत्काष्ठैस्ततोदेहात्समुत्थितः ॥ कंदर्पसदृशाकारःसर्वाभरणभूषितः ॥ २८ ॥ रामंप्रदक्षिणंकृत्वासाष्टांगंप्रणिपत्यच ॥ कृतांजलिरुवाचेदंभक्तिगद्गदयागिरा ॥ २९ ॥ गंधर्वउवाच ॥ ॥ स्तोतुमुत्सहतेमेऽद्यमनोरामातिसंभ्रमात् ॥ त्वामनंतमनाद्यंतंमनोवाचामगोचरम् ॥ ३० ॥ सूक्ष्मंतेरूपमव्यक्तंदेहद्वयविलक्षणम् ॥ दृग्रूपमितरत्सर्वंदृश्यंजडमनात्मकम् ॥ तत्कथंत्वांविजानीयाद्व्यतिरिक्तंमनःप्रभो ॥ ३१ ॥ बुद्ध्यात्माभासयोरैक्यंजीवइत्यभिधीयते ॥ बुद्ध्यादिसाक्षीब्रह्मैवतस्मिन्निर्विषयेऽखिलम् ॥ ३२ ॥ आरोप्यतेज्ञानवशान्निर्विकारेऽखिलात्मनि ॥ हिरण्यगर्भस्तेसूक्ष्मंदेहंस्थूलंविराट्स्मृतम् ॥ ३३ ॥

यतोजगज्जडंदृश्यत्वादित्यनुमानमनेनसूचितम् । विस्तरस्त्वस्मद्गुरुभिर्व्याससूत्रवृत्तौप्रपंचितः । व्यतिरिक्तंजडत्वात्त्वत्तोभिन्नंमनस्त्वांकथंजानीयादित्यर्थः ॥ ॥ ३१ ॥ बुद्धिश्चित्तंतत्रात्माभासआत्मप्रतिबिंबस्तयोरैक्यंभेदानवभासस्तद्विषयोजीवः बुद्ध्यादीनांजडानांसाक्षीअंतर्यामी ब्रह्मैवशुद्धंचैतन्यम् यतोनिर्विषयेवाङ्मनसयोरगोचरेतस्मिन्निदमखिलंजगत् अज्ञानवशान्निर्विकारेत्वयिआरोप्यते हिरण्यगर्भःसूक्ष्मंदेहम् । सकललिंगदेहसमष्टिरूपत्वात्तस्येतिभावः । सकलस्थूलसमष्टिर्विराडितिभावः ॥ ३२ ॥ ३३ ॥

---

१–नागेशैः ।

ध्यातॄणांमंगलंस्वपदप्रदत्वात् । अतस्तेसूक्ष्मंभावनाविषयः हृदयपुंडरीकादौध्येयमितिपूर्ववत् । यद्विषयभावनायांसिद्धायांभूतभविष्यद्वर्तमानसर्वपदार्थ ज्ञानंसंभवतीत्याह । भूतमित्यादि । भव्यंवर्तमानम् । ३४ ॥ अंडकोशरूपोभगवतोविराड्देहस्तत्रमहदादिभिरावृतेइति । अत्रेयंपौराणिकसांख्यसंम ताप्रक्रिया । स्वव्याप्याहंकारावरणाद्दशगुणितंमहत्तत्त्वंबाह्यमावरणम् तन्मध्येऽहंकारावरणम् । तदपिस्वव्याप्यव्योमावरणाद्दशगुणितम् । तन्मध्ये व्योमावरणम् । तस्यदशगुणितस्यमध्येवाय्वावरणम् । तस्यापिदशगुणितस्यमध्येतेजआवरणम् । तेजसोदशगुणितस्यमध्येजलावरणम् । जलस्यदश गुणितस्यमध्येपृथिव्यावरणम् । तस्यादशगुणायामध्येपृथिवीतेजउद्भूतमंडम् । तस्यापि दशगुणस्यांडस्यमध्ये चतुर्दशभुवनात्मकंस्वयंभुवःस्थूलं शरीरं ।

भावनाविषयोरामसूक्ष्मंतेध्यातृमंगलम् ॥ भूतंभव्यंभविष्यच्चयत्रेदंदृश्यतेजगत् ॥ ३४ ॥ स्थूलेंऽडकोशेदेहेतेमहदादिभिरावृते ॥ सप्तभि रुत्तरगुणैर्वैराजोधारणाश्रयः ॥ ३५ ॥ त्वमेवसर्वंकैवल्यंलोकास्तेऽवयवाःस्मृताः ॥ पातालंतेपादमूलंपार्ष्णिस्तवमहातलम् ॥ ३६ ॥ रसातलंतेगुल्फौतुतलातलमितीर्यते ॥ जानुनीसुतलंरामऊरूतेवितलंतथा ॥ ३७ ॥ अतलंचमहीरामजघनंनाभिगंनभः ॥ उरःस्थलंते ज्योतींषिग्रीवातेमहरुच्यते ॥ ३८ ॥ वदनंजनलोकस्तेतपस्तेशंखदेशगम् ॥ सत्यलोकोरघुश्रेष्ठशीर्षण्यास्तेसदाप्रभो ॥ ३९ ॥ इंद्रा दयोलोकपालाबाहवस्तेदिशःश्रुती ॥ अश्विनौनासिकेरामवक्त्रंतेऽग्निरुदाहृतः ॥ ४० ॥ चक्षुस्तेसवितारामममनश्चंद्रउदाहृतः ॥ भ्रूभंग एवकालस्तेबुद्धिस्तेवाक्पतिर्भवेत् ॥ ४१ ॥

स्वयंभूसंकल्पादेवजायतेइति । तदाह । सप्तभिरुत्तरगुणैरिति । उत्तरदशगुणैःस्वस्वांतर्गतापेक्षयेत्यर्थः । साधारणाश्रयः । भ्रूमध्यदेशेषुभावनाश्रयइत्यर्थः ॥ ३५ ॥ तदेवविराड्रूपंध्यानयोग्यंदर्शयति । त्वमेवेतिसर्वंकैवल्यमंतेप्राप्यंवस्त्वित्यर्थः । लोकास्तेऽवयवाइतिसामान्यतउक्त्वातदेवविशेषेणाह पातालमित्यादि । पातालंसप्तमोऽधोलोकः ॥ ३६ ॥ तलातलमितीर्यतइत्यस्यगुल्फोर्ध्वंजान्वधोभागइतिशेषः ॥ ३७ ॥ अतलंचेत्यस्योर्वोरूर्ध्वंजघना धोभागइतिशेषः । नाभेरधोभागंजघनंतन्महीपृथ्वीत्यर्थः । नभोभुवर्लोकोऽत्रज्योतींषिस्वर्गलोकोऽत्र महर्महर्लोकः ॥ ३८ ॥ तपस्तपोलोकः ॥ ३९ ॥ श्रुतीश्रोत्रे ॥ ४० ॥ कालोनिमेषादिर्द्विपरार्धान्तः वाक्पतिर्बृहस्पतिः ॥ ४१ ॥

१ छान्दसंछन्दोवैकल्यम् ।

अहंकारश्चित्तम् छंदांसिवेदास्तेवाचः वागित्यर्थः । दंष्ट्रदेशस्थोदंष्ट्रादेशस्थइत्यर्थः । ह्रस्वआर्षः । द्विजालयोदंतपंक्तयः ॥ ४२ ॥ मोहकरीसकलजनमोहकरी ॥ ४३ ॥ निमिषोरात्रिरुन्मेषणंदिवा सप्तसमुद्राःकुक्षिस्तव नद्यस्तवनाड्यः ॥ ४४ ॥ वृष्टिस्तवरेतः ज्ञानशक्तिस्तवमहिमासर्वतआधिक्यम् । त्वत्तुल्याज्ञानशक्तिर्नान्यत्रेतिभावः ॥ ४५ ॥ अतआधिक्यमन्यत्किंचननहि किमपिनेत्यर्थः ॥ ४६ ॥ सरोमपुलकइत्यनेनप्रेमरसलक्षणमुक्तम् येनगात्रे सरोमपुलकतासप्रेमरसः । इदंमेभूयाल्लब्धंचमानश्यत्वितीच्छाप्रेमेत्याहुः ॥ ४७ ॥ अयंजीवोयदातेस्थूलरूपभावकोभवतितदैवतस्यमुक्तिःस्याद्भवेदित्यर्थः ।

रुद्रोऽहंकाररूपस्तेवाचश्छंदांसितेऽव्यय ॥ यमस्तेदंष्ट्रदेशस्थोनक्षत्राणिद्विजालयः ॥ ४२ ॥ हासोमोहकरीमायासृष्टिस्तेऽपांगमोक्षणम् ॥ धर्मःपुरस्तेऽधर्मश्चपृष्ठभागउदीरितः ॥ ४३ ॥ निमिषोन्मेषणेरात्रिर्दिवाचैवरघूत्तम ॥ समुद्राःसप्ततेकुक्षिर्नाड्योनद्यस्तवप्रभो ॥ ४४ ॥ रोमाणिवृक्षौषधयोरेतोवृष्टिस्तवप्रभो ॥ महिमाज्ञानशक्तिस्तेएवंस्थूलंवपुस्तव ॥ ४५ ॥ यदस्मिन्स्थूलरूपेतेमनःसंधार्यतेनरैः ॥ अनायासेनमुक्तिःस्यादतोऽन्यन्नहिकिंचन ॥ ४६ ॥ अतोहंरामरूपंतेस्थूलमेवानुभावये ॥ यस्मिन्ध्यातेप्रेमरसःसरोमपुलकोभवेत् ॥ ४७ ॥ तदैवमुक्तिःस्याद्रामयदातेस्थूलभावकः ॥ तदप्यास्तांतवैवाहमेतद्रूपंविचिंतये ॥ ४८ ॥ धनुर्बाणधरंश्यामंजटावल्कलभूषितम् ॥ अपीच्यवयसंसीतांविचिन्वंतंसलक्ष्मणम् ॥४९॥ इदमेवसदामेस्यान्मानसेरघुनंदन ॥ सर्वज्ञःशंकरःसाक्षात्पार्वत्यासहितःसदा ॥ ५० ॥ त्वद्रूपमेवंसततंध्यायन्नास्तेरघूत्तम ॥ मुमूर्षूणांसदाकाश्यांतारकंब्रह्मवाचकम् ॥ ५१ ॥ रामरामेत्युपदिशन्सदासंतुष्टमानसः ॥ अतस्त्वंजानकीनाथपरमात्मासुनिश्चितः ॥ ५२ ॥

तत्स्थूलभावनमप्यास्तांयद्यशक्यंतदातिष्ठतु तवैतद्रूपमेवाहंविचिंतयिष्यामि ॥ ४८ ॥ तद्रूपमाह । धनुरिति । अपीच्यवयसंतारुण्यवयस्कम् ॥ ४९ ॥ तद्रूपध्यानप्रार्थनेहेतुमाह । सर्वज्ञइत्यादि । एवंतद्रूपमनुपदोक्तंधनुरित्यादि । एवंचशंकरध्येयत्वादेतद्रूपध्यानप्रार्थनमितिभावः ॥ ५० ॥ ननुमनुष्यस्यममकिंमेतत्प्रार्थ्यतेइत्याशंकायांतस्यपरमात्मत्वंयुक्त्यासाधयति । मुमूर्षूणामिति । तारकंब्रह्मतत्त्वमस्यादिप्रतिप्राद्यंतस्यवाचकंप्रतिपादकम् ॥ ५१ ॥ रमंतेयोगिनोऽत्रेतिव्युत्पत्त्येतिभावः ॥ ५२ ॥

त्वांनजानंतिपरमात्मत्वेनेत्यर्थः ॥ ५३ ॥ ५४ ॥ योगिभिरनेनैवदेहेनयोगबलाद्गम्यंस्वलोकम् ॥ ५५ ॥ नित्यानुभवानुमेयंनित्यंयोऽनुभवोज्ञानंतत्तद्वस्तुविषयं तेनानुमेयम् । तदुक्तंभगवद्गीतायाम् । सर्वस्यचाहंहृदिसन्निविष्टोमत्तःस्मृतिर्ज्ञानमपोहनंच । इति ॥ ५६ ॥ इति श्रीमत्सकल० सेतौ अरण्यकांडेनवमः सर्गः ॥ ९ ॥ प्रयास्यन्स्वस्थानमितिशेषः । पुरोभागेदृश्यमानेआश्रमेत्वच्चरणभक्तिमार्गविशारदाशबरीआस्ते ॥ १ ॥ सातेसर्वंसीतावस्थितिस्थानंतत्प्राप्त्युपायंचे त्यर्थः ॥ २ ॥ विष्णोःपदंस्वलोकम् ॥ ३ ॥ ४ ॥ अचिरेणशीघ्रम् ॥ ५ ॥ पादयोरग्रेतदंत्यभागे स्वासनेशोभनेआसने ॥ ६ ॥ आदृताअर्घ्यादिभिस्त

सर्वेतेमाययामूढास्त्वांनजानंतितत्त्वतः ॥ नमस्तेरामभद्रायवेधसेपरमात्मने ॥ ५३ ॥ अयोध्याधिपतेतुभ्यंनमःसौमित्रिसेवित ॥ त्राहि त्राहिजगन्नाथमांमायानावृणोतुते ॥ ५४ ॥ रामउवाच ॥ तुष्टोहंदेवगंधर्वभक्त्यास्तुत्याचतेऽनघ ॥ याहिमेपरमंस्थानंयोगिगम्यंसनात नम् ॥५५॥ जपंतियेनित्यमनन्यबुद्ध्याभक्त्यात्वदुक्तंस्तवमागमोक्तम् ॥ तेऽज्ञानसंभूतभवंविहायमांयांतिनित्यानुभवानुमेयम् ॥ ५६ ॥ इति श्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेऽरण्यकांडेनवमःसर्गः ॥९॥ ॥ लब्ध्वावरंसगंधर्वःप्रयास्यन्राममब्रवीत् ॥ शबर्यास्तेपुरोभा गेआश्रमेरघुनंदन ॥ १ ॥ भक्त्यात्वत्पादकमलेभक्तिमार्गविशारदा ॥ तांप्रयाहिमहाभागसर्वंतेकथयिष्यति ॥ २ ॥ इत्युक्त्वाप्रययौसोऽ पिविमानेनार्कवर्चसा ॥ विष्णोःपदंरामनामस्मरणेफलमीदृशम् ॥ ३ ॥ त्यक्त्वातद्विपिनंघोरंसिंहव्याघ्रादिदूषितम् ॥ शनैरथाश्रमपदं शबर्यारघुनंदनः ॥ ४ ॥ शबरीराममालोक्यलक्ष्मणेनसमन्वितम् ॥ आयांतमाराद्धर्षेणप्रत्युत्थायाचिरेणसा ॥ ५ ॥ पतित्वापादयोर ग्रेहर्षपूर्णाश्रुलोचना ॥ स्वागतेनाभिनंद्याथस्वासनेसन्न्यवेशयत् ॥ ६ ॥ रामलक्ष्मणयोःसम्यक्पादौप्रक्षाल्यभक्तितः ॥ तज्जलेनाभिषि च्यांगमथार्घ्यादिभिरादृता ॥ ७ ॥

द्रूपयासपर्ययापूजासामग्र्यारामंसंपूज्यरामार्थंसंगृहीतानिदिव्यानिफलानिरामायददावित्यन्वयः । तदुक्तंपाद्मे । शबरींप्रस्तुत्य । प्रत्युद्गम्यप्रणम्याथनिवेश्यकुशवि ष्टरे । पादप्रक्षालनंकृत्वातत्तोयंपापनाशनम् । शिरसाधार्यपीत्वाचवन्यैःपुष्पैरथार्चयत् । फलानिचसुपक्वानिमूलानिमधुराणिच । स्वयमास्वाद्यमाधुर्यंपरीक्ष्यपरिभ क्ष्यच । पश्चान्निवेदयामासराघवाभ्यांदृढव्रता ॥ फलान्यास्वाद्यकाकुत्स्थस्तस्यैमुक्तिंपरांददौ ॥ इति ॥ ७ ॥



१–अगच्छदितिशेषः ।

॥८॥९॥१०॥ तेषांशुश्रूषणंकुर्वतीअहंसम्यक्उपतेषांसमीपेस्थिता ॥ ११ ॥ बहुवर्षसहस्राणीतिपूर्वान्वयि । गतास्तेइत्यस्येदानीमित्यादिः गमिष्यंतस्तेत्वमत्रै
वसमाहितावसेतिमामब्रुवन् ॥ १२ ॥ १३ ॥ आगमिष्यति । अत्राश्रमेइतिशेषः । अवएकाग्रंयथाभवतितथा विषयांतरसंचाररहितमितियावत् । तद्ध्यान
निष्ठाअत्रस्थिराभवेत्यर्थः । तेषांगमनकालमाह । इदानीमिति । इत्युक्त्वातेगताइत्यर्थः ॥१४॥ १५ ॥ तेआगमनंप्रतीक्ष्यस्थिताऽहंतथैवयथागुरुभिरुक्तंतथा

संपूज्यविधिवद्रामंससौमित्रिंसपर्यया ॥ संगृहीतानिदिव्यानिरामार्थंशबरीमुदा ॥८॥ फलान्यमृतकल्पानिददौरामायभक्तितः ॥ पादौ
संपूज्यकुसुमैःसुगंधैःसानुलेपनैः ॥९॥ कृतातिथ्यंरघुश्रेष्ठमुपविष्टंसहानुजम् ॥ शबरीभक्तिसंपन्नाप्रांजलिर्वाक्यमब्रवीत् ॥१०॥ अत्राश्र
मेरघुश्रेष्ठगुरवोमेमहर्षयः॥स्थिताःशुश्रूषणंतेषांकुर्वतीसमुपस्थिता ॥ ११ ॥ बहुवर्षसहस्राणिगतास्तेब्रह्मणःपदम् ॥ गमिष्यंतोऽब्रुवन्मां
त्वंवसात्रैवसमाहिता ॥ १२ ॥ रामोदाशरथिर्जातःपरमात्मासनातनः ॥ राक्षसानांवधार्थायऋषीणांरक्षणायच ॥१३॥ आगमिष्यति
चैकाग्रध्याननिष्ठास्थिराभव ॥ इदानींचित्रकूटाद्रावाश्रमेवसतिप्रभुः ॥ १४ ॥ यावदागमनंतस्यतावद्रक्षकलेवरम् ॥ दृष्ट्वैवराघवंदग्ध्वा
देहंयास्यसितत्पदम् ॥ १५ ॥ तथैवाकरवंरामत्वद्ध्यानैकपरायणा ॥ प्रतीक्ष्यागमनंतेऽद्यसफलंगुरुभाषितम् ॥ १६ ॥ तवसंदर्शनंराम
गुरूणामपिमेनहि॥ योषिन्मूढाऽप्रमेयात्मन्हीनजातिसमुद्भवा ॥ १७ ॥ तवदासस्यदासानांशतसंख्योत्तरस्यवा ॥ दासीत्वेनाधिकारोऽ
स्तिकुतःसाक्षात्तवैवहि ॥ १८ ॥ कथंरामाद्यमेदृष्टस्त्वंमनोवागगोचरः ॥ स्तोतुंनजानेदेवेशकिंकरोमिप्रसीदमे ॥ १९ ॥

ऽकरवम् । तच्चमेगुरुभाषितंरामोऽत्रायास्यतीत्येतत् अद्यसफलंजातम् ॥ १६ ॥ हेरामतवैतद्रूपस्यदर्शनंमेगुरूणामपिनजातम् । हेअप्रमेयात्मन् अहंयोषि
त् । अनेनसर्वधर्मानर्हत्वम् । तत्रापिहीनजात्युद्भवा ॥ १७ ॥ तवदासः तद्दासइत्येवंक्रमेणशतसंख्यातउत्तरस्यापिदासीत्वेनाधिकारःसाक्षात्तवदास्येतुसुत
रामनाधिकारः ॥ १८ ॥ इतिहेतोःयोगिनामपिमनोवागगोचरस्त्वंमेमयाकथंदृष्टइतिप्रश्नः । स्तोतुमित्यादिर्विनयः ॥ १९ ॥

पुंस्त्वस्त्रीत्वकृतोविशेषोवाजातिनामाश्रमादयस्तत्कृताविशेषावानमद्भजनेकारणंकिंतुभक्तिरेवनतुपुंसोब्राह्मणस्यैवाधिकारइत्यर्थः ॥ २० ॥ तदेवोपपादयति । यज्ञेत्यादि । वेदाध्ययनकर्मभिःवेदाध्ययनेनवेदोक्तकर्मानुष्ठानैश्चेत्यर्थः ॥ २१ ॥ सत्संगएवप्रथमंमुख्यंसाधनमित्यर्थः ॥ २२ ॥ मत्कथालापःमच्चरितनिबंधालापइत्यर्थः । मद्गुणेरणंमद्गुणकीर्तनम् । मद्वचसांमत्प्रतिपादकवचसामुपनिषद्रूपाणांव्याख्यातृत्वम् ॥ २३ ॥ अमाययाऽच्छलेन मद्बुद्ध्या ईश्वरबुद्ध्या गुरुसेवा पुण्यशीलत्वंपुण्यविषयेस्वारासिकीप्रवृत्तिः । यमादि अहिंसाऽस्तेयब्रह्मचर्यापरिग्रहायमाः आदिनाआसनप्राणायामप्रत्याहाराः । नियमादि शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानिनियमाः आदिनाधारणाध्यानसमाधयः ॥ २४ ॥ मत्पूजनेनिष्ठातत्परता ममयेमंत्रास्तदुपासकत्वंतदुपासनंतच्चसांगंतत्तन्मंत्र

श्रीरामउवाच ॥ पुंस्त्वेस्त्रीत्वेविशेषोवाजातिनामाश्रमादयः ॥ नकारणंयद्भजनेभक्तिरेवहिकारणम् ॥२०॥ यज्ञदानतपोभिर्वावेदाध्ययनकर्मभिः ॥ नैवद्रष्टुमहंशक्योमद्भक्तिविमुखैःसदा ॥ २१ ॥ तस्माद्भामिनिसंक्षेपाद्वक्ष्येऽहंभक्तिसाधनम् ॥ सतांसंगतिरेवात्रसाधनंप्रथमंस्मृतम् ॥२२॥ द्वितीयंमत्कथालापस्तृतीयंमद्गुणेरणम्॥व्याख्यातृत्वंमद्वचसांचतुर्थंसाधनंभवेत् ॥२३॥ आचार्योपासनंभद्रेमद्बुद्ध्याऽमाययासदा ॥ पंचमंपुण्यशीलत्वंयमादिनियमादिच ॥ २४ ॥ निष्ठामत्पूजनेनित्यंषष्ठंसाधनमीरितम् ॥ ममंमंत्रोपासकत्वंसांगंसप्तममुच्यते ॥ २५ ॥ मद्भक्तेष्वधिकापूजासर्वभूतेषुमन्मातिः ॥ बाह्यार्थेषुविरागित्वंशमादिसहितंतथा ॥ २६ ॥ अष्टमंनवमंतत्त्वविचारोममभामिनि ॥ एवंनवविधाभक्तिःसाधनंयस्यकस्यवा ॥ २७ ॥ स्त्रियावापुरुषस्यापितिर्यग्योनिगतस्यवा ॥ भक्तिःसंजायतेप्रेमलक्षणाशुभलक्षणे ॥ २८ ॥

कल्पोक्तांगसहितम् ॥ २५ ॥ अधिकामत्तोऽप्यधिकेत्यर्थः । पुत्रादरस्यपितुरिवतदादरस्यममाधिकसंतोषदत्वादितिभावः । मन्मतिःसर्वांतर्यामीभगवानितिसर्वंभगवतिवर्ततेइतिवामतिः ॥ विरागित्वंवैराग्यं शमोंऽतरिंद्रियनिग्रहः । आदिनाबाह्येंद्रियनिग्रहरूपोदमः ॥ २६ ॥ ममतत्त्वविचारः स्वस्यतत्त्वंशुद्धंब्रह्मवद्विचारस्तत्त्वमस्यादिवाक्यतः ॥ २७ ॥ यस्यकस्यवेत्यस्यैवप्रपंचः स्त्रिया इति । यस्यतन्नवविधंसाधनंजायतेतस्यप्रेमलक्षणाभक्तिःसंजायते । ममेयं भूयातभूत्वाचमानश्यत्वित्येवमिच्छाप्रेम ॥ २८ ॥

मत्तत्त्वंब्रह्म । अनुभवसिद्धस्येतितृतीयासमासः । मुक्तिःस्यादित्यन्वयः ॥ २९ ॥ ३० ॥ सर्वंनवविधंसाधनं ततोभक्तिस्ततोमुक्तिरित्यन्वयः ॥ ३१ ॥ इतोमद्
र्शनात् । अस्मादेवमद्दर्शनादित्यर्थः ॥ ३२ ॥ ३३ ॥ सर्वंजानासीत्यत्रहेतुगर्भविशेषणं सर्वज्ञेति । यत्पृच्छसेवल्लोकाननुसृतोऽसीतिजानेइतिशेषः ॥ ३४ ॥ यत
स्त्वंलोकानुसृतस्ततइत्यर्थः ॥ ३५ ॥ तत्राप्युपायमप्याह । इतइति ॥ ३६ ॥ भीतभीतःभीतेभ्योऽपिभीतः । अतिभीतइत्यर्थः ॥ ३७ ॥ कस्यभयादेवंभी

भक्तौसंजातमात्रायांमत्तत्त्वानुभवस्तदा ॥ ममानुभवसिद्धस्यमुक्तिस्तत्रैवजन्मनि ॥ २९ ॥ स्यात्तस्मात्कारणंभक्तिर्मोक्षस्येतिसुनि
श्चितम् ॥ प्रथमंसाधनंयस्यभवेत्तस्यक्रमेणतु ॥ ३० ॥ भवेत्सर्वंततोभक्तिर्मुक्तिरेवसुनिश्चितम् ॥ यस्मान्मद्भक्तियुक्तात्वंततोऽहंत्वामुप
स्थितः ॥ ३१ ॥ इतोमद्दर्शनान्मुक्तिस्तवनास्त्यत्रसंशयः ॥ यदिजानासिमेब्रूहिसीताकमललोचना ॥ ३२ ॥ कुत्रास्तेकेनवानीताप्रिया
मेप्रियदर्शना ॥ ३३ ॥ शबर्युवाच ॥ देवजानासिसर्वज्ञसर्वंत्वंविश्वभावन ॥ तथाऽपिपृच्छसेयन्मांलोकाननुसृतःप्रभो ॥ ३४ ॥ ततोऽहमभि
धास्यामिसीतायत्राधुनास्थिता ॥ रावणेनहृतासीतालंकायांवर्ततेऽधुना ॥ ३५ ॥ इतःसमीपेरामास्तेपंपानामसरोवरम् ॥ ऋष्यमूकगि
रिर्नामतत्समीपेमहानगः ॥ ३६ ॥ चतुर्भिर्मंत्रिभिःसार्धंसुग्रीवोवानराधिपः ॥ भीतभीतःसदातत्रतिष्ठत्यतुलविक्रमः ॥ ३७ ॥ वालिनश्च
भयाद्भ्रातुस्तदगम्यमृषेर्भयात् ॥ वालिनस्तत्रगच्छत्वंतेनसख्यंकुरुप्रभो ॥ ३८ ॥ सुग्रीवेणससर्वंतेकार्यंसंपादयिष्यति ॥ अहमग्निंप्रवेक्ष्या
मितवाग्रेरघुनंदन ॥ ३९ ॥ मुहूर्तंतिष्ठराजेंद्रयावद्दग्ध्वाकलेवरम् ॥ यास्यामिभगवन्नामतवविष्णोःपरंपदम् ॥ ४० ॥ इतिरामंसमामंत्र्य
प्रविवेशहुताशनम् ॥ क्षणान्निर्धूयसकलमविद्याकृतबंधनम् ॥ रामप्रसादाच्छबरीमोक्षंप्रापातिदुर्लभम् ॥ ४१ ॥

स्तत्राह । वालिनइति । भ्रातुर्वालिनोभयादित्यर्थः । ननुतत्रवासेनकथमभयमतआह । तद्वालिनोऽगम्यम् । एषचार्थोवाल्मीकिनासविस्तरंदर्शितः अग्रेचा
त्रापिदर्शयिष्यति । तेनसुग्रीवेणसख्यंकुरु तस्यापिविपद्ग्रस्तत्वात्तेनसख्यंसुलभंनतुबालिनेतिभावः ॥ ३८ ॥ ३९ ॥ विष्णोस्तवपरंपदंब्रह्मलोकम् ॥ ४० ॥
अविद्याकृतबंधनंसंसारः ॥ ४१ ॥

---

१–अनेन सत्समागम एव भक्तेर्मुख्यमसाधारणं कारणं परिणिष्ठितम् ।

विशेषेसामान्यमर्थान्तरंन्यस्यति । किमिति । श्रीरामेप्रसन्नेकिंदुर्लभंतमेवविशेषंसामान्योपपादकत्वेनाह । यदधमजन्माशबर्यपिरामेप्रसन्नेमुक्तिमाप ॥ ४२ ॥ मुक्तिंयांतीतिकिंपुनर्ब्राह्मणादयइतिवक्तव्यमित्यन्वयः। यतस्तद्भक्तिर्मुक्तिरेव । अनेनरूपकेणसर्वथातस्यामुक्तिजनकत्वंसूचितम्॥ ४३॥ यतोरामचंद्रस्यभक्तिर्मुक्तिदाअतोरामस्यकामदुघंचरणपद्मयुगलंसेवध्वं तद्विषयेऽत्युत्सुकाअत्युत्कटेच्छावंतःसंतःनानाप्रकारामज्ञानविशेषभूतामज्ञानस्यैवतन्मूलसंसारस्यैवजवनिकांमंत्रावित



किंदुर्लभंजगन्नाथेश्रीरामेभक्तवत्सले ॥ प्रसन्नेऽधमजन्मापिशबरीमुक्तिमापसा ॥४२॥ किंपुनर्ब्राह्मणामुख्याःपुण्याःश्रीरामचिंतकाः ॥ मुक्तिंयांतीतितद्भक्तिर्मुक्तिरेवनसंशयः ॥ ४३ ॥ भक्तिर्मुक्तिविधायिनीभगवतः श्रीरामचंद्रस्यहेलोकाःकामदुघांघ्रिपद्मयुगलंसेवध्वमत्युत्सुकाः ॥ नानाज्ञानविशेषमंत्रवितातिंत्यक्त्वासुदूरेभृशंरामंश्यामतनुंस्मरारिहृदयेभांतंभजध्वंबुधाः ॥ ४४ ॥ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेऽरण्यकांडेदशमः सर्गः ॥ १० ॥ ॥ समाप्तमिदमरण्यकांडम् ॥ ३ ॥

तिंमंत्रसमूहंत्यक्त्वाभृशमतिशयेनरामंभजंतु । तत्रहेतुगर्भविशेषणम् । स्मरारिहृदयेभांतं स्मरारिःशिवः ॥ ४४ ॥ इतिश्रीमत्सकलराजाविरुदाङ्कितस्य श्रीरामवर्मणः कृतावध्यात्मरामायणसेतौ अरण्यकांडेदशमःसर्गः ॥ १० ॥

इदमध्यात्मरामायणारण्यकाण्डं मुम्बय्यां खेमराज श्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" यन्त्रालयेऽङ्कयित्वा प्रकाशितम् ।

संवत् १९६१, शके १८२६, सन् १९०५.

श्रीगणेशाय नमः ॥ श्रीसीतारामचंद्राभ्या नमः ॥ ततइति । सरसांश्रेष्ठंपंपासरः ॥ १ ॥ विस्मयहेतुनाह । क्रोशमात्रमिति । अगाधामलशंबरम् । नीरक्षीरां
बुशंबरमित्यमरः । अंबुजंपद्मंकह्लारस्तद्विशेषः । एवमुत्पलपदेनकुमुदविशेषोऽत्र ॥ २ ॥ हंसादयःपक्षिविशेषाःक्रौंचनादैरुपनादितंप्रतिध्वनितम् ॥ ३ ॥ सतां
मनोवत्स्वच्छजलम् ॥ ४ ॥ उपस्पृश्यस्नात्वा ॥ ५ ॥ दांतौनिगृहीतेंद्रियौ विविधान्वृक्षान्गिरेःशोभांचपश्यंतौ ॥ ६ ॥ तौददर्शदृष्ट्वाचभयाद्गिरेःशिरआ

श्रीमहादेवउवाच ॥ ततःसलक्ष्मणोरामःशनैःपंपासरस्तटम् ॥ आगत्यसरसांश्रेष्ठंदृष्ट्वाविस्मयमाययौ ॥ १ ॥ क्रोशमात्रंसुविस्तीर्णमगा
धामलशंवरम् ॥ उत्फुल्लांबुजकह्लारकुमुदोत्पलमंडितम् ॥ २ ॥ हंसकारंडवाकीर्णंचक्रवाकादिशोभितम् ॥ जलकुक्कुटकोयष्टिक्रौंचना
दोपनादितम् ॥ ३ ॥ नानापुष्पलताकीर्णंनानाफलसमावृतम् ॥ सतांमनःस्वच्छजलंपद्मकिंजल्कवासितम् ॥ ४ ॥ तत्रोपस्पृश्यस
लिलंपीत्वाश्रमहरंविभुः ॥ सानुजःसरसस्तीरेशीतलेनपथाययौ ॥ ५ ॥ ऋष्यमूकगिरेःपार्श्वेगच्छंतौरामलक्ष्मणौ ॥ धनुर्बाणकरौदांतौ
जटावल्कलमंडितौ ॥ पश्यंतौविविधान्वृक्षान्गिरेःशोभांसुविक्रमौ ॥ ६ ॥ सुग्रीवस्तुगिरेर्मूर्ध्नि चतुर्भिःसहवानरैः ॥ स्थित्वाददर्शतौयां
तावारुरोहगिरेःशिरः ॥ ७ ॥ भयादाहहनूमंतंकौतौवीरवरौसखे ॥ गच्छजानीहिभद्रंतेवटुर्भूत्वाद्विजाकृतिः ॥ ८ ॥ वालिनाप्रेषितौकिं
वामांहंतुंसमुपागतौ ॥ ताभ्यांसंभाषणंकृत्वाजानीहिहृदयंतयोः ॥९ ॥ यदितौदुष्टहृदयौसंज्ञांकुरुकराग्रतः ॥ विनयावनतोभूत्वाएवंजा
नीहिनिश्चयम् ॥ १०॥ तथेतिवटुरूपेणहनुमान्समुपागतः ॥ विनयावनतोभूत्वारामंनत्वेदमब्रवीत् ॥ ११ ॥ कौयुवांपुरुषव्याघ्रौयुवानौ
वीरसंमतौ ॥ द्योतयंतौदिशःसर्वाःप्रभयाभास्कराविव ॥ १२ ॥ युवांत्रैलोक्यकर्तारावितिभातिमनोमम ॥ युवांप्रधानपुरुषौ
जगद्धेतूजगन्मयौ ॥ १३ ॥

रुरोहेत्यन्वयः ॥ ७ ॥ भद्रंतेइतिप्रेरणानिमित्तमाशीर्वादः ॥ ८ ॥ किंवालिनाप्रेषितौमांहंतुमागतौवापक्षांतरे उतान्यथेतितयोर्हृदयंसंभाषणंकृत्वाजानीहि । अंतः
करणानुरूपत्वाद्वाचःसंभाषणेनतन्निर्णयः ॥ ९ ॥ संज्ञांकुरु पलायनार्थमितिशेषः । एवंसंकेतस्यनिश्चयंजानीहीत्यर्थः ॥ १० ॥ ११ ॥ १२ ॥ भातिजाना
ति प्रधानपुरुषौमुख्यपुरुषौ । नरनारायणावित्यर्थः । मुख्यत्वमेवाह । जगद्धेतूइत्यादिना ॥ १३ ॥

लीलयाचरंताविवगच्छंताविव । वस्तुतोविभुत्वाद्गतिहीनावेव ॥ १४ ॥ स्थितिलयौसर्गंचलीलयाकर्तुंमुद्यतौ रक्षसांलयस्त्वादितरजगतःसर्गस्थिती ॥ १५ ॥
प्रेरकौअंतर्यामितयेत्यर्थः । तदेवाह । सर्वहृदयस्थाविति ॥ इहलोकेचरंतौइत्यन्वयः ॥ १६ ॥ शब्दशास्त्रंव्याकरणम् ॥ १७ ॥ कृत्स्नंबह्वित्यर्थः । ज्ञानवि
ग्रहइत्यनेनचिदानंदएवमायायाएवंशरीररूपेणभातीतिसूचितम् ॥ १८ ॥ १९ ॥ २० ॥ यःसुग्रीवोनामतेननाम्नाप्रसिद्धोवानराणांराजासगिरिमूर्धनिति

माययामानुषाकारौचरंताविवलीलया ॥ भूभारहरणार्थायभक्तानांपालनायच ॥ १४ ॥ अवतीर्णाविहपरौचरंतौक्षत्रियाकृती ॥ जगत्स्थितिलयौसर्गंलीलयाकर्तुमुद्यतौ ॥ १५ ॥ स्वतंत्रौप्रेरकौसर्वहृदयस्थाविहेश्वरौ ॥ नरनारायणौलोकेचरंतावितिमेमतिः ॥ १६ ॥ श्रीरामोलक्ष्मणंप्राहपश्यैनंबटुरूपिणम् ॥ शब्दशास्त्रमशेषेणश्रुतंनूनमनेकधा ॥ १७ ॥ अनेनभाषितंकृत्स्नंनकिंचिदपशब्दितम् ॥ ततःप्राहहनूमंतंराघवोज्ञानविग्रहः ॥ १८ ॥ अहंदाशरथीरामस्त्वयंमेलक्ष्मणोऽनुजः ॥ सीतयाभार्ययासार्धंपितुर्वचनगौरवात् ॥ १९ ॥ आगतस्तत्रविपिनेस्थितोऽहंदंडकेद्विज ॥ तत्रभार्याहृतासीतारक्षसाकेनचिन्मम ॥ २० ॥ तामन्वेष्टुमिहायातौत्वंकोवाकस्यवावद ॥ बटुरुवाच ॥ सुग्रीवोनामराजायोवानराणांमहामतिः ॥ चतुर्भिर्मंत्रिभिःसार्धंगिरिमूर्धनितिष्ठति ॥ २१ ॥ भ्राताकनीयान्सुग्रीवोवालिनःपापचेतसः ॥ तेननिष्कासितोभार्याहृतातस्येहवालिना ॥ २२ ॥ तद्भयादृष्यमूकाख्यंगिरिमाश्रित्यसंस्थितः ॥ अहंसुग्रीवसचिवोवायुपुत्रोमहामते ॥ २३ ॥ हनुमान्नामविख्यातोह्यंजनीगर्भसंभवः ॥ तेनसख्यंत्वयायुक्तंसुग्रीवेणरघूत्तम ॥ २४ ॥ भार्यापहारिणंहंतुंसहायस्तेभविष्यति ॥ इदानीमेवगच्छामआगच्छयदिरोचते ॥ २५ ॥ श्रीरामउवाच ॥ अहमप्यागतस्तेनसख्यंकर्तुंकपीश्वर ॥ सख्युस्तस्यापियत्कार्यंतत्करिष्याम्यसंशयम् ॥ २६ ॥ हनूमान्स्वस्वरूपेणस्थितोराममथाब्रवीत् ॥ आरोहतांममस्कंधौगच्छामःपर्वतोपरि ॥ २७ ॥ यत्रातिष्ठतिसुग्रीवोमंत्रिभिर्वालिनोभयात् ॥ तथेतितस्यारुरोहस्कंधंरामोऽथलक्ष्मणः ॥ २८ ॥

ष्ठतीत्यन्वयः ॥ २१ ॥ तत्रावस्थानेहेतुमाह । भ्रातेति । निष्कासितःहीनराज्यःकृतः भार्याचहृता ॥ २२ ॥ २३ ॥ तेनसख्यंतुयुक्तंसमदुःखत्वात् ।
नतुवालिनेतिभावः ॥ २४ ॥ २५ ॥ तस्यापियत्कार्यंवालिवधरूपम् ॥ २६ ॥ पर्वतोपरिगमनेश्रमातिशयात्स्वस्कंधारोहणप्रेरणा ॥ २७ ॥ मंत्रिभिःसहेति
शेषः । तथेति । उक्त्वेतिशेषः ॥ २८ ॥

उत्पपातउत्पत्त्यजगामेत्यर्थः । स्थितौस्थापितावित्यर्थः ॥ २९ ॥ व्येतुभयंवालिप्रेरितावितिशंकाकृतम् ॥ ३० ॥ योजितंताभ्यामंगीकारंकारितम् । आरोप्य कृत्वा ॥ ३१ ॥ विष्टरायआसनार्थम् ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ शत्रुघातिनस्तेशत्रुवधेसाहाय्यमपिकरिष्येइत्यन्वयः ॥ ३६ ॥ विहायसानीयमानां प्रमदोत्तमामपश्यमितिशेषः ॥ ३७ ॥ साच रामरामेतिक्रोशंतीअस्मान्पर्वतोपरिदृष्ट्वास्वोत्तरीयेणतदेकदेशेनाभरणानिआमुच्यबद्ध्वापुनरस्मान्निरीक्ष्यतान्यप्य

उत्पपातगिरेर्मूर्ध्निक्षणादेवमहाकपिः ॥ वृक्षच्छायांसमाश्रित्यास्थितौतौरामलक्ष्मणौ ॥ २९ ॥ हनूमानपिसुग्रीवमुपगम्यकृतांजलिः ॥ व्येतुतेभयमायातौराजर्च्छ्रीरामलक्ष्मणौ ॥ ३० ॥ शीघ्रमुत्तिष्ठरामेणसख्यंतेयोजितंमया ॥ अग्निसाक्षिणमारोप्यतेनसख्यंद्रुतंकुरु ॥ ॥ ३१ ॥ ततोऽतिहर्षात्सुग्रीवःसमागम्यरघूत्तमम् ॥ वृक्षशाखांस्वयंछित्त्वाविष्टरायददौमुदा ॥ ३२ ॥ हनूमाँल्लक्ष्मणायादात्सुग्रीवाय चलक्ष्मणः ॥ हर्षेणमहताविष्टाःसर्वएवावतस्थिरे ॥ ३३ ॥ लक्ष्मणस्त्वब्रवीत्सर्वंरामवृत्तांतमादितः ॥ वनवासाभिगमनंसीताहरणमे वच ॥ ३४ ॥ लक्ष्मणोक्तंवचःश्रुत्वासुग्रीवोराममब्रवीत् ॥ अहंकरिष्येराजेंद्रसीतायाःपरिमार्गणम् ॥ ३५ ॥ साहाय्यमपितेरामकरिष्ये शत्रुघातिनः ॥ शृणुराममयादृष्टंकिंचित्तेकथयाम्यहम् ॥ ३६ ॥ एकदामंत्रिभिःसार्धंस्थितोऽहंगिरिमूर्धनि ॥ विहायसानीयमानांकेन चित्प्रमदोत्तमाम् ॥ ३७ ॥ क्रोशंतीरामरामेतिदृष्ट्वास्मान्पर्वतोपरि ॥ आमुच्याभरणान्याशुस्वोत्तरीयेणभामिनी ॥ ३८ ॥ निरीक्ष्याधः परित्यज्यक्रोशंतीतेनरक्षसा ॥ नीताहंभूषणान्याशुगुहायामक्षिपंप्रभो ॥ ३९ ॥ इदानीमपिपश्यत्वंजानीहितववानवा ॥ इत्युक्त्वाऽऽ नीयरामायदर्शयामासवानरः ॥ ४० ॥

धःपरित्यज्यक्रोशंतीतेननीता । क्रोशनक्रिययासमानकर्तृकःक्त्वा । अहंचतानिगुहायामक्षिपम् ॥ ३८ ॥ ३९ ॥ इदानींत्वमपिपश्यतवभार्यायाभवंतिवानभवं तिचेतिजानीहिनिश्चयंकुरु ॥ ४० ॥

---

१ इदमपि प्रथमान्तं सदेव नीतेत्येतत्सम्बन्ध्यस्तु । तेन च टीकाकटाक्षोऽप्यपश्यमिति शेष इत्यन्तोऽपाङ्गः । इति मां प्रतिभाति ।

तद्भूषणयुक्तंवासःखंडंविमुच्यदृष्ट्वा । भूषणानीतिशेषः । तत्सर्वंभूषणजातम् ॥ ४१ ॥ तेत्वया ॥ ४२ ॥ ४३ ॥ तयोःसमीपतोऽग्निंप्रज्वाल्यसख्यंकुरुतामि
इत्युवाचेतिशेषः ॥ ४४ ॥ आलिंग्यपरस्परंसखेइत्यवदतामितिशेषः । सखित्वकरणफलंदर्शयति । समीपेइति ॥ ४५ ॥ वालिनायदुदंतंमद्विषयेकृतंतच्छृणु ॥
॥ ४६ ॥ नाम्नामायावीत्यन्वयः । समुपाह्वयत । युद्धायेतिशेषः ॥ ४७ ॥ तदाह्वानममर्षणोऽसहमानः ॥ ४८ ॥ तेनमुष्टिघातेनसंविग्नःपीडितःतंमायाविनंमा

विमुच्यरामस्तद्दृष्ट्वाहासीतीतिमुहुर्मुहुः ॥ हृदिनिक्षिप्यतत्सर्वंरुरोदप्राकृतोयथा ॥ ४१ ॥ आश्वास्यराघवंभ्रातालक्ष्मणोवाक्यमब्रवीत् ॥
अचिरेणैवतेरामप्राप्यतेजानकीशुभा ॥ वानरेंद्रसहायेनहत्वारावणमाहवे ॥ ४२ ॥ सुग्रीवोऽप्याहहेरामप्रतिज्ञांकरवाणिते ॥ समरेरावणं
हत्वातवदास्यामिजानकीम् ॥ ४३ ॥ ततोहनूमान्प्रज्वाल्यतयोरग्निंसमीपतः ॥ तावुभौरामसुग्रीवावग्नौसाक्षिणितिष्ठति ॥ ४४ ॥ बाहू
प्रसार्यचालिंग्यपरस्परमकल्मषौ ॥ समीपेरघुनाथस्यसुग्रीवःसमुपाविशत् ॥ ४५ ॥ स्वोदंतंकथयामासप्रणयाद्रघुनायके ॥ सखेशृणुम
मोदंतंवालिनायत्कृतंपुरा ॥ ४६ ॥ मयपुत्रोऽथमायावीनाम्नापरमदुर्मदः[1] ॥ किष्किंधांसमुपागत्यवालिनंसमुपाह्वयत् ॥ ४७ ॥ सिंहनादे
नमहतावालीतुतदमर्षणः ॥ निर्ययौक्रोधताम्राक्षोजघानदृढमुष्टिना ॥ ४८ ॥ दुद्रावतेनसंविग्नोजगामस्वगुहांप्रति ॥ अनुदुद्रावतंवालीमा
याविनमहंतथा ॥ ततःप्रविष्टमालोक्यगुहांमायाविनंरुषा ॥ ४९ ॥ वालीमामाहतिष्ठत्वंबहिर्गच्छाम्यहंगुहाम् ॥ इत्युक्त्वाविश्यसगुहांमा
समेकंननिर्ययौ ॥ ५० ॥ मासादूर्ध्वंगुहाद्वारान्निर्गतंरुधिरंबहु ॥ तद्दृष्ट्वापरितप्तांगोमृतोवालीतिदुःखितः ॥ ५१ ॥ गुहाद्वारिशिलामेकांनि
धायगृहमागतः ॥ ततोऽब्रुवंमृतोवालीगुहायांरक्षसाहतः ॥ ५२ ॥ तच्छ्रुत्वादुःखिताःसर्वेमामनिच्छंतमप्युत ॥ राज्येऽभिषेचनंचक्रुःसर्वेवा
नरमंत्रिणः ॥ ५३ ॥ शिष्टंतदामयाराज्यंकिंचित्कालमरिंदम ॥ ततःसमागतोवालीमामाहपरुषंरुषा ॥ ५४ ॥

यावंतंस्वगुहांप्रविष्टमालोक्येत्यन्वयः ॥ ४९ ॥ ५० ॥ मृतोवालीतिनिश्चयेनेतिशेषः ॥ ५१ ॥ रक्षसाहतोवालीमृतइतिस्वज्ञातीनब्रुवम् ॥ ५२ ॥ अनि
च्छंतंराज्याभिषेकमितिशेषः ॥ ५३ ॥ शिष्टंपालितम् परुषंभ्रातृद्वेषिन्नित्यादिवाक्यम् ॥ ५४ ॥



---

१ सन्धिरार्षः ।

परयाभियावालिजया ॥ ५५ ॥ ऋष्यमूकंतदाख्यमिमंपर्वतम् । ऋषेःशापभयात् । तच्चानुपदमेवस्फटंभविष्यति ॥ ५६ ॥ हताश्रयःहतगृहः ॥ ५७ ॥ सुखि
तोऽस्मिअद्यत्वादृशमित्रलाभेनेतिशेषः ॥ ५८ ॥ ५९ ॥ बलवतांबलीसर्वेभ्योबलवद्भ्योऽप्यधिकबलवानित्यर्थः । दुरासदंवालिनमितिशेषः ॥ ६० ॥ तद्बलं
वालिनोबलम् ॥ ६१ ॥ ६२ ॥ असहमानइतिच्छेदः ॥ ६३ ॥ अस्यशिरोहस्ताभ्यांभ्रामयन्ग्रीवातश्चालयंश्छित्त्वाग्रीवारूपादाधारादुत्पाट्यहस्ताभ्यांतोलयि

बहुधाभर्त्सयित्वामांनिजघानचमुष्टिभिः ॥ ततोनिर्गत्यनगरादधावंपरयाभिया ॥ ५५ ॥ लोकान्सर्वान्परिक्रम्यऋष्यमूकंसमाश्रितः ॥
ऋषेःशापभयात्सोऽपिनायातीमांगिरिंप्रभो ॥५६॥ तदादिममभार्यांसस्वयंभुंक्तेविमूढधीः ॥ अतोदुःखेनसंतप्तोहृतदारोहृताश्रयः ॥५७॥
वसाम्यद्यभवत्पादसंस्पर्शात्सुखितोऽस्म्यहम् ॥ मित्रदुःखेनसंतप्तोरामोराजीवलोचनः ॥ ५८ ॥ हनिष्यामितवद्वेष्यंशीघ्रंभार्यापहारि
णम् ॥ इतिप्रतिज्ञामकरोत्सुग्रीवस्यपुरस्तदा ॥ ५९ ॥ सुग्रीवोऽप्याहराजेंद्रवालीबलवतांबली ॥ कथंहनिष्यतिभवान्देवैरपिदुरासद
म् ॥ ६० ॥ शृणुतेकथयिष्यामितद्बलंबलिनांवर ॥ कदाचिद्दुंदुभिर्नाममहाकायोमहाबलः ॥ ६१ ॥ किष्किंधामगमद्रामममहामहिषरू
पधृक् ॥ युद्धायवालिनंरात्रौसमाह्वयतभीषणः ॥ ६२ ॥ तच्छ्रुत्वाऽसहमानोऽसौवालीपरमकोपनः ॥ महिषंशृंगयोर्धृत्वापातयामासभू
तले ॥ ६३ ॥ पादेनैकेनतत्कायमाक्रम्यास्यशिरोमहत् ॥ हस्ताभ्यांभ्रामयंश्छित्वातोलयित्वाऽक्षिपद्भुवि ॥ ६४ ॥ पपाततच्छिरोराम
मातंगाश्रमसन्निधौ ॥ योजनात्पतितंतस्मान्मुनेराश्रममंडले ॥६५॥ रक्तवृष्टिः पपातोच्चैर्दृष्ट्वातांक्रोधमूर्छितः ॥ मातंगोवालिनंप्राहयद्या
गंतासिमेगिरिम् ॥ ६६ ॥ इतः परंभग्नशिरामरिष्यसिनसंशयः ॥ एवंशप्तस्तदारभ्यऋष्यमूकंनयात्यसौ ॥ ६७ ॥ एतज्ज्ञात्वाहमप्यत्र
वसामिभयवर्जितः ॥ रामपश्याशिरस्तस्यदुंदुभेःपर्वतोपमम् ॥ ६८ ॥

त्वाएतावद्भारकमितिज्ञात्वाभुविआक्षिपत् ॥ ६४ ॥ ॥ क्षेपवेगेनभुवऊर्ध्वयोजनमात्रंगत्वाततोमातंगाश्रमे पपात । यस्माच्चयोजनात्तन्मितादूर्ध्वदेशात्पतितमतस्तदा
श्रमेशिरसोगलितारक्तवृष्टिःपपात ततःक्रुद्धःसवालिनंप्राह ॥ ६५ ॥ ६६ ॥ ६७ ॥ एवज्ज्ञात्वातदगमनंज्ञात्वा ॥ ६८ ॥

यदायदिवस्यबाणेनदूरंक्षेपणेत्वंशक्तस्तर्हित्वंवालिवधेशक्तः ॥ ६९ ॥ ७० ॥ ७१ ॥ चालयित्वामूलतोबाहुभ्यांकंपनेन अंजसाअनायासेन ॥ ७२ ॥
छिद्रंकरोषि । सप्तस्वपीतिशेषः ॥ ७३ ॥ ७४ ॥ ७५ ॥ एवमाश्चर्यकर्मणारामंपरमात्मानंज्ञात्वास्तौति । देवेति । संगतिंमैत्रींप्राप्तः ॥ ७६ ॥ मोक्षस
चिवंमोक्षप्रदत्वात्तत्साचिवम् भवं संसारम् ॥ ७७ ॥ अन्यद्दारपुत्रादिकंत्वन्मायाकृतत्वेनमायिकत्वान्नाकांक्षेऽतोमांनिवर्तयेत्यर्थः ॥ ७८ ॥ मृदर्थंभूमिंख

तत्क्षेपणेयदाशक्तःशक्तस्त्वंवालिनोवधे ॥ इत्युक्त्वादर्शयामासशिरस्ताद्गिरिसन्निभम् ॥ ६९ ॥ दृष्ट्वारामः स्मितंकृत्वापादांगुष्ठेनचाक्षि
पत् ॥ दशयोजनपर्यंतंतदद्भुतमिवाभवत् ॥७०॥ साधुसाध्वितिसंप्राहसुग्रीवोमंत्रिभिः सह ॥ पुनरप्याहसुग्रीवोरामंभक्तपरायणम्॥७१॥
एतेतालामहासाराःसप्तपश्यरघूत्तम ॥ एकैकंचालयित्वासौनिष्पत्रान्कुरुतेंऽजसा ॥ ७२ ॥ यदित्वमेकबाणेनविद्ध्वाछिद्रंकरोषिचेत् ॥
हतस्त्वयातदावालीविश्वासोमेप्रजायते ॥ तथेतिधनुरादायसायकंतत्रसंदधे ॥ ७३ ॥ विभेदचतदारामःसप्ततालान्महाबलः ॥ ताला
न्सप्तविनिर्भिद्यगिरिंभूमिंचसायकः ॥ ७४ ॥ पुनरागत्यरामस्यतूणीरेपूर्ववत्स्थितः ॥ ततोऽतिहर्षात्सुग्रीवोराममाहातिविस्मितः
॥ ७५ ॥ देवत्वंजगतांनाथःपरमात्मानसंशयः ॥ मत्पूर्वकृतपुण्यौघैःसंगतोऽद्यमयासह ॥ ७६ ॥ त्वांभजंतिमहात्मानः संसारविनिवृ
त्तये ॥ त्वांप्राप्यमोक्षसचिवंप्रार्थयेऽहंकथंभवम् ॥ ७७ ॥ दाराःपुत्राधनंराज्यंसर्वंत्वन्माययाकृतम् ॥ अतोऽहंदेवदेवेशनाकांक्षेऽ
न्यत्प्रसीदमे ॥ ७८ ॥ आनंदानुभवंत्वाद्यप्राप्तोऽहंभाग्यगौरवात् ॥ मृदर्थंयतमानेननिधानमिवसत्पते ॥ ७९ ॥ अनाद्यविद्यासंसिद्धं
बंधनंछिन्नमद्यनः ॥ यज्ञदानतपःकर्मपूर्तेष्टादिभिरप्यसौ ॥ ८० ॥ नजीर्यतेपुनर्दार्ढ्यंभजतेसंसृतिःप्रभो ॥ त्वत्पाददर्शनात्सद्यो
नाशमेतिनसंशयः ॥ ८१ ॥

नतायथानिधानंधनराशिःप्राप्तोभवतिएवमहमानंदानुभवंतद्रूपंत्वांप्राप्तः ॥ ७९ ॥ अनाद्यविद्ययासंसिद्धंनिष्पन्नंविषयवासनारूपंबंधनंसंसारप्रवर्तकंनश्छिन्नं
नष्टम् । अन्येभ्योभगवद्दर्शनस्याधिक्यमाह । यज्ञेत्यादि । यज्ञादिभिरप्यसौसंसृतिस्तत्कारणंविषयवासनारूपंबंधनंनजीर्यतिअपितुदार्ढ्यमेवभजते त्वच्चरणदर्श
नात्तुसद्यस्तन्नाशमेति ॥ ८० ॥ ८१ ॥

यच्चित्तंयस्यचित्तंतस्यानर्थानांनानासंसृतिरूपाणांमूलमज्ञानंनश्यतीत्यन्वयः ॥ ८२ ॥ मेमनःसदात्वयितिष्ठतु ॥ ८३ ॥ यस्यवाणीत्वन्नामगायतिसमुच्य
ते ॥ ८४ ॥ बंधस्यसंसारकारणस्यमोचनीम् ॥ ८५ ॥ त्वन्माययाकृतःसंसारोयस्यसः त्वदंशः त्वत्प्रतिबिंबरूपत्वात् । अतःस्वपादयोर्भक्तिमादिश्यद
त्स्वात्राहि ॥ ८६ ॥ त्वन्मायावृतचेतसइतःपूर्वंमित्रादयआसन् अद्यतुत्वत्पाददर्शनान्मेसर्वंब्रह्मैवेतिभावीत्यन्वयः ॥ ८७ ॥ गुणविशेषतासत्वादिगुणविशे
षवत्त्वेत्यर्थः ॥ ८८ ॥ सागुणविशेषता नानात्वंसुहृन्मित्रार्युदासीनत्वरूपोभेदः कालकृतंमृत्युकृतम् ॥ ८९ ॥ अतःअविद्यामितिच्छेदः । अतउत्सारयेति

क्षणार्धमपियच्चित्तंत्वयितिष्ठत्यचंचलम् ॥ तस्याज्ञानमनर्थानांमूलंनश्यतितत्क्षणात् ॥ ८२ ॥ तत्तिष्ठतुमनोरामत्वयिनान्यत्रमेस
दा ॥ ८३ ॥ रामरामेतियद्वाणी मधुरंगायतिक्षणम् ॥ सब्रह्महासुरापोवामुच्यतेसर्वपातकैः ॥ ८४ ॥ नकांक्षेऽरिजयंरामनचदारसुखादि
कम् ॥ भक्तिमेवसदाकांक्षेत्वयिबंधविमोचनीम् ॥ ८५ ॥ त्वन्मायाकृतसंसारस्त्वदंशोऽहंरघूत्तम ॥ स्वपादभक्तिमादिश्यत्राहिमांभव
संकटात् ॥ ८६ ॥ पूर्वंमित्रार्युदासीनास्त्वन्मायावृतचेतसः ॥ आसन्मेद्यभवत्पाददर्शनादेवराघव ॥ ८७ ॥ सर्वंब्रह्मैवमेभातिक्वमि
त्रंक्वचमेरिपुः ॥ यावत्त्वन्माययाबद्धस्तावद्गुणविशेषता ॥ ८८ ॥ सायावदस्तिनानात्वंतावद्भवतिनान्यथा ॥ यावन्नानात्वमज्ञानात्ता
वत्कालकृतंभयम् ॥ ८९ ॥ अतोऽविद्यामुपास्तेयःसोंऽधेतमसिमज्जति ॥ मायामूलमिदंसर्वंपुत्रदारादिबंधनम् ॥ अतोत्सारयमायां
त्वंदासींतवरघूत्तम ॥ ९० ॥ त्वत्पादपद्मार्पितचित्तवृतिस्त्वन्नामसंगीतकथासुवाणी ॥ त्वद्भक्तसेवानिरतौकरौमेत्वदंगसंगंलभतांमदं
गम् ॥ ९१ ॥ त्वन्मूर्तिभक्तान्स्वगुरुंचचक्षुःपश्यत्वजस्रंसशृणोतुकर्णः ॥ त्वज्जन्मकर्माणिचपादयुग्मंव्रजत्वजस्रंतवमंदिराणि ॥ ९२ ॥

च्छेदः । संधिरार्षः ॥ ९० ॥ त्वत्पादपद्मयोरर्पिताचित्तवृत्तिर्येनसः ईदृशोऽहम् । भूयासमितिशेषः । त्वन्नामविषयसंगीतकथासुवाणीनिरतातिष्ठत्वित्यन्व
यः । त्वद्भक्तानांसेवायांनिरतौतत्परौ ॥ ९१ ॥ त्वन्मूर्तिंभक्तान्त्वन्मूर्तयश्चतद्भक्ताश्चतान् सकर्णःत्वज्जन्मानिमायिकानितत्रत्यकर्माणिचशृणो
त्वित्यन्वयः ॥ ९२ ॥

अहिशत्रुकेतोगरुडध्वजमेशिरस्त्वदीयंशिवब्रह्माद्यैः सेवितंपदंनमतु ॥ ९३ ॥ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराजमानस्याहिम्मतिविवर्मणःपुत्रस्य० सेतौकिष्किंधाकांडेप्रथमःसर्गः ॥ १ ॥ ॥ स्वात्मपरिष्वंगःस्वशरीरालिंगनंतेनदूरीकृताशेषपापम् । सस्मितमितिमायायाभगवदद्वयासरूपत्वेनास्मितारामाद्वययातदावरणम् ॥ १ ॥ कार्यंरावणवधः यन्मांप्रतित्वदुक्तंत्वयोक्तंतत्सत्यमेव ॥ २ ॥ रघुनंदनःअग्निसाक्षिकंसख्यंकृत्वाकर्मी

अंगानितेपादरजोविमिश्रतीर्थानिबिभ्रत्त्वहिशत्रुकेतो ॥ शिरस्त्वदीयंभवपद्मजाद्यैर्जुष्टंपदंरामनमत्वजस्रम् ॥ ९३ ॥ इतिश्रीमदध्यात्मरामायणेकिष्किंधाकांडेउमामहेश्वरसंवादेसुग्रीवसंगमवर्णनंनामप्रथमःसर्गः ॥ १ ॥ ॥ श्रीमहादेवउवाच ॥ इत्थंस्वात्मपरिष्वंगनिर्धूताशेषकल्मषम् ॥ रामःसुग्रीवमालोक्यसस्मितंवाक्यमब्रवीत् ॥ १ ॥ मायांमोहकरींतस्मिन्वितन्वन्कार्यसिद्धये ॥ सखेत्वदुक्तंयत्तन्मांसत्यमेवनसंशयः ॥ २ ॥ किंतुलोकावदिष्यंतिमामेवंरघुनंदनः ॥ कृतवान्किंकपींद्रायसत्यंकृत्वाग्निसाक्षिकम् ॥ ३ ॥ इतिलोकापवादोमेभविष्यतिनसंशयः ॥ तस्मादाह्वयभद्रंतेगत्वायुद्धायवालिनम् ॥ ४ ॥ बाणेनैकेनतंहत्वाराज्येत्वामभिषेचये ॥ तथेतिगत्वासुग्रीवःकिष्किंधोपवनंद्रुतम् ॥५॥ कृत्वाशब्दंमहानादंतमाह्वयतवालिनम् ॥ तच्छ्रुत्वाभ्रातृनिनदंरोषताम्रविलोचनः ॥६ ॥ निर्जगामगृहाच्छीघ्रंसुग्रीवोयत्रवानरः ॥ तमापतंतंसुग्रीवःशीघ्रंवक्षस्यताडयत् ॥ ७ ॥ सुग्रीवमपिमुष्टिभ्यांजघानक्रोधमूर्च्छितः ॥ वालीतमपिसुग्रीवएवंक्रुद्धौपरस्परम् ॥ ८ ॥ अयुध्येतामेकरूपौदृष्ट्वारामोऽतिविस्मितः ॥ नमुमोचतदाबाणंसुग्रीववधशंकया ॥ ९ ॥ ततोदुद्रावसुग्रीवोवमन्रक्तंभयाकुलः ॥ वालीस्वभवनंयातःसुग्रीवोराममब्रवीत् ॥ १० ॥ किंमांघातयसेरामशत्रुणाभ्रातृरूपिणा ॥ यदिमद्धनने वांछात्वमेवजहिमांविभो ॥ ११ ॥

द्रायतदुपकारकंकिंकृतवानित्येवंलोकामांवदिष्यंतिअतस्त्वदुपकारोमेऽवश्यंकर्तव्यइतिशेषः ॥ ३ ॥ उक्तमेवदाढर्यायपुनराह । इतीति । भद्रंतेइत्यनेनमदाज्ञाकरणेएवतेभद्रंनान्यथेतिसूचितम् ॥ ४ ॥ तथेत्यर्थंप्रतिज्ञायेतिशेषः ॥ ५ ॥ महानादंमहाप्रतिध्वनिजनकम् ॥ आह्वयतस्पर्धयाशब्दितवान् ॥ ६ ॥ ७ ॥ ८ ॥ एकरूपौसमानाकारौ अतएवरामोबाणंनमुमोच ॥ ९ ॥ १० ॥ जहिशब्देनेतिशेषः ॥ ११ ॥

प्रत्ययंकृत्वाविश्वासमुत्पाद्य सत्यवादिन्नित्यादिराक्षेपः ॥ १२ ॥ युवांसमानाकारौदृष्ट्वामित्रघातशंकयाऽहंसायकंनमुक्तवानित्यन्वयः ॥ १३ ॥ भ्रमशांत
येभ्रमशांतिफलकम् ॥ १४ ॥ अहंरामइत्यनेनस्वस्यामिथ्याभाषित्वंसूचितम् । त्वांशपेयदिनहनिष्यामितर्हिमित्रस्यतवैवशपथइत्यर्थः ॥ १५ ॥ पुष्पि
वांमालामामुच्यसंबद्धयप्रेष्यतामित्यन्वयः ॥ १६ ॥ १७ ॥ १८ ॥ परिकरंकच्छबंधादिरूपम् ॥ १९ ॥ २० ॥ तेत्वत्तोभग्नःपुनरायातिगर्जन्युद्धार्थ

एवंमेप्रत्ययंकृत्वासत्यवादिन्नघूत्तम ॥ उपेक्षसेकिमर्थंमांशरणागतवत्सल ॥ १२ ॥ श्रुत्वासुग्रीववचनंरामःसाश्रुविलोचनः ॥ आलिंग्य
मास्मभैषीस्त्वंदृष्ट्वावामेकरूपिणौ ॥ १३ ॥ मित्रघातित्वमाशंक्यमुक्तवान्सायकंनहि ॥ इदानीमेवतेचिह्नंकरिष्येभ्रमशांतये ॥ १४ ॥
गत्वाह्वयपुनःशत्रुंहतंद्रक्ष्यसिवालिनम् ॥ रामोऽहंत्वाशपेभ्रातर्हनिष्यामिरिपुंक्षणात् ॥१५॥ इत्याश्वास्यससुग्रीवंरामोलक्ष्मणमब्रवीत् ॥
सुग्रीवस्यगलेपुष्पमालामामुच्यपुष्पिताम् ॥ १६ ॥ प्रेषयस्वमहाभागसुग्रीवंवालिनंप्रति ॥ लक्ष्मणस्तुतदाबद्ध्वागच्छगच्छेतिसादरम् ॥
॥ १७ ॥ प्रेषयामाससुग्रीवंसोऽपिगत्वातथाऽकरोत् ॥ पुनरत्यद्भुतंशब्दंकृत्वावालिनमाह्वयत् ॥ १८ ॥ तच्छ्रुत्वाविस्मितोवालीक्रोधेनम
हतावृतः ॥ बद्ध्वापरिकरंसम्यग्गमनायोपचक्रमे ॥ १९ ॥ गच्छंतंवालिनंतारागृहीत्वानिषिषेधतम् ॥ नगंतव्यंत्वयेदानींशंकामेऽतीवजा
यते ॥ २० ॥ इदानीमेवतेभग्नःपुनरायातिसत्वरः ॥ सहायोबलवांस्तस्यकश्चिन्नूनंसमागतः ॥ २१ ॥ वालीतामाहहेसुभ्रुशंकातेव्येतुत
द्गता ॥ प्रियेकरंपरित्यज्यगच्छगच्छामितंरिपुम् ॥ २२ ॥ हत्वाशीघ्रंसमायास्येसहायस्तस्यकोभवेत् ॥ सहायीयदिसुग्रीवस्ततोहत्वोभ
यंक्षणात् ॥२३॥ आयास्येमाशुचःशूरःकथंतिष्ठेद्गृहेरिपुम् ॥ ज्ञात्वाप्याह्वयमानंहिहत्वायास्यामिसुंदरि ॥२४॥ तारोवाच ॥ मत्तोऽन्यच्छृ
णुराजेंद्रश्रुत्वाकुरुयथोचितम् ॥ आहमामंगदःपुत्रोमृगयायांश्रुतंवचः ॥ २५ ॥ अयोध्याधिपतेःश्रीमान्रामोदाशरथिःकिल ॥ लक्ष्मणेन
सहभ्रात्रासीतयाभार्ययासह ॥ २६ ॥

माह्वयति ॥ २१ ॥ तद्गतासुग्रीवसहायविषया करंपरित्यज्यगच्छ । अंतःपुरमितिशेषः । मत्तोरक्षितुंजीवितार्थीकस्तस्यसहायोभवेदित्यन्वयः
॥ २२ ॥ २३ ॥ आह्वयमानंरिपुंज्ञात्वापिशूरःकथंगृहेविष्ठेत् अतस्त्वंहत्वाऽत्राऽऽयास्यामि इतिच्छेदः ॥ २४ ॥ यन्मामंगदोमृगयायांश्रुतंवचआह
तच्छ्रुत्वायथोचितंकुरु ॥ २५ ॥ २६ ॥

रावणेनसीताहृतातांसहभ्रात्रामार्गमाणोऋष्यमूकाद्रिमागतः ॥ २७ ॥ समागतःसंमिलितःसख्यंचतेनचकार ॥ २८ ॥ २९ ॥ इतिनिश्चित्यपरस्परसाहाय्यंप्रविज्ञाययातौस्ववासस्थानमितिशेषः ॥ तस्मान्निश्चितंनिश्चितार्थकंमेवचःशृणु । इदानीमेवेत्यादेरन्यथेत्यादिः ॥ ३० ॥ ३१ ॥ कुलंवानरकुलम् ॥ ॥ ३२ ॥ ३३ ॥ ३४ ॥ स्नेहोभविष्यतिसुग्रीवतोऽपिममरामकार्येसमर्थत्वादितिभावः ॥ ३५ ॥ स्वपक्षपरपक्षाभावेहेतुगर्भविशेषणंपरात्मनइति ।

आगतोदंडकारण्यंतत्रसीताहृताकिल ॥ रावणेनसहभ्रात्रामार्गमाणोऽथजानकीम् ॥२७॥ आगतो[1]ऋष्यमूकाद्रिंसुग्रीवेणसमागतः ॥ चकारतेनसुग्रीवःसख्यंचानलसाक्षिकम्॥२८॥प्रतिज्ञांकृतवान्रामःसुग्रीवायसलक्ष्मणः॥वालिनंसमरेहत्वाराजानंत्वांकरोम्यहम्॥२९॥इतिनिश्चित्यतौयातौनिश्चितंशृणुमद्वचः॥इदानीमेवतेभग्नःकथंपुनरुपागतः॥३०॥अतस्त्वंसर्वथावैरंत्यक्त्वासुग्रीवमानय॥ यौवराज्येऽभिषिंचाशुरामंत्वंशरणंव्रज॥३१॥पाहिमामंगदंराज्यंकुलंचहरिपुंगव ॥ इत्युक्त्वाश्रुमुखीतारापादयोःप्रणिपत्यतम् ॥३२॥ हस्ताभ्यांचरणौधृत्वारुरोदभयविह्वला ॥ तामालिंग्यतदावालीसस्नेहमिदमब्रवीत् ॥३३॥ स्त्रीस्वभावाद्बिभेषित्वंप्रियेनास्तिभयंमम ॥ रामोयदिसमायातोलक्ष्मणेनसमंप्रभुः ॥ ३४ ॥ तदारामेणमेस्नेहोभविष्यतिनसंशयः ॥ रामोनारायणःसाक्षादवतीर्णोऽखिलप्रभुः ॥३५॥ भूभारहरणार्थायश्रुतंपूर्वंमयानघे ॥ स्वपक्षःपरपक्षोवानास्तितस्यपरात्मनः॥३६॥आनेष्यामिगृहंसाध्विनत्वातच्चरणांबुजम् ॥ भजतोऽनुभजत्येषभक्तिगम्यःसुरेश्वरः ॥ ३७ ॥ यदिस्वयंसमायातिसुग्रीवोहन्मितंक्षणात् ॥ यदुक्तंयौवराज्यायसुग्रीवस्याभिषेचनम् ॥३८॥ कथमाहूयमानोऽहंयुद्धायारिपुणाप्रिये ॥ शूरोऽहंसर्वलोकानांसंमतःशुभलक्षणे ॥ ३९ ॥ भीतभीतमिदंवाक्यंकथंवालीवदेत्प्रिये ॥ तस्माच्छोकंपरित्यज्यतिष्ठसुंदरिवेश्मनि ॥ ४० ॥ एवमाश्वास्यतारांतांशोचंतीमश्रुलोचनाम् ॥ गतोवालीसमुद्युक्तःसुग्रीवस्यवधायसः ॥ ४१ ॥

तेनसर्वत्रसमःसइतिध्वनितम् ॥ ३६ ॥ भजतःभक्तानित्यर्थः ॥ ३७ ॥ यदिस्वयमिति । असहायइत्यर्थः ॥ ३८ ॥ कथंतदभिषेचनंकुर्यामितिशेषः । यतोहंसर्वलोकानांसंमतःशूरः ॥ ३९ ॥ वालीभीतभीतम् अत्यंतभयसूचकमिदंवाक्यंकथंवदेत् ॥ ४० ॥ ४१ ॥

१–अत्रसंधिरार्षः । अथवा ऋवर्णान्नस्य णत्वं वाच्यमितिवार्तिकमत्याख्यानपरभाष्यमामाण्यादृकारान्तर्वर्तिरेफनिमित्तकोत्वमसंगोऽवधेयः । २ अनेन स्वनामपाराध्यींकरणात्स्वस्यातिशौर्यवीर्यधैर्याणि ध्वन्यन्ते ।

उत्पपातयुद्धायतत्संमुखमितिशेषः ॥ ४२ ॥ अहन् हतवान् ॥ ४३ ॥ रामंविलोकयन् शीघ्रमेतंजहीतिदृष्ट्यासूचयन् ॥ ४४ ॥ ऐंद्रेधनुषिअगस्त्यदत्ते । ऐंद्रमितिपाठेऐंद्रास्त्राभिमंत्रितमित्यर्थः । वृक्षखंडगःवृक्षसमूहगः ॥ ४५ ॥ तदहृदयंलक्ष्यंकृत्वेतिशेषः ॥ ४६ ॥ महींकंपयन्सशरोरामधनुःसकाशात्महा शब्दंमुंचन्उत्पपात । आकाशेइतिशेषः । ततःसंनिपपातवालिवक्षसितितस्ताद्विभेद ॥ ४७ ॥ तदावक्षोभेदकालेचेतनंचैतन्यं वामेनधनुरन्येनसायकमन्यमा लंब्यस्थितमितिशेषः ॥ ४८ ॥ वक्षसिवनमाला कंठमारभ्याजानुमालावनमाला तयाविभूषितम् ॥ ४९ ॥ ५० ॥ विगर्हयन्कुत्सयन् ॥ ५१ ॥ राज

दृष्ट्वावालिनमायांतंसुग्रीवोभीमविक्रमः ॥ उत्पपातगलेबद्धपुष्पमालःपतंगवत् ॥ ४२ ॥ मुष्टिभ्यांताडयामासवालिनंसोऽपितंतथा ॥ अहन्वालीचसुग्रीवंसुग्रीवोवालिनंतथा ॥ ४३ ॥ रामंविलोकयन्नेवसुग्रीवोयुयुधेयुधि ॥ इत्येवंयुद्ध्यमानौतौदृष्ट्वारामःप्रतापवान् ॥४४॥ बाणमादायतूणीरादैंद्रेधनुषिसंदधे ॥ आकृष्यकर्णपर्यंतमदृश्योवृक्षखंडगः ॥ ४५ ॥ निरीक्ष्यवालिनंसम्यग्लक्ष्यंतद्धृदयंहरिः ॥ उत्ससर्जाशनिसमंमहावेगंमहाबलः ॥ ४६ ॥ बिभेदसशरोवक्षोवालिनःकंपयन्महीम् ॥ उत्पपातमहाशब्दंमुंचन्संनिपपातह ॥ ४७ ॥ तदा मुहूर्तंनिःसंज्ञोभूत्वाचेतनमापसः ॥ ततोवालीददर्शाग्रेरामंराजीवलोचनम् ॥ धनुरालंब्यवामेनहस्तेनान्येनसायकम् ॥ ४८ ॥ बिभ्राणंचीरवसनंजटामुकुटधारिणम् ॥ विशालवक्षसंभ्राजद्वनमालाविभूषितम् ॥ ४९ ॥ पीनचार्वायतभुजंनवदूर्वादलच्छविम् ॥ सुग्रीवलक्ष्मणाभ्यांचपार्श्वयोःपरिसेवितम् ॥ ५० ॥ विलोक्यशनकैःप्राहवालीरामंविगर्हयन् ॥ किंमयापकृतंरामतवयेनहतोऽस्म्यहम् ॥ ५१ ॥ राजधर्ममविज्ञायगर्हितंकर्मतेकृतम् ॥ वृक्षखंडेतिरोभूत्वात्यजतामयिसायकम् ॥ ५२ ॥ यशःकिंलप्स्यसेरामचोरवत्कृतसंगरः ॥ यदि क्षत्रियदायादोमनोर्वंशसमुद्भवः ॥ ५३ ॥

धर्ममिति । तिरोभूयान्येनयुद्धंकुर्वतिबाणपातश्छलत्वान्नराजधर्मइतिभावः । ल्यबभावआर्षः ॥ ५२ ॥ चोरवत्कृतसंगरस्त्वंमांहत्वायशोलप्स्यसेकिम् । अपित्वयशएवेतिभावः । यदितेक्षत्रियदायादत्वाद्यभिमानस्तदामेमयासमक्षंयुद्धंकृत्वातत्फलंयशोमरणंवाप्राप्स्यसेप्राप्तोभवेः । अन्यार्थेऽन्यशब्दप्रयोगेणास न्नमरणतासूच्यते ॥ ५३ ॥

१ बाणमित्यस्य विशेषणम् ।

कृतमुपकृतमित्यर्थः ॥ ५४ ॥ ५५ ॥ ५६ ॥ कंधर्मंकांधर्मंकृतांकीर्तिम् ॥ ५७ ॥ ऐहिकमपिनमद्वधेइत्याह । अभक्ष्यमिति ॥ ५८ ॥ इत्येवंबहुभाषं तमसंबद्धंप्रलपंतमित्यर्थः ॥ अधर्मेति । सद्धर्मरक्षणांगत्वादधर्मकारिवधस्यनदोषत्वमितिभावः ॥ ५९ ॥ अधर्मकारित्वंवालिनःसमर्थयते । दुहितेत्यादि । भ्रातुःकनिष्ठस्येतिशेषः ॥ ६० ॥ एताःसर्वाःसमास्तुल्यास्तासांमध्येयोविमूढधीरपिएकांरमतेसपातकीज्ञेयः । विमूढधीरपीत्यनेनाज्ञानान्नदोषइतिपरिहृतम् । ईदृशार्थस्याज्ञानात्करणेऽपिमहानेवदोषः । अतएवतस्यवधपर्यंतोदंडइत्याह । सवध्यइति ॥ ६१ ॥ ननुमनुष्याधिकारिकंशास्त्रंनतुतिर्यगादिविषयमतास्तिर

युद्धंकृत्वासमक्षंमेप्राप्स्यसेतत्फलंतदा ॥ सुग्रीवेणकृतंकिंतेमयावानकृतंकिमु ॥ ५४ ॥ रावणेनहृताभार्यातवराममहावने ॥ सुग्रीवंशरणंयातस्तदर्थमितिशुश्रुम ॥ ५५ ॥ वतरामनजानीषेमद्बलंलोकविश्रुतम् ॥ रावणंसकुलंबद्ध्वाससीतंलंकयासह ॥ ५६ ॥ आनयामिमुहूर्ताद्यदिचेच्छामिराघव ॥ धर्मिष्ठइतिलोकेऽस्मिन्कथ्यसेरघुनंदन ॥ ५७ ॥ वानरंव्याधवद्धत्वाधर्मंकंलप्स्यसेवद ॥ अभक्ष्यंवानरंमांसंहत्वामांकिंकरिष्यसि ॥ ५८ ॥ इत्येवंबहुभाषंतंवालिनंराघवोऽब्रवीत् ॥ धर्मस्यगोप्तालोकेऽस्मिश्चरामिसशरासनः ॥ ५९ ॥ अधर्मकारिणंहत्वासद्धर्मंपालयाम्यहम् ॥ दुहिताभगिनीभ्रातुर्भार्याचैवतथास्नुषा ॥ ६० ॥ समायोरमतेतासामेकामपिविमूढधीः ॥ पातकीसतुविज्ञेयःसवध्योराजभिःसदा ॥ ६१ ॥ त्वंतुभ्रातुःकनिष्ठस्यभार्यायांरमसेबलात् ॥ अतोमयाधर्मविदाहतोऽसिवनगोचर ॥ ६२ ॥ त्वंकपित्वान्नजानीषेमहांतोविचरंतियत् ॥ लोकंपुनानाःसंचारैरतस्तान्नातिभाषयेत् ॥ ६३ ॥

श्चामस्माकंकोऽत्रदोषइतिचेच्छृणु । तिरश्चामनधिकारोहिअज्ञानकृतःतच्चाज्ञानंनतवबाल्यादिषुस्वयंप्रतिभातवेदत्वात्देवांशत्वाच्च । एवंचकर्तव्याकर्तव्यज्ञानवतामकर्तव्यकरणेदोषोभवत्येवातएवेंद्रादीनामहल्याद्यतिक्रमणादौदोषश्रुतिःसंगच्छते । देवानांयज्ञाद्यनधिकारस्तुयजनीयदेवतांतराभावात् । अतएवब्रह्मविद्यायामिंद्रादीनामप्यधिकारःश्रुतिषुश्रूयतेइत्येषोऽत्रभगवतोऽभिप्रायः ॥ ६२ ॥ किंच मन्निंदयादोषांतरभागपित्वंजायसेइत्याह । त्वंकपित्वादिति । संचारैर्लोकंपुनानामहांतोविचरंतियत्यतोऽतस्तान्नातिभाषयेन्ननिंदेत् । त्वंतुएवंसंचरंतीतिनजानीषेइत्यन्वयः । विचरंतिहीति पाठांतरम् । एवंचत्वादृशपवित्रीकरणार्थएवायंममसंचारइतिध्वनितम् ॥ ६३ ॥

॥ ६४ ॥ अजानतात्वदीयंपरमेश्वरत्वमजानतेत्यर्थः ॥ ६५ ॥ तवाग्रतइति । त्वत्स्वरूपज्ञानपूर्वकंतवाग्रतइत्यर्थः । तवदर्शनंत्वत्स्वरूपज्ञानंमहायोगिनामपिदुर्लभम् ॥ ६६ ॥ विवशःपुत्रादिममताक्रांतोऽपि साक्षात्त्वांपश्यतोम्रियमाणस्यपरमपदप्राप्तिरितिकिंवक्तव्यमित्यर्थः ॥ ६७ ॥ ६८ ॥ ६९ ॥ अमरेंद्रोऽभवत् । तदंशत्वात्तत्रैवलयमापेत्यर्थः ॥ ७० ॥ विमृष्टःस्पृष्टइवियावत् । परमंपदमैंद्रंपदम् । अधिकारांतेमुक्तिंदत्त्वातस्यापिपरमपदत्वेनव्यवहारः ॥

तच्छ्रुत्वाभयसंत्रस्तोज्ञात्वारामंरमापतिम् ॥ वालीप्रणम्यरभसाद्रामंवचनमब्रवीत् ॥ ६४ ॥ रामराममहाभागजानेत्वांपरमेश्वरम् ॥ अजानतामयाकिंचिदुक्तंतत्क्षंन्तुमर्हसि ॥ ६५ ॥ साक्षात्त्वच्छरघातेनविशेषेणतवाग्रतः ॥ त्यजाम्यसून्महायोगिदुर्लभंतवदर्शनम् ॥ ६६ ॥ यन्नामविवशोगृह्णन्म्रियमाणःपरंपदम् ॥ यातिसाक्षात्सएवाद्यमुमूर्षोर्मेपुरःस्थितः ॥ ६७ ॥ देवजानामिपुरुषंत्वांश्रियंजानकींशुभाम् ॥ रावणस्यवधार्थायजातंत्वांब्रह्मणार्थितम् ॥ ६८ ॥ अनुजानीहिमांरामयांतंत्वत्पदमुत्तमम् ॥ ममतुल्यबलेबालेअंगदेत्वंदयांकुरु ॥ ६९ ॥ विशल्यंकुरुमेरामहृदयंपाणिनास्पृशन् ॥ तथेतिबाणमुद्धृत्यरामःपस्पर्शपाणिना ॥ त्यक्त्वातद्वानरंदेहममरेंद्रोऽभवत्क्षणात् ॥ ७० ॥ वालीरघूत्तमशराभिहतोविमृष्टोरामेणशीतलकरेणसुखाकरेण ॥ सद्योविमुच्यकपिदेहमनन्यलभ्यंप्राप्तःपरंपरमहंसगणैर्दुरापम् ॥ ७१ ॥ इति श्रीम० किष्किं० द्वितीयःसर्गः ॥ २ ॥ श्रीमहादेवउवाच ॥ निहतेवालिनिरणेरामेणपरमात्मना ॥ दुद्रुवुर्वानराःसर्वेकिष्किंधांभयविह्वलाः ॥ १ ॥ तारामूचुर्महाभागेहतोवालीरणाजिरे ॥ अंगदंपरिरक्षाद्यमंत्रिणःपरिणोदय ॥ २ ॥ चतुर्द्वारकपाटादीन्बद्ध्वारक्षामहेपुरीम् ॥ वानराणांतुराजानमंगदंकुरुभामिनि ॥ ३ ॥ निहतंवालिनंश्रुत्वाताराशोकविमूर्च्छिता ॥ अताडयत्स्वपाणिभ्यांशिरोवक्षश्चभूरिशः ॥ ४ ॥

॥ ७१ ॥ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराजमानस्याहिम्मतिवर्मणःपुत्रस्यश्रीरामवर्मणःकृतावध्यात्मरामायणसेतौकिष्किंधाकांडे द्वितीयःसर्गः ॥ २ ॥ ॥ निहतेइति ॥ १ ॥ परिणोदय । नगरादिरक्षार्थमितिशेषः ॥ २ ॥ चतुर्द्वारकपाटादीनिति । आदिनासूक्ष्मानेकद्वारकपाटपरिखादिसंग्रहः ॥ ३ ॥ ४ ॥

निधनंयास्यामि वह्निप्रवेशेनेतिशेषः ॥ ५ ॥ ६ ॥ ७ ॥ येनेति । येनबाणेनवालीहतस्तेनबाणेनमांजहि । वालिशरीरस्पृष्टतयातत्स्पर्शस्यमत्सुखावहत्वा दितिभावः ॥ ८ ॥ ९ ॥ पत्नीदानफलमिति । तेनधर्मेणतवापिपत्नीलाभोभविष्यतीतिभावः ॥ १० ॥ वालिघातिनारामेणदापितंवालिनेतिशेषः । वालि नोदातृत्वंचमरणेनस्वत्वत्यागमात्रेणेतिबोध्यम् ॥ ११ ॥ १२ ॥ १३ ॥ देहजीवयोःपतित्वंविकल्प्यनायइत्याह । पंचात्मकइति । पंचभूतात्मकइत्यर्थः । इदंजडत्वोपपादकम् । त्वङ्मांसेत्यादिनात्यंतबीभत्सत्वंदर्शितम् । कालेनकर्मभिर्गुणैःसत्त्वादिभिश्चोत्पन्नइत्यनेननश्वरत्वमेवंचतत्रात्यंतंप्रीत्ययोग्येकातेपति

किमंगदेनराज्येननगरेणधनेनवा ॥ इदानीमेवनिधनंयास्यामिपतिनासह ॥ ५ ॥ इत्युक्त्वात्वरितातत्ररुदतीमुक्तमूर्धजा ॥ ययौतारातिशोकार्तायत्रभर्तृकलेवरम् ॥ ॥ ६ ॥ पतितंवालिनंदृष्ट्वारक्तैःपांसुभिरावृतम् ॥ रुदतीनाथनाथेतिपतितातस्यपादयोः ॥ ७ ॥ करुणंविलपंतीसाददर्शरघुनंदनम् ॥ राममांजहिबाणेनयेनवालीहतस्त्वया ॥ ८ ॥ गच्छामिपतिसालोक्यंपतिर्मामभिकांक्षते ॥ स्वर्गेऽपिनसुखंतस्यमांविनारघुनंदन ॥ ९ ॥ पत्नीवियोगजंदुःखमनुभूतंत्वयानघ ॥ वालिनेमांप्रयच्छाशुपत्नीदानफलंभवेत् ॥ १० ॥ सुग्रीवत्वंसुखंराज्यंदापितंवालिघातिना ॥ रामेणरुमयासार्धंभुंक्ष्वसापत्नवर्जितम् ॥ ११ ॥ इत्येवंविलपंतींतांतारांरामोमहामनाः ॥ सांत्वयामासदययातत्त्वज्ञानोपदेशतः ॥ १२ ॥ किंभीरुशोचसिव्यर्थंशोकस्याविषयंपतिम् ॥ पतिस्तवायंदेहोवाजीवोवावदतत्त्वतः ॥ १३ ॥ पंचात्मकोजडोदेहस्त्वङ्मांसरुधिरास्थिमान् ॥ कालकर्मगुणोत्पन्नःसोऽप्यास्तेऽद्यापितेपुरः ॥ १४ ॥ मन्यसेजीवमात्मानंजीवस्तर्हिनिरामयः ॥ नजायतेनम्रियतेनतिष्ठतिनगच्छति ॥ १५ ॥ नस्त्रीपुमान्वाषंढोवाजीवःसर्वगतोऽव्ययः ॥ एकएवाद्वितीयोऽयमाकाशवदलेपकः ॥ नित्योज्ञानमयःशुद्धःसकथंशोकमर्हति ॥ १६ ॥

बुद्धिरित्यर्थः । अथाप्येवंबुद्धिरेवतेतर्हिसोऽस्त्येवेतिव्यर्थःशोकइत्यर्थः ॥ १४ ॥ नांत्यइत्याह । मन्यसेइति । निरामयःनाशादिरहितः । तदाह । नजायतेइत्यादि ॥ १५ ॥ सर्वगतश्चेतनोजीवएकएव । अद्वितीयइति द्वितीयसंबंधरहितः । तदेवाह । आकाशवदलेपकइति । अलिप्तइत्यर्थः । मायागुणैरितिशेषः । सकथमिति । अविनाशित्वादितिभावः ॥ १६ ॥

१. छान्दसं वित्वम् ।

देहःकाष्ठवदचित् । अचेतनइत्यर्थः । जीवश्चिदात्मकोज्ञानस्वरूपएवनतुसुखादिपरिणामवान् । एवंसतिसुखादिसंबंधःकस्यस्यात् । अचेतनत्वान्नस्थूलस्य सूक्ष्मस्यनाप्यपरिणामित्वादात्मनइत्यर्थः ॥ १७ ॥ उत्तरयति । अहंकारादीति । देहेंद्रियैःसह । तेषुइत्यर्थः । अहंकारादिसंबंधः । अहंममेत्येवंबुद्धिविषयताइत्यर्थः । प्रायःस्थूलसूक्ष्मदेहयोरुभयोरप्यहंबुद्धिरेव केषांचित्तुस्थूलदेहेपुत्रादौचममताबुद्धिः सूक्ष्मेतुसर्वेषामहंबुद्धिरेवेतिविवेकः । तावदेवाविवेकिनोऽतःकरणादिभ्यःस्वस्मिन्विवेकाग्रहवतआत्मनःसंसारःस्यादित्यर्थः ॥ १८ ॥ एवंशुद्धस्यात्मनोऽन्याविवेकादारोपितःसंसारःस्वतएवनविनिवर्तते यथास्वप्नस्यमिथ्यागमःस्वप्नमिथ्यापदार्थदर्शनंनस्वतोनिवर्तते किंतुजाग्रदवस्थयैवतद्वदितिभावः ॥ १९ ॥ तत्रस्वप्नस्यविषयध्यानवत्संसारस्यमूलकारणमाह ।

तारोवाच ॥ देहोऽचित्काष्ठवद्रामजीवोनित्यश्चिदात्मकः ॥ सुखदुःखादिसंबंधःकस्यस्याद्राममेवद ॥ १७ ॥ श्रीरामउवाच ॥ अहंकारादिसंबंधोयावद्देहेंद्रियैः सह ॥ संसारस्तावदेवस्यादात्मनस्त्वविवेकिनः ॥ १८ ॥ मिथ्यारोपितसंसारोनस्वयंविनिवर्तते ॥ विषयान्ध्यायमानस्यस्वप्नेमिथ्यागमोयथा ॥ १९ ॥ अनाद्यविद्यासंबंधात्तत्कार्याहंकृतेस्तथा ॥ संसारोऽपार्थकोऽपिस्याद्रागद्वेषादिसंकुलः ॥२०॥ मनएवहिसंसारोबंधश्चैवमनःशुभे ॥ आत्मामनःसमानत्वमेत्यतद्गतबंधभाक् ॥ २१ ॥ यथाविशुद्धःस्फटिकोऽलक्तकादिसमीपगः ॥ तत्तद्वर्णयुगाभातिवस्तुतोनास्तिरंजनम् ॥२२॥ बुद्धींद्रियादिसामीप्यादात्मनःसंसृतिर्बलात्॥आत्मास्वलिंगंतुमनःपरिगृह्यतदुद्भवान्॥२३॥ कामाञ्जुषन्गुणैर्बद्धःसंसारेवर्ततेऽवशः ॥ आदौमनोगुणान्सृष्ट्वाततःकर्माण्यनेकधा ॥ २४ ॥

अनादीति । अविद्याअनात्मन्यात्मबुद्धिर्मायावा अयथार्थकःअत्यंतमिथ्याभूतः ॥ २० ॥ मनएवेति । मनोऽत्रांतःकरणम् । संसारस्तन्मूलकारणमित्यर्थः । बंधःसुखादिभोगस्तद्वत्मनएव मनसासमानत्वमात्ममनसोरैक्यम् तद्गतबंधभाक् तद्गतबंधयुक्तोभवतीत्यर्थः ॥ २१ ॥ २२ ॥ बुद्धीति । यथालक्तकादिसामीप्यात्स्फटिकस्यरक्तत्वादिव्यवहारः एवंसंसारधर्मकबुद्धींद्रियादिसामीप्यादात्मनोबलादवशतः संसारव्यवहारोलोकैःक्रियतइत्यर्थः । तदेवाह । आत्मेति । मनसोजडत्वेनज्ञानादिजनकत्वासंभवात्चेतनस्यात्मनोलिंगमनुमापकंमनोऽतःकरणंपरिगृह्यते । नाविवेकंप्राप्यतदुद्भवान् ततोजातान् कामान् विषयाञ्जुषन् गुणैस्तदीयैरागद्वेषादिभिर्बद्धइवावशःसंसारेवर्तते । विषयाणांमनउद्भवत्वंदर्शयति । आदाविति । गुणान्रागद्वेषादीन् ततोरागद्वेषादितः । कर्माणिसृष्टिवदितिशेषः ॥ २३ ॥ २४ ॥

तत्रकर्मभेदानाह । शुक्लेत्यादि ॥ शुक्लकर्माणिहिंसादिरहितजपध्यानादिरूपाणि । लोहितानिहिंसामिश्रयागादीनि । कृष्णानिपापकर्माणि । तत्स
मानतःकर्मस्वरूपतुल्यागतयोगतीः । सृष्टिवदितिशेषः । गतयइतिद्वितीयार्थेआर्षम् । तत्रशुक्लकर्मणःशुक्लब्रह्मलोकप्राप्तिरूपोत्तमागतिः । लोहितकर्मणोम
ध्यमास्वर्गगतिः । कृष्णकर्मणोऽधमानरकगतिरित्यर्थः । भूतसंप्लवःप्रलयस्तावत्पर्यंतंकर्मवशाद्भ्रमति ॥ २५ ॥ सर्वोपसंहृतौप्रलयेवासनाभिःकर्मभिश्चसहा
भिनिवेशतःअंतःकरणादितादात्म्याध्यासात् अंतःकरणादिप्रकृतिभूतानाद्यविद्यावशगस्तल्लीनःसंस्तिष्ठति ॥ २६ ॥ वासनाश्चमानसानिकर्माणिचतैःसहत
युक्तएवजायते वर्षाकालेमंडूकवत्प्रादुर्भवति । एवंसृष्टिप्रलययोर्घटीयंत्रमिववर्त्तमानास्तिष्ठति ॥ २७ ॥ नन्वेवमस्यमुक्तिप्रत्याशैवनाकिंनेत्याह । यदेति ।

शुक्ललोहितकृष्णानिगतयस्तत्समानतः ॥ एवंकर्मवशाज्जीवोभ्रमत्याभूतसंप्लवम् ॥ २५ ॥ सर्वोपसंहृतौजीवोवासनाभिःस्वकर्मभिः ॥
अनाद्यविद्यावशगस्तिष्ठत्यभिनिवेशतः ॥ २६ ॥ सृष्टिकालेपुनःपूर्ववासनामानसैःसह ॥ जायतेपुनरप्येवंघटीयंत्रमिवावशः ॥ २७ ॥
यदापुण्यविशेषेणलभतेसंगतिंसताम् ॥ मद्भक्तानांसुशान्तानांतदामद्विषयामतिः ॥२८॥ मत्कथाश्रवणेश्रद्धादुर्लभाजायतेततः ॥ ततः
स्वरूपविज्ञानमनायासेनजायते ॥२९॥ तदाचार्यप्रसादेनवाक्यार्थज्ञानतःक्षणात् ॥ देहेंद्रियमनःप्राणाहंकृतिभ्यःपृथक्स्थितम् ॥३०॥
स्वात्मानुभवतःसत्यमानंदात्मानमद्वयम् ॥ ज्ञात्वासद्योभवेन्मुक्तःसत्यमेवमयोदितम् ॥ ३१ ॥ एवंमयोदितंसम्यगालोचयतियोऽ
निशम् ॥ तस्यसंसारदुःखानिनस्पृशंतिकदाचन ॥ ३२ ॥

मद्विषया मतिःईश्वरोमहानित्येवंबुद्धिर्जायतेइतिशेषः ॥ २८ ॥ ततःईश्वरविषयबुद्ध्यनंतरम् । ततःस्वरूपविज्ञानंस्वरूपंविज्ञायतेऽनेन ततःविषयेषुअनि
त्याशुचिदुःखरूपंवैराग्यंनित्यानित्यविवेकादिचजायतेइत्यर्थः ॥ २९ ॥ तदाताहशवैराग्यादौजातेआचार्यप्रसादेनतत्त्वमस्यादिवाक्यार्थज्ञानतःश्रवणमन
नरूपा तत्क्षणात्उत्सवात्श्रवणादिविषयोत्साहात्पुनःपुनरनुष्ठानादितियावत् । देहादिभ्यःपृथक्स्थितंसत्यमानंदरूपमद्वितीयमात्मानंस्वात्मानुभवतःस्वात्मविष
यादीदृशंब्रह्माहमेवेत्येवंरूपान्निदिध्यासनात्ज्ञात्वाअपरोक्षीकृत्ययस्तत्कालमेवसंसारान्मुक्तोभवेदित्यर्थः ॥ ३० ॥ ३१ ॥ आलोचयतियुक्त्यानि
र्णयति तस्यक्रमेणज्ञानप्राप्त्यासंसारदुःखास्पर्शः ॥ ३२ ॥

कर्मबंधात्कर्मकृताद्बंधात्संसाररूपादित्यर्थः ॥ ३३ ॥ मेमयारूपंदर्शितम् । स्वरूपंदर्शितमित्यर्थः । अत्रतारायैभगवताविश्वरूपदर्शनंकारितमितिध्वनय ति । यद्वादर्शितमित्थंबोधितमित्यर्थः ॥ ३४ ॥ मद्रूपंपरिदृश्यमानंरूपंदर्शितंविश्वरूपंचआलोचयविचारय । प्रवाहपतितंसंसारप्रवाहपतितंकार्यंसांसारिकं कार्यंकुर्वत्यपितद्दोषैर्नलिप्यसेइत्यर्थः ॥ ३५ ॥ देहाभिमानजंदेहेअहंममइत्याकारकाभिमानाज्जातम् ॥ ३६ ॥ जीवन्मुक्तातदवस्था परमात्मनारामेणस द्गुरुत्वात्क्षणसंगमेनैव ॥ ३७ ॥ सापितिर्यग्योनिरपिताराअनादिबंधंसंसाररूपंनिर्धूयतिरस्कृत्यविकल्मषानिष्पापाकृता मुक्ताजीवन्मुक्ताचकृता ॥ ३८ ॥

त्वमप्येतन्मयाप्रोक्तमालोचयविशुद्धधीः ॥ नस्पृश्यसेदुःखजालैःकर्मबंधाद्विमोक्ष्यसे ॥ ३३ ॥ पूर्वजन्मनितेसुभ्रुकृतामद्भक्तिरुत्तमा ॥ अतस्तवविमोक्षायरूपंमेदर्शितंशुभे ॥ ३४ ॥ ध्यात्वामद्रूपमनिशमालोचयमयोदितम् ॥ प्रवाहपतितंकार्यंकुर्वत्यपिनलिप्यसे ॥ ३५ ॥ श्रीरामेणोदितंसर्वंश्रुत्वातारातिविस्मिता ॥ देहाभिमानजंशोकंत्यक्त्वानत्वारघूत्तमम् ॥ ३६ ॥ आत्मानुभवसंतुष्टाजीवन्मुक्ताबभूवह ॥ क्षणसंगममात्रेणरामेणपरमात्मना ॥३७॥ अनादिबंधंनिर्धूयमुक्तासापिविकल्मषा ॥ सुग्रीवोऽपिचतच्छ्रुत्वारामवक्त्रात्समीरितम्॥३८॥ जहावज्ञानमखिलंस्वस्थचित्तोऽभवत्तदा ॥ ततःसुग्रीवमाहेदंरामोवानरपुंगवम् ॥ ३९ ॥ भ्रातुर्ज्येष्ठस्यपुत्रेणयद्युक्तंसांपरायिकम् ॥ कुरु सर्वंयथान्यायंसंस्कारादिममाज्ञया॥४०॥तथेतिवालिभिर्मुख्यैर्वानरैःपरिणीयतम् ॥ वालिनंपुष्पकेक्षिप्त्वासर्वराजोपचारकैः ॥ ४१ ॥ भेरी दुंदुभिनिर्घोषैर्ब्राह्मणैर्मंत्रिभिःसह ॥ यूथपैर्वानरैःपौरैस्तारयाचांगदेनच ॥ ४२ ॥ गत्वाचकारतत्सर्वंयथाशास्त्रंप्रयत्नतः ॥ स्नात्वाजगाम रामस्यसमीपंमंत्रिभिःसह ॥ ४३ ॥ नत्वारामस्यचरणौसुग्रीवःप्राहहृष्टधीः ॥ राज्यंप्रशाधिराजेंद्रवानराणांसमृद्धिमत् ॥४४॥ दासोऽहं तेपादपद्मंसेवेलक्ष्मणवच्चिरम् ॥ इत्युक्तोराघवःप्राहसुग्रीवंसस्मितंवचः ॥ ४५ ॥

॥ ३९ ॥ सुग्रीवंकिमाहेत्यत्राह । भ्रातुरिति । ज्येष्ठस्यभ्रातुर्यत्सांपरायिकंपारलौकिकंयुक्तंतत्पुत्रेणांगदेनकुरुकारयेत्यर्थः । ननुभवच्छत्रोःकथमस्माभिः संस्कारादिकार्यंतत्राह । ममाज्ञयेति ॥ ४० ॥ तथेतीत्यस्यांगीकृत्येतिशेषः । परिणीयउत्थाप्यपुष्पकेपुष्पकविमानतुल्येवाहने सर्वराजोपचारकैर्युक्तंवालि नंक्षिप्त्वा ॥ ४१ ॥ ४२ ॥ तन्मृतोचितसंस्कारादि ॥ ४३ ॥ वानराणांराज्यंप्रशाधीत्यन्वयः ॥ ४४ ॥ ४५ ॥

त्वमेवाहम् । अनेनत्वयाक्रियमाणराज्यभोगएवममभोगइतिसूचितम् । किंचानासक्तोराज्यंभुंक्ष्व ईश्वरप्रेरितोऽहंराज्यंकुर्वेइतिमत्याचतादृश्याबुद्ध्याक्रियमाणया क्रिययाभगवांस्तुष्यत्येवेतिध्वनितम् । पुरराज्याधिपत्येकिष्किंधापुरराज्याधिपत्ये ॥ ४६ ॥ तर्हिमदभिषेककालेतत्रसन्निधानंकुर्वितिचेत्तत्राह । नगरमिति । पत्तनंनगरम् ॥ ४७ ॥ अहंचनगरस्यसमीपेपर्वतस्यशिखरेवत्स्यामीत्यन्वयः ॥ ४८ ॥ वर्षदिवसान्वर्षाकालम् । ततःराज्याभिषेकानंतरंकिंचित्कालंवर्षा



त्वमेवाहंनसंदेहःशीघ्रंगच्छममाज्ञया ॥ पुरराज्याधिपत्येत्वंस्वात्मानमभिषेचय ॥४६॥ नगरंनप्रवेक्ष्यामिचतुर्दशसमाःसखे ॥ आगामिष्यतिमेभ्रातालक्ष्मणःपत्तनंतव ॥ ४७ ॥ अंगदंयौराज्येत्वमभिषेचयसादरम् ॥ अहंसमीपेशिखरेपर्वतस्यसहानुजः ॥ ४८ ॥ वत्स्यामिवर्षदिवसांस्ततस्त्वंयत्नवान्भव॥ किंचित्कालंपुरेस्थित्वासीतायाःपरिमार्गणे ॥ ४९ ॥ साष्टांगंप्रणिपत्याहसुग्रीवोरामपादयोः ॥ यदाज्ञापयसेदेवतत्तथैवकरोम्यहम् ॥ ५० ॥ अनुज्ञातस्तुरामेणसुग्रीवस्तुसलक्ष्मणः ॥ गत्वापुरंतथाचक्रेयथारामेणचोदितः ॥ ५१ ॥ सुग्रीवेणयथान्यायंपूजितोलक्ष्मणस्तदा ॥ आगत्यराघवंशीघ्रंप्रणिपत्योपतस्थिवान् ॥५२॥ ततोरामोजगामाशुलक्ष्मणेनसमन्वितः ॥ प्रवर्षणगिरेरूर्ध्वंशिखरंभूरिविस्तरम् ॥ ५३ ॥ तत्रैकंगह्वरंदृष्ट्वास्फाटिकंदीप्तिमच्छुभम् ॥ वर्षवातातपसहंफलमूलसमीपगम् ॥ वासायरोचयामासतत्ररामः सलक्ष्मणः ॥ ५४ ॥ दिव्यमूलफलपुष्पसंयुतेमौक्तिकोपमजलौघपल्वले ॥ चित्रवर्णमृगपक्षिशोभितेपर्वतेरघुकुलोत्तमोऽवसत् ॥ ५५ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेकिष्किंधाकांडेतृतीयःसर्गः ॥ ३ ॥

समयंस्वपुरेस्थित्वासीतायाःपरिमार्गणेऽन्वेषणेयत्नवान्भवेत्यन्वयः ॥ ४९ ॥ ५० ॥ चोदितःप्रेरितः ॥ ५१ ॥ ५२ ॥ ५३ ॥ गह्वरंगुहाम् । फलमूलानि समीपगानियस्यतत् ॥ ५४ ॥ मौक्तिकोपमःजलौघोजलसमूहोयेषुतादृशानिपल्वलानियस्मिंस्तादृशेपर्वतेइत्यर्थः । नानावर्णैर्मृगैःपक्षिभिश्चशोभिते ॥ ५५ ॥ इतिश्रीमत्सकलराजविपद्बुद्ध० अध्यात्मरामायणसेतौकिष्किंधाकांडेतृतीयःसर्गः ॥ ३ ॥

तत्रपर्वतेइत्यर्थः । वार्षिकदिनानिव्याप्येतिशेषः । अवसदित्यन्वयः ॥ १ ॥ वातप्रेरितजलपूर्णमेघान् अंतरेमध्येस्तनितयुक्तंवैद्युतंविद्युत्समूहोगर्भेयेषांतान् आहितसुकांचन्यःकक्षाःपृष्ठास्तरणानियेषांतादृशान्गजयूथान्यद्वत्तानिवद्वीक्ष्यविस्मयमगात् । अत्रगजाबृंहितयुक्ताबोध्याः । अतएवस्तनितेनाधिक्यम् ॥ २ ॥ नवघासंनवतृणम् विस्फारितेक्षणाः । भगवत्सौंदर्यदर्शनायेतिभावः ॥ ३ ॥ तादृशाःसंतोध्याननिष्ठामुनीश्वराइवनचलंति । राममित्याद्युत्तरा

श्रीमहादेवउवाच ॥ तत्रवार्षिकदिनानिराघवोलीलयामणिगुहासुसंचरन् ॥ पक्वमूलफलभोगतोषतोलक्ष्मणेनसहितोऽवसत्सुखम् ॥ १ ॥ वातनुन्नजलपूरितमेघानंतरस्तनितवैद्युतगर्भान् ॥ वीक्ष्यविस्मयमगाद्गजयूथान्यद्वदाहितसुकांचनकक्षान् ॥ २ ॥ नवघासंसमास्वाद्यहृष्टपुष्टमृगद्विजाः ॥ धावंतःपरितोरामंवीक्ष्यविस्फारितेक्षणाः ॥ ३ ॥ नचलंतिसदाध्याननिष्ठाइवमुनीश्वराः ॥ रामंमानुषरूपेणगिरिकाननभूमिषु ॥ ४ ॥ चरंतंपरमात्मानंज्ञात्वासिद्धगणाभुवि ॥ मृगपक्षिगणाभूत्वाराममेवानुसेविरे ॥ ५ ॥ सौमित्रिरेकदाराममेकांतेध्यानतत्परम् ॥ समाधिविरमेभक्त्याप्रणयाद्विनयान्वितः ॥ ६ ॥ अब्रवीद्देवतेवाक्यात्पूर्वोक्ताद्विगतोमम ॥ अनाद्यविद्यासंभूतःसंशयोहृदिसंस्थितः ॥ ७ ॥ इदानींश्रोतुमिच्छामिक्रियामार्गेणराघव ॥ भवदाराधनंलोकेयथाकुर्वंतियोगिनः ॥ ८ ॥ इदमेवसदाप्राहुर्योगिनोमुक्तिसाधनम् ॥ नारदोऽपितथाव्यासोब्रह्माकमलसंभवः ॥ ९ ॥ ब्रह्मक्षत्रादिवर्णानामाश्रमाणांचमोक्षदम् ॥ स्त्रीशूद्राणांचराजेंद्रसुलभंमुक्तिसाधनम् ॥ तवभक्तायमेभ्रात्रेब्रूहिलोकोपकारकम् ॥ १० ॥ श्रीरामउवाच ॥ ममपूजाविधानस्यनांतोऽस्तिरघुनंदन ॥ तथाऽपिवक्ष्येसंक्षेपाद्यथावदनुपूर्वशः ॥ ११ ॥

न्वयि । तत्रैतेचरंतोमृगपक्षिगणानकिंतुसिद्धगणाइत्यपह्नुतिर्व्यंग्या ॥ ४ ॥ ५ ॥ ६ ॥ अनादिभूतयाऽविद्ययासंभूतोजातःसंशयोविगतइत्यन्वयः ॥ ७ ॥ क्रियामार्गेणलौकिकपुष्पादिभिःपूजारूपेण यथातत्प्रकारविशिष्टेनपूजामार्गेणयोगिनोभवदाराधनंकुर्वंतितच्छ्रोतुमिच्छामीत्यन्वयः ॥ ८ ॥ इदमेवक्रियामार्गेणाराधनमेव । योगिनएवाह । नारदइत्यादि ॥ ९ ॥ मेमह्यम् ॥ १० ॥ ११ ॥

द्विजत्वमुपनयनसंस्कारंप्राप्य । कृत्वांतयोरव्ययोःप्राप्यलब्ध्वाएतयोराराधयेदित्यनेनान्वयः ॥ १२ ॥ पूजास्थानान्याह । हृदयइत्यादि । स्वहृदयदेशइत्यर्थः । इदंचमूर्धादीनामपिस्मृत्युक्तानामुपलक्षणम् । अनलेवह्नौ प्रतिमादौप्रतिमास्वर्णरूप्यादिमयी । आदिनाब्राह्मणे । विभावसौसूर्यमंडलेअर्चेत्पूजयेत् ॥ ॥ १३ ॥ प्रातःस्नानमितिसकलप्रातःकृत्योपलक्षणम् ॥ १४ ॥ वेदेति । द्विजोवेदोदितैःशूद्रादिस्तंत्रोदितैः । मृल्लेपनंसकलस्नानविधेरुपलक्षणम् । तेनस्नानंकुर्वन्नित्यन्वयः । संध्यादि आदिनाहोमतर्पणादि ॥ १५ ॥ ममपूजकोमद्बुद्ध्याभक्त्यास्वगुरुंपूजयेदित्यन्वयः । अत्रगुर्वसान्निध्येऽपिध्यानेनजलादौगुरुंपूजयेदितिसंप्रदायः ॥ १६ ॥ शिलायांशिलानिर्मितप्रतिमायाम् । प्रतिमासुमृद्दन्वादिनिर्मितास्वित्यर्थः । प्रसिद्धैःस्मृतिप्रसिद्धैः । तेनतन्निषिद्धपुष्पादिपूजानर्हमितिसूचितम् । तेचनिषेधानिबंधेषुद्रष्टव्याविस्तरभयान्नेहलिखिताः ॥ १७ ॥ अमायिकः मायादंभादिरूपातद्रहितः अनुवृत्त्यागुरूपदिष्टमार्गानुवर्तनेन । प्रतिमादिषुप्रतिमाश्चतेआदयश्चप्रतिमादयःतेषुप्रतिमादिषुप्रतिमादिरूपेषुआदिषुआश्रयेषु । पूजाधिकरणेष्वित्यर्थः । तत्पुरुषःसमानाधिकरणःकर्मधारयः । प्रतिमारूपेष्वाश्रयेषु । आदिशब्दआश्रयवाचीभीष्मादिश्वसुयोधनइत्यादौप्रसिद्धः । अलंकारः पुष्पादिरूपः ॥ १८ ॥ आधारांतरेपूजाविशेषमाह । अग्नाविति । अग्नौतत्तद्देवतामंत्रेणहोमएवतत्तद्देवतापूजयेत्यर्थः । भास्करेस्थंडिलेयजेदिति । भास्करेयजेदितियत्तत्तदाकारेस्थंडिलेइत्यर्थः । भक्तेनश्रद्धयोपहृतंवार्यपिममप्रीत्यैभवतीतिशेषः । अनेनभक्तेरेवमुख्यत्वंदर्शितम् ॥ १९ ॥

स्वगृह्योक्तप्रकारेणद्विजत्वंप्राप्यमानवः ॥ सकाशात्सद्गुरोर्मंत्रंलब्ध्वामद्भक्तिसंयुतः ॥१२॥ तेनसंदर्शितविधिर्मामेवाराधयेत्सुधीः ॥ हृदयेवाऽनलेवार्चेत्प्रतिमादौविभावसौ ॥ १३ ॥ शालग्रामशिलायांवापूजयेन्मामतंद्रितः ॥ प्रातःस्नानंप्रकुर्वीतप्रथमंदेहशुद्धये ॥ १४ ॥ वेदतंत्रोदितैर्मंत्रैर्मृल्लेपनविधानतः ॥ संध्यादिकर्मयन्नित्यंतत्कुर्याद्विधिनाबुधः ॥१५॥ संकल्पमादौकुर्वीतसिद्ध्यर्थंकर्मणांसुधीः ॥ स्वगुरुंपूजयेद्भक्त्यामद्बुद्ध्यापूजकोमम ॥ १६ ॥ शिलायांस्नपनंकुर्यात्प्रतिमासुप्रमार्जनम् ॥ प्रसिद्धैर्गंधपुष्पाद्यैर्मत्पूजासिद्धिदायिका॥१७॥ अमायिकोऽनुवृत्त्यामांपूजयेन्नियतव्रतः ॥ प्रतिमादिष्वलंकारःप्रियोमेकुलनंदन ॥ १८ ॥ अग्नौयजेतहविषाभास्करेस्थंडिलेयजेत् ॥ भक्तेनोपहृतंप्रीत्यैश्रद्धयाममवार्यपि ॥ १९ ॥

भक्ष्यादिकमुपहृतंप्रीत्यैइतिकिंपुनर्वक्तव्यमित्यर्थः । समारभेत्पूजामितिशेषः ॥ २० ॥ तत्रपूजाप्रकारमाह । चैलेति । अधःकुशासनंतदुपर्यजिनंतदुपरिचैलमिति क्रमः । तत्रोपविश्यपद्मासनाद्यन्यतमासनेनेत्यर्थः । देवस्यसंमुखेइत्यनेनस्थिरासुप्रतिमासुपश्चिमाद्यभिमुखतयाऽपिपूजाभवतीतिसूचितम् ॥ २१ ॥ मातृकाअकारादिपंचाशद्वर्णात्मिकातन्न्यासप्रकारश्चतंत्रेस्फुटः । बहिरिति । बहिर्न्यासमांतरंन्यासंचेत्यर्थः । केशवादिचतुर्विंशतिनामभिरित्यर्थः । सचनारदपंचरात्रादौ स्पष्टः । तत्त्वन्यासोऽपितत्रैवोक्तः ॥ २२ ॥ मन्मूर्तिपंजरन्यासोविष्णुपंजरस्तोत्रोक्तोमहान्यासइतिसंप्रदायः । मंत्रन्यासंमंत्रवर्णैस्तत्तत्कल्पोक्तंषडंगादिन्यासम् । प्रतिमादावपीति । यथात्मनितथादेवे इत्युक्तेः ॥ २३ ॥ ईषद्वामभागावच्छिन्नपुरोभागेकलशंजलपूर्णम् । स्थापयेदितिशेषः । पुष्पादिदक्षिणेक्षिपेत् । स्थापये

किंपुनर्भक्ष्यभोज्यादिगंधपुष्पाक्षतादिकम् ॥ पूजाद्रव्याणिसर्वाणिसंपाद्यैवंसमारभेत् ॥२०॥ चैलाजिनकुशैःसम्यगासनंपरिकल्पयेत्॥
तत्रोपविश्यदेवस्यसंमुखेशुद्धमानसः ॥२१॥ ततोन्यासंप्रकुर्वीतमातृकाबहिरांतरम् ॥ केशवादिततःकुर्यात्तत्त्वन्यासंततःपरम् ॥ २२ ॥
मन्मूर्तिपंजरन्यासंमंत्रन्यासंततोन्यसेत् ॥ प्रतिमादावपितथाकुर्यान्नित्यमतंद्रितः ॥ २३ ॥ कलशंस्वपुरोवामेक्षिपेत्पुष्पादिदक्षिणे ॥
अर्घ्यपाद्यप्रदानार्थंमधुपर्कार्थमेवच ॥ २४ ॥ तथैवाचमनार्थंतुन्यसेत्पात्रचतुष्टयम् ॥ हृत्पद्मेभानुविमलेमत्कलांजीवसंज्ञिताम् ॥२५॥
ध्यायेत्स्वदेहमखिलंतयाव्याप्तमरिंदम ॥ तामेवावाहयेन्नित्यंप्रतिमादिषुमत्कलाम् ॥ २६ ॥ पाद्यार्घ्याचमनीयाद्यैःस्नानवस्त्रविभूषणैः ॥
यावच्छक्योपचारैर्वात्वर्चयेन्माममायया ॥ २७ ॥

दित्यर्थः । अर्घ्यादिपात्रस्थापनदेशःस्मृतावुक्तः ! अर्घ्यपात्रंतुवायव्येनैर्ऋत्यांपाद्यपात्रकम् । मध्येतुमधुपर्कस्यादैशेत्वाचमनीयकम् । इति॥ २४ ॥ जीवसंज्ञितां मत्कलामित्यनेनचेतनःसर्वत्रैकएवेतिबोधितम् । युक्तंचैतत् । व्यापकेनैकेनैवचेतनोपपत्तावनेकतत्कल्पनायांमानाभावात् । प्रतिकर्मव्यवस्थात्वंतःकरणभेदेनैवोपपन्नेति । हृत्पद्मेतांध्यायेत् ॥ २५ ॥ तयाव्याप्तमखिलंस्वदेहंभावयेत् । तथाभावयित्वातामेवमत्कलांप्रतिमादिष्वावाहयेत् । तदावाहनेनतामपिचेतनत्वेनध्यात्वा ॥ २६ ॥ यावच्छक्यैरुपचारैर्वाषोडशभिःपंचभिर्वा । तुःपादपूरणार्थः । अमाययाअदंभादिनामांपूजयेत् ॥ २७ ॥

विभवेसतिकर्पूरादिभिःसुगंधपुष्पैश्चमंत्रवदर्चयेत् ॥ २८ ॥ आगमोक्तामगस्त्यसंहितोक्ताम् । प्रकारयेत् प्रकुर्वीतेत्यर्थः । नीराजनैरितिपाठक्रमादर्थक्रमस्यबलवत्त्वाद्धूपदीपनैवेद्यनीराजनानीतिक्रमः । नीराजनंपंचारार्तिकादिभिः ॥ २९ ॥ तद्धूपादिश्रद्धयोपहरेद्दद्यात् । यतोहंश्रद्धाभुक्श्रद्धादत्तभोक्ता ॥ ३० ॥ अगस्त्येनेतिअगस्त्यसंहितोक्तमार्गेणकृतंयत्कुंडंतेनतस्मिन्नित्यर्थः । अधिकरणस्यकरणत्वविवक्षयातृतीया । मूलमंत्रेणागमोक्तेन । पुंसूक्तेनपुरुषसूक्तेन । एतद्ब्राह्मणविषयम् ॥ ३१ ॥ तद्विषयेएवाह । अथवौपासनाग्नाविति । चरुणाहविषाहवीरूपेणचरुणा ॥ ३२ ॥ ध्यायेन्मामितिशेषः । पार्षदेभ्यस्तंत्रोक्तहनूमदादिभ्यः ॥ ३३ ॥ मांध्यायन् स्मरन्नित्यस्यमनुवर्णानितिशेषः । वदेवाह । यतवागिति । अनेनप्रशस्ततरोमानसोजपउक्तः । मुखवासंतद्रूपकर्पूरादियुक्तं

विभवेसतिकर्पूरकुंकुमागुरुचंदनैः ॥ अर्चयेन्मंत्रवन्नित्यंसुगंधकुसुमैःशुभैः ॥ २८ ॥ दशावरणपूजांवैह्यागमोक्तांप्रकारयेत् ॥ नीराजनैर्धूपदीपैर्नैवेद्यैर्बहुविस्तरैः ॥ २९ ॥ श्रद्धयोपहरेन्नित्यंश्रद्धाभुगहमीश्वरः ॥ होमंकुर्यात्प्रयत्नेनविधिनामंत्रकोविदः ॥ ३० ॥ अगस्त्येनोक्तमार्गेणकुंडेनागमवित्तमः॥ जुहुयान्मूलमंत्रेणपुंसूक्तेनाथवाबुधः ॥३१॥ अथवौपासनाग्नौवाचरुणाहविषातथा ॥ तप्तजांबूनदप्रख्यंदिव्याभरणभूषितम् ॥३२॥ ध्यायेदनलमध्यस्थंहोमकालेसदाबुधः ॥ पार्षदेभ्योबलिंदत्त्वाहोमशेषंसमापयेत् ॥ ३३ ॥ ततोजपंप्रकुर्वीतध्यायन्मांयतवाक्स्मरन् ॥ मुखवासंचतांबूलंदत्त्वाप्रीतिसमन्वितः ॥ ३४ ॥ मदर्थेनृत्यगीतादिस्तुतिपाठादिकारयेत् ॥ प्रणमेद्दंडवद्भूमौहृदयेमांनिधायच ॥ ३५ ॥ शिरस्याधायमद्दत्तंप्रसादंभावनामयम् ॥ पाणिभ्यांमत्पदेमूर्ध्निगृहीत्वाभक्तिसंयुतः ॥ ३६ ॥ रक्षमांघोरसंसारादित्युक्त्वाप्रणमेत्सुधीः ॥ उद्वासयेद्यथापूर्वंप्रत्यग्ज्योतिषिसंस्मरन् ॥ ३७ ॥

तांबूलंदत्वेत्यर्थः ॥ ३४ ॥ मदर्थेमत्प्रीतयेइत्यर्थः । कारयेत्कुर्वीतेत्यर्थः । निवृत्तप्रेषणाण्णिच् । दंडवदित्यनेनाष्टांगप्रणामउक्तः ॥ ३५ ॥ भावनामयंमद्दत्तंप्रसादंशिरसिआधायस्थापयित्वा । अनेनमह्यंप्रसादंपुष्पादिरूपंभगवान्ददातीतिभावनयाप्रसादंगृह्णीयादितिसूचितम् । तंगृहीत्वाशिरसिस्थापयित्वाभावनाभावितेमत्पदेपाणिभ्यांमूर्ध्निगृहीत्वाधृत्वा ॥ ३६ ॥ इत्युक्त्वाप्रणमेदित्यन्वयः । प्रत्यग्ज्योतिषिस्वहृदयस्थे यतएवध्याताजीवकलाप्रतिमायामावाहितापूर्वंतत्रैवोद्वासयेत् तत्रैवप्रविष्टांध्यायेत् । एतदेवविसर्जनम् ॥ ३७ ॥

इहामुत्रचऐहलौकिकींपारलौकिकींचेत्यर्थः ॥ ३८ ॥ मद्भक्तोयदिमामेवंध्यात्वाआवाह्यचदिनेप्रतिदिनंममपूजांकरोतितदाममसारूप्यंप्राप्नोति ॥ ३९ ॥
सनातनंपूर्वपूर्वैरप्येवमेवानुष्ठितम् ॥ ४० ॥ शेषांशायलक्ष्मणाय ॥ ४१ ॥ प्राकृतवत्प्रकृतिकार्यमनुष्यवत् । मायामालंब्यदुःखितइत्यनेनस्वतस्तस्यदुः
खलेशोऽपिनेतिसूचितम् ॥ ४२ ॥ एकांतेइति । मंत्रत्वादेकांतेकथनम् ॥ ४३ ॥ अनुत्तमःनविद्यतेउत्तमंयस्मादित्यर्थः ॥ ४४ ॥ उपकारमेवाह ।

एवमुक्तप्रकारेणपूजयेद्विधिवद्यदि ॥ इहामुत्रचसंसिद्धिंप्राप्नोतिमदनुग्रहात् ॥ ३८ ॥ मद्भक्तोयदिमामेवंपूजांचैवदिनेदिने ॥ करोतिमम
सारूप्यंप्राप्नोत्येवनसंशयः॥३९॥इदंरहस्यंपरमंचपावनंमयैवसाक्षात्कथितंसनातनम् ॥ पठत्यजस्रंयदिवाशृणोतियःससर्वपूजाफलभाङ्
नसंशयः ॥ ४० ॥ एवंपरात्माश्रीरामःक्रियायोगमनुत्तमम् ॥ पृष्टःप्राहस्वभक्तायशेषांशायमहात्मने ॥ ४१ ॥ पुनःप्राकृतवद्रामोमाया
मालंब्यदुःखितः ॥ हासीतेतिवदन्नैवानिद्रांलेभेकथंचन ॥ ४२ ॥ एतस्मिन्नंतरेतत्रकिष्किंधायांसुबुद्धिमान् ॥ हनूमान्प्राहसुग्रीवमेकांते
कपिनायकम् ॥ ४३ ॥ शृणुराजन्प्रवक्ष्यामितवैवाहितमुत्तमम् ॥ रामेणतेकृतःपूर्वमुपकारोह्यनुत्तमः ॥ ४४ ॥ कृतघ्नवत्त्वयानूनंविस्मृ
तःप्रतिभातिमे ॥ त्वत्कृतेनिहतोवालीवीरस्त्रैलोक्यसंमतः ॥४५॥ राज्येप्रतिष्ठितोऽसित्वंतारांप्राप्तोऽसिदुर्लभाम् ॥ सरामःपर्वतस्याग्रे
भ्रात्रासहवसन्सुधीः ॥ ४६ ॥ त्वदागमनमेकाग्रमीक्षतेकार्यगौरवात् ॥ त्वंतुवानरभावेनस्त्रीसक्तोनावबुद्ध्यसे ॥ ४७ ॥ करोमीतिप्रति
ज्ञायसीतायाःपरिमार्गणम् ॥ नकरोषिकृतघ्नस्त्वंहन्यसेवालिवद्द्रुतम् ॥ ४८ ॥ हनूमद्वचनंश्रुत्वासुग्रीवोभयविह्वलः ॥ प्रत्युवाचहनूमंतं
सत्यमेवत्वयोदितम् ॥ ४९ ॥ शीघ्रंकुरुमदाज्ञांत्वंवानराणांतरस्विनाम् ॥ सहस्राणिदशेदानींप्रेषयाशुदिशोदश ॥ ५० ॥

त्वत्कृतेइति ॥ ४५ ॥ दुर्लभांतारामिति । वालिपरिग्रहात्त्वयासर्वथाकामिभावेनद्रष्टुमप्यशक्यामित्यर्थः ॥ ४६ ॥ एकाग्रंतन्मात्रचित्तत्वंयथाभवति
तथाईक्षतेप्रतीक्षते ॥ कार्यस्यसीतान्वेषणरूपस्य । गौरवात्त्वदेकसाध्यत्वादित्यर्थः ॥ ४७ ॥ कृतघ्नस्त्वंयदिनकरोषितदावालिवद्धन्यसे । रामेणेतिशे
षः । अतःसर्वथान्वेषण मुचित मितिव्यंग्यम् ॥ ४८ ॥ ४९ ॥ वानराणांमदाज्ञांकुरुबोधय ॥ ५० ॥

आज्ञामाह सप्तेति ॥ ५१ ॥ इत्याज्ञाप्य एवंवानरेषुकर्तव्यामाज्ञांबोधयित्वा ॥ ५२ ॥ ५३ ॥ अगणितागुणाः सत्वंपराक्रमश्चयेषांतान् पर्वताकारसदृशंरूपमा कारोयेषांतान् पवनस्यवायोर्हितोऽतिप्रियःकुमारोहनमान् । दानमानादितृप्तानित्यनेनावश्यंकार्यसिद्धिकारित्वंदर्शितम् ॥ ५४ ॥ इतिश्री० सेतौकिष्किं धाकांडेचतुर्थः सर्गः ॥ ४ ॥ रामस्त्विति । पर्वताग्रेस्थितोमणियुक्तसानौशिखरे ॥ १ ॥ नजानेनशक्नोमीत्यर्थः । धातूनामनेकार्थत्वात् ॥ २ ॥ यःक

सप्तद्वीपगतान्सर्वान्वानरानानयंतुते ॥ पक्षमध्येसमायांतुसर्वेवानरपुंगवाः ॥ ५१ ॥ येपक्षमतिवर्तंतेतेवध्यामेनसंशयः ॥ इत्याज्ञाप्यहनू मंतंसुग्रीवोगृहमाविशत् ॥ ५२ ॥ सुग्रीवाज्ञांपुरस्कृत्यहनूमान्मंत्रिसत्तमः ॥ तत्क्षणेप्रेषयामासहरीन्दशदिशःसुधीः ॥ ५३ ॥ अगणि तगुणसत्त्वान्वायुवेगप्रचारान्वनचरगणमुख्यान्पर्वताकाररूपान्॥पवनहितकुमारःप्रेषयामासदूतानतिरभसतरात्मादानमानादितृप्तान् ॥ ॥ ५४ ॥ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेकिष्किंधाकांडेचतुर्थःसर्गः ॥ ४ ॥ ॥ ॥ श्रीमहादेवउवाच ॥ रामस्तुप र्वतस्याग्रेमणिसानौनिशामुखे ॥ सीताविरहजंशोकमसहन्निदमब्रवीत् ॥ १ ॥ पश्यलक्ष्मणमेसीताराक्षसेनहृतावलात् ॥ मृताऽमृतावा निश्चेतुंनजानेऽद्यापिभामिनीम् ॥ २ ॥ जीवतीतिममब्रूयात्कश्चिद्वाप्रियकृत्तमे ॥ यदिजानामितांसाध्वींजीवंतींयत्रकुत्रवा ॥ ३ ॥ हठादे वाहरिष्यामिसुधामिवपयोनिधेः ॥ प्रतिज्ञांशृणुमेभ्रातर्येनमेजनकात्मजा ॥ ४ ॥ नीतातंभस्मसात्कुर्यांसपुत्रबलवाहनम् ॥ हासीतेचंद्रव दनेवसंतीराक्षसालये ॥ ५ ॥ दुःखार्तामामपश्यंतीकथंप्राणान्धारिष्यसि ॥ चंद्रोऽपिभानुवद्भातिममचंद्राननांविना ॥६॥ चंद्रत्वंजानकीं स्पृष्ट्वाकरैर्मांस्पृशशीतलैः ॥ सुग्रीवोऽपिदयाहीनोदुःखितंमांनपश्यति ॥ ७ ॥ राज्यंनिष्कंटकंप्राप्यस्त्रीभिःपरिवृतोरहः ॥ कृतघ्नोदृश्य तेव्यक्तंपानासक्तोऽतिकामुकः ॥ ८ ॥

श्चिदपिजीवतीतिब्रूयात्समेप्रियकृत् । यत्रकुत्रवा यत्रकुत्रापीत्यर्थः ॥ ३ ॥ ४ ॥ वसंतीत्वंकथंप्राणान्धारिष्यसीत्यन्वयः ॥ ५ ॥ विरहदुःखमभिनयति । चंद्रो पीति । भानुवत् दाहकत्वात् ॥ ६ ॥ चंद्रत्वमिति । कर्पूरतोऽप्यतिशीतलस्यममकामदुःखशामकस्यतद्गात्रस्यस्पर्शेतवकराअपितथागुणशैत्ययुक्ताभूत्वामांसुख यिष्यंतीतिभावः । विरहवेदनासहत्वादेवसुग्रीवंनिंदति । सुग्रीवोऽपीति ॥ ७ ॥ यन्मांनपश्यतितत्कृतघ्नःस्त्रइवदृश्यते ॥ ८ ॥

कृतघ्नत्वमुपपादयति । नायातीति ॥ ९ ॥ एवंयथासीताहर्त्तारंहंतुमिच्छामिएवमित्यर्थः ॥ अथयथामेमयावालीहतस्तथासुग्रीवोऽपिभवेदित्यर्थः ॥ १० ॥
रुष्टंक्रोधवंतम् ॥ ११ ॥ इदानीमेवेत्याद्युक्त्वाराजाज्ञांविनेदृशकार्यकरणमनुचितमितिप्रतिसंधायाह । मामाज्ञापयेति । ईदृशेस्थलेप्रथमतोऽप्रतिसंधानंतुरामरोषे
णलक्ष्मणस्यापिरोषाविष्टत्वात्अतोगर्भितंनदोषः ॥ १२ ॥ १३ ॥ वालिवन्नहनिष्यसेइत्युक्त्वाभीषयेत्यन्वयः । नञिकाकुः । ततःसुग्रीवप्रतिभाषितंतदुक्तोत्तर
मादाय ॥ १४ ॥ अत्रागत्यमांश्रावयेतिशेषः । तच्छ्रुत्वापश्चाद्यत्कार्यंकर्तुंयोग्यंतत्करिष्यामि । अगच्छदितिच्छेदः ॥ १५ ॥ किष्किंधांप्रत्यगच्छदितिपूर्वेणा

नायातिशरदंपश्यन्नपिमार्गयितुंप्रियाम् ॥ पूर्वोपकारिणंदुष्टःकृतघ्नोविस्मृतोहिमाम् ॥ ९ ॥ हन्मिसुग्रीवमप्येवंसपुरंसहबांधवम् ॥
वालीयथाहतोमेऽद्यसुग्रीवोऽपितथाभवेत्॥१०॥इतिरुष्टंसमालोक्यराघवंलक्ष्मणोऽब्रवीत् ॥ इदानीमेवगत्वाहंसुग्रीवंदुष्टमानसम्॥११॥
मामाज्ञापयहत्वातमायास्येरामतेंऽतिकम् ॥ इत्युक्त्वाधनुरादायखड्गंतूणीरमेवच ॥ १२ ॥ गंतुमभ्युद्यतंवीक्ष्यरामोलक्ष्मणमब्रवीत् ॥
नहंतव्यस्त्वयावत्ससुग्रीवोमेप्रियःसखा ॥ १३ ॥ किंतुभीषयसुग्रीवंवालिवन्नहनिष्यसे ॥ इत्युक्त्वाशीघ्रमादायसुग्रीवप्रतिभाषितम् ॥
॥१४॥ आगत्यपश्चाद्यत्कार्यंतत्करिष्याम्यसंशयम्॥तथेतिलक्ष्मणोऽगच्छत्त्वरितोभीमविक्रमः ॥ १५ ॥ किष्किंधांप्रतिकोपेननिर्दहन्नि
ववानरान् ॥ सर्वज्ञोनित्यलक्ष्मीकोविज्ञानात्मापिराघवः ॥ १६ ॥ सीतामनुशुशोचार्तःप्राकृतःप्राकृतामिव ॥ बुद्ध्यादिसाक्षिणस्तस्य
मायाकार्यातिवर्तिनः ॥ १७ ॥ रागादिरहितस्यास्यतत्कार्यंकथमुद्भवेत् ॥ ब्रह्मणोक्तमृतंकर्तुंराज्ञोदशरथस्यहि ॥ १८ ॥

न्वयः । नित्यलक्ष्मीकः अविभक्ततन्नामकमायाशक्तिः तत्संबंधादेवसर्वज्ञः । स्ववस्तुविज्ञानात्मानिर्विषयज्ञानस्वरूपोऽपि ॥ १६ ॥ सीतामनुशुशोचेतिवि
रोधः । प्राकृतोऽज्ञोजनः प्राकृतांसंयोगवियोगशालिनीम् । तत्रशंकते । बुद्ध्येत्यादिनाकथमुद्भवेदित्यंतेन । मायाकार्यातिवर्तिनःतदस्पृष्टस्य ॥ १७ ॥ अतए
वरागादिरहितस्य । समाधत्ते । ब्रह्मणेति ॥ ब्रह्मप्रार्थितंरावणवधफलकावतरणमृतंसत्यंकर्तुंजातः । फलांतरमप्याह । राज्ञस्तपःफलदानायच ॥ १८ ॥

---

१—न हनिष्यसे किं अपि तु हनिष्यसे घातयिष्यसे मयेति शेषः । इति स्पष्टकाकर्थः ।

मानुषवेषधृक्जातः । एवंचतद्वेषनिर्वाहायैवैवंचेष्टाकरणमितिभावः । फलांतरमपितथाव्यवहरणस्याह । माययेति । मायामोहितत्वादेवाज्ञानसंयुताः ॥ १९ ॥ प्रथयितुंविस्तारयितुम् ॥२०॥ मानुषचेष्टकःमनुष्यसदृशचेष्टाकर्ता । लोकानांक्रोधादिकालिकस्यव्यवहारस्यसिद्धयेज्ञानायार्थस्यतत्फलस्यचसिद्धये ॥ २१ ॥ तत्तत्कालोचितंव्यवहारंगृह्णन्व्यवहरन्प्रजाःमोहयतिरामोऽप्येवंव्यवहृतवान् तस्मादेवंव्यवहारोयुक्तइतिबोधयति मोहत्वंचास्यनिवृत्तिमार्गविपरीतत्वेन । गुणवर्जितोऽपिअशेषगुणेषुशत्रुवधकांतानुरागादिषुअनुरक्तइवतत्तद्व्यवहरन् । अतएवमोहयति ॥ २२ ॥ कामाद्यलिप्तत्वमेवहेतुपूर्वंनिरूपयति । विज्ञानेति । स्वयंविज्ञानमूर्तिस्तद्घनःतथाविज्ञानरूपैवशक्तिर्यस्यतेनशक्तिसंसर्गकृतोऽन्यथाभावोवारितः । अतएवसर्वप्राणिनांशुभाशुभसाक्षी विशिष्टज्ञानशक्तित्वात् । अगुणान्वितः

तपसःफलदानायजातोमानुषवेषधृक् ॥ माययामोहिताःसर्वेजनाअज्ञानसंयुताः ॥ १९ ॥ कथमेषांभवेन्मोक्षइतिविष्णुर्विचिंतयन् ॥ कथांप्रथयितुंलोकेसर्वलोकमलापहाम् ॥ २० ॥ रामायणाभिधांरामोभूत्वामानुषचेष्टकः ॥ क्रोधंमोहंचकामंचव्यवहारार्थसिद्धये॥२१॥ तत्तत्कालोचितंगृह्णन्मोहयत्यवशाःप्रजाः ॥ अनुरक्तइवाशेषगुणेषुगुणवर्जितः ॥ २२ ॥ विज्ञानमूर्तिर्विज्ञानशक्तिःसाक्ष्यगुणान्वितः ॥ अतःकामादिभिर्नित्यमविलिप्तोयथानभः ॥२३॥ विदंतिमुनयःकेचिज्जानंतिसनकादयः ॥ तद्भक्तानिर्मलात्मानःसम्यग्जानंतिनित्यदा ॥२४॥भक्तचित्तानुसारेणजायतेभगवानजः ॥ लक्ष्मणोऽपितदागत्वाकिष्किंधानगरांतिकम् ॥ २५ ॥ ज्याघोषमकरोत्तीव्रंभीषयन्सर्ववानरान् ॥ तंदृष्ट्वाप्राकृतास्तत्रवानरावप्रमूर्धनि ॥ २६ ॥ चक्रुःकिलकिलाशब्दंधृतपाषाणपादपाः ॥ तान्दृष्ट्वाक्रोधताम्राक्षोवानराँल्लक्ष्मणस्तदा ॥ २७ ॥

गुणान्वितभिन्नःनिर्गुणइतियावत । अतइतिस्पष्टम् । यथानभआकाशःपवनानीतमलेनालिप्तस्तद्वत् ॥ २३ ॥ नन्वेवंभूतोऽस्माभिर्नगृह्यतेकिंतत्राह । विदंतीति । केचिदेवसनकादयोमुनयोजानंतिश्रुतिवाक्यैर्विन्दंतिलभंते । अपरोक्षतयापिसाक्षात्कुर्वंतीतियावत् । तत्किमन्येनजानंत्येवसर्वथानेत्याह । तद्भक्ताइति । ईदृशाःसम्यक्जानंत्येवेतिभावः ॥ २४ ॥ तत्रहेतुमाह । भक्तेति । जायतेज्ञानविषयोजायतइत्यर्थः ॥ २५ ॥ वप्रंप्राकारः ॥ २६ ॥ किलकिलाशब्दोवानराणांक्रोधभयादिकालिकःशब्दः ॥ २७ ॥

समापत्यगृहाच्चलित्वा ॥ २८ ॥ लक्ष्मणसामीप्यंगत्वाप्राप्य ॥ २९ ॥ प्रियवर्धनःप्रियाणांवृद्धिकरणशीलः ॥ ३० ॥ रौद्रमूर्तिनावालिवधकालिकमूर्तिना ॥
॥ ३१ ॥ लक्ष्मणोबहिःस्थितइतिन्यवेदयदित्यन्वयः ॥ ३२ ॥ लक्ष्मणंतन्निकटम् ॥ ३३ ॥ कोपितंसंजातकोपंसांत्वयन्क्षमावंतंकुर्वन्मंदिरमानयप्रापय
॥ ३४ ॥ मृदुभाषितैःसांत्वयंतीलक्ष्मणंप्रतिगच्छ । ततःशांतकोपंकृत्वाततोंऽतःपुरंनीत्वा । अनेनात्यंतमित्रताप्रदर्शनम् । मेमांदर्शय ॥ ३५ ॥ मध्यकक्षांस्त्री

निर्मूलान्कर्तुमुद्युक्तोधनुरानम्यवीर्यवान् ॥ ततःशीघ्रंसमापत्यज्ञात्वालक्ष्मणमागतम् ॥ २८ ॥ निवार्यवानरान्सर्वानंगदोमंत्रिसत्तमः ॥
गत्वालक्ष्मणसामीप्यंप्रणनामसदंडवत् ॥ २९ ॥ ततोंऽगदंपरिष्वज्यलक्ष्मणःप्रियवर्धनः ॥ उवाचवत्सगच्छत्वंपितृव्यायनिवेदय
॥ ३० ॥ मामागतंराघवेणचोदितंरौद्रमूर्तिना ॥ तथेतित्वरितंगत्वासुग्रीवायन्यवेदयत् ॥ ३१ ॥ लक्ष्मणःक्रोधताम्राक्षःपुरद्वारिबहिः
स्थितः ॥ तच्छ्रुत्वातीवसंत्रस्तःसुग्रीवोवानरेश्वरः ॥ ३२ ॥ आहूयमंत्रिणांश्रेष्ठंहनूमंतमथाऽब्रवीत् ॥ गच्छत्वमंगदेनाशुलक्ष्मणंविनया
न्वितः ॥ ३३ ॥ सांत्वयन्कोपितंवीरंशनैरानयमंदिरम् ॥ प्रेषयित्वाहनूमंतंतारामाहकपीश्वरः ॥ ३४ ॥ त्वंगच्छसांत्वयंतीतंलक्ष्मणं
मृदुभाषितैः ॥ शांतमंतःपुरंनीत्वापश्चाद्दर्शयमेऽनघे ॥ ३५ ॥ भवत्वितिततस्तारामध्यकक्षंसमाविशत् ॥ हनूमानंगदेनैवसहितोल
क्ष्मणांतिकम् ॥ ३६ ॥ गत्वाननामशिरसाभक्त्यास्वागतमब्रवीत् ॥ एहिवीरमहाभागभवद्गृहमशंकितम् ॥ ३७ ॥ प्रविश्यराजदारादी
न्दृष्ट्वासुग्रीवमेवच ॥ यदाज्ञापयसेपश्चात्तत्सर्वंकरवाणिभोः ॥ ३८ ॥ इत्युक्त्वालक्ष्मणंभक्त्याकरेगृह्यसमारुतिः ॥ आनयामासनग
रमध्याद्राजगृहंप्रति ॥३९॥ पश्यंस्तत्रमहासौधान्यूथपानांसमंततः ॥ जगामभवनंराज्ञःसुरेंद्रभवनोपमम् ॥ ४० ॥ मध्यकक्षेगतातत्रता
राताराधिपानना ॥ सर्वाभरणसंपन्नामदरक्तांतलोचना ॥ ४१ ॥ उवाचलक्ष्मणंनत्वास्मितपूर्वाभिभाषिणी ॥ याहिदेवरभद्रंतेसाधु
स्त्वंभक्तवत्सलः ॥ ४२ ॥

णांसंचारमर्यादास्थलम् ॥ ३६ ॥ अशंकितमेहियतइदंभवद्गृहम् ॥ ३७ ॥ राजदारादीन्दृष्ट्वेत्यनेनसेवकदारदर्शनेयथाराज्ञोनसंकोचस्तथाऽस्मद्राजदारदर्शने
तवसंकोचोनोचितइतिभावः ॥ ३८ ॥ गृह्येत्यार्षम् ॥ ३९ ॥ यूथपानांमहासौधान्गृहानित्यर्थः ॥ ४० ॥ ताराधिपाननाचंद्रमुखी ॥ ४१ ॥ आदौस्वस्य
सेवकत्वाल्लक्ष्मणस्यभगवदवतारत्वाच्चनत्वापश्चान्मित्रभावेनदेवरेत्युक्तिः । त्वंसाधुर्भक्तवत्सलोऽतोभक्तेष्वीदृशःकोपोऽनुचितइतिभावः ॥ ४२ ॥

आकार्षीः अतिशयेनकृतवान् । अनाश्वासंनिरंतरमित्यर्थः ॥ ४३ ॥ बहुदुःखौघात्वालितःप्राप्यमाणात् ॥ ४४ ॥ यतःप्राप्तसौख्योऽतःकामासक्तोऽपिसेवार्थं
नागतइतिनअपित्वागतएव । काकुरत्र । कथमागतस्तत्राह । आगमिष्यंतीति ॥ ४५ ॥ एवंचैवमुद्यमकरणात्सेवांकृतवानेवेतिभावः ॥ ४६ ॥ ४७ ॥
रामभ्रातृत्वात्त्वयैवसहितोवानरपुंगवोऽद्यैवगंता । रामसमीपमितिशेषः । अंतर्भवनस्यमध्ये ॥ ४८ ॥ तेसहैवनय । स्वेनैवसहनयेत्यर्थः । तारावचनेनातिमधुरेण

किमर्थंकोपमाकार्षीर्भक्तेभृत्येकपीश्वरे ॥ बहुकालमनाश्वासंदुःखमेवानुभूतवान् ॥ ४३ ॥ इदानींबहुदुःखौघाद्भवद्भिरभिरक्षितः ॥ भव
त्प्रसादात्सुग्रीवःप्राप्तसौख्योमहामतिः ॥४४॥ कामासक्तोरघुपतेःसेवार्थंनागतोहरिः ॥ आगमिष्यंतिहरयोनानादेशगताःप्रभो ॥ ४५ ॥
प्रेषितादशसाहस्राहरयोरघुसत्तम ॥ आनेतुंवानरान्दिग्भ्योमहापर्वतसन्निभान् ॥ ४६ ॥ सुग्रीवःस्वयमागत्यसर्ववानरयूथपैः ॥ वधयि
ष्यतिदैत्यौघात्रावणंचहनिष्यति ॥४७॥ त्वयैवसहितोऽद्यैवगंतावानरपुंगवः ॥ पश्यांतर्भवनंतत्रपुत्रदारसुहृद्वृतम् ॥ ४८ ॥ दृष्ट्वासुग्रीव
मभयंदत्त्वानयसहैवते ॥ तारायावचनंश्रुत्वाकृशक्रोधोऽथलक्ष्मणः ॥ ४९ ॥ जगामांतःपुरंयत्रसुग्रीवोवानरेश्वरः ॥ रुमामालिंग्यसुग्रीवः
पर्यंकेपर्यवस्थितः ॥ ५० ॥ दृष्ट्वालक्ष्मणमत्यर्थमुत्पपातातिभीतवत् ॥ तंदृष्ट्वालक्ष्मणःक्रुद्धोमदविह्वलितेक्षणम् ॥ ५१ ॥ सुग्रीवंप्राहदु
र्वृत्तविस्मृतोऽसिरघूत्तमम् ॥ वालीयेनहतोवीरःसबाणोद्यप्रतीक्षते ॥ ५२ ॥ त्वमेववालिनोमार्गंगमिष्यसिमयाहतः ॥ एवमत्यंतपरुषंवदं
तंलक्ष्मणंतदा ॥ ५३ ॥ उवाचहनुमान्वीरःकथमेवंप्रभाषसे ॥ त्वत्तोऽधिकतरोरामेभक्तोयंवानराधिपः ॥ ५४ ॥ रामकार्यार्थमनिशंजाग
र्तिनतुविस्मृतः ॥ आगताःपरितःपश्यवानराःकोटिशःप्रभो ॥ ५५ ॥ गमिष्यंत्यचिरेणैवसीतायाःपरिमार्गणम् ॥ साधयिष्यतिसुग्रीवो
रामकार्यमशेषतः ॥ ५६ ॥ श्रुत्वाहनूमतोवाक्यंसौमित्रिर्लज्जितोऽभवत् ॥ सुग्रीवोऽप्यर्घ्यपाद्याद्यैर्लक्ष्मणंसंप्रपूजयत् ॥ ५७ ॥

ललितेनकृशक्रोधः ॥ ४९ ॥ यत्रसुग्रीवःस्थितस्तदंतःपुरंजगाम ॥ ५० ॥ अत्यर्थमतिशयेनातिभीतवदुत्पपात । पर्यंकादितिशेषः । मदविह्वलितेक्षणंमदवि
कलनेत्रम् ॥ ५१ ॥ प्रतीक्षतेत्वांहंतुमितिशेषः ॥ ५२ ॥ ५३ ॥ ५४ ॥ जागर्तिउद्यमवान्भवति । अस्मिन्नेवसमयेआकारणार्थंगतावानराःसेनांकर्षंतआ
गताइत्याह । आगताइति ॥ ५५ ॥ परिमार्गणंकर्तुमितिशेषः ॥ ५६ ॥ ५७ ॥

॥ ५८ ॥ यत्किंचिन्मयोदितंतत्क्षमस्वेत्यन्वयः ॥ ५९ ॥ प्रणयात्प्रणयकोपात् ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ इतिश्रीमत्सकल० सेतोकिष्किं

आलिंग्यप्राहरामस्यदासोऽहंतेनरक्षितः ॥ रामःस्वतेजसालोकान्क्षणार्धेनैवजेष्याति ॥५८॥ सहायमात्रमेवाहंवानरैःसहितः प्रभो ॥ सौमित्रिरपिसुग्रीवंप्राहर्किंचिन्मयोदितम् ॥ ५९ ॥ तत्क्षमस्वमहाभागप्रणयाद्भाषितंमया ॥ गच्छामोऽद्यैवसुग्रीवरामस्तिष्ठतिकानने ॥ ६० ॥ एकएवातिदुःखार्तोजानकीविरहात्प्रभुः ॥ तथेतिरथमारुह्यलक्ष्मणेनसमन्वितः ॥ ६१ ॥ वानरैःसहितोराजाराममेवान्वपद्यत ॥६२॥ भेरीमृदंगैर्बहुऋक्षवानरैःश्वेतातपत्रैर्व्यजनैश्वशोभितः ॥ नीलांगदाद्यैर्हनुमत्प्रधानैःसमावृतोराघवमभ्यगाद्धरिः ॥६३॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेकिष्किंधाकांडेपंचमःसर्गः ॥ ५ ॥ ॥ दृष्ट्वारामंसमासीनंगुहाद्वारिशिलातले ॥ चैलाजिनधरंश्यामंजटामौलिविराजितम् ॥१॥ विशालनयनंशांतंस्मितचारुमुखांबुजम् ॥ सीताविरहसंतप्तंपश्यंतंमृगपक्षिणः ॥ २ ॥ रथाद्दूरात्समुत्पत्यवेगात्सुग्रीवलक्ष्मणौ ॥ रामस्यपादयोरग्रेपेततुर्भक्तिसंयुतौ ॥ ३ ॥ रामःसुग्रीवमालिंग्यपृष्ट्वानामयमंतिके ॥ स्थापयित्वायथान्यायंपूजयामासधर्मवित् ॥ ४ ॥ ततोऽब्रवीद्रघुश्रेष्ठंसुग्रीवोभक्तिनम्रधीः ॥ देवपश्यसमायांतींवानराणांमहाचमूम् ॥ ५ ॥ कुलाचलाद्रिसंभूतामेरुमंदरसन्निभाः ॥ नानाद्वीपसरिच्छैलवासिनःपर्वतोपमाः ॥ ६ ॥ असंख्याताःसमायांतिहरयःकामरूपिणः ॥ सर्वेदेवांशसंभूताःसर्वेयुद्धविशारदाः ॥ ७ ॥ अत्रकेचिद्गजबलाःकेचिद्दशगजोपमाः ॥ गजायुतबलाःकेचिदन्येऽमितबलाःप्रभो ॥ ८ ॥ केचिदंजनकूटाभाःकेचित्कनकसन्निभाः ॥ केचिद्रक्तांतवदनादीर्घवालास्तथापरे ॥ ९ ॥ शुद्धस्फटिकसंकाशाःकेचिद्राक्षससन्निभाः ॥ गर्जंतःपरितोयांतिवानरायुद्धकांक्षिणः ॥ १० ॥

धाकांडेपंचमःसर्गः ॥ ५ ॥ ॥ ॥ दृष्ट्वेति । चैलंचजीर्णवासोऽजिनंच ॥ १ ॥ स्मितेनचारुसुंदरंमुखांबुजंयस्यतम् ॥ २ ॥ ३ ॥ अनामयमारोग्यंअंतिकेस्वसमीपे ॥ ४ ॥ ५ ॥ कुलाचलाहिमालयादयः सप्तपर्वताः ॥ ६ ॥ ७ ॥ अमितबलाइतिच्छेदः ॥ ८ ॥ ९ ॥ १० ॥

---

१ वानरः अर्थात् सुग्रीवः ।

॥ ११ ॥ कोटिभल्लूकवृंदपःकोटीतिवृंदविशेषणम् ॥१२॥१३॥१४॥१५॥ प्रत्येकतः । सार्वविभक्तिकस्तसिः । एकैकइत्यर्थः ॥१६॥१७॥१८॥१९॥
कार्यगौरवंजानासि अतोयस्यांदिशियेयोग्यास्तांस्तत्रनियुंक्ष्वेत्यर्थः ॥ २० ॥ २१ ॥ २२ ॥ अत्यर्थमतिशयेनमहाबलान्ज्ञात्वाप्रयत्नेनतानेवप्रेषयामासेत्य

त्वदाज्ञाकारिणःसर्वेफलमूलाशनाःप्रभो ॥ ऋक्षाणामधिपोवीरोजांबवान्नामबुद्धिमान् ॥ ११ ॥ एषमेमंत्रिणांश्रेष्ठःकोटिभल्लूकवृं
दपः ॥ हनूमानेषविख्यातोमहासत्वपराक्रमः ॥ १२ ॥ वायुपुत्रोऽतितेजस्वीमंत्रीबुद्धिमतांवरः ॥ नलोनीलश्चगवयोगवाक्षोगंधमा
दनः ॥१३॥ शरभोमैंदवश्चैवगजःपनसएवच ॥ वलीमुखोदधिमुखःसुषेणस्तारएवच ॥ १४ ॥ केसरीचमहासत्त्वःपिताहनुमतोबली ॥
एतेमेयूथपारामप्राधान्येनमयोदिताः ॥१५॥ महात्मानोमहावीर्याःशक्रतुल्यपराक्रमाः ॥ एतेप्रत्येकतःकोटिकोटिवानरयूथपाः ॥१६॥
तवाज्ञाकारिणःसर्वेसर्वेदेवांशसंभवाः ॥ एषवालिसुतःश्रीमानंगदोनामविश्रुतः ॥ १७ ॥ वालितुल्यबलोवीरोराक्षसानांबलांतकः ॥
एतेचान्येचबहवस्त्वदर्थेत्यक्तजीविताः ॥ १८ ॥ योद्धारःपर्वताग्रैश्चनिपुणाःशत्रुघातने ॥ आज्ञापयरघुश्रेष्ठसर्वेतेवशवर्तिनः ॥ १९ ॥
रामःसुग्रीवमालिंग्यहर्षपूर्णाश्रुलोचनः ॥ प्राहसुग्रीवजानासिसर्वंत्वंकार्यगौरवम् ॥ २० ॥ मार्गणार्थंहिजानक्यानियुंक्ष्वयदिरोचते ॥
श्रुत्वारामस्यवचनंसुग्रीवःप्रीतमानसः ॥२१॥ प्रेषयामासबलिनोवानरान्वानरर्षभः ॥ दिक्षुसर्वासुविविधान्वानरान्प्रेष्यसत्वरम् ॥२२॥
दक्षिणांदिशमत्यर्थंप्रयत्नेनमहाबलान् ॥ युवराजंजांबवंतंहनूमंतंमहाबलम् ॥ २३ ॥ नलंसुषेणंशरभंमैंदंद्विविदमेवच ॥ प्रेषयामाससुग्री
वोवचनंचेदमब्रवीत् ॥ २४ ॥ विचिन्वंतुप्रयत्नेनभवंतोजानकींशुभाम् ॥ मासादर्वाङ्निवर्तध्वंमच्छासनपुरःसराः ॥ २५ ॥ सीतामदृष्ट्वा
यदिवोमासादूर्ध्वंदिनंभवेत् ॥ तदाप्राणांतिकंदंडंमत्तःप्राप्स्यथवानराः ॥ २६ ॥ इतिप्रस्थाप्यसुग्रीवोवानरान्भीमविक्रमान् ॥ रामस्य
पार्श्वेश्रीरामंनत्वाचोपविवेशसः ॥ २७ ॥

न्वयः । तानेवाह । युवराजमिति ॥ २३ ॥ २४ ॥ मच्छासनपुरःसराःमच्छासनंपुरःसरमग्रेयेषांतादृशाः । अनेनमच्छासनंनविस्मर्तव्यमितिसूचितम् ॥२५॥
प्राणांतिकंप्राणांतसंबंधिनं तत्संपादकमितियावत् । अध्यात्मादित्वाट्ठञ् ॥ २६ ॥ श्रीरामंनत्वावतपार्श्वेउपविवेशेत्यन्वयः ॥ २७ ॥

मेममांगुलीयकं गृहाणेतिशेषः । हिःपादपूरणे ॥ २८ ॥ ननुअंगदादीन्विहायमह्यमेवकिमर्थंदीयते तत्राह । अस्मिन्निति । सत्त्वंबलंबुद्धिंच ॥ २९ ॥ परिमा र्गणेतन्निमित्तमित्यर्थः ॥ ३० ॥ ३१ ॥ किलकिलाशब्दंमुंचंतो मुष्टिभिःक्षणाज्जघ्नुः । राक्षसमितिशेषः ॥ ३२ ॥ नायमितिसुकरवधत्वादितिभावः ॥ ३३ ॥ शुष्कंकंठोष्ठतालुकंयेषांते ॥ ३४ ॥ ततःगह्वरात ॥ ३५ ॥ उत्सुकाजलविषयोत्कंठावंतइत्यर्थः । परस्परंबाहुभिर्बाहून्धृत्वासर्वेहनूमंतमन्वयुः । अत्यंधकारादे

गच्छंतंमारुतिंदृष्ट्वारामोवचनमब्रवीत् ॥ अभिज्ञानार्थमेतन्मेह्यंगुलीयकमुत्तमम् ॥ २८ ॥ मन्नामाक्षरसंयुक्तंसीतायैदीयतांरहः ॥ अस्मि न्कार्येप्रमाणंहित्वमेवकपिसत्तम ॥ जानामिसत्त्वंतेसर्वंगच्छपंथाःशुभस्तव ॥ २९ ॥ एवंकपीनांराज्ञातेविसृष्टाःपरिमार्गणे ॥ सीतायाअं गदमुखावभ्रमुस्तत्रतत्रह ॥ ३० ॥ भ्रमंतोविंध्यगहनेददृशुःपर्वतोपमम् ॥ राक्षसंभीषणाकारंभक्षयंतंमृगान्गजान् ॥ ३१ ॥ रावणोऽयामि तिज्ञात्वाकेचिद्वानरपुंगवाः ॥ जघ्नुःकिलकिलाशब्दंमुंचंतोमुष्टिभिःक्षणात् ॥ ३२ ॥ नायंरावणइत्युक्त्वाययुरन्यन्महद्वनम् ॥ तृषार्ताः सलिलंतत्रनाविंदन्हरिपुंगवाः ॥ ३३ ॥ विभ्रमंतोमहारण्येशुष्ककंठोष्ठतालुकाः ॥ ददृशुर्गह्वरंतत्रतृणगुल्मावृतंमहत् ॥ ३४ ॥ आर्द्र पक्षान्क्रौंचहंसान्निःसृतान्ददृशुस्ततः ॥ अत्रास्तेसलिलंनूनंप्रविशामोमहागुहाम् ॥ ३५ ॥ इत्युक्त्वाहनुमानग्रेप्रविवेशतमन्वयुः ॥ सर्वेपर स्परंधृत्वाबाहून्बाहुभिरुत्सुकाः ॥ ३६ ॥ अंधकारेमहद्दूरंगत्वाऽपश्यन्कपीश्वराः ॥ जलाशयान्मणिनिभतोयान्कल्पद्रुमोपमान् ॥ ३७ ॥ वृक्षान्पक्वफलैर्नम्रान्मधुद्रोणसमन्वितान् ॥ गृहान्सर्वगुणोपेतान्मणिवस्त्रादिपूरितान् ॥ ३८ ॥ दिव्यभक्ष्यान्नसहितान्मनुष्यैःपरिवर्जिता न् ॥ विस्मितास्तत्रभवनेदिव्येकनकविष्टरे ॥ ३९ ॥ प्रभयादीप्यमानांतुददृशुःस्त्रियमेकलाम् ॥ ध्यायंतींचीरवसनांयोगिनींयोगमास्थि ताम् ॥ ४० ॥ प्रणेमुस्तांमहाभागांभक्त्याभीत्याचवानराः ॥ दृष्ट्वातान्वानरान्देवीप्राहयूयंकिमागताः ॥ ४१ ॥ कुतोवाकस्यदूतावाम त्स्थानंकिंप्रधर्षथ ॥ तच्छ्रुत्वाहनुमानाहशृणुवक्ष्यामिदेविते ॥ ४२ ॥

वंकरणम् ॥ ३६ ॥ महद्दूरंबहुदूरमित्यर्थः । मणिनिभतोयान्मणितुल्यानिर्मलजलान् । कल्पद्रुमोपमानितिउत्तरान्वयि ॥ ३७ ॥ मधुद्रोणसमन्वितान्द्रोण परिमितमधुयुतान् गृहान्गृहाणि । अर्घर्चादिः ॥ ३८ ॥ अतएवविस्मितालब्धाश्चर्याः ॥ ३९ ॥ योगमास्थितांचित्तवृत्तिनिरोधजसिद्धिंप्राप्ताम् ॥ ४० ॥ भक्तिर्भीतिर्योगिनीविषये किंकिमर्थमागताः ॥ ४१ ॥ कुतआगताइतिशेषः । मत्स्थानंकिंप्रधर्षथकिमितिबलात्प्रविष्टाः ॥ ४२ ॥

॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ तथादृष्ट्वाक्षुत्तृड्युतान्दृष्ट्वा ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ प्रददौहेमायैइतिशेषः ॥ ५२ ॥ दिव्यगंधर्वो
दिव्याख्योगंधर्वस्तस्यकन्या ॥ ५३ ॥ साहेमा ॥ ५४ ॥ ५५ ॥ तान्वानरान् रामंगत्वातत्समीपंगत्वास्तुत्वार्थाद्रामेव ॥ ५६ ॥ यातासि । लुटि







अयोध्याधिपतिःश्रीमान्राजादशरथःप्रभुः ॥ तस्यपुत्रोमहाभागोज्येष्ठोरामइतिश्रुतः ॥ ४३ ॥ पितुराज्ञांपुरस्कृत्यसभार्यःसानुजोवन
म् ॥ गतस्तत्रहृताभार्यातस्यसाध्वीदुरात्मना ॥ ४४ ॥ रावणेनततोरामःसुग्रीवंसानुजोययौ ॥ सुग्रीवोमित्रभावेनरामस्याप्रियवल्लभा
म् ॥ ४५ ॥ मृगयध्वामितिप्राहततोवयमुपागताः ॥ ततोवनंविचिन्वंतोजानकींजलकांक्षिणः ॥ ४६ ॥ प्रविष्टागह्वरंघोरंदैवादत्रसमा
गताः ॥ त्वंवाकिमर्थमत्रासिकावात्वंवदनःशुभे ॥ ४७ ॥ योगिनीचतथादृष्ट्वावानरान्प्राहहृष्टधीः ॥ यथेष्टंफलमूलानिजग्ध्वापीत्वामृ
तंपयः ॥ ४८ ॥ आगच्छतततोवक्ष्येममवृत्तांतमादितः ॥ तथेतिभुक्त्वापीत्वाचहृष्टास्तेसर्ववानराः ॥ ४९ ॥ देव्याःसमीपंगत्वातेब
द्धांजलिपुटाःस्थिताः ॥ ततःप्राहहनूमंतंयोगिनीदिव्यदर्शना ॥ ५० ॥ हेमानामपुरादिव्यरूपिणीविश्वकर्मणः ॥ पुत्रीमहेशंनृत्येनतो
षयामासभामिनी ॥ ५१ ॥ तुष्टोमहेशःप्रददाविदंदिव्यपुरंमहत् ॥ अत्रस्थितासासुदतीवर्षाणामयुतायुतम् ॥ ५२ ॥ तस्याअहंसखी
विष्णुतत्परामोक्षकांक्षिणी ॥ नाम्नास्वयंप्रभादिव्यगंधर्वतनयापुरा ॥ ५३ ॥ गच्छंतीब्रह्मलोकंसामामाहेदंतपश्चर ॥ अत्रैवनिवसंती
त्वंसर्वप्राणिविवर्जिते ॥ ५४ ॥ त्रेतायुगेदाशरथिर्भूत्वानारायणोऽव्ययः ॥ भूभारहरणार्थायविचरिष्यतिकानने ॥ ५५ ॥ मार्गंतोवान
रास्तस्यभार्यामायांतितेगुहाम् ॥ पूजयित्वाथतान्मत्वारामंस्तुत्वाप्रयत्नतः॥५६॥ यातासिभवनंविष्णोर्योगिगम्यंसनातनम् ॥ इतोऽहंगं
तुमिच्छामिरामंद्रष्टुंत्वरान्विता ॥ ५७ ॥ यूयंपिदध्वमक्षीणि गमिष्यथबहिर्गुहाम् ॥ तथैवचक्रुस्तेवेगाद्गताःपूर्वस्थितंवनम् ॥ ५८ ॥ सापि
त्यक्त्वागुहांशीघ्रंययौराघवसन्निधिम् ॥ तत्ररामंससुग्रीवंलक्ष्मणंचददर्शह ॥५९॥ कृत्वाप्रदक्षिणंरामंप्रणम्यबहुशःसुधीः ॥ आहगद्गदया
वाचारोमांचिततनूरुहा ॥ ६० ॥

रूपम् । इतःपूर्वोक्तहेमानियोगात्अस्माद्देशाच्च ॥ ५७ ॥ वेगात्वेगादिवक्षणेनैवेत्यर्थः । पूर्वस्थितंवनंगताः ॥ ५८ ॥ ५९ ॥ रोमांचिततनूरुहाजात
रोमांचतनूरुहा ॥ ६० ॥

॥ ६१ ॥ मायायाःपरतःस्थितंतदनधीनम् ॥ ६२ ॥ विवर्तोपादानवयांतर्यामितयाचसर्वभूतानांबहिरंतरवस्थितमपितैरलक्ष्यम् । जवनिकानटानांवेषग्रहण
स्थानावरणंपटनिर्मितम् । नटाश्चतत्रप्रविष्टास्तयाच्छन्नाभवंतितद्वद्योगमाययात्वंछन्नोगुप्तःकृतःसन् ॥ ६३ ॥ अज्ञानदृशांतैरित्यर्थः । नलक्ष्यसे रूपधृ
कृतत्तद्रामादिरूपधृक्शैलूषोनटइव सयदारामादिवेषंकृत्वारामाद्यनुकरणंकरोतितदारामइत्येवगृह्यतेनतुपूर्वदृष्टोऽपितद्रूपेणतद्वत् ॥ ६४ ॥ भागवतानांभग
वद्भक्तीच्छावताम् । एवंभूतेरूपेभक्तिरूपोयोगस्तद्वांछयात्वमवतीर्णोऽसि । तादृशंत्वांस्त्रीशरीरत्वात्तामसीअहंकथंजानामि । अथयोग्यतासत्त्वेऽपितज्ज्ञाना
पेक्षामेनास्तीत्याह । लोकेइति । तवतत्त्वंचिदानंदादिरूपम् ॥ ६५ ॥ स्वापेक्ष्यमर्थमाह । ममैतदिति । मोक्षदर्शनंमोक्षोपायदर्शकंपादयुगलंतेत्वयादर्शित

दासीतवाहंराजेंद्रदर्शनार्थमिहागता ॥ बहुवर्षसहस्राणितप्तंमेदुश्चरंतपः ॥६१॥ गुहायांदर्शनार्थंतेफलितंमेऽद्यतत्तपः ॥ अद्यहित्वांनमस्या
मिमायायाःपरतःस्थितम् ॥ ६२ ॥ सर्वभूतेषुचालक्ष्यंबहिरंतरवस्थितम् ॥ योगमायाजवनिकाच्छन्नोमानुषविग्रहः ॥ ६३ ॥ नलक्ष्यसेऽ
ज्ञानदृशांशैलूषइवरूपधृक् ॥ महाभागवतानांत्वंभक्तियोगविधित्सया ॥ ६४ ॥ अवतीर्णोऽसिभगवन्कथंजानामितामसी ॥ लोकेजाना
तुयःकश्चित्तवतत्त्वंरघूत्तम ॥ ६५ ॥ ममैतदेवरूपंतेसदाभातुहृदालये ॥ रामतेपादयुगलंदर्शितंमोक्षदर्शनम् ॥ ६६ ॥ अदर्शनंभवार्णानां
सन्मार्गपरिदर्शनम् ॥ धनपुत्रकलत्रादिविभूतिपरिदर्पितः ॥ अकिंचनधनंत्वाद्यनाभिधातुंजनोऽर्हति ॥ ६७ ॥ निवृत्तगुणमार्गायनिष्किंच
नधनायते ॥ ६८ ॥ नमःस्वात्माभिरामायनिर्गुणायगुणात्मने ॥ कालरूपिणमीशानमादिमध्यांतवर्जितम् ॥ ६९ ॥

मतोऽन्याकांक्षामेनास्तीत्यर्थः ॥ ६६ ॥ तदेवविशिनष्टि । अदर्शनमिति । भवार्णानां भवार्णवानामित्यर्थः । वर्णलोपआर्षः । सन्मार्गस्तत्त्वज्ञानोपायः ।
धनादिगर्वगर्वितोजनः अकिंचनानांत्यक्तसर्वविषयाणांधनभूतंदरिद्रस्यधनमिवेच्छाविषयंत्वामभिधातुंवार्तालापंकर्तुंचनार्हतितथापिस्त्वौमीतिशेषः ॥ ६७ ॥
निवृत्तोगुणमार्गःप्रवृत्तिमार्गरूपःसंसारःस्वतएवयस्मात्तस्मै ॥ ६८ ॥ स्वात्मन्येवचिदानंदरूपेऽभिरमतेतस्मै अतएवनिर्गुणाय गुणानांविषयाणामपिविवर्तोपा
दानत्वात्तदात्मने कालरूपिणंतेनसर्वसंहर्तृत्वम् ईशानत्वेनजगत्स्रष्टृत्वतत्पालकत्वेउक्ते सर्वस्रष्टृत्वादेवतस्यादिमध्यांतवर्जितत्वम् । मध्यस्याद्यंतसापेक्षत्वात्त
स्याप्यभावः ॥ ६९ ॥

समंचरंतमंतर्यामितयेत्यर्थः । नृविडंबनंमनुष्यव्यवहारानुकरणरूपमनुकरणमेतदितिकश्चिन्नवेद ॥ ७० ॥ समत्वादेवाह । नतेइत्यादि । परोभिन्नःसर्वरूपत्वात्तवेतिभावः । यद्वा । दयितद्वेष्याभ्यांपरउदासीनः तथाविधंशत्रुमितोदासीनवंतम् । यथारावणःशत्रुर्विभीषणोमित्रमन्येउदासीनाइति ॥ ७१ ॥ अजस्य सर्वकारणत्वात्स्वकारणहीनस्य । अकर्तुःकर्तृत्वादिधर्महीनस्य । अपरिणामित्वादितिभावः । ईशस्यसन्निधानमात्रेणसर्वनियंतुः तिर्यङ्नरादिषुतिर्यंचोमत्स्यादयस्तेषुमनुष्येषुचयज्जन्मकर्मादितदत्यंतविडंबनमनुकरणंतत्तज्जातीरीतिशेषः । नतुवास्तवमितिभावः ॥ ७२ ॥ तत्रप्रकृतावतारप्रयोजनमाह । त्वामिति । अक्षरमपिलोकानांस्वकथाश्रवणजसिद्धिप्राप्तयेजातमाहुः । केचित्कोसलराजस्य ॥ ७३ ॥ ७४ ॥ ब्रह्मणाप्रार्थितोनररूपेणजातइत्यन्वयः । आद्यप्रयोजनस्यैवमुख्य

समंचरंतंसर्वत्रमन्येत्वांपुरुषंपरम् ॥ देवतेचेष्टितंकश्चिन्नवेदनृविडंबनम् ॥ ७० ॥ नतेऽस्तिकश्चिद्दयितोद्वेष्योवापरएवच ॥ त्वन्मायापिहितात्मानस्त्वांपश्यंतितथाविधम् ॥ ७१ ॥ अजस्याकर्तुरीशस्यदेवातिर्यङ्नरादिषु ॥ जन्मकर्मादिकंयद्यत्तदत्यंतविडंबनम् ॥ ७२ ॥ त्वामाहुरक्षरंजातंकथाश्रवणसिद्धये ॥ केचित्कोसलराजस्यतपसःफलसिद्धये ॥ ७३ ॥ कौसल्ययाप्रार्थ्यमानंजातमाहुःपरेजनाः ॥ दुष्टराक्षसभूभारहरणायार्थितोविभुः ॥ ७४ ॥ ब्रह्मणानररूपेणजातोऽयमितिकेचन ॥ शृण्वंतिगायंतिचयेकथास्तेरघुनंदन ॥ ७५ ॥ पश्यंतितवपादाब्जंभवार्णवसुतारणम् ॥ त्वन्मायागुणबद्धाहंव्यतिरिक्तंगुणाश्रयम् ॥ ७६ ॥ कथंत्वांदेवजानीयांस्तोतुंवाऽविषयंविभुम् ॥ नमस्यामिरघुश्रेष्ठंबाणासनशरान्वितम् ॥ लक्ष्मणेनसहभ्रात्रासुग्रीवादिभिरन्वितम् ॥ ७७ ॥ एवंस्तुतोरघुश्रेष्ठःप्रसन्नःप्रणताघहृत् ॥ उवाचयोगिनींभक्त्यांकिंतेमनासिकांक्षितम् ॥ ७८ ॥

त्वंप्रतिपादयितुंतच्छ्रवणादिजांसिद्धिमाह । शृण्वंतीत्यादिना ॥ ७५ ॥ पश्यंतीति । तेत्वत्पादाब्जंपश्यंतीत्यन्वयः । त्वत्पादाब्जदर्शनमेवत्वच्छ्रवणजामुख्यासिद्धिरित्यर्थः । त्वत्पादाब्जशब्देनमुख्यंचिदानंदात्मकंत्वत्स्वरूपमेवविवक्षितमित्याह । त्वन्मायेति । त्वन्मायागुणैःसत्त्वरजस्तमोभिर्बद्धायेऽहमःअहंकारविशिष्टास्तेभ्योव्यतिरिक्तंतद्दोषास्पृष्टम् । गुणानामाश्रयंप्रवर्त्तकंयद्रूपंतद्दर्शनमेवतज्जन्यासिद्धिरित्यर्थः ॥ ७६ ॥ अविषयंवाङ्मनोऽविषयंत्वांस्तोतुंचकथंजानीयांप्रवृत्ताभवेयम् । तज्ज्ञानंदुर्लभमेव स्तोतुमपिनसामर्थ्यमितिभावः । एवंचस्तुतेरशक्यत्वात्केवलंप्रणाममेवकरोमीत्याह । नमस्यामीति ॥ ७७ ॥ प्रसन्नःसन्प्रणतानामघस्यपापस्यहर्ता ॥ ७८ ॥

निश्चलांभक्तिंदेहीत्यन्वयः ॥ ७९ ॥ प्राकृतेषुत्वद्भक्तिहीनेषु संसारसक्तेष्वितियावत् ॥ ८० ॥ मेमानसंवक्ष्यमाणगुणविशिष्टरूपंस्मरतु । पीतवाससंभांतमिति
पुंस्त्वमार्षम् ॥ ८१ ॥ ८२ ॥ बदरीवनंबदरिकाश्रमम् । इदंभूतपंचकंभूतपंचकात्मकमिदंदेहमित्यर्थः ॥ ८३ ॥ परमात्मानंमांप्रतिपद्यसे । वर्तमानसामीप्ये
लट् । अनेनस्वसायुज्यरूपामुक्तिस्वपःपूर्वकंतत्रदेहत्यागेनदर्शिता । तरुखंडंतरुसमूहः ॥ ८४ ॥ इतिश्रीमत्सकलराजवि० सैतौकिष्किंधाकांडेषष्ठःसर्गः॥ ६ ॥

साप्राहराघवंभक्त्याभक्तिंतेभक्तवत्सल ॥ यत्रकुत्रापिजातायानिश्चलांदेहिमेप्रभो ॥ ७९ ॥ त्वद्भक्तेषुसदासंगोभूयान्मेप्राकृतेषुन ॥ जि
ह्वामेरामरामेतिभक्त्यावदतुसर्वदा ॥ ८० ॥ मानसंश्यामलंरूपंसीतालक्ष्मणसंयुतम् ॥ धनुर्बाणधरंपीतवाससंमुकुटोज्वलम् ॥ ८१ ॥
अंगदैर्नूपुरैर्मुक्ताहारैःकौस्तुभकुंडलैः ॥ भांतंस्मरतुमेरामवरंनान्यंवृणेप्रभो ॥ ८२ ॥ ॥ श्रीरामउवाच ॥ ॥ भवत्वेवंमहाभागेग
च्छत्वंबदरीवनम् ॥ तत्रैवमांस्मरंतीत्वंत्यक्त्वेदंभूतपंचकम् ॥ मामेवपरमात्मानमचिरात्प्रतिपद्यसे ॥ ८३ ॥ श्रुत्वारघूत्तमवचोऽमृतसा
रकल्पंगत्वातदैवबदरीतरुखण्डजुष्टम् ॥ तीर्थंतदारघुपतिंमनसास्मरंतीत्यक्त्वाकलेवरमवापपरंपदंसा ॥ ८४ ॥ ॥ इतिश्रीमदध्या
त्मरामायणेउमामहेश्वरसंवादेकिष्किधाकांडेषष्ठःसर्गः ॥ ६ ॥ अथतत्रसमासीनावृक्षखंडेषुवानराः ॥ चिंतयंतोविमुह्यंतःसीतामार्गणक
र्शिताः ॥ १ ॥ तत्रोवाचांगदःकांश्चिद्वानरान्वानरर्षभः ॥ भ्रमतांगह्वरेस्माकंमासोनूनंगतोऽभवत् ॥ २ ॥ सीतानाधिगतास्माभिर्नकृतं
राजशासनम् ॥ यदिगच्छामकिष्किधांसुग्रीवोऽस्मान्हनिष्यति ॥ ३ ॥ विशेषतःशत्रुसुतंमांमिषान्निहनिष्यति ॥ मयितस्यकुतःप्रीतिर
हंरामेणरक्षितः ॥ ४ ॥ इदानींरामकार्यंमेनकृतंतन्मिषंभवेत् ॥ तस्यमद्धननेनूनंसुग्रीवस्यदुरात्मनः ॥ ५ ॥

अथतत्रेति । विमुह्यंतः । सीतालाभाभावादितिशेषः । सीतामार्गणेनतत्रप्राप्तक्लेशेनकर्शिताःकृशत्वंप्राप्ताः ॥ १ ॥ मासोगतःसुग्रीवाज्ञप्तकालादधिककालोगतइ
त्यर्थः ॥ २ ॥ राजशासनंमासांतःसीतान्वेषणरूपम् ॥ ३ ॥ मिषात्रामकार्याकरणरूपात् ॥ ४ ॥ तदेवाह । इदानीमिति ॥ ५ ॥

नन्वेवमकृत्यंत्वद्वधरूपंसुग्रीवःकथंकुर्यात्तत्राह । मातृकल्पामिति । ज्येष्ठभ्रातृपत्नीत्वात्तस्यकार्यविचारोनेतिभावः । एषोक्तिर्बालभावेन मृतेभर्तरित्रैव र्णिकव्यतिरिक्तस्त्रियाअन्योपगमस्यादूषणात् ॥ ६ ॥ येनकेनापिउद्वंधनादिप्रकारेण ॥ ७ ॥ ८ ॥ वयंतेप्राणरक्षकाभवामः । तदुपायमाहुः । अत्रगुहायांव सामइति ॥ ९ ॥ शनैःपरस्परमेवंवदतांवाक्यंश्रुत्वाइत्यन्वयः ॥ १० ॥ किमर्थंविचार्यते । सुग्रीवतोवधादिकमितिशेषः । अयमितरवानरोक्तोदुर्विचारोगु हावासरूपस्तुसर्वथानयुज्यते ॥ ११ ॥ वत्रसुग्रीवत्तोभयंवारयति । राज्ञइति । तारापुत्रइत्यनेनतारायामतिप्रीतेस्त्वयि नतथाव्यवहारसंभावनापीतिभावः ।

मातृकल्पांभ्रातृभार्यांपापात्मानुभवत्यसौ ॥ नगच्छेयमतःपार्श्वंतस्यवानरपुंगवाः ॥ ६ ॥ त्यक्ष्यामिजीवितंचात्रयेनकेनापिमृत्युना ॥ इत्यश्रुनयनंकेचिद्दृष्ट्वावानरपुंगवाः ॥ ७ ॥ व्यथिताःसाश्रुनयनायुवराजमथाब्रुवन् ॥ ८ ॥ किमर्थंतवशोकोऽत्रवयंतेप्राणरक्षकाः ॥ भवा मोनिवसामोऽत्रगुहायांभयवर्जिताः ॥ ९ ॥ सर्वसौभाग्यसहितंपुरंदेवपुरोपमम् ॥ शनैःपरस्परंवाक्यंवदतांमारुतात्मजः ॥ १० ॥ श्रुत्वां गदंसमालिंग्यप्रोवाचनयकोविदः ॥ विचार्यतेकिमर्थंतेदुर्विचारोनयुज्यते ॥ ११ ॥ राज्ञोऽत्यंतप्रियस्त्वंहितारापुत्रोतिवल्लभः ॥ राम स्यलक्ष्मणात्प्रीतिस्त्वयिनित्यंप्रवर्धते ॥ १२ ॥ अतोनराघवाद्भीतिस्तवराज्ञोविशेषतः ॥ अहंतवहितेसक्तोवत्सनान्यंविचारय ॥ १३ ॥ गुहावासश्चनिर्भेद्यइत्युक्तंवानरैस्तुयत् ॥ तदेतद्रामबाणानामभेद्यंकिंजगत्त्रये ॥ १४ ॥ येत्वांदुर्बोधयंत्येतेवानरावानरर्षभ ॥ पुत्रदारादि कंत्यक्त्वाकथंस्थास्यंतितेत्वया ॥ १५ ॥ अन्यद्गुह्यतमंवक्ष्येरहस्यंशृणुमेसुत ॥ रामोनमानुषोदेवःसाक्षान्नारायणोऽव्ययः ॥ १६ ॥ सीता भगवतीमायाजनसंमोहकारिणी ॥ लक्ष्मणोभुवनाधारःसाक्षाच्छेषःफणीश्वरः ॥ १७ ॥ ब्रह्मणाप्रार्थिताःसर्वेरक्षोगणविनाशने ॥ मायामानु षभावेनजातालोकैकरक्षकाः ॥ १८ ॥ वयंचपार्षदाःसर्वेविष्णोर्वैकुंठवासिनः ॥ मनुष्यभावमापन्नेस्वेच्छयापरमात्मनि ॥ १९ ॥

रामादपिनभयमित्याह । रामस्येति ॥ १२ ॥ सीतालाभोऽपिभाव्येत्याह । अहमिति । अतोहेवत्सान्यंविचारंनविचारय ॥ १३ ॥ वानरीयांगुहावासो किंदूषयति । गुहेति । निर्भेद्योऽभेद्यः तदेतदयुक्तमितिशेषः । यतोजगत्त्रयेरामबाणानामभेद्यंकिम् । नकिमपीत्यर्थः । तेनात्रवासेमहद्रामभयमितिभावः ॥ १४ ॥ यदेतैर्वानरैरुक्तंवयंतेप्राणरक्षकाइतितदपिमिथ्येत्याह । येत्वामिति ॥ १५ ॥ १६ ॥ १७ ॥ रक्षोगणविनाशनेतन्निमित्तंप्रार्थिताइत्यन्वयः । माया मानुषभावेनेति । नतेषांवास्तवंमनुष्यत्वंकिंतुमाययैवेतिभावः ॥ १८ ॥ १९ ॥

नन्वेवंवानररूपमस्माकंकिमर्थंतत्राह । तस्यैवमाययेति ॥ २० ॥ २१ ॥ २२ ॥ दक्षिणांबुधेस्तीरेमहेंद्राख्यगिरेःपादंप्रत्यंतपर्वतमाययुरित्यन्वयः ॥ २३ ॥ भयवर्धनंदर्शनमात्रेणभयवृद्धिकरम् । किंकुर्मइतिवादिनःवदनशीलाःसंतःउदधेस्तीरेनिषेदुरथमंत्रयामासुरित्यन्वयः ॥ २४ ॥ २५॥ गुहांतरेगुहामध्ये । वाशब्दा वप्यर्थौ ॥ २६ ॥ सुग्रीववधतःसुग्रीवात्प्राप्स्यमानवधतःप्रायोपवेशनंतत्प्राप्त्युपायाभावेऽनशनेनमरणसंकल्पः ॥ २७ ॥ उपाविवेशुरित्यत्रगुणआर्षः ॥ २८ ॥

वयंवानररूपेणजातास्तस्यैवमायया ॥ वयंतुतपसापूर्वमाराध्यजगतांपतिम् ॥ २० ॥ तेनैवानुगृहीताःस्मःपार्षदत्वमुपागताः ॥ इदानी मपितस्यैवसेवांकृत्वैवमायया ॥ २१ ॥ पुनर्वैकुंठमासाद्यसुखंस्थास्यामहेवयम् ॥ इत्यंगदमथाश्वास्यगताविंध्यंमहाचलम् ॥ २२ ॥ विचिन्वंतोऽथशनकैर्जानकींदक्षिणांबुधेः ॥ तीरेमहेंद्राख्यगिरेःपवित्रंपादमाययुः ॥ २३ ॥ दृष्ट्वासमुद्रंदुष्पारमगाधंभयवर्धनम् ॥ वानरा भयसंत्रस्ताःकिंकुर्मइतिवादिनः ॥ २४ ॥ निषेदुरुदधेस्तीरेसर्वेचिंतासमन्विताः ॥ मंत्रयामासुरन्योन्यमंगदाद्यामहाबलाः ॥२५॥ भ्रम तामेवनोमासोगतोऽत्रैवगुहांतरे ॥ नदृष्टोरावणोवाद्यसीतावाजनकात्मजा ॥ २६ ॥ सुग्रीवस्तीक्ष्णदंडोऽस्मान्निहंत्येवनसंशयः ॥ सुग्रीववधतोऽस्माकंश्रेयःप्रायोपवेशनम् ॥ २७ ॥ इतिनिश्चित्यतत्रैवदर्भानास्तीर्यसर्वतः ॥ उपाविवेशुस्तेसर्वेमरणेकृतनिश्चयाः॥२८॥ एतास्मिन्नंतरेतत्रमहेंद्राद्रिगुहांतरात् ॥ निर्गत्यशनकैरागाद्गृध्रःपर्वतसन्निभः ॥ २९ ॥ दृष्ट्वाप्रायोपवेशेनास्थितान्वानरपुंगवान् ॥ उवा चशनकैर्गृध्रःप्राप्तोभक्षोऽद्यमेबहुः ॥ ३० ॥ एकैकशःक्रमात्सर्वान्भक्षयामिदिनेदिने ॥ श्रुत्वातद्गृध्रवचनंवानराभीतमानसाः ॥ ३१ ॥ भक्षयिष्यतिनःसर्वानसौगृध्रोनसंशयः ॥ रामकार्यंचनास्माभिःकृतंकिंचिद्धरीश्वराः ॥ ३२ ॥ सुग्रीवस्यापिचाहितंनकृतंस्वात्मनामपि ॥ वृथानेनवधंप्राप्तागच्छामोयमसादनम् ॥ ३३ ॥

॥ २९ ॥ बहुःविपुलोबहुसंख्यश्च ॥ ३० ॥ ३१ ॥ किंचित्किंचिदपीत्यर्थः । हरीश्वराइत्यंगदहनूमदादीन्संबोध्येतरवानरवाक्यम् ॥ ३२ ॥ सुग्रीवहि तंजानकीसमाचारोक्त्यारामसंतोषरूपमात्मनोहितंतथासुग्रीवतोषरूपम् । अनेनगृध्रेणवृथावधंनाशंप्राप्ताःप्रापिताः यमसादनंयमगृहंगच्छामः । वर्तमानसामीप्ये लट् । गमिष्याम इत्यर्थः ॥ ३३ ॥

---

१ कुतस्त्योऽयं विंध्याचल इति संशयः । तस्यात्र द्वीपेऽद्वितीयत्वात् । अथवा युज्यतेऽपि । सर्वदिक्संशोधनावसरे विंध्यप्रदेशसंशोधनमपि । ततश्च वानराणां शीघ्रचारित्वात्तावत्प्रदेशा तिलङ्घनेऽप्रयासोऽपि । इति संशयपरिहारः ।

योगिनामपिदुरावापमित्यन्वयः । दुराङ्वपूर्वादाप्नोतेःखल् । षष्ठीआर्षीशेषेवा ॥ ३४ ॥ कर्णपीयूषसन्निभंकर्णयोरमृततुल्यमित्यर्थः । जटायुरितिनाभेत्यनेनान्वयः ॥ ३५ ॥ यूयंकेतदुच्यतामित्यर्थः ॥ ३६ ॥ ३७ ॥ ३८ ॥ लक्ष्मणेचनिर्गतइत्यनुकर्षः । रामरामेतिक्रोशंतीहृतेत्यन्वयः । श्रुत्वातत्क्रोशनंश्रुत्वेत्यर्थः ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ परिमार्गणेतन्निमित्तम् । विषयसप्तमीयम् । वानरवृंदांस्तद्युक्तानस्मान् । हनूमदाद्यपेक्षयाबहुवचनम् ॥ ४३ ॥ गह्व

अहोजटायुर्धर्मात्मारामस्यार्थेमृतःसुधीः ॥ मोक्षंप्रापदुरावापंयोगिनामप्यरिंदमः ॥ ३४ ॥ संपातिस्तुतदावाक्यंश्रुत्वावानरभाषितम् ॥ केवायूयंममभ्रातुःकर्णपीयूषसंनिभम् ॥३५॥ जटायुरितिनामाद्यव्याहरंतःपरस्परम् ॥ उच्यतांवोभयंमाभून्मत्तःप्लवगसत्तमाः ॥ ३६ ॥ तमुवाचांगदःश्रीमानुत्थितोगृध्रसन्निधौ ॥ रामोदाशरथिः श्रीमाँल्लक्ष्मणेनसमन्वितः ॥ ३७ ॥ सीतयाभार्ययासार्धंविचचारमहावने ॥ तस्यसीताहृतासाध्वीरावणेनदुरात्मना ॥ ३८ ॥ मृगयांनिर्गतेरामेलक्ष्मणेचहृताबलात् ॥ रामरामेतिक्रोशंतीश्रुत्वागृध्रःप्रतापवान् ॥ ॥ ३९ ॥ जटायुर्नामपक्षींद्रोयुद्धंकृत्वासुदारुणम् ॥ रावणेनहतोवीरोराघवार्थंमहाबलः ॥ ४० ॥ रामेणदग्धोरामस्यसायुज्यमगमत्क्षणात् ॥ रामःसुग्रीवमासाद्यसख्यंकृत्वाग्निसाक्षिकम् ॥ ४१ ॥ सुग्रीवचोदितोहत्वावालिनंसुदुरासदम् ॥ राज्यंददौवानराणांसुग्रीवायमहाबलः ॥ ४२ ॥ सुग्रीवःप्रेषयामाससीतायाःपरिमार्गणे ॥ अस्मान्वानरवृन्दान्वैमहासत्त्वान्महाबलः ॥ ४३ ॥ मासादर्वाङ्निवर्तध्वंनोचेत्प्राणान्हरामिवः ॥ इत्याज्ञयाभ्रमंतोऽस्मिन्वनेगह्वरमध्यगाः ॥ ४४ ॥ गतोमासोनजानीमःसीतांवारावणंचवा ॥ मर्तुंप्रायोपविष्टाःस्मस्तीरेलवणवारिधेः ॥ ४५॥ यदिजानासिहेपक्षिन्सीतांकथयनःशुभाम् ॥ अंगदस्यवचःश्रुत्वासंपातिर्हृष्टमानसः ॥ ४६ ॥ उवाचमत्प्रियोभ्राताजटायुःप्लवगेश्वराः ॥ बहुवर्षसहस्रांतेभ्रातृवार्ताश्रुतामया ॥ ४७ ॥ वाक्साहाय्यंकरिष्येऽहंभवतांप्लवगेश्वराः ॥ भ्रातुःसलिलदानायनयध्वंमांजलांतिकम् ॥ ४८ ॥

रंगुहा । भ्रमंतइत्यस्यस्थिताइतिशेषः ॥ ४४ ॥ गतोमासइत्यस्यैवंभ्रमतामित्यादिः ॥ ४५ ॥ ४६ ॥ ४७ ॥ नयध्वंमांजलांतिकमित्युक्त्यामृगपक्ष्यादीनामपियथाज्ञानंधर्माधिकारोऽस्तीतिसूचयति ॥ ४८ ॥

तत्सलिलेसमुद्रस्यजले ॥ ४९ ॥ हरीश्वरैर्नीतः स्वस्थानंप्रापितइत्यर्थः ॥ ५० ॥ सुरक्षितास्तीतिशेषः ॥ ५१ ॥ समुद्रमध्येइत्यनेनचतुर्दिक्षुसमुद्रपरिखमे वतद्द्वीपमितिसूचितम् । लंकामेमयादृश्यतेसीताचदृश्यते ॥ ५२ ॥ तत्रहेतुमाह । गृध्रत्वादिति । नात्रसंशयितुंक्षमम् । अत्रसंशयोनकार्यइत्यर्थः ॥ ५३ ॥ ॥ ५४ ॥ पक्षविवर्जितइत्यनेनबलातिशयेऽपिगमनशक्तिहीनत्वंसूचितम् ॥ ५५ ॥ ५६ ॥ ॥ इति श्रीमत्सकलराज० सेतौकिष्किंधाकांडेसप्तमःसर्गः॥ ७॥

पश्चात्सर्वंशुभंवक्ष्येभवतांकार्यसिद्धये ॥ तथेतिनिन्युस्तेतीरंसमुद्रस्यविहंगमम् ॥ सोपितत्सलिलेस्नात्वाभ्रातुर्दत्त्वाजलांजलिम् ॥ ४९ ॥ पुनःस्वस्थानमासाद्यस्थितोनीतोहरीश्वरैः ॥ संपातिःकथयामासवानरान्परिहर्षयन् ॥ ५० ॥ लंकानामनगर्यास्तेत्रिकूटगिरिमूर्धनि ॥ तत्राशोकवनेसीताराक्षसीभिःसुरक्षिता ॥ ५१ ॥ समुद्रमध्येसालंकाशतयोजनदूरतः ॥ दृश्यतेमेनसंदेहःसीताचपरिदृश्यते ॥ ५२ ॥ गृध्रत्वाद्दूरदृष्टिर्मेनात्रसंशयितुंक्षमम् ॥ शतयोजनविस्तीर्णंसमुद्रंयस्तुलंघयेत् ॥ ५३ ॥ सएवजानकींदृष्ट्वापुनरायास्यतिध्रुवम् ॥ अह मेवदुरात्मानंरावणंहंतुमुत्सहे ॥ ५४ ॥ भ्रातृहंतारमेकाकीकिंतुपक्षविवर्जितः ॥ यतध्वमतियत्नेनलंघितुंसरितांपतिम् ॥ ततोहंतारघु श्रेष्ठोरावणंराक्षसाधिपम् ॥ ५५ ॥ उल्लंघ्यसिंधुंशतयोजनायतंलंकांप्रविश्याथविदेहकन्यकाम् ॥ दृष्ट्वासमाभाष्यचवारिधिंपुनस्ततुंसम र्थःकतमोविचार्यताम् ॥ ५६ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेकिष्किंधाकांडेसप्तमःसर्गः ॥ ७ ॥ अथतेकौतुकाविष्टाःसं पातिंसर्ववानराः ॥ पप्रच्छुर्भगवन्ब्रूहिस्वमुदंतंत्वमादितः ॥ १ ॥ संपातिःकथयामासस्ववृत्तांतंपुराकृतम् ॥ अहंपुराजटायुश्चभ्रातरौ रूढयौवनौ ॥ २ ॥ बलेनदर्पितावावांबलजिज्ञासयाखगौ ॥ सूर्यमंडलपर्यंतंगंतुमुत्पतितौमदात् ॥ ३ ॥ बहुयोजनसाहस्रंगतौतत्रप्र तापितः ॥ जटायुस्तंपरित्रातुंपक्षैराच्छाद्यमोहतः ॥ ४ ॥

॥ ७ ॥ १ ॥ पक्षहीनत्वमस्यकुतइतिवानराणांजिज्ञासांज्ञात्वातदुत्तरमाह । संपातिरिति । पुराकृतंस्ववृत्तांतम् ॥ स्वशब्दआत्मात्मीयोभयवाची ॥ स्वस्य स्वभ्रातुश्चवृत्तांतम् ॥ तमेवाह । अहमित्यादि । रूढयौवनौयौवनमध्यंप्राप्तौ ॥ २ ॥ अतएवबलदर्पितौ ॥ ३ ॥ जटायुःप्रतापितःकनिष्ठत्वात्तन्मोहतस्तंपरित्रातुं पक्षैराच्छाद्यस्थितोऽहंसूर्यरश्मिभिर्दग्धपक्षोऽत्रपतितोदूरपतनान्मूर्च्छितआसमितिशेषः ॥ ४ ॥

॥ ५ ॥ दिनत्रयात्तदुत्तरंपुनः प्राणसहितोदग्धपक्षकोयतोऽतोभ्रांतमानसोदेशादीन्नजाने ॥ ६॥७ ॥ अयतेइदंरूपंकिंकेनवापूर्वंदृष्टंतदुत्तमंरूपंविरूपंकृतम् ॥८॥
पूर्वंबलवानसिइतिवर्तमानसामीप्येलट् ॥ ९ ॥ दाववह्निना तत्तुल्यचिंतयेत्यर्थः ॥ १० ॥ चिंतामभिनयति । कथमिति ॥ ११ ॥ तत्रदेहस्यतन्मूलस्य
चतत्त्वज्ञानंविनाछेत्तुमशक्यतयाभोगैकनाश्यंदुःखमितिविवक्तुमुपक्रमते । देहेति ॥ १२ ॥ ननुकोऽसावहंपदार्थोयद्बुद्धिर्देहेतत्राह । अहंकारइति । अविद्या
याजडत्वात्तत्संभवोसावपिजडइतिभावः । अविद्यासंभवत्वेऽपिसंभवकालापरिच्छेदादनादिरित्युक्तः ॥ १३ ॥ तप्तायःपिंडोयथावह्निनायुक्तस्वतःपृथक्

स्थितोऽहंरश्मिभिर्दग्धपक्षोऽस्मिन्विंध्यमूर्धनि ॥ पतितोदूरपतनान्मूर्च्छितोऽहंकपीश्वराः ॥५॥ दिनत्रयात्पुनःप्राणसहितोदग्धपक्षकः॥
देशंवागिरिकूटान्वानजानेभ्रांतमानसः॥६॥शनैरुन्मील्यनयनेदृष्ट्वातत्राश्रमंशुभम् ॥ शनैःशनैराश्रमस्यसमीपंगतवानहम् ॥७॥ चंद्रमा
नाममुनिराट्दृष्ट्वामांविस्मितोऽवदत्॥संपातेकिमिदंतेऽद्यविरूपंकेनवाकृतम्॥८॥जानामित्वामहंपूर्वमत्यंतंबलवानसि ॥ दग्धौकिमर्थंते
पक्षौकथ्यतांयदिमन्यसे ॥९॥ ततःस्वचेष्टितंसर्वंकथयित्वातिदुःखितः॥ अब्रुवंमुनिशार्दूलंदग्धोऽहंदाववह्निना ॥१०॥ कथंधारयितुंशक्तो
विपक्षोजीवितंप्रभो ॥ इत्युक्तोऽथमुनिर्वीक्ष्यमांदयार्द्रविलोचनः ॥ ११ ॥ शृणुवत्सवचोमेऽद्यश्रुत्वाकुरुयथेप्सितम् ॥ देहमूलमिदंदुःखं
देहःकर्मसमुद्भवः ॥१२॥ कर्मप्रवर्ततेदेहेऽहंबुद्ध्यापुरुषस्यहि ॥ अहंकारस्त्वनादिःस्यादविद्यासंभवोजडः ॥ १३ ॥ चिच्छाययासदायु
क्तस्तप्तायःपिंडवत्सदा ॥ तेनदेहस्यतादात्म्याद्देहश्चेतनवान्भवेत् ॥ १४ ॥ देहोऽहमितिबुद्धिःस्यादात्मनोऽहंकृतेर्बलात् ॥ तन्मूलएष
संसारःसुखदुःखादिसाधकः ॥ १५ ॥ आत्मनोनिर्विकारस्यमिथ्यातादात्म्यतःसदा ॥ देहोऽहंकर्मकर्ताहमितिसंकल्प्यसर्वदा ॥ १६ ॥

तुंमशक्यश्च तथाऽयमहंकारश्चितइत्यर्थः । तेनाचित्तादात्म्यापन्नाहंकारेणचेतनवान्चैतन्यवानिव ॥ १४ ॥ एवमात्मनश्चेतनस्यअहंकृतेर्बलात्तत्संबंधब
लात्अहंदेहइतिबुद्धिः तत्कृतएषसंसारःसुखादिसाधकःकर्मद्वारेतिबोध्यम् ॥ १५ ॥ एवंनिर्विकारस्यापिआत्मनोऽहंकारादिभिर्मिथ्यातादात्म्याद्देहोऽहम् ।
यद्वा । ततोऽतिरिक्तोऽपिकर्मकर्त्ताहमितिसंकल्पपूर्वकंप्रायोदेहोऽहमितिबुद्धिरेवसर्वस्य । कस्यचित्प्राग्भवपुण्यवशात्तद्बुद्धिविलयेऽपिकर्मकर्तेतिबुद्धिरस्त्ये
वेतिभावः ॥ १६ ॥

कर्माणिकरोति । अहंकरोमीतिसंकल्पादेवावशस्तत्फलैःसुखादिभिर्बद्ध्यते । अनेनयोनाहंकर्तेतिभावयतितस्यनैवबंधइतिसूचितम् । तद्बंधप्रकारमाह । ऊर्ध्वेति । पुण्येनोर्ध्वंपापेनाधोभ्रमतेइत्यर्थः ॥ १७ ॥ तदेवविवृणोति । कृतमिति । इति संकल्पवान्भवेत् । स्वर्गतःसुखभोगीचेतिशेषः ॥ १८ ॥ तथैवाध्यासतःअहंबहुपुण्यकर्तेत्यध्यासेन तत्रस्वर्गेअनिच्छन्नपिपततीतिअवशइत्युक्तस्यविवरणम् ॥ १९ ॥ ततःपातपूर्वकंयेनप्रकारेणगर्भवासस्तदुपपादयति । पतित्वेति । इंदोर्मंडलेपतित्वाततोनीहारैस्तत्किरणद्वाराभूसंबद्धैरेवसंबद्धोभूत्वाभूमौपतति ततोव्रीह्यादौअनुशायित्वेनस्थित्वाचतुर्विधंभोज्यंभक्ष्यभोज्यलेह्यचोष्यरूपं तदन्यतमद्भूत्वापुरुषैर्भुज्यते ततोभोजनानंतररेतोभूत्वास्थितइतिशेषः । ततस्तेनपुंसास्त्रीयोनौऋतुकालेसिंचितःसिक्तः । आर्षत्वात्साधुः ॥ २० ॥

जीवःकरोतिकर्माणितत्फलैर्बद्ध्यतेऽवशः॥ऊर्ध्वाधोभ्रमतेनित्यंपापपुण्यात्मकःस्वयम्॥१७॥ कृतंमयाधिकंपुण्यंयज्ञदानादिनिश्चितम् ॥ स्वर्गंगत्वासुखंभोक्ष्येइतिसंकल्पवान्भवेत् ॥ १८ ॥ तथैवाध्यासतस्तत्रचिरंभुक्त्वासुखंमहत् ॥ क्षीणपुण्यःपतत्यर्वागनिच्छन्कर्मचोदितः ॥ १९ ॥ पतित्वामंडलेचेंदोस्ततोनीहारसंयुतः ॥ भूमौपतितआव्रीह्यादौतत्रस्थित्वाचिरंपुनः ॥ २० ॥ भूत्वाचतुर्विधंभोज्यंपुरुषैर्भुज्यतेततः ॥ रेतोभूत्वापुनस्तेनऋतौस्त्रीयोनिर्सिंचितः ॥ २१ ॥ योनिरक्तेनसंयुक्तंजरायुपरिवेष्टितम् ॥ दिनेनैकेनकललंभूत्वारूढत्वमाप्नुयात् ॥ २२ ॥ तत्पुनःपंचरात्रेणबुद्बुदाकारतामियात् ॥ सप्तरात्रेणतदपिमांसपेशित्वमाप्नुयात् ॥ २३ ॥ पक्षमात्रेणसापेशीरुधिरेणपरिप्लुता ॥ तस्याएवांकुरोत्पत्तिःपंचविंशतिरात्रिषु ॥ २४ ॥ ग्रीवाशिरश्चस्कंधश्चपृष्ठवंशस्तथोदरम् ॥ पंचधांगानिचैकैकंजायंतेमासतःक्रमात् ॥ २५ ॥

॥ २१ ॥ सिक्तःसजीवएकेनदिनेनजरायुपरिवेष्टितंयोनिरक्तेनसंयुक्तंकललंकललाख्यपरिणामवद्भूत्वारूढत्वंदार्ढ्यमाप्नुयात् । जरायुर्गर्भवेष्टनम् ॥ २२ ॥ बुद्बुदाकारतांतदाकारपरिणामविशेषम् । एवमग्रेऽपि ॥ २३ ॥ रुधिरेणपरिप्लुताभवतीतिशेषः । तस्याएवपेशीरूपपरिणामस्यैव पंचविंशतिरात्रिषुगतास्वितिशेषः । समासांताभावोऽनित्यत्वात् ॥ २४ ॥ अंकुरानेवाह । ग्रीवेत्यादि । पंचधांगानिपंचधांगांकुराः मासतःमासेनेत्यर्थः । क्रमात्प्रथमंग्रीवेत्यादिक्रमेण ॥ २५ ॥

---

१ ऋत्यक इत्यनेन प्रकृतिभावः ।

पाणीइत्याद्यप्येवमेव ॥ २६ ॥ २७ ॥ पंचमासतःपंचमेमासि दंताद्यपिपंचमएवमासि ॥ २८ ॥ २९ ॥ विभक्तावयवत्वंपृथग्ज्ञानविषयावयवत्वम् एतद्वक्ष्य माणंचगर्भोपनिषदिवैद्यकसंहितासुशारीरकेचस्फुटं विस्तरभयात्तन्नेहलिख्यते ॥ ३० ॥ एवंएवंरीत्यावर्धतइत्यन्वयः । चैतन्यंप्राप्नोतितदभिव्यक्तिंप्राप्नोतीत्यर्थः ॥ ३१ ॥ नाभीति । नाभिसूत्रंनालाख्यंमातूरसनाड्यासंबद्धंतदीयाल्परंध्रेणगर्भजठरंप्राप्तान्मातृभुक्तान्नसारतोगर्भगःपिंडोवर्धते । अल्परंध्रप्राप्ताल्पाहारत्वेपिस्व कर्मतोनाम्रियतइत्यर्थः ॥ ३२ ॥ सर्वाणिजन्मानितत्कृतानिकर्माणिचस्मृत्वाजठरानलयोगादतिसंतप्तोवचनमाह ॥ ३३ ॥ नानेति । पुत्रादिसंबंधमनुभूतवा

पाणीपादौतथापार्श्वःकटिर्जानुस्तथैवच ॥ मासद्वयात्प्रजायंतेक्रमेणैवचनान्यथा ॥२६॥ त्रिभिर्मासैःप्रजायंतेअंगानांसन्धयःक्रमात् ॥ सर्वांगुल्यःप्रजायंतेक्रमान्मासचतुष्टये ॥ २७ ॥ नासाकर्णौचनेत्रेचजायंतेपंचमासतः ॥ दंतपंक्तिर्नखागुह्यंपंचमेजायतेतथा ॥ २८ ॥ अर्वाक्षण्मासतश्छिद्रंकर्णयोर्भवतिस्फुटम् ॥ पायुर्मेढ्रमुपस्थंचनाभिश्चापिभवेन्नृणाम् ॥ २९ ॥ सप्तमेमासिरोमाणिशिरःकेशास्तथैवच ॥ विभक्तावयवत्वंचसर्वंसंपद्यतेऽष्टमे ॥३०॥ जठरेवर्धतेगर्भःस्त्रियाएवंविहंगम ॥ पंचमेमासिचैतन्यंजीवःप्राप्नोतिसर्वशः ॥ ३१ ॥ नाभिसू त्राल्परंध्रेणमातृभुक्तान्नसारतः ॥ वर्धतेगर्भगःपिंडोनाम्रियेतस्वकर्मतः ॥ ३२ ॥ स्मृत्वासर्वाणिजन्मानिपूर्वकर्माणिसर्वशः ॥ जठरानल तप्तोऽयमिदंवचनमब्रवीत् ॥ ३३ ॥ नानायोनिसहस्रेषुजायमानोऽनुभूतवान् ॥ पुत्रदारादिसंबंधंकोटिशःपशुबांधवान् ॥ ३४ ॥ कुटुं बभरणासक्त्यान्यायान्यायैर्धनार्जनम् ॥ कृतंनाकरवंविष्णुचिंतांस्वप्नेऽपिदुर्भगः ॥ ३५ ॥ इदानींतत्फलंभुंजेगर्भदुःखंमहत्तरम् ॥ अशाश्वतेशाश्वतवद्देहेतृष्णासमन्वितः ॥ ३६ ॥ अकार्याण्येवकृतवान्नकृतंहितमात्मनः ॥ इत्येवंबहुधादुःखमनुभूयस्वकर्मतः ॥ ३७ ॥ कदानिष्क्रमणंमेस्याद्गर्भान्निरयसंनिभात् ॥ इतऊर्ध्वंनित्यमहंविष्णुमेवानुपूजये ॥ ३८ ॥

निविसंबंधः ॥ ३४ ॥ तथाकुटुंबभरणासक्त्यातन्मात्रासक्त्यानतुधर्मासक्त्या न्यायान्यायैर्धर्म्याधर्म्यैरुपायैर्धनार्जनंकृतम् । मयेतिशेषः । तथाविष्णुचिंतांस्वप्ने ऽपिनाकरवमहंनकृतवानित्यर्थः ॥ ३५ ॥ तत्फलभूतंगर्भदुःखंभुंजेइत्यन्वयः । अशाश्वतेतत्प्रायःपतितजलबिंदुवन्नश्वरेदेहेशाश्वतवस्तुनीवममेदंस्यादितीच्छायुक्तः ॥ ३६ ॥ नकृतमित्यस्यमयेतिशेषः । अनुभूयेत्यस्यइदानींगर्भदुःखंभुंजेइत्यनेनान्वयः ॥ ३७ ॥ ३८ ॥

योनियंत्रप्रपीडितःजन्मकाले अतएवातिदुःखेनजायमानः । बहिः पततीतिशेषः । नरकात्पातकीत्येकोदृष्टांतः ॥ ३९ ॥ तथापूतिव्रणादुर्गंधिव्रणान्निपति
तोऽपरःकृमिरिवएषः । पततीतिशेषः ॥ ततोबाल्यादिदुःखानिभुनक्ति एवंसर्वजंतवोविभुंजतेनकश्चिदेवेत्यर्थः ॥ ४० ॥ यानिवैराणिविदितानितानिमयावर्णितानि
यानितुयौवनादिषुदुःखानिसर्वतः सर्वैःप्राप्याणिसर्वत्रसर्वेषुजंतुषुविदितानिसर्वैर्ज्ञातानित्वयाचानुभूतानीतिसर्वविदित्वादेवमयानवर्णितानि ॥ ४१ ॥ एवमिति ।
इत्यस्मादित्याकारादभ्यासाज्जातादभिनिवेशतःअहंकर्तेत्याद्याकारात् निरयस्वर्गादिकंगर्भवासादिदुःखानिचभवंतीत्यन्वयः ॥ ४२ ॥ देहद्वयात्स्थूलसूक्ष्म

इत्यादिचिंतयञ्जीवोयोनियंत्रप्रपीडितः ॥ जायमानोऽतिदुःखेननरकात्पातकीयथा ॥ ३९ ॥ पूतिव्रणान्निपतितःकृमिरेषइवापरः ॥
ततोबाल्यादिदुःखानिसर्वेएवंविभुंजते ॥ ४० ॥ त्वयाचैवानुभूतानिसर्वत्रविदितानिच ॥ नवर्णितानिमेगृध्रयौवनादिषुसर्वतः ॥ ४१ ॥
एवंदेहोऽहमित्यस्मादभ्यासान्निरयादिकम् ॥ गर्भवासादिदुःखानिभवंत्यभिनिवेशतः ॥४२॥ तस्माद्देहद्वयादन्यमात्मानंप्रकृतेःपरम् ॥
ज्ञात्वादेहादिममतांत्यक्त्वात्मज्ञानवान्भवेत् ॥ ४३ ॥ जाग्रदादिविनिर्मुक्तंसत्यज्ञानादिलक्षणम् ॥ शुद्धंबुद्धंसदाशांतमात्मानमवधारये
त् ॥ ४४ ॥ चिदात्मनिपरिज्ञातेनष्टेमोहेऽज्ञसंभवे ॥ देहःपततुवारब्धकर्मवेगेनतिष्ठतु ॥ ४५ ॥ योगिनोनहिदुःखंवासुखंवाऽज्ञानसंभ
वम् ॥ तस्माद्देहेनसहितोयावत्प्रारब्धसंक्षयः ॥ ४६ ॥ तावत्तिष्ठसुखेनत्वंधृतकंचुकसर्पवत् ॥ अन्यद्वक्ष्यामितेपाक्षिञ्छृणुमेपरमंहि
तम् ॥ ४७ ॥ त्रेतायुगेदाशरथिर्भूत्वानारायणोऽव्ययः ॥ रावणस्यवधार्थायदंडकानागमिष्यति ॥ ४८ ॥ सीतयाभार्ययासार्धंलक्ष्म
णेनसमन्वितः ॥ तत्राश्रमेजनकजांभ्रातृभ्यांरहितेवने ॥ ४९ ॥

रूपात्प्रागुक्तादन्यम् तर्हिप्रकृतिरेवसा नेत्याह प्रकृतेःपरंज्ञात्वादेहादिषुममतामहंममेतिबुद्धिविषयतांत्यक्त्वाआत्मज्ञानवान्आत्मैवसर्वमितिज्ञानवान्भवेत्
॥ ४३ ॥ ध्येयात्मस्वरूपमाह । जाग्रदादीति । जाग्रत्स्वप्नसुषुप्त्याख्यावस्थात्रयरहितम् शुद्धंमायादोषालिप्तंबुद्धंबोधस्वरूपम् ॥ ४४ ॥ अज्ञमवि
द्यातज्जन्ये मोहेदेहादिष्वहंममताख्येनष्टेनाशंप्राप्तेदेहस्थितौनाशेवा ॥ ४५ ॥ योगिनआत्मज्ञस्याज्ञानजेसुखदुःखेनभवतः यावत्प्रारब्धक्षयोभवतितावद्देहेनसहितः
सुखंतिष्ठ यथाकंचुकवान्सर्पोयावत्तत्त्यागकालंतद्धत्तेऽनंतरंत्यजतितद्वत् ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

परिमार्गणेतन्निमित्तम् ॥ ५० ॥ तीरमागमिष्यंतितैःसहकारणवशात् फलमिहकारणम् पक्षोत्पत्तिरूपफलायतैःसमागमोभविष्यति ॥ ५१ ॥ तदेवाह । तदैवेति । तवपक्षौद्वौनिश्चयमुत्पत्स्येतेइत्यर्थः ॥ ५२ ॥ ५३ ॥ निश्चयंद्रक्ष्यथ तन्मुन्युक्तपक्षभवनिश्चयेनतदुक्तरावणवधोऽप्यवश्यंभावी सचनसीतादर्शनं विनेतितदप्यवश्यंभाविष्यवीतिनिश्चयः ॥ ५४ ॥ यन्नामस्मरणमात्राद्यःकश्चिद्दुर्जनोऽपिइयानितिपरिच्छेदरहितंसंसारसमुद्रंतीर्त्वाविष्णोःपदंगच्छति एवंद्दश्य मानप्रकारेणत्रिजगतांस्थितिकारिणःसर्वजगदुत्पत्तिस्थितिविलयकर्तुः । स्थितिपदेनेतरदप्युपलक्ष्यते । रामस्यभक्ताःप्रियाश्चयूयंशतयोजनपरिच्छिन्नस्यसमुद्र

रावणश्चोरवन्नीत्वालंकायांस्थापयिष्यति ॥ तस्याःसुग्रीवनिर्देशाद्वानराःपरिमार्गणे ॥ ५० ॥ आगमिष्यंतिजलधेस्तीरंतत्रसमागमः ॥ त्वयातैःकारणवशाद्भविष्यतिनसंशयः ॥ ५१ ॥ तदासीतास्थितिंतेभ्यःकथयस्वयथार्थतः ॥ तदैवतवपक्षौद्वावुत्पत्स्येतेपुनर्नवौ ॥ ५२ ॥ संपातिरुवाच ॥ बोधयामासमांचंद्रनामामुनिकुलेश्वरः ॥ पश्यंतुपक्षौमेजातौनूतनावतिकोमलौ ॥ ५३ ॥ स्वस्तिवोऽस्तुगमिष्यामिसीतांद्रक्ष्यथनिश्चयम् ॥ यत्नंकुरुध्वंदुर्लंघ्यसमुद्रस्यविलंघने ॥ ५४ ॥ यन्नामस्मृतिमात्रतोऽपरिमितंसंसारवारांनिधिंतीर्त्वागच्छतिदुर्जनोऽपिपरमंविष्णोःपदंशाश्वतम् ॥ तस्यैवस्थितिकारिणस्त्रिजगतांरामस्यभक्ताःप्रियायूयंकिंनसमुद्रमात्रतरणेशक्ताः कथंवानराः॥५५॥इति श्रीम० कि०अष्टमःसर्गः ॥८॥ ॥ श्रीमहादेवउवाच ॥ गतेविहायसागृध्रराजेवानरपुंगवाः॥हर्षेणमहताविष्टाःसीतादर्शनलालसाः ॥ १ ॥ ऊचुःसमुद्रंपश्यंतोनक्रचक्रभयंकरम् ॥ तरंगादिभिरुन्नद्धमाकाशमिवदुर्ग्रहम् ॥ २ ॥ परस्परमवोचन्वैकथमेनंतरामहे ॥ उवाचचांगदस्तत्रश्रृणुध्वंवानरोत्तमाः ॥ ३ ॥ भवंतोऽत्यंतबलिनःशूराश्चकृतविक्रमाः ॥ कोवाऽत्रवारिधिंतीर्त्वा राजकार्यंकरिष्यति ॥ ४ ॥

मात्रस्यतरणेकिंकुतोनशक्ताः । कथंचनशक्ताइतिव्यतिरेकालंकारः ॥ ५५ ॥ इति श्रीमत्सकल० अ० कि० अष्टमःसर्गः ॥ ८ ॥ ॥ गतेइति । पक्षलाभादितिभावः । हर्षेणेति । महदरिष्टंगतमितितत्पक्षदर्शनप्रत्ययेनसीतादर्शनमवश्यंभावीतिहर्षेणच ॥ १ ॥ नक्रचक्रंनक्रसमूहःतरंगादिभिःतरंगाअल्पाआदिनामहत्योलहर्यःदुर्ग्रहंदुःस्पर्शमाकाशस्यास्पर्शत्वमस्यतुग्रहादियुक्तत्वात् ॥ २ ॥ कथमेनंतरामहइतिपरस्परमवोचन्नित्यन्वयः ॥ ३ ॥ कृतविक्रमाःपूर्वंबहुशःकृतपराक्रमाः कोराजकार्यंकरिष्यतितद्वदंत्वितिशेषः ॥ ४ ॥

यस्तद्वदिष्यतिअहंकर्तेतिसएषांप्राणदाताअतःयोमहाबलःसशीघ्रमुत्तिष्ठतु । अवोत्तिष्ठत्वित्यार्षःसंधिः ॥ ५ ॥ भूयाद्भवेदित्यर्थेआर्षम् ॥ ६ ॥ ७ ॥
सर्वैर्युष्माभिर्वैनिश्चयेनप्रत्येकंस्वस्वबलमुच्यताम् । ततःकार्यसाधकंनिश्चेष्यामइत्यर्थः ॥ ८ ॥ दशोत्तरगुणम् दशसंख्योत्तरोगुणोयस्यतत् । एकादश परोविं
शतिःपरस्त्रिंशदित्येवंक्रमेण ॥ ९ ॥ जांबवांस्तुनवतियोजनानीत्याहेत्यर्थः । पुरात्रिविक्रमेदेवेऽवतीर्णेसतितदीयंभूमानंभूपरिच्छेदलक्षणकार्यंयस्यतादृशंभूपरि
च्छेदकंपादम् ॥ १० ॥ एकविंशतिवारंप्रदक्षिणविधानेनाहमगांवत्परितइतिशेषः ॥ ११ ॥ १२ ॥ त्वं नोनियामकोऽस्माकमाज्ञाकर्ताराजात्वंयद्यपिसमर्थोऽ

एतेषांवानराणांसप्राणदातानसंशयः ॥ अतोत्तिष्ठतुमेशीघ्रंपुरतोयोमहाबलः ॥५॥ वानराणांचसर्वेषांरामसुग्रीवयोरपि ॥ सएवपालको
भूयान्नात्रकार्याविचारणा ॥ ६ ॥ इत्युक्तेयुवराजेनतूष्णींवानरसैनिकाः ॥ आसन्नोचुःकिंचिदपिपरस्परविलोकिनः ॥ ७ ॥ अंगदउवाच ॥
॥ उच्यतांवैबलंसर्वैःप्रत्येकंकार्यसिद्धये ॥ केनवासाध्यतेकार्यंजानीमस्तदनंतरम् ॥ ८ ॥ अंगदस्यवचःश्रुत्वाप्रोचुर्वीराबलंपृथक् ॥ योज
नानांदशारभ्यदशोत्तरगुणंजगुः ॥९॥ शतादर्वाग्जांबवांस्तुप्राहमध्येवनौकसाम् ॥ पुरात्रिविक्रमेदेवेपादंभूमानलक्षणम् ॥१०॥ त्रिःसप्तकृ
त्वोऽहमगांप्रदक्षिणविधानतः ॥ इदानींवार्धकग्रस्तोनशक्नोमिविलंघितुम् ॥ ११ ॥ अंगदोऽप्याहमेगंतुंशक्यंपारंमहोदधेः ॥ पुनर्लंघनसा
मर्थ्यंनजानाम्यस्तिवानवा ॥ १२ ॥ तमाहजांबवान्वीरस्त्वंराजानोनियामकः ॥ नयुक्तंत्वांनियोक्तुंमेत्वंसमर्थोऽसियद्यपि ॥ १३ ॥ अंग
दउवाच ॥ एवंचेत्पूर्ववत्सर्वैस्स्वप्स्यामोदर्भविष्टरे ॥ केनापिनकृतंकार्यंजीवितुंचनशक्यते ॥ १४ ॥ तमाहजांबवान्वीरोदर्शयिष्यामिते
सुत ॥ येनास्माकंकार्यसिद्धिर्भविष्यत्यचिरेणच ॥१५॥ इत्युक्त्वाजांबवान्प्राहहनूमंतमवस्थितम् ॥ हनूमन्किंरहस्तूष्णींस्थीयतेकार्य
गौरवे ॥ १६ ॥ प्राप्तेऽज्ञेनेवसामर्थ्यंदर्शयाद्यमहाबल ॥ त्वंसाक्षाद्वायुतनयोवायुतुल्यपराक्रमः ॥ १७ ॥

सितथापित्वामाज्ञप्तुंमेनयुक्तम् ॥ १३ ॥ कार्यंकेनापिनकृतंजीवितुंचनशक्यतेराजभयादतोमरणनिश्चयेनस्वप्स्यामइत्यर्थः ॥ १४ ॥ कार्यसिद्धिर्भविष्यति
अचिरेणचभविष्यतितंदर्शयिष्यामि ॥ १५ ॥ कार्यगौरवेगुरुतरकार्येप्राप्तेऽज्ञेनेवभवताकिंतूष्णींस्थीयतइत्यन्वयः ॥ १६ ॥ अतःसामर्थ्यंदर्शय । ननुसामर्थ्या
भावेकिंदर्शनीयमितिचेन्नेत्याह । त्वमिति ॥ १७ ॥

जनितोऽस्मिउत्पादितोऽसि । विभावसुंसूर्यम् ॥ १८ ॥ जिघृक्षामीतिग्रहीष्यामीत्यर्थेआर्षम् । योजनानाम् पंचशतमुत्प्लुत्यततोभुविपतितः ॥ १९ ॥ नोऽस्मान्पाहिरक्ष ॥ २० ॥ सिंहस्यनादंतस्येवनादमित्यर्थः ॥ २१ ॥ २२ ॥ आनेष्यइतिच्छेदः ॥ २३ ॥ रावणंगलेबध्वाएकहस्तेगृहीत्वावामपाणिनासपर्वतांलंकांधृत्वारामाग्रेक्षिपामि ॥ २४ ॥ यद्वेति । सीतायाआनयनेरामाज्ञाभावादितिभावः । दृष्ट्वैवेति । नतुतांगृहीत्वानापिरावणादीन्गृहीत्वेत्यर्थः ॥ २५ ॥

रामकार्यार्थमेवत्वंजनितोऽसिमहात्मना ॥ जातमात्रेणतेपूर्वंदृष्ट्वोद्यंतंविभावसुम् ॥१८॥ पक्कंफलंजिघृक्षामीत्युत्प्लुतंबालचेष्टया ॥ योजनानांपंचशतंपतितोऽसिततोभुवि ॥ १९ ॥ अतस्त्वद्बलमाहात्म्यंकोवाशक्नोतिवर्णितुम् ॥ उत्तिष्ठकुरुरामस्यकार्यंनःपाहिसुव्रत ॥२०॥ श्रुत्वाजांबवतोवाक्यंहनुमानतिहर्षितः ॥ चकारनादंसिंहस्यब्रह्मांडंस्फोटयन्निव ॥ २१ ॥ बभूवपर्वताकारस्त्रिविक्रमइवापरः ॥ लंघयित्वाजलनिधिंकृत्वालंकांचभस्मसात् ॥ २२ ॥ रावणंसकुलंहत्वाऽऽनेष्येजनकनंदिनीम् ॥२३॥ यद्वाबद्धागलेरज्ज्वारावणंवामपाणिना ॥ लंकांसपर्वतांधृत्वारामस्याग्रेक्षिपाम्यहम् ॥ २४ ॥ यद्वादृष्ट्वैवयास्यामिजानकींशुभलक्षणाम् ॥ श्रुत्वाहनूमतोवाक्यंजांबवानिदमब्रवीत् ॥ ॥२५॥दृष्ट्वैवागच्छभद्रंतेजीवंतींजानकींशुभाम्॥पश्चाद्रामेणसहितोदर्शयिष्यसिपौरुषम् ॥२६॥ कल्याणंभवताद्भद्रगच्छतस्तेविहायसा ॥ गच्छंतंरामकार्यार्थंवायुस्त्वामनुगच्छतु ॥२७॥ इत्याशीर्भिःसमामंत्र्यविसृष्टःप्लवगाधिपैः ॥ महेंद्राद्रिशिरोगत्वाबभूवाद्भुतदर्शनः ॥२८॥ महानगेंद्रप्रतिमोमहात्मासुवर्णवर्णोऽरुणचारुवक्रः ॥ महाफणींद्राभसुदीर्घबाहुर्वातात्मजोऽदृश्यतसर्वभूतैः ॥ २९ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेकिष्किंधाकांडेनवमःसर्गः ॥ ९ ॥ ॥ समाप्तोऽयंकिष्किंधाकांडः ॥

॥ २६ ॥ भवतात् । आशिषिलोट् । वायुस्त्वामनुगच्छत्वितिशकुनप्रार्थनम् ॥ २७ ॥ समामंत्र्ययोजयित्वा अद्भुतदर्शनःअतिमहाशरीरत्वात् ॥ २८ ॥ तदेवाह । महानगेंद्रेति ॥ २९ ॥ ॥ इति श्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराजमानस्याहिम्मतिवर्मणःपुत्रस्यरामवर्मणःकृतावध्यात्मरामायणसेतौकिष्किंधाकांडेनवमःसर्गः ॥ ९ ॥ ॥ श्रीरामचन्द्रार्पणमस्तु ॥ शुभं भवतु ॥

इदमध्यात्मरामायणकिष्किंधाकाण्डं मुम्बय्यां खेमराज
श्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर"
यन्त्रालयेऽङ्कयित्वा प्रकाशितम्।

संवत् १९६१, शके १८२६, सन् १९०५.

श्रीगणेशायनमः ॥ शतेति ॥ लिलंघयिषुः । स्वार्थेणिच् । आनंदसंदोहःतत्समूहरूपःतत्समूहवान्वा ॥ १ ॥ २ ॥ रामनिर्मुक्तंरामत्यक्तम् । पश्यामीति भाविन्यपिवर्तमानत्वारोपोऽवश्यंभावित्वद्योतनाय ॥ ३ ॥ कृतार्थः । जगन्मातृदर्शनेनेतिभावः । ममसमुद्रलंघनमकिंचित्करमित्याह । प्राणेति ॥ ४ ॥ अपार मित्युभयान्वयि त्रिविधपरिच्छेदशून्यंतत्पदंतत्स्वरूपम् । तदंगभूतायाअंगुलिस्तद्भूषणभूतायामुद्रिकासाअस्यास्तीत्यर्शआद्यच् ॥ ५ ॥ अल्पवारिधिमित्यपार भवांभोधेर्व्यतिरेकालंकारः । तंलंघयामीतिकिंवक्तव्यमित्यन्वयः । बाहूइत्यादिवानरोत्प्लवनजातिवर्णनम् । आयतवालधिःप्रसारितपुच्छः ॥ ६ ॥ ऋजुग्रीवऊ

श्रीमहादेव उवाच ॥ शतयोजनविस्तीर्णंसमुद्रंमकरालयम् ॥ लिलंघयिषुरानंदसंदोहोमारुतात्मजः ॥१॥ ध्यात्वारामंपरात्मानमिदंवच नमब्रवीत् ॥ पश्यंतुवानराःसर्वेगच्छंतंमांविहायसा ॥२॥ अमोघंरामनिर्मुक्तंमहाबाणमिवाखिलाः ॥ पश्याम्यद्यैवरामस्यपत्नींजनकनं दिनीम् ॥ ३ ॥ कृतार्थोऽहंकृतार्थोहंपुनःपश्यामिराघवम् ॥ प्राणप्रयाणसमयेयस्यनामसकृत्स्मरन् ॥ ४ ॥ नरस्तीर्त्वाभवांभोधिमपा रंयातितत्पदम् ॥ किंपुनस्तस्यदूतोऽहंतदंगांगुलिमुद्रिकः ॥ ५ ॥ तमेवहृदयेध्यात्वालंघयाम्यल्पवारिधिम् ॥ इत्युक्त्वाहनुमान्बाहूप्र सार्यायतवालधिः ॥ ६ ॥ ऋजुग्रीवोर्द्ध्वदृष्टिःसन्नाकुंचितपदद्वयः ॥ दक्षिणाभिमुखस्तूर्णंपुप्लुवेऽनिलविक्रमः ॥ ७ ॥ आकाशात्त्वरितंदे वैर्वीक्ष्यमाणोजगामसः ॥ दृष्ट्वाऽनिलसुतंदेवागच्छंतंवायुवेगतः ॥ ८ ॥ परीक्षणार्थंसत्त्वस्यवानरस्येदमब्रुवन् ॥ गच्छत्येषमहासत्त्वोवा नरोवायुविक्रमः ॥ ९ ॥ लंकांप्रवेष्टुंशक्तोवानवाजानीमहेबलम् ॥ एवंविचार्यनागानांमातरंसुरसाभिधाम् ॥ १० ॥ अब्रवीद्देवतावृन्दः कौतूहलसमन्वितः ॥ गच्छत्वंवानरेंद्रस्यकिंचिद्विघ्नंसमाचर ॥ ११ ॥ ज्ञात्वातस्यबलंबुद्धिंपुनरेहित्वरान्विता ॥ इत्युक्तासाययौशीघ्रं हनुमद्विघ्नकारणात् ॥ १२ ॥

र्ध्वदृष्टिरित्यर्थः । कर्मधारयः । अनिलोवायुस्तत्सदृशपराक्रमः ॥ ७ ॥ आकाशात्आकाशेस्थित्वेत्यर्थः ॥ ८ ॥ वानरस्यसत्त्वस्यवानरीयबलस्यपरी क्षणार्थमिदमब्रुवन् । विचारयामासुरित्यर्थः । तद्वक्ष्यति । एवंविचार्येति । धातूनामनेकार्थत्वाद्ब्रूञोऽपिविचारेवृत्तिः ॥ ९ ॥ लंकाप्रवेशेशक्तोऽथवानेतिसं देहस्तस्मादस्यबलंजानीमहे । निर्णेष्यामइत्यर्थः ॥ १० ॥ देवतावृंदःदेवतासमूहः ॥ ११ ॥ १२ ॥

॥ १३ ॥ क्षुधयासंपीडितआत्मायस्यास्तस्याइत्यर्थः ॥ १४ ॥ १५ ॥ निवेक्ष्येप्रवेक्ष्यामि ॥ १६ ॥ मेवक्रंप्रविश्यततोनिःसृत्यगच्छेत्यर्थः ॥ १७ ॥
योजनमात्रदीर्घदेहः ॥ १८ ॥ १९ ॥ त्रिंशद्योजनसम्मितंवपुश्चकारेतिशेषः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ पुनर्गत्वाकिष्किंधामितिशेषः ॥ २४ ॥
॥ २५ ॥ मणिकांचनपर्वतंमण्यादियुक्तशृंगयुतंपर्वतम् ॥ २६ ॥ सचिवोभव । मध्येविश्रामदानेनसहायोभवेत्यर्थः । तत्सहायार्थनिमित्तंमत्प्रेरणेकोहेतु

आवृत्त्यमार्गंपुरतःस्थित्वावानरमब्रवीत् ॥ एहिमेवदनंशीघ्रंप्रविशस्वमहामते ॥ १३ ॥ देवैस्त्वंकल्पितोभक्षःक्षुधासंपीडितात्मनः ॥
तामाहहनुमान्मातरहंरामस्यशासनात् ॥ १४ ॥ गच्छामिजानकींद्रष्टुंपुनरागम्यसत्वरः ॥ रामायकुशलंतस्याःकथयित्वात्वदाननम् ॥
॥ १५ ॥ निवेक्ष्येदेहिमेमार्गंसुरसायैनमोऽस्तुते ॥ इत्युक्तापुनरेवाहसुरसाक्षुधितास्म्यहम् ॥ १६ ॥ प्रविश्यगच्छमेवक्त्रंनोचेत्त्वांभक्षया
म्यहम् ॥ इत्युक्तोहनुमानाहमुखंशीघ्रंविदारय ॥ १७ ॥ प्रविश्यवदनंतेऽद्यगच्छामित्वरयान्वितः ॥ इत्युक्त्वायोजनायामदेहोभूत्वापु
रःस्थितः ॥ १८ ॥ दृष्ट्वाहनुमतोरूपंसुरसापंचयोजनम् ॥ मुखंचकारहनुमान्द्विगुणंरूपमादधत् ॥ १९ ॥ ततश्चकारसुरसायोजनानां
चविंशतिम् ॥ वक्त्रंचकारहनुमांस्त्रिंशद्योजनसम्मितम् ॥ २० ॥ ततश्चकारसुरसापंचाशद्योजनायतम् ॥ वक्त्रंतदाहनूमांस्तुबभूवांगुष्ठस
न्निभः ॥ २१ ॥ प्रविश्यवदनंतस्याःपुनरेत्यपुरःस्थितः ॥ प्रविष्टोनिर्गतोऽहंतेवदनंदेवितेनमः ॥ २२ ॥ एवंवदंतंदृष्ट्वासाहनूमंतमथा
ब्रवीत् ॥ गच्छसाधयरामस्यकार्यंबुद्धिमतांवर ॥ २३ ॥ देवैःसंप्रेषिताहंतेबलंजिज्ञासुभिःकपे ॥ दृष्ट्वासीतांपुनर्गत्वारामंद्रक्ष्यासिगच्छ
भोः ॥ २४ ॥ इत्युक्त्वासाययौदेवलोकंवायुसुतःपुनः ॥ जगामवायुमार्गेणगरुत्मानिवपक्षिराट् ॥ २५ ॥ समुद्रोऽप्याहमैनाकंमणिकां
चनपर्वतम् ॥ गच्छत्येषमहासत्त्वोहनुमान्मारुतात्मजः ॥ २६ ॥ रामस्यकार्यसिद्ध्यर्थंतस्यत्वंसाचिवोभव ॥ सगरैर्वर्धितोयस्मात्पुरा
हंसागरोऽभवम् ॥ २७ ॥ तस्यान्वयेबभूवासौरामोदाशरथिःप्रभुः ॥ तस्यकार्यार्थसिद्ध्यर्थंगच्छत्येषमहाकपिः ॥ २८ ॥ त्वमुत्तिष्ठज
लात्तूर्णंत्वयिविश्राम्यगच्छतु ॥ सतथेतिप्रादुरभूज्जलमध्यान्महोन्नतः ॥ २९ ॥

स्तत्राह । सगरैरिति । पुरापूर्वंसगरैर्वर्धितइतिहेतोरहंसागरस्तन्नामाऽभवम् ॥ २७ ॥ तस्यवंशेचरामस्तत्कार्यार्थंचायंगच्छति ॥ २८ ॥ अतस्त्वमु
त्तिष्ठेत्यन्वयः ॥ २९ ॥

नानामणिमयैःश्रृंगैर्महोन्नतइत्यन्वयः । तस्योपरिनराकृतिर्मनुष्याकारेणस्थितोमैनाकःप्राह ॥ ३० ॥ ३१ ॥ विश्राम्येत्यार्षम् ॥ ३२ ॥ कथंभवेदित्या
देरनुचितंतवदित्यर्थः । तत्रहेतुर्गंतव्यंत्वरितंमयेति ॥ ३३ ॥ कराग्रेणस्पृष्टशिखरोययावित्यन्वयः । छायास्पर्शमात्रेणजंतूनांगतिनिरोधेनाकर्षकश्छायाग्रह
इत्युच्यते ॥ ३४ ॥ तदेवाह । सिंहिकेति । भक्षयेत् । भक्षयतिइत्यर्थेआर्षः ॥ ३५ ॥ ३६ ॥ विस्मयआश्चर्यम् । यत्कस्याप्यदर्शनंवेगरोधश्चे

नानामणिमयैःश्रृंगैस्तस्योपरिनराकृतिः ॥ प्राहयांतंहनूमंतंमैनाकोऽहंमहाकपे ॥ ३० ॥ समुद्रेणसमादिष्टस्त्वद्विश्रामायमारुते ॥
आगच्छामृतकल्पानिजग्ध्वापक्वफलानिमे ॥ ३१ ॥ विश्राम्यात्रक्षणंपश्चाद्गमिष्यसियथासुखम् ॥ एवमुक्तोऽथतंप्राहहनुमान्मारुतात्म
जः ॥ ३२ ॥ गच्छतोरामकार्यार्थंभक्षणंमेकथंभवेत् ॥ विश्रामोवाकथंमेस्याद्गंतव्यंत्वरितंमया ॥ ३३ ॥ इत्युक्त्वास्पृष्टशिखरःकराग्रे
णययौकपिः ॥ किंचिद्दूरंगतस्यास्यच्छायांछायाग्रहोऽग्रहीत् ॥ ३४ ॥ सिंहिकानामसाघोराजलमध्येस्थितासदा ॥ आकाशगामिनां
छायामाक्रम्याकृष्यभक्षयेत् ॥ ३५ ॥ तयागृहीतोहनुमांश्चिंतयामासवीर्यवान् ॥ केनेदंमेकृतंवेगरोधनंविघ्नकारिणा ॥ ३६ ॥ दृश्य
तेनैवकोऽप्यत्रविस्मयोमेप्रजायते ॥ एवंविचिंत्यहनुमानधोदृष्टिंप्रसारयत ॥ ३७ ॥ तत्रदृष्ट्वामहाकायांसिंहिकांघोररूपिणीम् ॥ पपात
सलिलेतूर्णंपद्भ्यामेवाहनद्रुषा ॥ ३८ ॥ पुनरुत्प्लुत्यहनुमान्दक्षिणाभिमुखोययौ ॥ ततोदक्षिणमासाद्यकूलंनानाफलद्रुमम् ॥ ३९ ॥
नानापक्षिमृगाकीर्णंनानापुष्पलतावृतम् ॥ ततोददर्शनगरंत्रिकूटाचलमूर्धनि ॥ ४० ॥ प्राकारैर्बहुभिर्युक्तंपरिखाभिश्चसर्वतः ॥ प्रवेक्ष्या
मिकथंलंकामितिचिंतापरोऽभवत् ॥ ४१ ॥ रात्रौवेक्ष्यामिसूक्ष्मोऽहंलंकांरावणपालिताम् ॥ एवंविचिंत्यतत्रैवस्थित्वालंकांजगामसः
॥ ४२ ॥ धृत्वासूक्ष्मंवपुर्द्वारंप्रविवेशप्रतापवान् ॥ तत्रलंकापुरीसाक्षाद्राक्षसीवेषधारिणी ॥ ४३ ॥

त्याश्चर्यम् । प्रसारयत्प्रासारयत् । अडभावआर्षः ॥ ३७ ॥ सिंहिकांतन्नाम्नींराक्षसीम् ॥ ३८ ॥ दक्षिणंकूलम् । सागरस्येतिशेषः॥ ३९ ॥ ४० ॥ बहुभिः
प्राकारैःअंतर्दुर्गमध्यदुर्गबहिर्दुर्गसंबंधिभिः परिखाःप्राकारबहिर्गर्ताः ॥ ४१ ॥ वेक्ष्यामिप्रवेक्ष्यामि । सूक्ष्मःसूक्ष्मशरीरोभूत्वेत्यर्थः । लंकांजगाम । रात्रा
वितिशेषः ॥ ४२ ॥ सूक्ष्मंवपुर्धृत्वाद्वारंप्रविवेश ॥ ४३ ॥

॥ ४४ ॥ रात्रौचोरवत्प्रविश्यगच्छसीतिशेषः । स त्वं क इत्येकः किंभवानित्यादिप्रश्नांतरम् ॥ ४५ ॥ ४६ ॥ ४७ ॥ अष्टाविंशतिपर्ययेइति । यद्यप्यन्यत्र चतुर्विंशतिमेपर्यायेत्रेतायांरामावतारोऽष्टाविंशविमेपर्यायेद्वापरांतेकृष्णमवतारइत्युक्तंतथाऽपिकल्पांतरपरतयाविरोधपरिहारोऽवसेयः ॥ ४८ ॥ योगमायाचसीतेतिजनिष्यतइत्यन्वयः ॥ कश्चित्अवतारपूर्वकालेप्रार्थितोजनिष्यतइत्यन्वयः ॥ ४९ ॥ ५० ॥ साचिव्यंसख्यम् ॥ ५१ ॥ ५२ ॥ ५३ ॥ यतस्त्वयाहंलं

प्रविशंतंहनूमंतंदृष्ट्वालंकाव्यतर्जयत् ॥ कस्त्वंवानररूपेणमामनादृत्यलंकिनीम् ॥ ४४ ॥ प्रविश्यचोरवद्रात्रौकिंभवान्कर्तुमिच्छति ॥ इत्युक्त्वारोषताम्राक्षीपादेनाभिजघानतम् ॥ ४५ ॥ हनुमानपितांवाममुष्टिनावज्ञयाहनत् ॥ तदैवपतिताभूमौरक्तमुद्वमतीभृशम् ॥ ४६ ॥ उत्थायप्राहसालंकाहनूमंतंमहाबलम् ॥ हनूमन्गच्छभद्रंतेजितालंकात्वयानघ ॥ ४७ ॥ पुराहंब्रह्मणाप्रोक्ताह्यष्टाविंशतिपर्यये ॥ त्रेतायुगेदाशरथीरामोनारायणोऽव्ययः ॥ ४८ ॥ जनिष्यतेयोगमायासीताजनकवेश्मनि ॥ भूभारहरणार्थायप्रार्थितोऽयंमयाक्वचित् ॥ ४९ ॥ सभार्योराघवोभ्रात्रागमिष्यतिमहावनम् ॥ तत्रसीतांमहामायांरावणोऽपहरिष्यति ॥ ५० ॥ पश्चाद्रामेणसाचिव्यंसुग्रीवस्यभविष्यति ॥ सुग्रीवोजानकींद्रष्टुंवानरान्प्रेषयिष्यति ॥ ५१ ॥ तत्रैकोवानरोरात्रावागमिष्यतितेंऽतिकम् ॥ त्वयाचभर्त्सितःसोऽपित्वांहनिष्यतिमुष्टिना ॥ ५२ ॥ तेनाहतात्वंव्यथिताभविष्यसियदानघे ॥ तदैवरावणस्यांतोभविष्यतिनसंशयः ॥ ५३ ॥ तस्मात्त्वयाजितालंकाजितंसर्वंत्वयानघ ॥ रावणांतःपुरवरेक्रीडाकाननमुत्तमम् ॥ ५४ ॥ तन्मध्येऽशोकवनिकादिव्यपादपसंकुला ॥ अस्तितस्यांमहावृक्षःशिंशपानाममध्यगः ॥५५॥ तत्रास्तेजानकीघोरराक्षसीभिःसुरक्षिता ॥ दृष्ट्वैवगच्छत्वरितंराघवायनिवेदय ॥५६॥ धन्याहमप्यद्यचिरायराघवस्मृतिर्ममासीद्भवपाशमोचनी ॥ तद्भक्तसंगोऽप्यतिदुर्लभोममप्रसीदतांदाशरथिःसदाहृदि ॥ ५७ ॥

काजितातस्मात्त्वयासर्वराक्षसकुलंजितम् । अथसीतास्थितिस्थानमाह । रावणांतःपुरेति ॥ ५४ ॥ ५५ ॥ ५६ ॥ यतोमेराघवस्मृतिरासीदतोऽहमपिधन्या ॥ तद्भक्तसंगस्यापिदुर्लभत्वंकिंवक्तव्यमितिभावः प्रसीदतांप्रसन्नःसआस्ताम् ॥ ५७ ॥

पुस्फोरस्फुरितमभवत् । भुजोवामएव । स्त्रियावामांगस्फुरणंशुभसूचकंपुंसोऽशुभदमितिभावः । अतींद्रियस्यइंद्रियाविषयस्यरामस्यदक्षांगंपुस्फोर । यद्वा । रामसं
बंधिअतींद्रियंगुप्तंयदिंद्रियंतस्यदक्षांगंदक्षिणभागःपुस्फोर । तत्स्फुरणंचस्त्रीलाभसूचकंपुंसामित्याहुः ॥ ५८ ॥ ॥ इति श्रीमदध्यात्मरामायणेसुंदरकांडेसेतौ
प्रथमःसर्गः ॥ १ ॥ ततइति सूक्ष्मतनुःसूक्ष्मवानररूपः ॥ १ ॥ सीतान्वेषणरूपकार्येच्छावान् विविच्यदृष्ट्वा ॥ २ ॥ ततोलंकावाक्यंस्मृत्वाहनूमान्शी

उल्लंघितेऽब्धौपवनात्मजेनधरासुतायाश्चदशाननस्य ॥ पुस्फोरवामाक्षिभुजश्चतीव्रंरामस्यदक्षांगमतींद्रियस्य ॥ ५८ ॥ ॥ इति श्रीम
दध्यात्मरामायणेउमामहेश्वरसंवादेसुंदरकांडेप्रथमःसर्गः ॥ १ ॥ ॥ ततोजगामहनुमाँल्लंकांपरमशोभनाम् ॥ रात्रौसूक्ष्मतनुर्भूत्वाबभ्राम
परितःपुरीम् ॥ १ ॥ सीतान्वेषणकार्यार्थीप्रविवेशनृपालयम् ॥ तत्रसर्वप्रदेशेषुविविच्यहनुमान्कपिः ॥ २ ॥ नापश्यज्जानकींस्मृत्वाततो
लंकाभिभाषितम् ॥ जगामहनुमाञ्छीघ्रमशोकवनिकांशुभाम् ॥ ३ ॥ सुरपादपसंबाधांरत्नसोपानवापिकाम् ॥ नानापक्षिमृगाकीर्णांस्व
र्णप्रासादशोभिताम् ॥ ४ ॥ फलैरानम्रशाखाग्रपादपैःपरिवारिताम् ॥ विचिन्वञ्जानकींतत्रप्रतिवृक्षंमरुत्सुतः ॥ ५ ॥ ददर्शाभ्रंलिहंतत्र
चैत्यप्रासादमुत्तमम् ॥ दृष्ट्वाविस्मयमापन्नोमणिस्तंभशतान्वितम् ॥ ६ ॥ समतीत्यपुनर्गत्वाकिंचिद्दूरंसमारुतिः ॥ ददर्शाशिंशपावृक्षम
त्यंतनिबिडच्छदम् ॥ ७ ॥ अदृष्टातपमाकीर्णंस्वर्णवर्णविहंगमम् ॥ तन्मूलेराक्षसीमध्येस्थितांजनकनंदिनीम् ॥ ८ ॥

घ्रंजगाम ॥ ३ ॥ सुरपादपाःकल्पवृक्षादयः ॥ ४ ॥ फलैरानम्राणिशाखाग्राणियेषांतैःपादपैः ॥ ५ ॥ अभ्रंलिहमत्युच्चंचैत्यप्रासादंदेवतास्थानविशेषम् ।
अत्युच्चत्वान्मणिस्तंभादियुतत्वाच्चविस्मयः ॥ ६ ॥ समतीत्येति ॥ चैत्यप्रासादमितिशेषः ॥ ७ ॥ अत्यंतनिबिडपत्रत्वादेवादृष्टआतपोयत्रजनैस्तंस्वर्णवर्णैर्वि
हंगमैःपक्षिभिराकीर्णंव्याप्तमित्यर्थेमयूरव्यंसकादित्वात्समासः ॥ ८ ॥

एकवेणींहरणदिनावधिसंस्काररहितामित्यर्थः । यद्वा । शोभार्थमन्यदावेणीत्रयबंधःपुरतोद्वयंपश्चादेकेति संप्रतितुसंस्काराराहित्यात्पृष्ठलंबिनीएकैवेत्यर्थः । दीनांस्वजनविरहादीनामिवशोचंतीम् । आत्मानमितिशेषः ॥ ९ ॥ १० ॥ शाखानामंतेप्रांतेयेछदाःपत्राणितेषांमध्यस्थःतद्दर्शनजानंदाभिनयःकृतार्थइत्यादि ॥ ११ ॥ १२ ॥ किमेतत् किंजन्योयंशब्दः ॥ १३ ॥ अलीयततद्दर्शनेनकरिष्यमाणकार्यभंगभियेतिभावः ॥ १४ ॥ १५ ॥ इत्येवंचिंतयन् रावणोराघवेणेतिश्लोकोक्तंचिंतयन्नित्यंसदाहृदिराममेवध्यायन्नास्तइतिशेषः । अतस्तस्मिन्दिनेपररात्रौ हनूमत्प्रवेशदिनरात्रिसंबंध्यपररात्रेइत्यर्थः । समासां

ददर्शहनुमान्वीरोदेवतामिवभूतले ॥ एकवेणींकृशांदीनांमलिनांबरधारिणीम् ॥ ९ ॥ भूमौशयानांशोचंतींरामरामेतिभाषिणीम् ॥ त्रातारंनाधिगच्छंतीमुपवासकृशांशुभाम् ॥ १० ॥ शाखांतच्छदमध्यस्थोददर्शकपिकुंजरः ॥ कृतार्थोऽहंकृतार्थोऽहंदृष्ट्वाजनकनंदिनीम् ॥ ११ ॥ मयैवसाधितंकार्यंरामस्यपरमात्मनः ॥ ततः किलकिलाशब्दोबभूवांतःपुराद्बहिः ॥ १२ ॥ किमेतदितिसंलीनोवृक्षपत्रेषुमारुतिः ॥ आयांतंरावणंतत्रस्त्रीजनैःपरिवारितम् ॥ १३ ॥ दशास्यंविंशतिभुजंनीलांजनचयोपमम् ॥ दृष्ट्वाविस्मयमापन्नःपत्रखंडेष्वलीयत ॥ १४ ॥ रावणोराघवेणाशुमरणंमेकथंभवेत् ॥ सीतार्थमपिनायातिरामःकिंकारणंभवेत् ॥ १५ ॥ इत्येवंचिंतयन्नित्यंराममेवसदाहृदि ॥ तस्मिन्दिनेऽपररात्रौरावणोराक्षसाधिपः ॥ १६ ॥ स्वप्नेरामेणसंदिष्टःकश्चिदागत्यवानरः ॥ कामरूपधरःसूक्ष्मोवृक्षाग्रस्थोऽनुपश्यति ॥ १७ ॥ इतिदृष्ट्वाऽद्भुतंस्वप्नंस्वात्मन्येवानुचिंत्यसः ॥ स्वप्नःकदाचित्सत्यःस्यादेवंतत्रकरोम्यहम् ॥ १८ ॥ जानकींवाक्छरैर्विद्धयदुःखितांनितरामहम् ॥ करोमिदृष्ट्वारामायनिवेदयतुवानरः ॥ १९ ॥ इत्येवंचिंतयन्सीतासमीपमगमद्द्रुतम् ॥ नूपुराणांकिंकिणीनांश्रुत्वासिंजितमंगना ॥ २० ॥

ताभावस्तदनित्यत्वात् ॥ १६ ॥ स्वप्नेनिद्रासमयेरामादिष्टःकश्चिद्वानरोलंकामागत्यवृक्षाग्रस्थोऽनुपश्यतिसीतामितिशेषः ॥ १७ ॥ इतिअद्भुतंस्वप्नंदृष्ट्वाअयंस्वप्नःकदाचित्सत्योभवेत् अतस्तत्रसीतासमीपंगत्वाएवंकरोमीति । अचिंतयदितिशेषः ॥ १८ ॥ यदचिंतयत्तदाह । जानकीमिति । विद्धयेतिल्यबार्षः । तांवाक्छरैर्विध्वानितरांदुःखितांकरोमितद्दृष्ट्वावानरोरामायनिवेदयतु । एवंहिरामःशीघ्रमागच्छेदितिभावः ॥ १९ ॥ नूपुराणिपादभूषणानि किंकिण्योजघनभूषणानिसिंजितंशब्दम् ॥ २० ॥



१सापि लोपामुद्रयाऽत्रिभार्यया गुम्फितैव ।

भीतासीतारूपांगनास्वात्मन्येवस्वशरीरेएवलीयमानास्थितेत्यन्वयः रामेऽर्पितंस्थापितमांतरंचित्तंयया ॥ २१ ॥ किमाहतदाह । सुमध्यमेत्यादि ॥२२॥२३॥
लोकाश्चारुरूपाःप्रयत्नेनसमंततोवीक्षमाणाअपिरामंनपश्यंति ॥ २४ ॥ त्वयिनिःस्पृहेणइच्छाहीनेन । पूर्णकामत्वादित्यांतरोऽर्थः । त्वयासदालिंगितोऽ
पि । ध्यानेनसदाहृदिचिंतनात् । अतएवसमीपस्थोऽपि । यद्वा । शक्तिशक्तिमतोरभेदात्सदालिंगितोविभुत्वाच्चसमीपस्थोयद्यपि ॥ २५ ॥ तथाऽप्यस्य
रामस्यहृदयेत्वद्विषयेस्नेहोनजायते । अतएवेयत्कालंत्वदुपेक्षातस्येतिभावः । सर्वत्रसमत्वात्तस्यनक्वापिस्नेहइतितत्त्वम् । किंचत्वत्कृतान्सर्वभोगां

सीताभीतालीयमानास्वात्मन्येवसुमध्यमा ॥ अधोमुख्यश्रुनयनास्थितारामार्पितांतरा ॥ २१ ॥ रावणोऽपितदासीतामालोक्याहसुम
ध्यमे ॥ मांदृष्ट्वाकिंवृथासुभ्रुस्वात्मन्येवविलीयसे ॥ २२ ॥ रामोवनचराणांहिमध्येतिष्ठतिसाऽनुजः ॥ कदाचिद्दृश्यतेकैश्चित्कदाचिन्नै
वदृश्यते ॥२३॥मयातुबहुधालोकाःप्रेषितास्तस्यदर्शने ॥ नपश्यंतिप्रयत्नेनवीक्षमाणाःसमन्ततः ॥२४॥ किंकरिष्यसिरामेणनिःस्पृहेण
सदात्वयि ॥ त्वयासदालिंगितोऽपिसमीपस्थोऽपिसर्वदा ॥ २५ ॥ हृदयेऽस्यनचस्नेहस्त्वयिरामस्यजायते ॥ त्वत्कृतान्सर्वभोगांश्चत्व
द्गुणानपिराघवः ॥ २६ ॥ भुंजानोऽपिनजानातिकृतघ्नोनिर्गुणोऽधमः ॥ त्वमानीतामयासाध्विदुःखशोकसमाकुला ॥ २७ ॥ इदानी
मपिनायातिभक्तिहीनःकथंव्रजेत् ॥ निःसत्वोनिर्ममोमानीमूढःपंडितमानवान् ॥ २८ ॥ नराधमंत्वद्विमुखंकिंकरिष्यसिभामिनि ॥
त्वय्यतीवसमासक्तंमांभजस्वासुरोत्तमम् ॥ २९ ॥

स्त्वयास्ववृत्तिद्वारोपनीतान्सर्वभोगान्सर्वविषयान्तथात्वद्गुणान्सुखसंकल्पकामादीन्भुंजानोऽपिअहंभोक्तेतिनजानाति । तथाभिमानराहित्यात् । अतए
वकृतघ्नः । अतएवनिर्गुणः । योहिगुणवान्सउपकारंमनुतएव । अधमःउपकाराविस्मरणात् । किंचनधमतिशब्दविषयोभवतीत्यधमःशब्दावाच्यइतियावत् ।
कृतघ्नत्वाद्युपपादयति । त्वमिति ॥ २६ ॥ २७ ॥ यतस्त्वयिभक्तिहीनोऽतःकथंव्रजेत् । स्वस्थानतस्त्वत्परित्राणार्थमिमंदेशमित्यर्थः । निःसत्वंनिर्बलः
निर्ममोममताहीनः त्वयिइयंममेतिबुद्धिहीनः ॥ २८ ॥ नराधमम् । पंचम्यर्थेबहुव्रीहिरितिकश्चित् । किंकरिष्यसि । तादृशेऽनुरागेणकिंप्रयोजनमित्यर्थः ।
असुरोत्तममितिनराधमव्यतिरेकउक्तः ॥ २९ ॥

देवगंधर्वनागानांवयोषितामित्यर्थः । नियोक्त्रीप्रभुतयाआज्ञापयित्री प्रतिपद्यसेअंगीकरोषि ॥ ३० ॥ निधायतृणमंतरे । पतिव्रतायाःसाक्षात्परपुरुषेणवार्तालाप स्यानौचित्यादितिभावः । त्वंचतृणतुल्यइत्यपिद्योतयितुंच ॥ ३१ ॥ शुनीवेत्युपमयाअत्यंतंपराक्रमराहित्यंसूचितम् ॥ ३२ ॥ अचिरादितिच्छेदः । अल्पेनै वकालेनेत्यर्थः । यदारामशराघातैर्विदारितवपुर्भवान्भविष्यतीतिशेषः ॥ ३३ ॥ तदारामंमानुषंज्ञास्यसियमांतिकंचगमिष्यसि । शरैःसमुद्रंशोषयित्वावा ॥ अथ अथवावारिधिंबद्धासेतुबंधेनेतिशेषः ॥ ३४ ॥ तदागमनंचत्वमनुपदमेवद्रक्ष्यसेइत्यन्वयः ॥ ३५ ॥ जानक्याःपरुषाक्षरंवाक्यंश्रुत्वाक्रुद्धोऽभवदितिशेषः॥ ३६॥

देवगंधर्वनागानांयक्षकिन्नरयोषिताम् ॥ भविष्यसिनियोक्त्रीत्वंयदिमांप्रतिपद्यसे ॥ ३० ॥ रावणस्यवचःश्रुत्वासीताऽमर्षसमन्विता ॥ उवाचाधोमुखीभूत्वाविधायतृणमंतरे ॥ ३१ ॥ राघवाद्बिभ्यतानूनंभिक्षुरूपंत्वयाधृतम् ॥ रहितेराघवाभ्यांत्वंशुनीवहविरध्वरे ॥ ३२ ॥ हृतवानसिमांनीचतत्फलंप्राप्स्यसेऽचिरात् ॥ यदारामशराघातविदारितवपुर्भवान् ॥ ३३ ॥ ज्ञास्यसेमानुषंरामंगमिष्यसियमांतिकम् ॥ समुद्रंशोषयित्वावाशरैर्बद्धाथवारिधिम् ॥ ३४ ॥ हंतुंत्वांसमरेरामोलक्ष्मणेनसमन्वितः ॥ आगमिष्यत्यसंदेहोद्रक्ष्यसेराक्षसाधम ॥ ३५ ॥ त्वांसपुत्रंसहबलंहत्वानेष्यतिमांपुरम् ॥ श्रुत्वारक्षःपतिःक्रुद्धोजानक्याःपरुषाक्षरम् ॥ ३६ ॥ वाक्यंक्रोधसमाविष्टःखड्गमुद्यम्यसत्वरः॥हंतुंजनकराजस्यतनयांताम्रलोचनः॥३७॥ मंदोदरीनिवार्याहपतिंपतिहितेरता ॥ त्यजैनांमानुषींदीनांदुःखितांकृपणांकृशाम् ॥३८॥ देवगंधर्वनागानांबह्व्यःसंतिवरांगनाः ॥ त्वामेववरयंत्युच्चैर्मदमत्तविलोचनाः ॥३९॥ ततोऽब्रवीद्दशग्रीवोराक्षसीर्विकृताननाः ॥ यथामेवशगासीताभविष्यतिसकामना ॥ तथायतध्वंत्वरितंतर्जनादरणादिभिः ॥ ४० ॥ द्विमासाभ्यंतरेसीतायदिमेवशगाभवेत् ॥ तदासर्वसुखोपेताराज्यंभोक्ष्यतिसामया ॥ ४१ ॥

ततःक्रोधसमाविष्टःखड्गमुद्यम्यजनकराजतनयांहंतुमुद्यतोऽभवदितिशेषः ॥ ३७ ॥ अन्यानुरक्तत्वात्तद्वियोगाच्चदैन्यादिविशिष्टाम् ॥३८॥ यास्त्वामेववरयंतिताब ह्व्यःसंतीतियोजना । मदेनकाममदेनमत्तेमदयुक्तेइवविलोचनेयासांताः ॥ ३९ ॥ सकामनामद्विषयकामनासहितासतीयथामेवशगाभविष्यतिनतुबलात्तथायतध्वमि त्यन्वयः । तर्जनंभीषणम् । आदरणंसांत्वम् ॥ ४० ॥ ४१ ॥

कुरुतपक्वाकुरुतेत्यर्थः ॥ ४२ ॥ स्वतर्जनैःस्वबुद्धिकल्पितभीषणोपायैः स्वक्रौर्ययोग्यैर्वा ॥ ४३ ॥ इदंसांतस्याप्युपलक्षणम् । तदेवाह । तत्रैकेति ॥ ४४ ॥
भीषणान्याह । अपराचेति । किंविलंबेन । अस्यावधेइतिशेषः । जानकीइदानीमेवच्छेद्यताम् । अस्याअंगंपृथक्पृथक्विभज्यपच्यतामिति शेषः ॥४५॥४६॥
॥ ४७ ॥ मद्वाक्यंशृणुध्वम् यच्छ्रुतंसद्वोहितंभवेत् ॥ ४८ ॥ वाक्यमाह । नेति । इदानीमेवमेमयारामःस्वमेदृष्टइत्यन्वयः ॥ ४९ ॥ कथंदृष्टस्तदाह ।

यदिमासद्वयादूर्ध्वंमच्छय्यांनाभिनंदति ॥ तदामेप्रातराशायहत्वाकुरुतमानुषीम् ॥ ४२ ॥ इत्युक्त्वाप्रययौस्त्रीभीरावणोंऽतःपुरालयम् ॥
राक्षस्योजानकीमित्यभीषयंत्यःस्वतर्जनैः ॥ ४३ ॥ तत्रैकाजानकीमाहयौवनंतेवृथागतम् ॥ रावणेनसमासाद्यसफलंतुभविष्यति ॥४४॥
अपराचाहकोपेनकिंविलंबेनजानकी ॥ इदानींछेद्यतामंगंविभज्यचपृथक्पृथक् ॥ ४५ ॥ अन्यातुखड्गमुद्यम्यजानकींहंतुमुद्यता ॥
अन्याकरालवदनाविदार्यास्यमभीषयत् ॥४६॥ एवंतांभीषयंतीस्ताराक्षसीर्विकृताननाः ॥ निवार्यत्रिजटावृद्धाराक्षसीवाक्यमब्रवीत् ॥
॥ ४७ ॥ शृणुध्वंदुष्टराक्षस्योमद्वाक्यंवोहितंभवेत् ॥ ४८ ॥ नभीषयध्वंरुदतींनमस्कुरुतजानकीम् ॥ इदानीमेवमेस्वप्नेरामःकमललो
चनः ॥ ४९ ॥ आरुह्यैरावतंशुभ्रंलक्ष्मणेनसमावृतः ॥ दग्ध्वालंकापुरींसर्वांहत्वारावणमाहवे ॥५०॥ आरोप्यजानकींस्वांकेस्थितोदृष्टोऽ
गमूर्धनि ॥ रावणोगोमयह्रदेतैलाभ्यक्तोदिगंबरः ॥ ५१ ॥ अगाहत्पुत्रपौत्रैश्चकृत्वावदनमालिकाम् ॥ विभीषणस्तुरामस्यसन्निधौहृष्ट
मानसः ॥ ५२ ॥ सेवांकरोतिरामस्यपादयोर्भक्तिसंयुतः ॥ सर्वथारावणंरामोहत्वासकुलमंजसा ॥५३॥ विभीषणायाधिपत्यंदत्त्वासी
तांशुभाननाम् ॥ अंकेनिधायस्वपुरींगमिष्यतिनसंशयः ॥ ५४ ॥ त्रिजटायावचःश्रुत्वाभीतास्ताराक्षसस्त्रियः ॥ तूष्णीमासंस्तत्रतत्रनि
द्रावशमुपागताः ॥ ५५ ॥

आरुह्येति । समागतःसंयुक्तः ॥ ५० ॥ स्वांकेजानकीमारोप्यअगस्त्यपर्वतस्यमूर्धनिऊर्ध्वभागेस्थितोदृष्टः । एवंरामविषयंशुभस्वप्नमुक्त्वारावणविषयमनिष्टस्वप्न
माह । रावणइति ॥ ५१ ॥ वदनमालिकांस्वमुंडमालांस्वहस्तेकृत्वागाहदित्यर्थः । नन्वेवंकिंलंकाऽराक्षसैवभविष्यतीत्याशंक्यनेत्याह । विभीषणइति । राम
स्यसेवांकरोतिएवंविधःस्वप्नेदृष्टोऽतःसोऽत्रराज्यंकर्तेत्याह । सर्वथेत्यादि ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥

त्रातारमप्राप्नुवतीदुःखेनमूर्च्छितामूर्च्छितेवाश्रुयुक्तनेत्राचिंतयंतीदमात्मनासहाब्रवीत् ॥ ५६ ॥ ५७ ॥ मृतौकृतनिश्चयामरणस्यकंचिदुपायंकमप्युपायम जानतीशाखामालंब्यचिरायातिष्ठदितिशेषः ॥ ५८ ॥ इति श्रीमत्समस्त० अध्यात्मरामायणसेतौसुंदरकांडेद्वितीयः सर्गः ॥ २ ॥ ॥ ततस्तदुपायंनिश्चित्याह उद्बंधनेनवेति ॥ १ ॥ उद्बंधनसाधनमाह । दीर्घवेणीति । अथानंतरमेवंमरणायनिश्चितबुद्धिंजानकींविलोक्येत्यन्वयः ॥ २ ॥ किंचिद्विचार्यअयं वचनावसरइतिनिश्चित्यसूक्ष्मरूपःसन् जानक्यास्तस्याएवश्रोत्रगंयथाभवतितथाशनैःशनैरभाषतेत्यन्वयः ॥ ३ ॥ तद्वचआह । इक्ष्वाकिति ॥ ४ ॥

तर्जिताराक्षसीभिःसासीताभीतातिविह्वला ॥ त्रातारंनाधिगच्छंतीदुःखेनपरिमूर्च्छिता ॥५६॥ अश्रुभिःपूर्णनयनाचिंतयंतीदमब्रवीत् ॥ प्रभातेभक्षयिष्यंतिराक्षस्योमांनसंशयः ॥ इदानीमेवमरणंकेनोपायेनमेभवेत् ॥५७॥ एवंसुदुःखेनपरिप्लुतासाविमुक्तकंठंरुदतीचिराय ॥ आलंब्यशाखांकृतनिश्चयामृतौनजानतीकंचिदुपायमंगना ॥५८॥ ॥ इति श्रीमदध्यात्मरामायणउमाम० सुंदरकांडेद्वितीयःसर्गः ॥ ॥ २ ॥ ॥ उद्बंधनेनवामोक्ष्येशरीरंराघवंविना ॥ जीवितेनफलंकिंस्यान्ममरक्षोधिमध्यतः ॥ १ ॥ दीर्घवेणीममात्यर्थमुद्बंधायभविष्यति ॥ एवंनिश्चितबुद्धिंतांमरणायाथजानकीम् ॥ २ ॥ विलोक्यहनुमान्किंचिद्विचार्यैतदभाषत ॥ शनैःशनैःसूक्ष्मरूपोजानक्याःश्रोत्रगंवचः ॥ ३ ॥ इक्ष्वाकुवंशसंभूतोराजादशरथोमहान् ॥ अयोध्याधिपतिस्तस्यचत्वारोलोकविश्रुताः ॥४॥ पुत्रादेवसमाःसर्वेलक्षणैरुपलक्षिताः ॥ रामश्चलक्ष्मणश्चैवभरतश्चैवशत्रुहा ॥ ५ ॥ ज्येष्ठोरामःपितुर्वाक्याद्दंडकारण्यमागतः ॥ लक्ष्मणेनसहभ्रात्रासीतयाभार्ययासह ॥ ६ ॥ उवासगौतमीतीरेपंचवट्यांमहामनाः ॥ तत्रनीतामहाभागासीताजनकनंदिनी ॥ ७ ॥ रहितेरामचंद्रेणरावणेनदुरात्मना ॥ ततोरामोऽतिदुःखार्तोमार्गमाणोऽथजानकीम् ॥ ८ ॥ जटायुषंपक्षिराजमपश्यत्पतितंभुवि ॥ तस्मैदत्त्वादिवंशीघ्रमृष्यमूकमुपागमत् ॥ ॥ ९ ॥ सुग्रीवेणकृतामैत्रीरामस्याविदितात्मनः ॥ तद्भार्यापहारिणंहत्वावालिनंरघुनंदनः ॥ १० ॥

लक्षणैःसामुद्रिकोक्तोत्तमलक्षणैःशत्रुहाशत्रुघ्नाख्यइत्यर्थः ॥ ५ ॥ ६ ॥ रावणेननीतेत्यन्वयः ॥ ७ ॥ मार्गमाणःअन्वेषयन् ॥ ८ ॥ दिवंस्वर्लोकंतल्लोकवासमितियावत् ॥ ९ ॥ रामस्यसंकल्पमात्रात्सर्वसाधकस्यनवानरमैत्र्याःप्रयोजनमित्यौद्धत्यपरिहारायसुग्रीवेणकृतेत्युक्तंनतुरामेणकृतेति । तद्भार्यापहारिणंसुग्रीवभार्यापहारिणम् ॥ १० ॥

मित्रकार्यंसुग्रीवकृतमित्रत्वकार्यम् सहायभूतान्समानीयनानापर्वतादिभ्योदूतैर्वानरान्किष्किंधांसमानाय्य ॥ ११ ॥ तान्वानरान्सीतायाःपरिमार्गणेतान्नि मित्तंपरितःप्रेषयामासेत्यन्वयः ॥ १२ ॥ समुद्रमुल्लंघ्यलंकानगरींदृष्टातत्रतत्रजानकींविचिन्वन्शनैःक्रमेणाशोकवनिकांदृष्ट्वातत्रतांविचिन्वन्शिंशपातरुं दृष्टवान् अत्रशिंशपामूले जानकीमद्राक्षमथोऽत्रागतोऽहंकृतकृत्यः । संवृत्तइतिशेषः ॥ १३ ॥ १४ ॥ १५ ॥ वायुनेति । तस्यजगत्क्रियासाक्षित्वात्ते नकथितत्वसंभावना ॥ १६ ॥ स्वप्नोवेत्यादिविकल्पत्रयम् सत्यंस्वप्नभ्रमातिरिक्तंकिंचित्कर्तृकंभ्रमाजनकंवाक्यमित्यर्थः । तत्रदुःखहेतुनानिद्राभावात्स्वप्नस्यासं

राज्येऽभिषिच्यसुग्रीवंमित्रकार्यंचकारसः ॥ सुग्रीवस्तुसमानाय्यवानरान्वानरप्रभुः ॥११॥ प्रेषयामासपरितोवानरान्परिमार्गणे ॥ सीता यास्तत्रचैकोऽहंसुग्रीवसचिवोहरिः ॥ १२ ॥ संपातिवचनाच्छीघ्रमुल्लंघ्यशतयोजनम् ॥ समुद्रंनगरींलंकांविचिन्वञ्जानकींशुभाम् ॥ ॥ १३ ॥ शनैरशोकवनिकांविचिन्वञ्शिंशपातरुम् ॥ अद्राक्षंजानकीतत्रशोचंतींदुःखसंप्लुताम् ॥ १४ ॥ रामस्यमहिषींदेवींकृतकृत्योऽ हमागतः ॥ इत्युक्त्वोपरराामाथमारुतिर्बुद्धिमत्तरः ॥ १५ ॥ सीताक्रमेणतत्सर्वंश्रुत्वाविस्मयमाययौ ॥ किमिदंमेश्रुतंव्योम्निवायुनास मुदीरितम् ॥ १६ ॥ स्वप्नोवामेमनोभ्रांतिर्यदिवासत्यमेवतत् ॥ निद्रामेनास्तिदुःखेनजानाम्येतत्कुतोभ्रमः ॥ १७ ॥ येनमेकर्णपीयूषंव चनंसमुदीरितम् ॥ सदृश्यतांमहाभागःप्रियवादीममाग्रतः ॥ १८ ॥ श्रुत्वातज्जानकीवाक्यंहनुमान्पत्रखण्डतः ॥ अवतीर्यशनैःसीतापुर तःसमवस्थितः ॥ १९ ॥ कलविंकप्रमाणाङ्गोरक्तास्यःपीतवानरः ॥ ननामशनकैःसीतांप्रांजलिःपुरतःस्थितः ॥ २० ॥ दृष्ट्वातंजानकी भीतारावणोऽयमुपागतः ॥ मांमोहयितुमायातोमाययावानराकृतिः ॥ २१ ॥

भवः । भ्रमोऽपिनेत्याह । जानाम्येवत एतत्पदार्थजातंयथास्थितस्वरूपेणजानामिअतोनभ्रमसंभवः । यद्वा । भ्रांतःस्वाज्ञानेभ्रमत्वंनविकल्पयतिममचतथावि कल्पोऽतोनभ्रमइतिभावः ॥ १७ ॥ तस्मात्सत्यत्वमेवनिश्चित्याह । येनेति । सममाग्रतोदृश्यताम् । ममाग्रतोभूत्वात्मानंदर्शयत्वित्यर्थः ॥ १८ ॥ पत्रखंडतः पत्रसमूहात् ॥ १९ ॥ कलविंकश्चटकः । भाषायांचिमणा चिमणी । चटकःकलविंकःस्यात्तस्यस्त्रीचटकातयोः । पुमपत्येचाटकैरस्त्र्यपत्येचटकैवहि ॥ इत्यमरः । पीतवर्णोवानरःपीतवानरः ॥ २० ॥ २१ ॥

॥ २२ ॥ शंकांरावणत्वशंकाम् । परमात्मनइतितत्स्वरूपाभिन्नत्वेनतद्दासत्वसत्यताप्रत्यायनाय ॥ २३ ॥ २४ ॥ २५ ॥ यथात्वंदासोऽहमितिभाषसेतथावानरमनुष्ययोःसंगतिःप्रतीयतेसात्रकथंघटतइत्यर्थः ॥ २६ ॥ शबर्येति । भगवतात्वद्वृत्तांतेशबरींप्रतिपृष्टेसतिसुग्रीवसमीपंगच्छससीतामार्गणंकरिष्यतीतितयोक्तइत्यर्थः ॥ २७ ॥ भीतोवालिप्रेरितत्वभ्रांत्या ॥ २८ ॥ तौरामलक्ष्मणौ सख्यंचअकरवम् । कारितवानित्यर्थः अंतर्भावितण्यर्थः ॥ २९ ॥

इत्येवंचिंतयित्वासातूष्णीमासीदधोमुखी ॥ पुनरप्याहतांसीतांदेवियत्त्वंविशंकसे ॥२२॥ नाहंतथाविधोमातस्त्यजशंकांमयिस्थिताम् ॥ दासोऽहंकोसलेंद्रस्यरामस्यपरमात्मनः ॥ २३ ॥ सचिवोऽहंहरींद्रस्यसुग्रीवस्यशुभप्रदे ॥ वायोःपुत्रोऽहमखिलप्राणभूतस्यशोभने ॥ ॥ २४ ॥ तच्छ्रुत्वाजानकीप्राहहनूमन्तंकृतांजलिम् ॥ वानराणांमनुष्याणांसंगतिर्घटतेकथम् ॥ २५ ॥ यथात्वंरामचंद्रस्यदासोहमितिभाषसे ॥ तामाहमारुतिः प्रीतोजानकींपुरतःस्थितः ॥ २६ ॥ ऋष्यमूकमगाद्रामःशबर्यानोदितःसुधीः॥ सुग्रीवोऋष्यमूकस्थोदृष्टवान्रामलक्ष्मणौ ॥ २७॥ भीतोमांप्रेषयामासज्ञातुंरामस्यहृद्गतम् ॥ ब्रह्मचारिवपुर्धृत्वागतोऽरांहमसन्निधिम् ॥ २८ ॥ ज्ञात्वारामस्यसद्भावंस्कंधोपरिनिधायतौ ॥ नीत्वासुग्रीवसामीप्यंसख्यंचाकरवंतयोः ॥ २९ ॥ सुग्रीवस्यहृताभार्यावालिनातंरघूत्तमः ॥ जघानैकेनबाणेन ततोराज्येऽभ्यषेचयत् ॥ ३० ॥ सुग्रीवंवानराणांसप्रेषयामासवानरान् ॥ दिग्भ्योमहाबलान्वीरान्भवत्याःपरिमार्गणे ॥ ३१ ॥ गच्छंतंराघवोदृष्ट्वामामभाषतसादरम् ॥ ३२ ॥ त्वयिकार्यमशेषंमेस्थितंमारुतनंदन ॥ ब्रूहिमेकुशलंसर्वंसीतायैलक्ष्मणस्यच ॥ ३३ ॥ अंगुलीयकमेतन्मेपरिज्ञानार्थमुत्तमम् ॥ सीतायैदीयतांसाधुमन्नामाक्षरमुद्रितम् ॥ ३४ ॥

तंवालिनंजघान वानराणांराज्येऽभ्यषेचयत्सुग्रीवमित्यत्वयः ॥ ३० ॥ ससुग्रीवोभवत्याःपरिमार्गणेतन्निमित्तंवानरान्प्रेषयामास ॥ ३१ ॥ ३२ ॥ अशेषंकार्यंत्वयिस्थितंत्वमेवसकलकार्यसाधनेसमर्थः मे मम ॥ ३३ ॥ मेएतदंगुलीयकंसीतायैपरिज्ञानार्थंरामीयएवायमितिनिश्चयार्थंदयिताम् । मन्नामाक्षरमुद्रितंमन्नामाक्षरमुद्रयायुतम् ॥ ३४ ॥

॥ ३५ ॥ नमःकृत्वामुद्रिकांददौ पुनर्नमःकृत्वाचदूरात्स्थितः । अनेनदानवेळायांकिंचित्समीपमुपसृतइतिज्ञायते ॥ ३६ ॥ मुद्रिकांदृष्ट्वाप्रमुदिताजाता ततः शिरसाधृत्वास्रवदानंदनेत्रजाजाता स्रवंतिआनंदेननेत्रजान्यश्रूणियस्याःसा ॥ ३७ ॥ कपेमुद्रिकारक्षणाद्बुद्धिमांस्त्वंमेप्राणदातासिराघवेभक्तोऽसित्वस्यप्रिय कारीचासि अतोराघवस्यतवैवविश्वासोऽस्तीतिमन्येच ॥ ३८ ॥ विश्वास्यत्वांयुक्त्यासाधयति । नोचेदिति । नोचेत्त्वयिविश्वासश्चेन्नस्यात्तदान्यमविश्वस्तं पुरुषरूपंत्वांकथंमत्संनिधिंप्रेषयेत् ॥ ३९ ॥ यथामेमयिराघवस्यदयाजायतेतथासर्वंराक्षसीकृततर्जनादिकथयेत्यर्थः । मासद्वयेति । अग्रेमरणमेव त्वदग्रे

इत्युक्त्वाप्रददौमह्यंकराग्रादंगुलीयकम् ॥ प्रयत्नेनमयाऽऽनीतंदेविपश्यांगुलीयकम् ॥ ३५॥ इत्युक्त्वाप्रददौदेव्यैमुद्रिकांमारुतात्मजः॥ नमःकृत्वास्थितोदूराद्बद्धांजलिपुटोहरिः ॥ ३६ ॥ दृष्ट्वासीताप्रमुदितारामनामांकितांतदा ॥ मुद्रिकांशिरसाधृत्वास्रवदानंदनेत्रजा ॥ ३७ ॥ कपेमेप्राणदातात्वंबुद्धिमानसिराघवे ॥ भक्तोऽसिप्रियकारीत्वंविश्वासोऽस्तितवैवहि ॥ ३८ ॥ नोचेन्मत्सन्निधिंचान्यं पुरुषंप्रेषयेत्कथम् ॥ हनुमन्दृष्टमखिलंममदुःखादिकंत्वया ॥ ३९ ॥ सर्वंकथयरामाययथामेजायतेदया ॥ मासद्वयावधिप्राणाःस्थास्यंतिममसत्तम ॥ ४० ॥ नागमिष्यतिचेद्रामोभक्षयिष्यतिमांखलः ॥ अतःशीघ्रंकपींद्रेणसुग्रीवेणसमन्वितः ॥ ४१ ॥ वानरानीकपैःसार्धंहत्वारावणमाहवे ॥ सपुत्रंसबलंरामोयदिमांमोचयेत्प्रभुः ॥ ४२ ॥ तत्तस्यसदृशंवीर्यंवीरवर्णयवर्णितम् ॥ यथामांतारयेद्रामोहत्वाशीघ्रंदशाननम् ॥ ४३ ॥ तथायतस्वहनुमन्वाचाधर्ममवाप्नुहि ॥ हनूमानपितामाहदेविदृष्टोयथामया ॥ ४४ ॥ रामःसलक्ष्मणःशीघ्रमागमिष्यतिसायुधः ॥ सुग्रीवेणससैन्येनहत्वादशमुखंबलात् ॥ ४५ ॥ समानेष्यतिदेवित्वामयोध्यांनात्रसंशयः ॥ तमाहजानकीरामःकथंवारिधिमाततम् ॥ ४६ ॥

एवरावणेनतथाप्रतिज्ञातत्वादितिभावः ॥ ४० ॥ तदेवाह । नागमिष्यतीति ॥ ४१ ॥ वानरानीकपैःसार्धमत्रागत्यरावणमुक्तविशेषणंहत्वायदिमांप्रभुर्मोचयेत्तत्कृतबंधनादितिशेषः ॥ ४२ ॥ तत्तदा वीरवर्णयत्राह्मणैश्चवर्णितंतस्यवीर्यसदृशंभवेत्यथावर्णितंभवेत् अन्यथाविपरीतमेवेत्यर्थः ॥ ४३ ॥ अतस्तथेति वाचावचनकृतरामप्रेरणया धर्मंबंदीमोक्षजम् । यथायथारूपोदृष्टस्तथाजानेशीघ्रमागमिष्यतीत्यादि ॥ ४४ ॥ ४५ ॥ तंहनूमंतंजानकीआह । किमाह । रामइत्यादि ॥ ४६ ॥

हनूमानुत्तरयति । मेरुस्कंधावित्यादि ॥ ४७ ॥ आततंविस्तीर्णम् ॥ ४८ ॥ ४९ ॥ भ्रात्रासहरामंद्रष्टुंगच्छामिगत्वाचतवांतिकमागंतुंत्वरयामि राघवःयथामांविश्वसेत्जानकींसर्वथादृष्ट्वानितितथाकिंचिदभिज्ञानंदेहि ॥ ५० ॥ ततोऽहंसमुत्सुकःरामदर्शनोत्सुकः प्रयत्नेनत्वद्दत्ताभिज्ञानंरक्षन्गंता राघवसमीपमितिशेषः । किंचिद्विचार्यतद्वचसोयुक्तत्वंविचार्य ॥ ५१ ॥ ५२ ॥ ५३ ॥ ऐंद्रःइंद्रलोकस्थःकाकरूपधरइंद्रपुत्रइत्यर्थः । आमिषंमांसम् ॥ ५४ ॥ एतत्त्वत्पादांगुष्ठवि



तीर्त्वायास्यत्यमेयात्मावानरानीकपैःसह ॥ हनुमानाहमेरुस्कंधावारुह्यपुरुषर्षभौ ॥ ४७ ॥ आयास्यतःससैन्यश्चसुग्रीवोवानरेश्वरः ॥ विहायसाक्षणेनैवतीर्त्वावारिधिमाततम् ॥ ४८ ॥ निर्दहिष्यतिरक्षौघांस्त्वत्कृतेनात्रसंशयः ॥ अनुज्ञांदेहिमेदेविगच्छामित्वरयान्वितः ॥ ४९ ॥ द्रष्टुंरामंसहभ्रात्रात्वरयामितवांतिकम् ॥ देविकिंचिदभिज्ञानंदेहिमेयेनराघवः ॥ ५० ॥ विश्वसेन्मांप्रयत्नेनततोगंतासमुत्सुकः ॥ ततःकिंचिद्विचार्याथसीताकमललोचना ॥ ५१ ॥ विमुच्यकेशपाशांतेस्थितंचूडामणिंददौ ॥ अनेनविश्वसेद्रामस्त्वांकपींद्रसलक्ष्मणः ॥ ५२ ॥ अभिज्ञानार्थमन्यच्चवदामितवसुव्रत ॥ चित्रकूटगिरौपूर्वमेकदारहस्थितः ॥ मदंकेशिरआधायानिद्रातिरघुनंदनः ॥ ५३ ॥ ऐंद्रःकाकस्तदागत्यनखैस्तुंडेनचासकृत् ॥ ५४ ॥ मत्पादांगुष्ठमारक्तंविददारामिषाशया ॥ ततोरामःप्रबुध्याथदृष्ट्वापादंकृतव्रणम् ॥ ५५ ॥ केनभद्रेकृतंचैतद्विप्रियंमेदुरात्मना ॥ इत्युक्त्वापुरतोऽपश्यद्वायसंमांपुनःपुनः ॥ ५६ ॥ अभिद्रवंतंरक्तास्यनखतुडंचुकोपह ॥ तृणमेकमुपादायदिव्यास्त्रेणाभियोज्यतत् ॥ ५७ ॥ चिक्षेपलीलयारामोवायसोपरितज्ज्वलत् ॥ अभ्यद्रवद्वायसश्चभीतोलोकान्भ्रमन्पुनः ॥ ५८ ॥ इंद्रब्रह्मादिभिश्चापिनशक्योरक्षितुंतदा ॥ रामस्यपादयोरग्रेऽपतद्भीत्यादयानिधेः ॥ ५९ ॥

दारणरूपम् ॥ ५५ ॥ मांपुनःपुनरभिद्रवंतमित्यन्वयः । रक्तमास्यंनखतुंडंयस्यतम् ॥ ५६ ॥ ज्वलत्तत्अभिमंत्रितंतृणंवायसमभ्यद्रवत् ॥ ५७ ॥ सवायसोऽपिभीतःलोकान्ऐंद्रब्रह्मांतान्भ्रमंस्तत्रैतैरपियदारक्षितुंशक्योनाभवत्तदा ॥ ५८ ॥ रामपदाग्रेऽपतत् ॥ ५९ ॥

ततःकाकोगतइतिशेषः । एवंपौरुषवानपिसराघवःइदानीमपिएवमवस्थायामपियदुपेक्षतेतत्किमर्थम् ॥ ६०॥६१ ॥ जानाति । वर्तमानसामीप्येलट् । ज्ञास्यती
त्यर्थः ॥ ६२ ॥ यथात्वंसूक्ष्मवपुस्तथासर्वेऽपिवानराभवादृशाः । भवद्वदेवसूक्ष्मवपुषइतिमहावपुर्भीराक्षसैर्युद्धमसंभावितमित्यर्थः ॥ ६३ ॥ श्रुत्वातद्वचनंसीता
याइतिशेषः । देव्यैसीतायै ॥ ६४ ॥ ६५ ॥ त्वांराक्षस्योद्रक्ष्यंति दृष्ट्वाचरावणंकथयिष्यंति । एवंसतिकोवेदकिंभावीत्याशयः । अतोरामांतिकंद्रुतंगच्छ
तेपंथाःशुभोस्त्वितिशेषः ॥ ६६ ॥ कपिर्जानकींप्राहाहंबुभुक्षितोऽस्मिअतस्तवदर्शानान्ममपारणमुचितमितिशेषः । नन्वहंरिक्ताकेनत्वांपारयामीतिशंकायामाह ।

शरणागतमालोक्यरामस्तमिदमब्रवीत् ॥ अमोघमेतदस्त्रंमेदत्त्वेकाक्षमितोव्रज ॥ ६० ॥ सव्यंदत्त्वाततःकाकएवंपौरुषवानपि ॥ उपेक्षते
किमर्थमामिदानींसोऽपिराघवः ॥ ६१ ॥ हनूमानपितामाहश्रुत्वासीतानुभाषितम् ॥ देवित्वांयदिजानातिस्थितामत्ररघूत्तमः ॥ ६२ ॥
करिष्यतिक्षणाद्भस्मलंकांराक्षसमंडिताम् ॥ जानकीप्राहतंवत्सकथंत्वंयोत्स्यसेऽसुरैः ॥ ६३ ॥ अतिसूक्ष्मवपुःसर्वेवानराश्चभवादृशाः ॥
श्रुत्वातद्वचनंदेव्यैपूर्वंरूपमदर्शयत् ॥ ६४ ॥ मेरुमंदरसंकाशंरक्षोगणविभीषणम् ॥ दृष्ट्वासीताहनूमंतंमहापर्वतसन्निभम् ॥ ६५ ॥ हर्षे
णमहताविष्टाप्राहतंकपिकुंजरम् ॥ समर्थोऽसिमहासत्त्वद्रक्ष्यंतित्वांमहाबलम् ॥ राक्षस्यस्तेशुभःपंथागच्छरामांतिकंद्रुतम् ॥ ६६ ॥
बुभुक्षितःकपिःप्राहदर्शनात्पारणंमम ॥ भविष्यतिफलैःसर्वैस्तवदृष्टौस्थितैर्हिमे ॥ ६७ ॥ तथेत्युक्तःसजानक्याभक्षयित्वाफलंकपिः ॥
ततःप्रस्थापितोऽगच्छज्जानकींप्रणिपत्यसः ॥ किंचिद्दूरमथोगत्वास्वात्मन्येवानुचिंतयत् ॥ ६८ ॥ कार्यार्थमागतोदूतःस्वामिकार्याविरोधतः ॥
अन्यत्किंचिदसंपाद्यगच्छत्यधमएवसः ॥ ६९ ॥ अतोऽहंकिंचिदन्यच्चकृत्वादृष्ट्वाथरावणम् ॥ संभाष्यचततोरामदर्शनार्थंव्रजाम्यहम् ॥
॥ ७० ॥ इतिनिश्चित्यमनसावृक्षखंडान्महाबलः ॥ उत्पाट्याशोकवनिकांनिर्वृक्षामकरोत्क्षणात् ॥ ७१ ॥ सीताश्रयनगंत्यक्त्वावनंशू
न्यंचकारसः ॥ उत्पाटयंतंविपिनंदृष्ट्वाराक्षसयोषितः ॥ ७२ ॥

तवदृष्टौस्थितैःफलैर्मेपारणाभविष्यतीत्यर्थः ॥ ६७ ॥ ततस्तयाप्रस्थापितोजानकींप्रणिपत्यागच्छत् । अनुचिंतयत्अन्वचिंतयत् । अडभावआर्षः ॥ ६८ ॥
अन्यत्किंचित्स्वाम्याज्ञप्तादधिकमुत्कृष्टंकर्मेत्यर्थः ॥ ६९ ॥ अन्यत्किंचिद्वीरकर्म रावणंदृष्ट्वासंभाष्यचेत्यन्वयः ॥ ७० ॥ वृक्षखंडान्वृक्षसमूहान्उत्पाट्यनि
र्वृक्षामकरोत् ॥ ७१ ॥ सीताश्रयनगंशिंशपारूपम् । शून्यम् । वृक्षैरितिशेषः । विपिनंवनवृक्षान् ॥ ७२ ॥

॥ ७३ ॥ दुःखशोकाभ्यांयुक्ताहमेनंनजानामि ॥ ७४ ॥ ७५ ॥ वानराकृतिदेहभृत्वानरदेहसदृशदेहइत्यर्थः । वानरेएवंपराक्रमासंभवादेवमुक्तिः । अशोकवनिकांक्षणादुत्पाट्यतैरेवचैत्यप्रासादंबभंज ॥ ७६ ॥ तास्थिवान्स्थितः । महाऽप्रियंमहच्चतदप्रियंचेत्यर्थः ॥ ७७ ॥ नियुतंदशकोट्यः निर्भग्नौयश्चैत्यप्रासादस्तस्यप्रथमंयदंतरंप्रथमायाभूमिस्तत्रसंस्थितः ॥ ७८ ॥ लोहस्तंभएवकृतमायुधंयेनसः किंचिल्लांगूलचलनइतिस्वभावोक्तिः ॥ ७९ ॥ तेकिं

अपृच्छज्जानकींकोऽसौवानराकृतिरुद्भटः ॥ ७३ ॥ जानक्युवाच ॥ भवत्यएवजानंतिमायांराक्षसनिर्मिताम् ॥ नाहमेनंविजानामिदुःखशोकसमाकुला ॥ ७४ ॥ इत्युक्तास्त्वरितंगत्वाराक्षस्योभयपीडिताः ॥ हनूमताकृतंसर्वंरावणायन्यवेदयन् ॥७५॥ देवकश्चिन्महासत्त्वोवानराकृतिदेहभृत् ॥ सीतयासहसंभाष्यह्यशोकवनिकांक्षणात् ॥ उत्पाट्यचैत्यप्रासादंबभंजामितविक्रमः ॥ ७६ ॥ प्रासादरक्षिणःसर्वान्हत्वातत्रैवतास्थिवान् ॥ तच्छ्रुत्वातूर्णमुत्थायवनभंगंमहाऽप्रियम् ॥ ७७ ॥ किंकरान्प्रेषयामासनियुतंराक्षसाधिपः ॥ निर्भग्नचैत्यप्रासादप्रथमांतरसंस्थितः ॥ ७८ ॥ हनुमान्पर्वताकारोलोहस्तंभकृतायुधः ॥ किंचिल्लांगूलचलनोरक्तास्योभीषणाकृतिः ॥७९॥ आपतंतंमहासंघंराक्षसानांददर्शसः ॥ चकारसिंहनादंचश्रुत्वातेमुमुहुर्भृशम् ॥८०॥ हनूमंतमथोदृष्ट्वाराक्षसाभीषणाकृतिम् ॥ निर्जघ्नुर्विविधास्त्रौघैःसर्वराक्षसघातिनम् ॥ ८१ ॥ ततउत्थायहनुमान्मुद्गरेणसमंततः ॥ निष्पिपेषक्षणादेवमशकानिवयूथपः ॥८२॥ निहतान्किंकराञ्छ्रुत्वारावणःक्रोधमूर्च्छितः ॥ पंचसेनापतींस्तत्रप्रेषयामासदुर्मदान् ॥ ८३ ॥ हनूमानपितान्सर्वाँल्लोहस्तंभेनचाहनत् ॥ ततःक्रुद्धोमंत्रिसुतान्प्रेषयामाससप्तसः ॥८४॥ आगतानपितान्सर्वान्पूर्ववद्वानरेश्वरः ॥ क्षणान्निःशेषतोहत्वालोहस्तंभेनमारुतिः ॥८५॥ पूर्वस्थानमुपाश्रित्यप्रतीक्षन्राक्षसान्स्थितः ॥ ततोजगामबलवान्कुमारोऽक्षःप्रतापवान् ॥ ८६ ॥

करानामराक्षसाः ॥ ८० ॥ भीषणाकृतिंहनूमंतंदृष्ट्वेत्यन्वयः ॥ ८१ ॥ मुद्गरोऽत्रलोहस्तंभः ॥ ८२ ॥ ८३ ॥ सरावणः ॥ ८४ ॥ ८५ ॥ राक्षसान्रावणप्रेषणीयान् ॥ ८६ ॥

आकाशेप्रथममुत्पपाततोगगनादवतरन्मूर्ध्निमुद्गरेणाताडयत् ॥ ८७ ॥ ८८ ॥ ८९ ॥ इंद्रजितंप्रतित्वंतंहंतुंगच्छेतिभंग्यंतरेणाह । पुत्रेति । हत्वेत्युक्त्वा हंतुमशक्यत्वंविचार्याह । बद्धावेति ॥ ९० ॥ दुःखितंवचःआज्ञाकर्तुरभावइवेतिभावः ॥ ९१ ॥ ब्रह्मपाशतःब्रह्मास्त्राभिमंत्रितैःपाशैरित्यर्थः ॥ ९२ ॥ ॥ ९३ ॥ हनुमंतंशिलीमुखैर्विद्ध्वासिंहनादमकरोदित्यन्वयः ॥ ९४ ॥ विद्ध्वेत्यस्यैवविवरणंशिरोभागमित्यादिभेदयित्वेत्यंतम् ॥ ९५ ॥ सिंहनादमकरोत

तमुत्पपातहनुमान्दृष्ट्वाऽऽकाशेसमुद्गरः ॥ गगनात्त्वरितोमूर्ध्निमुद्गरेणव्यताडयत् ॥ ८७ ॥ हत्वातमक्षंनिःशेषंबलंसर्वंचकारसः ॥ ८८ ॥ ततःश्रुत्वाकुमारस्यवधंराक्षसपुंगवः॥ क्रोधेनमहताविष्टइंद्रजेतारमब्रवीत् ॥८९॥ पुत्रगच्छाम्यहंतत्रयत्रास्तेपुत्रहारिपुः॥ हत्वातमथवाबद्ध्वाआनयिष्यामितेंऽतिकम् ॥ ९० ॥ इंद्रजित्पितरंप्राहत्यजशोकंमहामते ॥ मयिस्थितेकिमर्थंत्वंभाषसेदुःखितंवचः ॥ ९१ ॥ बद्ध्वाऽनेष्येद्रुतंतातवानरंब्रह्मपाशतः ॥ इत्युक्त्वारथमारुह्यराक्षसैर्बहुभिर्वृतः ॥ ९२ ॥ जगामवायुपुत्रस्यसमीपंवीरविक्रमः ॥ ततोऽतिगर्जितंश्रुत्वास्तंभमुद्यम्यवीर्यवान् ॥ ९३ ॥ उत्पपातनभोदेशंगरुत्मानिवमारुतिः ॥ ततोभ्रमंतंनभसिहनूमंतंशिलीमुखैः ॥ ९४ ॥ विद्ध्वातस्यशिरोभागमिषुभिश्चाष्टभिःपुनः ॥ हृदयंपादयुगलंषड्भिरेकेनवालधिम् ॥ ९५ ॥ भेदयित्वाततोघोरंसिंहनादमथाकरोत् ॥ ततोऽतिहर्षाद्धनुमान्स्तंभमुद्यम्यवीर्यवान् ॥ ९६ ॥ जघानसारथिंसाश्वंरथंचाचूर्णयत्क्षणात् ॥ ततोऽन्यंरथमादायमेघनादोमहाबलः ॥९७॥ शीघ्रंब्रह्मास्त्रमादायबद्ध्वावानरपुंगवम् ॥ निनायनिकटंराज्ञोरावणस्यमहाबलः ॥ ९८ ॥ यस्यनामसततंजपंतियेऽज्ञानकर्मकृतबंधनंक्षणात् ॥ सद्यएवपरिमुच्यतत्पदंयांतिकोटिरविभासुरंशिवम् ॥९९॥ तस्यैवरामस्यपदांबुजंसदाहृत्पद्ममध्येसुनिधायमारुतिः॥सदैवनिर्मुक्तसमस्तबंधनःकिंतस्यपाशैरितरैश्चबंधनैः ॥ १०० ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेसुंदरकांडेतृतीयःसर्गः ॥ ३॥

इंद्रजिदितिशेषः ॥ ९६ ॥ ९७ ॥ ९८ ॥ यस्यरामस्यनामयेप्राणिनोजपंतितेऽज्ञानजन्यकर्मकृतंबंधनंसंसारंपरिमुच्यसद्यएवशिवाख्यंतत्पदंसच्चिदानंदाख्यंयांति ॥ ९९ ॥ तस्यरामस्यपदांबुजध्यातामारुतिर्यतः सदैवनिर्मुक्तानिसमस्तानिबंधनानिकर्माणियस्यतादृशोभवति अतस्तस्यपाशैरितरैर्वाबंधनैः किंदुःखमितिशेषः ॥१००॥ इति श्रीमत्सक० अध्यात्मरामायणसेतौ सुंदरकांडे तृतीयः सर्गः ॥ ३ ॥

धृतंस्वहस्तेनपाशबंधनंयेनतादृशम् विशेषेणभीतवन्नगरंलंकांविलोकयंतम् । ईक्षितुंकपींद्रंद्रष्टुम् तमेवानुपश्चाद्यांतइतिपौरविशेषणम् ॥ १ ॥ क्षणमात्रसंगमंक्षणमात्रंसंगमःस्वसंबंधोयस्यतादृशमेनंहनूमंतम् । ब्रह्मास्त्रं कर्तृ । कृत्वा ब्रह्मवरेणत्वांमदस्त्रंनपीडयिष्यतीतिब्रह्मदत्तवरेणसत्वरंगतम् । हनूमान् तद्ब्रह्मनंज्ञात्वाऽपिफल्गुतार्णरज्जुभिर्धृतोऽपिकार्यविशेषस्यकर्तव्यरावणदर्शनादिरूपस्यगौरवाद्बद्धइवययावित्यर्थः ॥ २ ॥ सभांतरस्थस्यसभामध्यस्थस्य तंहनुमंतम् बलारिजिदिंद्रजिद्ब्रह्मवरेणब्रह्मवरलब्धब्रह्मास्त्रेणसमागतःबंधपीडामसहिष्णुःस्वयमेवागतइत्यर्थः । तद्वृत्तांतमाह । अनेनेत्यादि ॥ ३ ॥ एषहरिर्नलौकिकइतितत्पराक्रमकथनम् । अंजनाद्रिभमंजनाचलवत्श्यामकांतिम् ॥ ४ ॥ कुतःकस्माद्देशात् । आगतइतिशेषः ॥ ५ ॥ विमोक्ष्यसेअस्माद्बंधनात्प्राणभयाच्चेतिशेषः । अखिलराजसन्निधौअखिललोकराजस्यरावणस्यसंनिधावित्यर्थः ॥ ६ ॥ ७ ॥ देवगणादीनाममित्रशत्रो । आदिनानागादिसंग्रहः । अशेषहृत्स्थितेः अशेषहृदयेषुस्थितिर्यस्यसर्वांतर्यामिणत्यर्थः । अनेनववततःकथमपिनमोक्षइतिसूचितम् । किंचत्वन्मृत्युंचिकीर्षोस्तस्यैवप्रेरणयासीताहृतेतिसूचितम् ॥ ८ ॥

श्रीमहादेवउवाच ॥ यांतंकपींद्रंधृतपाशबन्धनंविलोकयंतंनगरंविभीतवत् ॥ अताडयन्मुष्टितलैःसुकोपनाःपौराःसमंतादनुयांतमीक्षितुम् ॥ १ ॥ ब्रह्मास्त्रमेनंक्षणमात्रसंगमंकृत्वागतंब्रह्मवरेणसत्वरम् ॥ ज्ञात्वाहनूमानपिफल्गुरज्जुभिर्धृतोययौकार्यविशेषगौरवात् ॥ २ ॥ सभांतरस्थस्यचरावणस्यतंपुरोनिधायाहबलारिजित्तदा ॥ बद्धोमयाब्रह्मवरेणवानरःसमागतोऽनेनहतामहासुराः ॥ ३ ॥ यद्युक्तमत्रार्यविचार्यमंत्रिभिर्विधीयतामेषनलौकिकोहरिः ॥ ततोविलोक्याहसराक्षसेश्वरःप्रहस्तमग्रेस्थितमंजनाद्रिभम् ॥ ४ ॥ प्रहस्तपृच्छैनमसौकिमागतःकिमत्रकार्यंकुतएववानरः ॥ वनंकिमर्थंसकलंविनाशितंहताःकिमर्थंममराक्षसाबलात् ॥ ५ ॥ ततःप्रहस्तोहनुमंतमादरात्पप्रच्छकेनप्रहितोऽसिवानर ॥ भयंचतेमास्तुविमोक्ष्यसेमयासत्यंवदस्वाखिलराजसन्निधौ ॥ ६ ॥ ततोऽतिहर्षात्पवनात्मजोरिपुंनिरीक्ष्यलोकत्रयकंटकासुरम् ॥ वक्तुंप्रचक्रेरघुनाथसत्कथांक्रमेणरामंमनसास्मरन्मुहुः ॥ ७ ॥ शृणुस्फुटंदेवगणाद्यमित्रहेरामस्यदूतोऽहमशेषहृत्स्थितेः ॥ यस्याखिलेशस्यहृताधुनात्वयाभार्यास्वनाशायशुनेवसद्धविः ॥ ८ ॥

१–तृणविनिर्मितपाशाकाररज्जुभिः ।

सराघवः सुग्रीवमैत्रींकृत्वावालिनंनिहत्यतंप्रसिद्धपराक्रमंसुग्रीवमेववानराणामधिपतिंचकार । अनेनरामस्यकृतोपकारत्वात्तन्निमित्तंसुग्रीवः सर्ववानरैर्लंकांरोत्स्यत्येवे
तिसूचितम् । मित्रभार्याहारिणंत्वत्तोऽप्यधिकबलंवालिनंयोहतवान् सत्वांसर्वथाहनिष्यत्येवेतिचसूचितम् ॥ ९ ॥ भोइतिरावणसंबोधनम् । प्रवर्षणेतदाख्येप
र्वतेऽमर्षयुतस्त्वद्विषयक्रोधयुतोऽवतिष्ठते ॥ १० ॥ धरासुतांजानकीम् । अनेनकिमागतइत्यस्यचोत्तरंदत्तम् ॥ ११ ॥ वननाशकारणमाह । कपित्वादिति ।
चंचलस्वभावत्वादित्यर्थः । राक्षसहननहेतुमाह । दृष्ट्वेति ॥ १२ ॥ वपुःस्वशरीरंपरिरक्षितम् । तत्रहेतुः । प्रियोहीति ॥ १३ ॥ त्यक्त्वागतंब्रह्मास्त्रमितिशेषः ।
बद्धइवागतः तथागमनेहेतुर्हितंप्रवक्तुकामइति । तवतत्प्रवचनेकिंनिमित्तमतआह । करुणेति ॥ १४ ॥ विवेकतःविवेकेनसदसद्विवेकेन लोकस्यगतिंधर्मात्स्वर्गोऽ

सराघवोऽभ्येत्यमतंगपर्वतंसुग्रीवमैत्रीमनलस्यसन्निधौ ॥ कृत्वैकबाणेननिहत्यवालिनंसुग्रीवमेवाधिपतिंचकारतम् ॥९॥ सवानराणाम
धिपोमहाबलीमहाबलैर्वानरयूथकोटिभिः ॥ रामेणसार्धंसहलक्ष्मणेनभोःप्रवर्षणेऽमर्षयुतोऽवतिष्ठते ॥ १० ॥ संचोदितास्तेनमहाहरीश्व
राधरासुतांमार्गयितुंदिशोदश ॥ तत्राहमेकःपवनात्मजःकपिःसीतांविचिन्वञ्छनकैःसमागतः ॥ ११ ॥ दृष्टामयापद्मपलाशलोचनासी
ताकपित्वाद्विपिनंविनाशितम् ॥ दृष्ट्वाततोऽहंरभसासमागतान्मांहंतुकामान्धृतचापसायकान् ॥ १२ ॥ मयाहतास्तेपरिरक्षितंवपुः
प्रियोहिदेहोऽखिलदेहिनांप्रभो ॥ ब्रह्मास्त्रपाशेननिबध्यमांततःसमागमन्मेघनिनादनामकः ॥ १३ ॥ स्पृष्ट्वैवमांब्रह्मवरप्रभावतस्त्यक्त्वा
गतंसर्वममवैमिरावण ॥ तथाप्यहंबद्धइवागतोहितंप्रवक्तुकामःकरुणारसार्द्रधीः ॥ १४ ॥ विचार्यलोकस्यविवेकतोगतिंनराक्षसींबुद्धिमुपैहि
रावण ॥ दैवींगतिंसंसृतिमोक्षहैतुकींसमाश्रयात्यंतहितायदेहिनः ॥ १५ ॥ त्वंब्राह्मणोह्युत्तमवंशसंभवःपौलस्त्यपुत्रोऽसिकुबेरबांधवः ॥
देहात्मबुद्ध्यापिचपश्यराक्षसोनास्यात्मबुद्ध्याकिमुराक्षसोनहि ॥ १६ ॥

धर्मान्नरकइत्येवंरूपांविचार्य राक्षसींबुद्धिंत्यजेत्यर्थः । संसृतेःसंसाराद्योमोक्षस्तस्यहैतुकींहेतुभूताम् । विनयादित्वाट्ठक् । ईदृशींदैवींदेवप्रोक्तांगतिं मार्गंपरपीडातो
निवृत्तिरूपंमार्गंसमाश्रय । देहिनःस्वस्यात्यंतहितायेत्यर्थः ॥ १५ ॥ ननुतस्मिन्मार्गेममनाधिकारइतिचेन्न । ब्राह्मणत्वादिनातत्सत्त्वादित्याह । त्वमिति ।
उत्तमवंशसंभवत्वस्यविवरणंपौलस्त्यपुत्रोऽसीति । यदितेदेहएवात्मेतिबुद्धिस्तथाऽपिपश्यविचारयत्वंराक्षसोनासि । उत्तमवंशसंभवत्वेनब्राह्मणत्वादितिभावः ।
आत्मबुद्ध्यादेहातिरिक्तआत्मेतिबुद्ध्याराक्षसोनहिभवसीतिकिमुक्तवव्यामितिशेषः ॥ १६ ॥

एवंसर्वथाराक्षसत्वाभावंप्रसाध्याह । शरीरेति । शरीरंस्थूलंबुद्धिःसूक्ष्मशरीरमूइंद्रियाणिचक्षुरादीनितज्जन्यादुःखसंततिराधिव्याधिजा। दुःखेत्युपलक्षणंकामादेरपि।
सातेतव न तेषांचित्तधर्मत्वात् त्वंचतदाश्रयश्चित्तंनेतिशेषपूरणेनव्याख्येयम् । तस्याचेतनत्वादितिभावः । नन्वात्मनएवदुःखाद्यस्तुइतिनचैवंवदतआह । तव
निर्विकारतःविकाराभावोनिर्विकारंततःतवविकाराभावात्दुःखादिमत्त्वेचविकारप्रसंगः । एवंचात्मनोऽविक्रियत्वप्रतिपादकश्रुतिविरोधस्थाश्चश्रुतयःपूर्वंबहुशोलि
खिताः । नन्वेवमहंदुःखीत्यादिप्रतीतेःकागतिस्तत्राह । अज्ञानहेतोरिति । स्वपतःपुरुषस्यप्रतिभासमानस्यापिदृश्यस्ययथाऽसत्त्वंतथाआत्मस्वरूपाज्ञानरूपाद्धेतो
र्भासमानायाअस्याःसंततेर्दुःखसंततेर्वस्तुतोऽसत्त्वमेवेवंचाहंदुःखीत्यादिप्रतीतिः स्वप्नकालिकतत्तत्प्रतीतिवद्भ्रमएवेतिभावः ॥ १७ ॥ नन्वेवंसत्यंवस्तुकिमपिनास्त्ये
वकिमस्तीत्याह । इदंतुसत्यमिति । त्वत्स्वरूपंत्वित्यर्थः । एतत्तवविक्रियानास्तिअविकारीचेतनएवैकःसत्यः । ननुविकारहेत्वज्ञानमपिसत्यमेवनेत्याह ।
तोविकारहेतुर्नचसत्यइतिशेषः । तत्रहेतुमाह । अद्वयत्वतः । एकमेवाद्वितीयंब्रह्मइत्यद्वैतप्रतिपादकश्रुतिविरोधात् । तथापिसतोद्वितीयस्यनिषेधइतिभावः ।

शरीरबुद्धींद्रियदुःखसंततिर्नतेनचत्वंतवनिर्विकारतः ॥ अज्ञानहेतोश्चतथैवसंततेरसत्त्वमस्याःस्वपतोहिदृश्यवत् ॥ १७ ॥ इदंतुसत्यं
तवनास्तिविक्रियाविकारहेतुर्नचतेऽद्वयत्वतः ॥ यथानभःसर्वगतंनलिप्यतेतथाभवान्देहगतोऽपिसूक्ष्मकः ॥ देहेंद्रियप्राणशरीरसंगत
स्त्वात्मेतिबुद्ध्याखिलबंधभाग्भवेत् ॥ १८ ॥ चिन्मात्रमेवाहमजोऽहमक्षरोह्यानंदभावोऽहमितिप्रमुच्यते ॥ देहोऽप्यनात्मापृथिवीविका
रजोनप्राणआत्मानिलएषएवसः ॥ १९ ॥

ननुचित्तसंबंधान्ममदुःखमस्त्येवेतिचेन्नेत्याह । यथासर्वगतमपिनभःपृथिव्यादिरूपगंधादिभिर्नलिप्यतेसूक्ष्मत्वात्तथादेहगतोऽपिचित्तसामानाधिकरणोऽपियतः
सूक्ष्मकोऽतिसूक्ष्मोतस्तद्गतदुःखादिभिर्वस्तुतोनलिप्यते । एवंचनीलंनभइत्यादिप्रतीतिवदहंदुःखीत्यादिप्रतीतिर्भ्रमएवेतिभावः। ननुतर्हिमुक्तसंसारिव्यवस्थाकिंनास्त्ये
वास्तीत्याह । देहेत्यादि । देहोऽत्रसूक्ष्मःशरीरंस्थूलम् तत्संगतस्तदविवेकाग्रहात् तेष्वेवयाऽऽत्मबुद्धिस्तयाखिलबंधभाग्भवेत् । अविवेकएवमुख्यंसंसारकारणमिति
भावः ॥ १८ ॥ ननुतर्हिमुक्तिर्दुर्लभेतिशंकायांतत्कारणमाह । चिन्मात्रमिति । विवेकोज्ञातएवमोक्षकारणमितितमाह । तत्राद्यार्धेनात्मनिजडवैधर्म्यमुक्तम् ।
अजत्वेनोत्पत्तिराहित्यम् । अक्षरत्वेनाविनाशित्वम् । आनंदभावस्तद्रूपःदेहादौतद्वैधर्म्यमाह । देहोऽपीति । पृथिवीविकारैस्ततपरमाणुभिर्जनितइतिअनात्मा
अनेनाचेतनत्वजन्यत्वादिवैधर्म्यमुक्तम् । प्राणोऽप्यात्मा न । यतएषोऽबहिर्दृश्यमानोजडोऽनिलएव । सप्राणोयःप्राणःसवायुः । इतिश्रुतेः ॥ १९ ॥

मनोऽपिनात्मेत्याह । मनोऽपीति । नोइत्यस्यात्मेतिशेषः । नातस्ततअहंकारस्यविकारः । नचापिबुद्धिरिति । बुद्धिरहंकारोऽपिनात्मायतःप्रकृतेर्विकारा
न्महतोजायतइतिप्रकृतेर्विकारजा आत्मनिउक्तमेववैधर्म्यंदार्ढ्यायपुनराह । आत्मेत्यादि । सएवेश्वरः । अनेनचेवनानेकत्वंनेतिदर्शितम् ॥ २० ॥ निरंज
नइत्यस्यैवव्याख्या । सदाउपाधितोमुक्तः उपाधिभूतचित्तधर्मैर्दुःखादिभिरलिप्तइत्यर्थः । एवमात्मानंज्ञात्वाइतःसंसाराद्विमुच्यते । नन्वीदृशज्ञानमेवकथंस्या
त्तत्राह । अतोऽहमिति । मोक्षस्यात्यंतिकंसाधनंनियतंसाधनमित्यर्थः ॥ २१ ॥ प्रतिज्ञातमाह । विष्णोर्हीति । धियश्चित्तस्य नित्यानित्यविवेकद्वाराज्ञानमा
त्माचिदानंदमयइत्यादिनोक्तम् । ततःतद्विषयनिदिध्यासनतः विशुद्धतत्त्वानुभवोभवेत् ततःपरमंपदंब्रह्मसायुज्यम् ॥ २२ ॥ उपसंहरति । अतइति ।

मनोप्यहंकारविकारएवनोनचापिबुद्धिःप्रकृतेर्विकारजा ॥ आत्माचिदानंदमयोऽविकारवान्देहादिसंघाद्व्यतिरिक्तईश्वरः ॥ २० ॥ निरंजनो
मुक्तउपाधितःसदाज्ञात्वैवमात्मानमितोविमुच्यते ॥ अतोऽहमात्यंतिकमोक्षसाधनंवक्ष्येशृणुष्वावहितोमहामते ॥ २१ ॥ विष्णोर्हिभक्तिः
सुविशोधनंधियस्ततोभवेज्ज्ञानमतीवनिर्मलम् ॥ विशुद्धतत्त्वानुभवोभवेत्ततःसम्यग्विदित्वापरमंपदंव्रजेत् ॥ २२ ॥ अतोभजस्वा
द्यहरिंरमापतिंरामंपुराणंप्रकृतेःपरंविभुम् ॥ विसृज्यमौर्ख्यंहृदिशत्रुभावनांभजस्वरामंशरणागतप्रियम् ॥ सीतांपुरस्कृत्यसपुत्रबां
धवोरामंनमस्कृत्यविमुच्यसेभयात् ॥ २३ ॥ रामंपरात्मानमभावयञ्जनोभक्त्याहृदिस्थंसुखरूपमद्वयम् ॥ कथंपरंतीरमवाप्नुयाज्जनोभवां
बुधेर्दुःखतरंगमालिनः ॥ २४ ॥

यस्यभक्तिर्ज्ञानसाधनंसविष्णुरयमेव । तद्बोधकेविशेषणेहरिंरमापतिमिति । ननुदशरथपुत्रोऽयं नसइत्यत्राह । प्रकृतेःपरमित्यादि । दशरथपुत्रत्वादितुकल्पित
मित्याशयः । मौर्ख्यमयंमनुष्यइतिबुद्धिरूपंतत्कृतांशत्रुत्वेनभावनांचविसृज्यभजस्व । संप्रतियुक्तंभजनप्रकारमाह । सीतामिति ॥ २३ ॥ अथव्यतिरेकमु
खेनतत्तद्भावनाप्रकारमाह । राममिति । हृदिस्थमित्यनेनांतर्यामितयाप्रेरकत्वमुक्तम् । सुखरूपोऽद्वितीयोमत्प्रेरकइत्येवमभावयन्निवियावत् । दुःखरूपास्तरं
गमालायस्यतस्य ॥ २४ ॥

नोचेत् मदुक्ताकरणेतेनज्वलंतमात्मानमरक्षिता । लुटिरूपम् । किंचस्वकृतैःपातकैःसीताहरणादिभिररिवत्आत्मागनमधोऽधोनयसि । नयिष्यसीत्यर्थेआर्षम् । विमोक्षशंकातत्संभावनापिनभविष्यतीत्यर्थः ॥ २५ ॥ अमृतास्वादेति । तदास्वादेनसमानआस्वादोयस्यतादृशंभाषितमित्यर्थः ॥ २६ ॥ वनेचरः सुग्रीवःकेषामध्येऽतिशयितोनकेषामपीत्यर्थः ॥ २७ ॥ विवृद्धकोपेन । करणेनेत्यर्थः । असुरंदहन्निवाहेतिशेषः ॥ २८ ॥ अधमेत्यत्रक्रोधातिशयेनदूरात्संबोधनेप्लुतः ॥ २९ ॥ पार्श्वेस्थितंराक्षसमित्यन्वयः । खंडशःकुर्वितिशेषः । असुरस्यममामित्राणिबांधवाश्चपश्यतु हेराजन् अयंपरराजस्योत्कृष्टराजस्यशत्रुराजस्य

नोचेत्त्वमज्ञानमयेनवह्निनाज्वलंतमात्मानमरक्षितारिवत् ॥ नयस्यधोऽधःस्वकृतैश्चपातकैर्विमोक्षशंकानचतेभविष्यति ॥ २५ ॥ श्रुत्वामृतास्वादसमानभाषितंतद्वायुसूनोर्दशकंधरोऽसुरः ॥ अमृष्यमाणोऽतिरुषाकपीश्वरंजगादरक्तांतविलोचनोज्वलन् ॥ २६ ॥ कथंममाग्रेविलपस्यभीतवत्प्लवंगमानामधमोऽसिदुष्टधीः ॥ कएषरामःकतमोवनेचरोनिहन्मिसुग्रीवयुतंनराधमम् ॥ २७ ॥ त्वांचाद्यहत्वाजनकात्मजांततोनिहन्मिरामंसहलक्ष्मणंततः ॥ सुग्रीवमग्रेवलिनंकपीश्वरंसवानरंहन्म्यचिरेणवानर ॥ श्रुत्वादशग्रीववचःसमारुतिर्विवृद्धकोपेनदहन्निवासुरम् ॥ २८ ॥ नमेसमारावणकोटयोऽधमरामस्यदासोऽहमपारविक्रमः ॥ श्रुत्वातिकोपेनहनूमतोवचोदशाननोराक्षसमेकमब्रवीत् ॥ २९ ॥ पार्श्वेस्थितंमारयखंडशःकपिंपश्यंतुसर्वेऽसुरमित्रबांधवाः ॥ निवारयामासततोविभीषणोमहासुरंसायुधमुद्यतंवधे ॥ राजन्वधार्होनभवेत्कथंचनप्रतापयुक्तैःपरराजवानरः ॥ ३० ॥ हतेऽस्मिन्वानरेदूतेवार्ताकोवानिवेदयेत् ॥ रामायत्वंयमुद्दिश्यवधायसमुपस्थितः ॥ ३१ ॥

वावानरोवधयोग्योनभवेत् । प्रतापयुक्तैराजभिर्वधयोग्यतासंभावनमप्यनुचितंदूतत्वात्किंपुनर्वधइतिभावः । अयंप्रतापयुक्तैरिंद्रजिदादिभिरपिबंधयोग्योनोतिवृथाप्रयासइतिव्यंग्यम् ॥ ३० ॥ वधेबाधकांतरमप्याह । हतइति । वार्तासीतावार्तानिवेदयत् । रामायेत्यन्वयः । यंराममुद्दिश्यत्वंवधायसमुपस्थितःयंराममुद्दिश्यत्वमात्मवधायसमुपस्थितः । आत्मवधार्थंतदागमनेच्छावान्सस्वच्छंदतःकथमत्रागच्छेदितिगूढोऽर्थः ॥ ३१ ॥

आयास्यतीतिच्छेदः ॥ ३२ ॥ ततोयुद्धंत्वदभिलषितंभवेत् ॥ ३३ ॥ महामानःप्रीतिपूर्वकोममेदमित्युपादेयमित्यभिमानः ॥ ३४ ॥ सर्वेवानरयूथपाःपश्यंतुदग्धपुच्छमेनमितिशेषः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ किंचित्नगरदाहम् ॥ ३९ ॥ सूक्ष्मोभूत्वाबंधान्निःसृतःततःपुनरपिपर्वताकारो बभूवततोगोपुरंपुरद्वारमुत्प्लुत्य ॥ ४० ॥ तत्रविद्यमानमेकंस्तंभम् । कार्यशेषंलंकादाहरूपम् ॥ ४१ ॥ ४२ ॥ हावातेत्यादिक्रंदमानाः प्रासादशिखरे

अतोवधसमंकिंचिदन्यच्चिंतयवानरे ॥ सचिह्नोगच्छतुहरिर्यंदृष्ट्वायास्यतिद्रुतम् ॥ ३२ ॥ रामःसुग्रीवसहितस्ततोयुद्धंभवेत्तव ॥ विभीषणवचःश्रुत्वारावणोऽप्येतदब्रवीत् ॥ ३३ ॥ वानराणांहिलांगूलेमहामानोभवेत्किल ॥ अतोवस्त्रादिभिःपुच्छंवेष्टयित्वाप्रयत्नतः ॥ ३४ ॥ वह्निनायोजयित्वैनंभ्रामयित्वापुरेऽभितः ॥ विसर्जयतपश्यंतुसर्वेवानरयूथपाः ॥ ३५ ॥ तथेतिशणपट्टैश्चवस्त्रैरन्यैरनेकशः ॥ तैलाक्तैर्वेष्टयामासुर्लांगूलंमारुतेर्दृढम् ॥ ३६ ॥ पुच्छाग्रेकिंचिदनलंदीपयित्वाऽथराक्षसाः ॥ रज्जुभिःसुदृढंबद्धाधृत्वातंबलिनोऽसुराः ॥ ॥ ३७ ॥ समंताद्भ्रामयामासुश्चोरोऽयमितिवादिनः ॥ तूर्यघोषैर्घोषयंतस्ताडयंतोमुहुर्मुहुः ॥ ३८ ॥ हनूमतापितत्सर्वंसोढंकिंचिच्चिकीर्षुणा ॥ गत्वातुपश्चिमद्वारसमीपंतत्रमारुतिः ॥ ३९ ॥ सूक्ष्मोबभूवबंधेभ्योनिःसृतःपुनरप्यसौ ॥ बभूवपर्वताकारस्ततउत्प्लुत्यगोपुरम् ॥ ॥ ४० ॥ तत्रैकंस्तंभमादायहत्वातात्रक्षिणःक्षणात् ॥ विचार्यकार्यशेषंसप्रासादाग्राद्गृहाद्गृहम् ॥ ४१ ॥ उत्प्लुत्योत्प्लुत्यसंदीप्तपुच्छेनमहताकपिः ॥ ददाहलंकामखिलांसाट्टप्रासादतोरणाम् ॥ ४२ ॥ हातातपुत्रनाथेतिक्रंदमानाःसमंततः ॥ व्याप्ताःप्रासादशिखरेऽप्यारूढादैत्ययोषितः ॥ ४३ ॥ देवताइवदृश्यंतेपतंत्यःपावकेऽखिलाः ॥ विभीषणगृहंत्यक्त्वासर्वंभस्मीकृतंपुरम् ॥ ४४ ॥ ततउत्प्लुत्यजलधौहनुमान्मारुतात्मजः ॥ लांगूलंमज्जयित्वांतः स्वस्थचित्तोबभूवसः ॥ ४५ ॥ वायोःप्रियसखित्वाच्चसीतयाप्रार्थितोऽनलः ॥ नददाहहरेःपुच्छंबभूवात्यंतशीतलः ॥ ४६ ॥

आरूढाअपिव्याप्तावह्निनेतिशेषः ॥ ४३ ॥ वह्नौपतंत्योदेवताइवदृश्यंते ॥ ४४ ॥ जलधौतत्समीपेउत्प्लुत्यांतःसमुद्रमध्येलांगूलंमज्जयित्वास्वस्थचित्तोबभूव ॥ ४५ ॥ वायोःप्रियमित्रत्वात्सीताप्रार्थनेनचानलोऽग्निर्वायुपुत्रस्यहरेःपुच्छंनददाह । तावन्मात्रमेवनकिंत्वत्यंतंशीतलश्चबभूव ॥ ४६ ॥

यन्नामस्मरणेनधूवानिदूरीकृतानिसमस्तपापानियैस्ते तापत्रयमाध्यात्मिकाधिभौतिकाधिदैविकभेदात्तज्जन्यंवह्निमपितरंति तेननपीड्यंतइत्यर्थः ॥ ४७ ॥ इति श्रीमत्सकलरा० अध्यात्मरामायणसेतौसुंदरकांडेचतुर्थः सर्गः ॥ ४ ॥ अथलंकादाहेऽशोकवनस्थानदाहेऽपिसीतायादाहसन्देहनिवृत्तयेपुनःसीतांदृष्ट्वातामापृच्छयगतइत्याह । ततइति । हेदेविरामसंनिधिंगच्छामिभवतीमामाज्ञापयात्वित्यन्वयः ॥ १ ॥ सानुजोरामस्त्वांद्रष्टुमागमिष्यतीत्युक्त्वाजानकींत्रिःपरिक्रम्यप्रदक्षिणंकृत्वा ॥ २ ॥ पुनःप्रणम्यगंतुंप्रस्थितइदंवक्ष्यमाणमब्रवीत । तेभद्रमितिविनयोक्तिः ॥ ३ ॥ ४ ॥ वार्ताश्रुतिर्वार्ताश्रवणम् ॥ ५ ॥ यद्येवंराम



यन्नामसंस्मरणधूतसमस्तपापास्तापत्रयानलमपीहतरंतिसद्यः ॥ तस्यैवकिंरघुवरस्यविशिष्टदूतःसंतप्यतेकथमसौप्रकृतानलेन ॥४७॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेसुंदरकांडेचतुर्थःसर्गः ॥४॥ ॥ ततःसीतांनमस्कृत्यहनूमानब्रवीद्वचः ॥ आज्ञापयतुमांदेवि भवतीरामसन्निधिम् ॥ १ ॥ गच्छामिरामस्त्वांद्रष्टुमागमिष्यतिसानुजः ॥ इत्युक्त्वात्रिःपरिक्रम्यजानकींमारुतात्मजः ॥ २ ॥ प्रणम्यप्रस्थितोगंतुमिदंवचनमब्रवीत् ॥ देविगच्छामिभद्रंतेतूर्णंद्रक्ष्यसिराघवम् ॥ ३ ॥ लक्ष्मणंचससुग्रीवंवानरायुतकोटिभिः ॥ ततःप्राहहनूमंतं जानकीदुःखकर्शिता ॥ ४ ॥ त्वांदृष्ट्वाविस्मृतंदुःखमिदानींत्वंगमिष्यसि ॥ इतःपरंकथंवर्तेरामवार्ताश्रुतिंविना ॥ ५ ॥ मारुतिरुवाच ॥ यद्येवंदेविमेस्कंधमारोहक्षणमात्रतः॥रामेणयोजयिष्यामिमन्यसेयदिजानकि ॥६॥ सीतोवाच ॥ रामःसागरमाशोष्यबद्ध्वावाशरपंजरैः॥ आगत्यवानरैःसार्धंहत्वारावणमाहवे ॥ ७ ॥ मांनयेद्यदिरामस्यकीर्तिर्भवतिशाश्वती ॥ अतोगच्छकथंचापिप्राणान्संधारयाम्यहम् ॥८॥ इतिप्रस्थापितोवीरःसीतयाप्रणिपत्यताम् ॥ जगामपर्वतस्याग्रेगंतुंपारंमहोदधेः ॥ ९ ॥

वार्ताश्रवणंविनास्थातुमशक्यंत्वंयदिमन्यसेयद्येतत्तवचित्तेआयातितर्हि । आचरेतिशेषः ॥ ६ ॥ आशोष्येतिमुख्यःपक्षः । दययातदकरणेबद्ध्वावेति । शरपंजरैःशरसमूहैः ॥ ७ ॥ यदिरावणंहत्वामांनयेत्तर्हिरामस्यशाश्वतीकीर्तिर्भवेत् । कथंचापिकथंचिदित्यर्थः ॥ ८ ॥ महोदधेःपारंगंतुंपर्वतस्याग्रेउपरिभागेजगाम ॥ ९ ॥

महासत्त्वोमहाबलस्तत्रोर्ध्वशिखरेगत्वा पर्वतश्चमहीतलंजगामेत्यनुकर्षः ॥ १० ॥ तद्गमनमप्यंशेनन किंतुसंपूर्णएवगतइत्याह । त्रिंशद्योजनंमहीतउच्छ्रितोऽपिमही समानत्वंजगाम । गगनांतस्थःगगनमध्यस्थः ॥ ११ ॥ तंमहांतंशब्दम् महान्स्वनःप्रतिध्वनिर्यस्यतंशब्दंचक्रुः ॥ १२ ॥ हनुमानेवायंकृतकार्यःसमागतइति शब्देनैवजानीमः । केचिद्वानराद्दृष्ट्वावानरर्षभंपश्यध्वमित्याहुः ॥ १३ ॥ १४ ॥ पूर्वंसीतापदोक्तौपदांतरोच्चारणपर्यंतंक्रियापदसंदेहःस्यादितिपूर्वंदृष्टेत्युक्तिः ॥

तत्रगत्वामहासत्त्वःपादाभ्यांपीडयन्गिरिम् ॥ जगामवायुवेगेनपर्वतश्चमहीतलम् ॥ १० ॥ ततोमहीसमानत्वंत्रिंशद्योजनमुच्छ्रितः ॥ मारुतिर्गगनांतस्थोमहाशब्दंचकारसः ॥ ११ ॥ तंश्रुत्वावानराःसर्वेज्ञात्वामारुतिमागतम् ॥ हर्षेणमहताविष्टाःशब्दंचक्रुर्महास्वनम् ॥ ॥१२॥शब्देनैवविजानीमःकृतकार्यःसमागतः॥ हनूमानेवपश्यध्वंवानरावानरर्षभम् ॥१३॥ एवंब्रुवत्सुवीरेषुवानरेषुसमारुतिः॥ अवतीर्य गिरेर्मूर्ध्निवानरानिदमब्रवीत् ॥ १४ ॥ दृष्टासीतामयालंकाधर्षिताचसकानना ॥ संभाषितोदशग्रीवस्ततोऽहंपुनरागतः ॥ १५ ॥ इदा नीमेवगच्छामोरामसुग्रीवसन्निधिम् ॥ इत्युक्त्वावानराःसर्वेहर्षेणालिंग्यमारुतिम् ॥ १६ ॥ केचिच्चुचुंबुर्लांगूलंननृतुःकेचिदुत्सुकाः ॥ हनूमतासमेतास्तेजग्मुःप्रस्रवणंगिरिम् ॥ १७ ॥ गच्छंतोददृशुर्वीरावनंसुग्रीवरक्षितम् ॥ मधुसंज्ञंतदाप्राहुरंगदंवानरर्षभाः ॥ १८ ॥ क्षुधिताःस्मोवयंवीरदेह्यनुज्ञांमहामते ॥ भक्षयामःफलान्यद्यपिबामोऽमृतवन्मधु ॥ १९ ॥ संतुष्टाराघवंद्रष्टुंगच्छामोऽद्यैवसानुजम् ॥ ॥ २० ॥ अंगदउवाच॥ हनूमान्कृतकार्योऽयंपिबतैतत्प्रसादतः ॥ जक्षध्वंफलमूलानित्वरितंहरिसत्तमाः ॥ २१ ॥ ततःप्रविश्यहरयःपातु मारेभिरेमधु ॥ रक्षिणस्ताननादृत्यदधिवक्रेणनोदितान् ॥ २२ ॥

॥ १५ ॥ १६ ॥ केचिच्चुचुंबुरित्यादिहर्षाविष्टवानरजातिलक्षणम् ॥ १७ ॥ १८ ॥ १९ ॥ संतुष्टाः फलभक्षणेनमधुपानेनच ॥ २० ॥ जक्षध्वंभक्षयं त्वित्यर्थः ॥ २१ ॥ दधिवक्रोनामतद्रक्षिणांमुख्यस्तद्रक्षणाधिकृतः ॥ २२ ॥

---

१–पर्वतस्य मह्यधिकरणकं गमनम् । २ मधुवनरक्षणाधिकृतः ।

वानरर्षभाः दधिवक्त्रप्रेरिताः पिबतो वानरांस्ताडयामासुरित्यन्वयः ॥ २३ ॥ २४ ॥ कुमारेणांगदेन हनूमता च नष्टं नाशितमित्यर्थः ॥ २५ ॥ दृष्ट्वा आगत इति च्छेदः ॥ २६ ॥ नो चेन्मधुवनं द्रष्टुं कः समर्थो भवेत् ॥ २७ ॥ अतिहर्षाद्बहुमानेन सुग्रीवं प्रति राजन्निति वचः ॥ २८ ॥ अवनीसुता जानकी ॥ २९ ॥ मम मधुवनं द्रष्टुं न समर्था इत्यन्वयः ॥ ३० ॥ भो रक्षिणो वो युष्माकं भयं वानरेभ्यस्ताडनजं मास्तु अतो ममाज्ञया गत्वांगदमुखान्वानरान्ब्रूत युष्मान् रामसुग्रीवावाकारयत इति

पिबतस्ताडयामासुर्वानरान्वारर्षभाः ॥ ततस्तान्मुष्टिभिः पादैश्चूर्णयित्वापपुर्मधु ॥ २३ ॥ ततो दधिमुखः क्रुद्धः सुग्रीवस्य समातुलः ॥ जगाम रक्षिभिः सार्धं यत्र राजा कपीश्वरः ॥ २४ ॥ गत्वा तमब्रवीद्देव चिरकालाभिरक्षितम् ॥ नष्टं मधुवनं तेऽद्य कुमारेण हनूमता ॥ २५ ॥ श्रुत्वा दधिमुखेनोक्तं सुग्रीवो हृष्टमानसः ॥ दृष्ट्वाऽऽगतो न संदेहः सीतां पवननंदनः ॥ २६ ॥ नो चेन्मधुवनं द्रष्टुं समर्थः को भवेन्मम ॥ तत्रापि वायुपुत्रेण कृतं कार्यं न संशयः ॥ २७ ॥ श्रुत्वा सुग्रीववचनं हृष्टो रामस्तमब्रवीत् ॥ किमुच्यते त्वया राजन्वचः सीताकथान्वितम् ॥ २८ ॥ सुग्रीवस्त्वब्रवीद्वाक्यं देव दृष्टाऽवनीसुता ॥ हनूमत्प्रमुखाः सर्वे प्रविष्टा मधुकाननम् ॥ २९ ॥ भक्षयंति स्म सकलं ताडयंति स्म रक्षिणः ॥ अकृत्वा देवकार्यं ते द्रष्टुं मधुवनं मम ॥३०॥ न समर्थास्ततो देवी दृष्टा सीतेति निश्चितम् ॥ रक्षिणो वो भयं मास्तु गत्वा ब्रूत ममाज्ञया ॥३१॥ वानरानंगदमुखानानयध्वं ममांतिकम् ॥ श्रुत्वा सुग्रीववचनं मत्वा ते वायुवेगतः ॥३२॥ हनूमत्प्रमुखानूचुर्गच्छतेश्वरशासनात् ॥ द्रष्टुमिच्छति सुग्रीवः सरामो लक्ष्मणान्वितः ॥३३॥ युष्मानतीव हृष्टास्ते त्वरयंति महाबलाः ॥ तथेत्यंबरमासाद्य ययुस्ते वानरोत्तमाः ॥३४॥ हनूमंतं पुरस्कृत्य युवराजं तथांगदम् ॥ रामसुग्रीवयोरग्रे निपेतुर्भुवि सत्वरम् ॥३५॥ हनूमान्राघवं प्राह दृष्टा सीता निरामया ॥ साष्टांगं प्रणिपत्याग्रे रामं पश्चाद्धरीश्वरम् ॥ ३६ ॥ कुशलं प्राह राजेंद्र जानकी त्वां शुचाऽन्विता ॥ अशोकवनिकामध्ये शिंशपामूलमाश्रिता ॥ ३७ ॥

शेषः । इत्युक्ता मम मांतिकं मत्समीपं तानानयध्वम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ अतीव हृष्टास्ते रामसुग्रीवलक्ष्मणाः युष्मान् स्वसमीपागमनाय त्वरयंति ॥ ३४ ॥ ॥ ३५ ॥ भूसंबंधोत्तरं राघवाश्वासनाय पूर्वं दृष्टा सीतेत्याह । ततः क्रमेण रामसुग्रीवौ प्रणिपत्य ॥ ३६ ॥ जानकीकुशलं प्राहेत्याह । शुचा शोकेन ॥ ३७ ॥

हाइतिशोकव्यंजकमात्रम् ॥ ३८ ॥ जन्मारभ्यतवकथांब्रुवतामयासूक्ष्मरूपेणवृक्षशाखांतरेस्थित्वाशनैराश्वासितेत्यन्वयः ॥ ३९ ॥ अत्यर्थविस्तारेणदंडकागमनादिकथोक्तेतिशेषः । त्वयिरहितेदेशांतरंगतेसतिजानक्यादशाननेनहरणमित्यन्वयः ॥ ४० ॥ वालिनिबर्हणंतद्वधंकृत्वायथासुग्रीवेणमैत्रीसफलाकृतेतिशेषः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ सःयेनोक्तंसइत्यर्थः ॥ ४५ ॥ ४६ ॥ ४७ ॥ तेनअंगुलीयकलाभेनराघवस्याप्तःसेवकइत्यविविश्वस्ता राक्षसीनांतर्जनैः

राक्षसीभिःपरिवृतानिराहाराकृशाप्रभो ॥ हारामरामरामेतिशोचंतीमलिनांबरा ॥ ३८ ॥ एकवेणीमयादृष्टाशनैराश्वासिताशुभा ॥ वृक्षशाखांतरेस्थित्वासूक्ष्मरूपेणतेकथाम् ॥ ३९ ॥ जन्मारभ्यतवात्यर्थंदंडकागमनंतथा ॥ दशाननेनहरणंजानक्यारहितेत्वयि ॥ ४० ॥ सुग्रीवेणयथामैत्रीकृत्वावालिनिबर्हणम् ॥ मार्गणार्थंचवैदेह्याःसुग्रीवेणविसर्जिताः ॥४१॥ महाबलामहासत्त्वाहरयोजितकाशिनः॥गताः सर्वत्रसर्वेवैतत्रैकोऽहमिहागतः ॥ ४२ ॥ अहंसुग्रीवसचिवोदासोऽहंराघवस्यहि ॥ दृष्टायज्जानकीभाग्यात्प्रयासःफलितोऽद्यमे ॥ ४३ ॥ इत्युदीरितमाकर्ण्यसीताविस्फारितेक्षणा ॥ केनवाकर्णपीयूषंश्रावितंमेशुभाक्षरम् ॥ ४४ ॥ यदिसत्यंतदायातुमद्दर्शनपथंतुसः ॥ ततोऽहंवानराकारःसूक्ष्मरूपेणजानकीम् ॥ ४५ ॥ प्रणम्यप्रांजलिर्भूत्वादूरादेवस्थितःप्रभो ॥ पृष्टोऽहंसीतयाकस्त्वमित्यादिबहुविस्तरम् ॥ ॥ ४६ ॥ मयासर्वंक्रमेणैवविज्ञापितमरिंदम ॥ पश्चान्मयार्पितंदेव्यैभवद्दत्तांगुलीयकम् ॥ ४७ ॥ तेनमामतिविश्वस्तावचनंचेदमब्रवीत् ॥ यथादृष्टास्मिहनुमन्पीड्यमानादिवानिशम् ॥ ४८ ॥ राक्षसीनांतर्जनैस्तत्सर्वंकथयराघवे ॥ मयोक्तंदेविरामोऽपित्वच्चिंतापरिनिष्ठितः ॥ ॥ ४९ ॥ परिशोचत्यहोरात्रंत्वद्वार्तांनाधिगम्यसः ॥ इदानीमेवगत्वाहंस्थितिंरामायतेब्रुवे ॥ ५० ॥ रामःश्रवणमात्रेणसुग्रीवेणसलक्ष्मणः ॥ वानरानीकपैःसार्धमागमिष्यतितेंऽतिकम् ॥ ५१ ॥ रावणंसकुलंहत्वानेष्यतित्वांस्वकंपुरम् ॥ अभिज्ञांदेहिमेदेवियथामांविश्वसेद्विभुः ॥५२॥

पीडचमानायथादृष्टास्मि तत्सर्वंपीडनंराघवेकथय ॥ ४८ ॥ त्वच्चिंतापरिनिष्ठितःत्वच्चिंतायांस्थितः ॥ ४९ ॥ त्वद्वार्तांनाधिगम्यअहोरात्रंपरिशोचति । त्वामितिशेषः ॥ ५० ॥ ५१ ॥ विश्वसेत्सत्यंजानकींदृष्ट्वाआगतइतिविश्वसेदित्यर्थः ॥ ५२ ॥

शिरोरत्नंदत्वाचित्रकूटगिरिस्थंकाकवृत्तमप्याह ॥ ५३ ॥ ततःसन्देशमाहेतिशेषः । तमाह । अश्रुपूर्णाक्षीति । यन्मेयत्किंचिद्दुरुक्तंदुर्वचोभाषितंतत्क्षमस्वतदज्ञ
भावेनाज्ञतयामयाभाषितम् । अतोयथामांरामोऽस्माद्दुःखात्तारयेत्तथाकृपान्वितःकुरुइतिलक्ष्मणंब्रूहीत्यन्वयः ॥ ५४ ॥ ५५ ॥ महतादुःखेनावृता । आसीदि
तिशेषः । सर्वमेववृत्तांतंवदतामयापिसाआश्वासिता ॥ ५६ ॥ प्रियांरावणस्येतिशेषः ॥ ५७ ॥ उत्पाट्यउत्पाटितवृक्षांकृत्वा ॥ ५८ ॥ पुनरप्यगमम् । त्वत्समी
पमितिशेषः । प्रहृष्टधीःप्रहृष्टचेताः ॥ ५९ ॥ प्रत्युपकारिणःमांप्रतिकृतोपकारस्य ॥ ६० ॥ सर्वस्वमालिंगनम् ॥ ६१ ॥ सःजगत्कर्तृत्वादिपरमैश्वर्यवान्

इत्युक्तासाशिरोरत्नंचूडापाशेस्थितंप्रियम् ॥ दत्वाकाकेनयद्वृत्तंचित्रकूटगिरौपुरा ॥ ५३ ॥ तदप्याहाश्रुपूर्णाक्षीकुशलंब्रूहिराघवम् ॥ लक्ष्म
णंब्रूहिमेकिंचिद्दुरुक्तंभाषितंपुरा ॥ ५४ ॥ तत्क्षमस्वाज्ञभावेनभाषितंकुलनंदन ॥ तारयेन्मांयथारामस्तथाकुरुकृपान्वितः ॥ ५५ ॥ इत्यु
क्त्वारुदतीसीतादुःखेनमहतावृता ॥ मयाप्याश्वासितारामवदतासर्वमेवते ॥ ५६ ॥ ततःप्रस्थापितोरामत्वत्समीपमिहागतः ॥ सदागमनवे
लायामशोकवनिकांप्रियाम् ॥ ५७ ॥ उत्पाट्यराक्षसांस्तत्रबहून्हत्वाक्षणादहम् ॥ रावणस्यसुतंहत्वारावणेनाभिभाष्यच ॥५८॥ लंकाम
शेषतोदग्ध्वापुनरप्यगमंक्षणात् ॥ श्रुत्वाहनुमतोवाक्यंरामोऽत्यंतप्रहृष्टधीः ॥ ५९ ॥ हनूमंस्तेकृतंकार्यंदेवैरपिसुदुष्करम् ॥ उपकारंनप
श्यामितवप्रत्युपकारिणः ॥ ६० ॥ इदानींतेप्रयच्छामिसर्वस्वंममारुते ॥ इत्यालिंग्यसमाकृष्यगाढंवानरपुंगवम् ॥ ६१ ॥ सार्द्रनेत्रोरघु
श्रेष्ठःपरांप्रीतिमवापसः ॥ हनूमंतमुवाचेदंराघवोभक्तवत्सलः ॥ ६२ ॥ परिरंभोहिमेलोकेदुर्लभःपरमात्मनः ॥ अतस्त्वंममभक्तोऽसिप्रि
योऽसिहरिपुंगव ॥ ६३ ॥ यत्पादपद्मयुगलंतुलसीदलाद्यैःसंपूज्यविष्णुपदवीमतुलांप्रयांति ॥ तेनैवकिंपुनरसौपरिरब्धमूर्तीरामेणवायुत
नयःकृतपुण्यपुंजः ॥ ६४ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेसुंदरकांडेपंचमःसर्गः ॥ ५ ॥

सुंदरकांडेसर्गाःपंचैवाध्यात्मिकशब्दिते ॥ प्रोक्तास्त्रीणिशतानिश्लोकास्त्रिभुवनपापहराः ॥ अ० ५ श्लो० ३०० ॥

॥ ६२ ॥ आलिंगनस्यसर्वस्वत्वमुपपादयन्नाह । परिरंभइति । यतस्त्वंममभक्तोऽसिअतस्त्वयायंलब्धइतिशेषः ॥ ६३ ॥ कृतपुण्यपुंजोवायुतनयः तेनैवरामेण
परिरब्धमूर्तिः । अतुलांपदवींप्रयांतीतिकिंपुनर्वक्तव्यमितिशेषः ॥ ६४ ॥ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराजमानस्यहिम्मतिवर्मणः
पुत्रस्य श्रीरामवर्मणः कृतौअध्यात्मरामायणांबुधिसेतौसुंदरकांडेपंचमःसर्गः ॥ ५ ॥ श्रीकृष्णार्पणमस्तु ॥ श्रीरामचंद्रार्पणमस्तु ॥

इदमध्यात्मरामायणसुंदरकाण्डं मुम्बय्यां खेमराज
श्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर"
यन्त्रालयेऽङ्कयित्वा प्रकाशितम्।

संवत् १९६१, शके १८२६, सन् १९०५.

श्रीगणेशायनमः ॥ यथावदिति ॥ १ ॥ यदन्येनमनसास्मर्तुमपिनशक्यमित्यन्वयः ॥ २ ॥ धर्षयितुमशोकवनिकादिनाशेन ॥ ३ ॥ सुग्रीवस्येदृशइति भृत्यइ तिशेषः ॥ ४ ॥ कपीश्वरःसुग्रीवः ॥ ५ ॥ जानक्याःपरिमार्गणरूपंकार्यमनेनसुकृतंसम्यक्कृतम् । एवंहनुमंतंस्तुत्वाप्रकृतमाह । समुद्रमित्यादि । यतःसीदतीव ॥ ६ ॥ अतःकथमित्यादि ॥ ७ ॥ ८ ॥ यतश्चिंताकार्यविनाशिनीअतस्तांत्यज ॥ ९ ॥ त्वत्प्रियनिमित्तंपावकंप्रवेष्टुमपिसमुद्युक्तान् ॥ १० ॥ प्रथमंसमु

श्रीमहादेवउवाच ॥ यथावद्भाषितंवाक्यंश्रुत्वारामोहनूमतः ॥ उवाचानंतरंवाक्यंहर्षेणमहतावृतः ॥ १ ॥ कार्यंकृतंहनुमतादेवैरपिसुदु ष्करम् ॥ मनसापियदन्येनस्मर्तुंशक्यंनभूतले ॥ २ ॥ शतयोजनविस्तीर्णंलंघयेत्कःपयोनिधिम् ॥ लंकांचराक्षसैर्गुप्तांकोवाधर्षयितुंक्ष मः ॥ ३ ॥ भृत्यकार्यंहनुमताकृतंसर्वमशेषतः॥सुग्रीवस्येदृशोलोकेनभूतोनभविष्यति ॥ ४ ॥ अहंचरघुवंशश्चलक्ष्मणश्चकपीश्वरः ॥ जानक्यादर्शनेनाद्यरक्षिताःस्मोहनूमता ॥ ५ ॥ सर्वथासुकृतंकार्यंजानक्याःपरिमार्गणम् ॥ समुद्रंमनसास्मृत्वासीदतीवमनोमम ॥ ६ ॥ कथंनक्रझषाकीर्णंसमुद्रंशतयोजनम् ॥ लंघयित्वारिपुंहन्यांकथंद्रक्ष्यामिजानकीम् ॥ ७ ॥ श्रुत्वातुरामवचनंसुग्रीवः प्राहराघवम् ॥ समुद्रंलंघयिष्यामोमहानक्रझषाकुलम् ॥ ८ ॥ लंकांचविधमिष्यामोहनिष्यामोऽद्यरावणम् ॥ चिंतांत्यजरघुश्रेष्ठचिंताकार्यविनाशि नी ॥ ९ ॥ एतान्पश्यमहासत्त्वाञ्छूरान्वानरपुंगवान् ॥ त्वत्प्रियार्थंसमुद्युक्तान्प्रवेष्टुमपिपावकम् ॥ १० ॥ समुद्रतरणेबुद्धिंकुरुष्वप्रथ मंततः ॥ दृष्ट्वालंकांदशग्रीवोहतइत्येवमन्महे ॥ ११ ॥ नहिपश्याम्यहंकंचित्त्रिषुलोकेषुराघव ॥ गृहीतधनुषोयस्तेतिष्ठेदभिमुखो रणे ॥ १२ ॥ सर्वथानोजयोरामभविष्यतिनसंशयः ॥ निमित्तानिचपश्यामितथाभूतानिसर्वशः ॥ १३ ॥ सुग्रीववचनंश्रुत्वाभक्ति वीर्यसमन्वितम् ॥ अंगीकृत्याब्रवीद्रामोहनूमंतंपुरःस्थितम् ॥ १४ ॥ येनकेनप्रकारेणलंघयामोमहार्णवम् ॥ लंकास्वरूपंमेब्रूहिदुः साध्यंदेवदानवैः ॥ १५ ॥

द्रतरणविषयंनिश्चयमातिष्ठेत्यर्थः । लंकादर्शनोत्तरकालमस्माभीरावणोहतइत्येवमन्महे एषएवास्माकंनिश्चयइत्यर्थः ॥ ११ ॥ कंचित्कमपि ॥ १२ ॥ निमि त्तानिशकुनानि ॥ १३ ॥ १४ ॥ येनकेनप्रकारेणसमुद्रशोषणेनसेतुनावादेवदानवैर्दुःसाध्यंयोद्धुंप्रवेष्टुंचेतिशेषः ॥ १५ ॥

प्रतीकारंतन्नाशोपायम् ॥ १६ ॥ दिव्यत्वेनात्रिकूटशिखरस्थत्वेनचेतरासाध्यत्वम् ॥ १७ ॥ प्राकारोनगरवेष्टनभित्तिः परिखाःप्राकारसंलग्नाःप्राकाराद्बहिर्देशस्थाःखाताः ॥ १८ ॥ वाप्यःस्वल्पजलाशयाःअवतरणसोपानसहिवाःकूपविशेषाः ॥ १९ ॥ सहस्रशस्तिष्ठंतीतिशेषः ॥ २० ॥ २१ ॥ २२ ॥ संक्रमाःपरिबद्धाःसर्वप्रवेशायोग्यामार्गाः मेचेष्टितंमत्कृतोव्यवहारः ॥ २३ ॥ २४ ॥ संक्रमानाशिताःप्राकारपातनेनपूरयित्वासर्वप्रवेशयोग्याःकृताः ॥ २५ ॥

ज्ञात्वातस्यप्रतीकारंकरिष्यामिकपीश्वर ॥ श्रुत्वारामस्यवचनंहनूमान्विनयान्वितः ॥ १६ ॥ उवाचप्रांजलिर्देवयथादृष्टंब्रवीमिते ॥ लंकादिव्यापुरीदेवत्रिकूटशिखरेस्थिता ॥ १७ ॥ स्वर्णप्राकारसहितास्वर्णाट्टालकसंयुता ॥ परिखाभिःपरिवृतापूर्णाभिर्निर्मलोदकैः ॥ १८ ॥ नानोपवनशोभाढ्यादिव्यवापीभिरावृता ॥ गृहैर्विचित्रशोभाढ्यैर्मणिस्तंभमयैःशुभैः ॥ १९ ॥ पश्चिमद्वारमासाद्यगजवाहाःसहस्रशः ॥ उत्तरद्वारितिष्ठंतिसाश्ववाहाःसपत्तयः ॥ २० ॥ तिष्ठंत्यर्बुदसंख्याकाः प्राच्यामपितथैवच ॥ रक्षिणोराक्षसावीराद्वारंदक्षिणमाश्रिताः ॥ २१ ॥ मध्यकक्षेप्यसंख्याताःगजाश्वरथपत्तयः ॥ रक्षयंतिसदालंकांनानास्त्रकुशलाःप्रभो ॥ २२ ॥ संक्रमैर्विविधैर्लंकाशतघ्नीभिश्चसंयुता ॥ एवंस्थितेऽपिदेवेशशृणुमेतत्रचेष्टितम् ॥ २३ ॥ दशाननबलौघस्यचतुर्थांशोमयाहतः ॥ दग्ध्वालंकांपुरींस्वर्णप्रासादोधर्षितोमया ॥ २४ ॥ शतघ्न्यःसंक्रमाश्चैवनाशितामेरघूत्तम ॥ देवत्वदर्शनादेवलंकाभस्मीकृताभवेत् ॥ २५ ॥ प्रस्थानंकुरुदेवेशगच्छामोलवणांबुधेः ॥ तीरंसहमहावीरैर्वानरौघैःसमंततः ॥ २६ ॥ श्रुत्वाहनूमतोवाक्यमुवाचरघुनंदनः ॥ सुग्रीवसैनिकान्सर्वान्प्रस्थानायाभिनोदय ॥२७॥ इदानीमेवविजयोमुहूर्तःपरिवर्तते ॥ अस्मिन्मुहूर्तेगत्वाहंलंकांराक्षससंकुलाम् ॥२८॥ सप्राकारांसुदुर्धर्षांनाशयामिसरावणाम् ॥ आनेष्यामिचसीतांमेदक्षिणाक्षिस्फुरत्यधः ॥ २९ ॥ प्रयातुवाहिनीसर्वावानराणांतरस्विनाम् ॥ रक्षंतुयूथपाःसेनामग्रेपृष्ठेचपार्श्वयोः ॥ ३० ॥ हनूमंतमथारुह्यगच्छाम्यग्रेंऽगदंततः ॥ आरुह्यलक्ष्मणोयातुसुग्रीवत्वंमयासह ॥ ३१ ॥



लवणांबुधेस्तीरंगच्छामइत्यन्वयः ॥ २६ ॥ २७ ॥ विजयोऽन्वर्थनामा ॥ २८ ॥ सुतरांदुर्धर्षामपिनाशयामि ॥ २९ ॥ यूथपाःजांबवदाद्याः ॥ ३० ॥ त्वंमयासह । याहीतिशेषः ॥ ३१ ॥

॥ ३२ ॥ सेनापाःसेनापालाः ॥ ३३ ॥ वारणेंद्राःगजेंद्राः ॥ ३४ ॥ क्ष्वेलंतःक्ष्वेलाःयुद्धार्थंगच्छतांशूराणांगतिविशेषाः ॥ ३५ ॥ ३६ ॥ हरिभ्यांह नूमदंगदाभ्याम् नक्षत्रसदृशाअन्येहरयः । हनूमदंगदयोरत्युच्चत्वादंबरस्थचंद्रसूर्योपमा ॥ ३७ ॥ आवृत्त्यआच्छाद्य प्रस्फोटयंतःशौर्याविशकृतभूम्याघाते नपादपानुद्वहंतः । हस्तैर्युद्धार्थमितिशेषः ॥ ३८ ॥ सर्वत्रयावद्दर्शनपथदेशे ॥ ३९ ॥ नअसज्जतआसक्तानाभूत् अविश्रमंजगामेतियावत् ॥ ४० ॥

गजोगवाक्षोगवयोमैंदोद्विविदएवच ॥ नलोनीलःसुषेणश्चजांबवांश्चतथापरे ॥ ३२ ॥ सर्वेगच्छंतुसर्वत्रसेनापाःशत्रुघातिनः ॥ इत्या ज्ञाप्यहरीन्रामःप्रतस्थेसहलक्ष्मणः ॥ ३३ ॥ सुग्रीवसहितोहर्षात्सेनामध्यगतोविभुः ॥ वारणेंद्रनिभाःसर्वेवानराःकामरूपिणः ॥ ३४ ॥ क्ष्वेलंतःपरिगर्जंतोजग्मुस्तेदक्षिणांदिशम् ॥ भक्षयंतोययुःसर्वेफलानिचमधूनिच ॥ ३५ ॥ ब्रुवंतोराघवस्याग्रेहनिष्यामोऽद्यरावणम् ॥ एवंतेवानरश्रेष्ठागच्छंत्यतुलविक्रमाः ॥ ३६ ॥ हरिभ्यामुह्यमानौतौशुशुभातेरघूत्तमौ ॥ नक्षत्रैःसेवितौयद्वच्चंद्रसूर्याविवांबरे ॥ ३७ ॥ आवृत्त्यपृथिवींकृत्स्नांजगाममहतीचमूः ॥ प्रस्फोटयंतःपुच्छाग्रानुद्वहंतश्चपादपान् ॥ ३८ ॥ शैलानारोहयंतश्चजग्मुर्मारुतवेगतः ॥ असंख्याताश्चसर्वत्रवानराःपरिपूरिताः ॥ ३९ ॥ हृष्टास्तेजग्मुरत्यर्थंरामेणपरिपालिता ॥ गताचमूर्दिवारात्रंक्वचिन्नासज्जतक्षणम् ॥ ॥ ४० ॥ काननानिविचित्राणिपश्यन्मलयसह्ययोः ॥ तेसह्यंसमतिक्रम्यमलयंचतथागिरिम् ॥ ४१ ॥ आययुश्चानुपूर्व्येणसमुद्रंभीम निःस्वनम् ॥ अवतीर्यहनूमंतंरामःसुग्रीवसंयुतः ॥ ४२ ॥ सलिलाभ्याशमासाद्यरामोवचनमब्रवीत् ॥ आगताःस्मोवयंसर्वेसमुद्रंमक रालयम् ॥ ४३ ॥ इतोगंतुमशक्यंनोनिरुपायेनवानराः ॥ अत्रसेनानिवेशोऽस्तुमंत्रयामोऽस्यतारणे ॥ ४४ ॥ श्रुत्वारामस्यवचनंसुग्री वःसागरांतिके ॥ सेनांन्यवेशयत्क्षिप्रंरक्षितांकपिकुंजरैः ॥ ४५ ॥

तेवानराः ॥ ४१ ॥ आनुपूर्व्येणक्रमेणआययुःप्राप्ताः । हनूमंतंहनूमतः । पंचम्यर्थेआर्षीद्वितीया । सुग्रीवयुतोरामः ॥ ४२ ॥ सलिलसमीपंप्राप्यसुग्रीवं प्रतिरामोवचनमब्रवीदित्यन्वयः । आगताःप्राप्ताः स्मः ॥ ४३ ॥ निरुपायेनउपायंविना अस्यतारणेअस्यसमुद्रस्यतरणं । स्वार्थेणिच् । मंत्रयामः । उपायमितिशेषः ॥ ४४ ॥ ४५ ॥

विषेदुःदुःखिताबभूवुः । महोन्नतैस्तरंगैराढ्यंसंपन्नम् ॥ ४६ ॥ गगनाकारम् । विपुलत्वेनतत्सादृश्यम् । दुःखितावानराःकथंतरिष्यामइत्यादेःइतिचिंताकुला
इत्यनेनान्वयः ॥ ४७ ॥ अयेवहंतव्योहंतुमर्हः ॥ ४८ ॥ दुःखेनमहतावृतःआसीदितिशेषः । तत्रहेतुः । कार्यमानुषःकायार्थमानुषःनातिमानुष्यत्वः ।
एवंचेदंदुःखादितस्यनटनमेवेतिभावः ॥ ४९ ॥ वस्तुतोनतस्यदुःखादित्याह । अद्वितीयइति । द्वितीयाद्वैभयंभवति । इतिश्रुतेस्तस्यनदुःखादीतिभावः ।
तदुपपादकंचिदात्मैकइति । अनेकचेतनकल्पनेगौरवात्सोऽद्वितीयएकइतिभावः । किंच योरामस्यस्वरूपंतत्त्वतःतत्त्वमस्यादिवाक्यतोजानातिसोऽपिदुःखा
दिभयतोमुच्यते । स्वयमानंदस्वरूपस्यभगवतोनदुःखादि इतिकिंवक्तव्यमितिभावः । दुःखादीत्यत्रादिशब्दग्राह्यमाह । दुःखेति ॥ ५० ॥ ५१ ॥ तत्त्वज्ञ

तेपश्यंतोविषेदुस्तंसागरंभीमदर्शनम् ॥ महोन्नततरंगाढ्यंभीमनक्रभयंकरम् ॥ ४६ ॥ अगाधंगगनाकारंसागरंवीक्ष्यदुःखिताः ॥ तरि
ष्यामःकथंघोरंसागरंवरुणालयम्॥४७॥हंतव्योस्माभिरद्यैवरावणोराक्षसाधमः॥इतिचिंताकुलाःसर्वेरामपार्श्वेव्यवस्थिताः ॥४८॥ रामः
सीतामनुस्मृत्यदुःखेनमहतावृतः॥विलप्यजानकींसीतांबहुधाकार्यमानुषः ॥४९॥ अद्वितीयश्चिदात्मैकःपरमात्मासनातनः॥यस्तुजाना
तिरामस्यस्वरूपंतत्त्वतोजनः॥५०॥ तंनस्पृशतिदुःखादिकिमुतानंदमव्ययम्॥दुःखहर्षभयक्रोधलोभमोहमदादयः ॥५१॥ अज्ञानलिंगा
न्येतानिकुतःसंतिचिदात्मनि॥देहाभिमानिनोदुःखंनादेहस्यचिदात्मनः॥५२॥संप्रसादेद्वयाभावात्सुखमात्रंहिदृश्यते ॥ बुद्ध्याद्यभावात्सं
शुद्धेदुःखंतत्रनदृश्यते ॥ अतोदुःखादिकंसर्वंबुद्धेरेवनसंशयः ॥ ५३ ॥ रामःपरात्मापुरुषःपुराणोनित्योदितोनित्यसुखोनिरीहः॥तथापि
मायागुणसंगतोऽसौसुखीवदुःखीवविभाव्यतेऽबुधैः ॥ ५४ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेयुद्धकांडेप्रथमःसर्गः ॥ १ ॥

मपितानिकुतोनस्पृशंतीत्यत्रहेतुमाह । अज्ञानलिंगानीति । तस्यतत्त्वज्ञानेननाशादितिभावः । चिदात्मनिसर्वथाऽज्ञानरहितेतानिकुतःसंतिकथंभवंतीत्यर्थः ।
तदेवदार्ढ्यायपुनराह । देहेति ॥ ५२ ॥ तस्यसुखरूपत्वेहेतुमाह । संप्रसादेइति । सुषुप्तावित्यर्थः । द्वयाभावाद्द्वितीयाभावात् । ननुशुद्धेऽपिदुःखंकुतोनत
त्राह । बुद्ध्याद्यभावादिति । यतोबुद्धिरहितेतत्रनदृश्यते । अतोबुद्धेरेवतत्सर्वमित्यर्थः ॥ ५३ ॥ नित्योदितत्वेननाशराहित्यम् । अबुधैर्मायागुणैःसंगतःतत्संग
तत्वेगकल्पितःसुखीवदुःखीवचविभाव्यते ॥ ५४ ॥ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराजमानस्य हिम्मतिवर्मणःपुत्रस्यश्रीरामवर्मणः
कृतावध्यात्मरामायणसेतौयुद्धकांडेप्रथमःसर्गः ॥ १ ॥

लंकायामिति । दैवतैर्वापिदैवतैरपीत्यर्थः । वापादपूरणे ॥ १ ॥ २ ॥ अक्षंहत्वेत्यनुकर्षः ॥ ३ ॥ स्वस्थइत्यनेनभवत्कृतांगवैकृतराहित्यंसूचितम् ॥ ४ ॥ यत्कृतंसन्मेहितंभवेत्तन्मंत्रयध्वमित्यन्वयः ॥ ५ ॥ लोकजितः इंद्रादिलोकजयिनः ॥ ६ ॥ तदेवाह । इंद्रस्त्विति । पत्तनेपुरेकुबेरंजित्वापुष्पकमानीयभुज्यत इत्यन्वयः ॥ ७ ॥ यदायमोजितस्त्वदाकालदंडादपिभयंनाभूत्तत्कुतोमानुषाद्भयमितिभावः । सर्वेऽपिराक्षसाइत्यस्यत्वदधीनाइविशेषः ॥ ८ ॥ ९ ॥ नोऽस्मा

लंकायांरावणोदृष्ट्वाकृतंकर्महनूमता ॥ दुष्करंदैवतैर्वापिह्रियाकिंचिदवाङ्मुखः ॥ १ ॥ आहूयमंत्रिणःसर्वानिदंवचनमब्रवीत् ॥ हनूमता कृतंकर्मभवद्भिर्दृष्टमेवतत् ॥ २ ॥ प्रविश्यलंकांदुर्धर्षांदृष्ट्वासीतां दुरासदाम् ॥ हत्वाचराक्षसान्वीरानक्षंमंदोदरीसुतम् ॥ ३ ॥ दग्ध्वालंका मशेषेणलंघयित्वाचसागरम् ॥ युष्मान्सर्वानतिक्रम्यस्व स्थोऽगात्पुनरेवसः ॥४॥ किंकर्तव्यमितोऽस्माभिर्यूयंमंत्रविशारदाः ॥ मंत्रयध्वं प्रयत्नेनयत्कृतंमेहितंभवेत् ॥ ५ ॥ रावणस्यवचःश्रुत्वाराक्षसास्तमथाब्रुवन् ॥ देवशंकाकुतोरामात्तवलोकजितोरणे ॥ ६ ॥ इंद्रस्तुव द्धानिक्षिप्तःपुत्रेणतवपत्तने ॥ जित्वाकुबेरमानीयपुष्पकंभुज्यतेत्वया ॥७॥ यमोजितःकालदंडाद्भयंनाभूत्तवप्रभो ॥ वरुणोहुंकृतेनैवजितः सर्वेऽपिराक्षसाः ॥ ८ ॥ मयोमहासुरोभीत्याकन्यांदत्वास्वयंतव ॥ त्वद्वशेवर्ततेऽद्यापिकिमुतान्येमहासुराः ॥ ९ ॥ हनूमद्धर्षणंयत्तुतद वज्ञाकृतंचनः ॥ वानरोऽयंकिमस्माकमस्मिन्पौरुषदर्शने ॥ १० ॥ इत्युपेक्षितमस्माभिर्धर्षणंतेनकिंभवेत् ॥ वयंप्रमत्ताःकिंतेनवंचिताः स्मोहनूमता ॥ ११ ॥ जानीमोयदितंसर्वेकथंजीवन्गमिष्यति ॥ आज्ञापयजगत्कृत्स्नमवानरममानुषम् ॥ १२ ॥ कृत्वायास्यामहेसर्वेप्र त्येकंवानियोजय ॥ कुंभकर्णस्तदाप्राहरावणंराक्षसेश्वरम् ॥ १३ ॥

कंयातदवज्ञातस्मिन्नवज्ञावत्कृतमित्यर्थः । अवज्ञाकारणमाहुः । अयंवानरःकिमस्माकम् । करिष्यतीतिशेषः । अस्मिन्वानरेपौरुषस्यदर्शनेकिंफलंतत् ॥ १० ॥ इतीत्यादि । धर्षणंतेनकिंभवेदिति । तस्योपेक्षाभावेइत्यादि । अयंकिं कःपदार्थः इतिवयंप्रमत्तास्तेनप्रमादेनहनूमतावंचिताः ॥ ११ ॥ यदितंजानीमः अयमेवं रूपइतियदिजानीमइत्यर्थः । गमिष्यति गतःस्यादित्यर्थेआर्षम् ॥ १२ ॥ सर्वानाज्ञापयएकैकंवेत्यर्थः ॥ १३ ॥

यत्कर्मत्वयारब्धंवत्केवलंस्वात्मनाशाय । आरंभकालएवनाशःप्रसक्तःपरंतुभाग्याज्जीवितोऽसियत्तदारामेणनदृष्टोसि ॥ १४ ॥ जीवन्नायासीत्यत्रहेतुभूतंरामस्वरू
पमाह । रामोनेति ॥ १५ ॥ त्वयाआनीतेतिच्छेदः ॥ १६ ॥ विषपिंडमिवतत्सदृशम् आगीर्यनिगीर्यमहामीनोयथापश्चात्तप्यतितथात्वयाजानकीआनीता ।
अथकिंवाभविष्यतीतिपश्चात्तप्स्यसेइतिशेषः ॥ १७ ॥ सर्वंसमंकरिष्यामि । पराक्रमेणेतिभावः ॥ १८ ॥ १९ ॥ एकतानः तन्मात्रविषयध्यानवान् । देवा
रिंरावणंप्रणम्योपतत्समीपेभ्रातृत्वादुपविष्टः ॥ २० ॥ कुंभश्रवणः कुंभकर्णः आदिनेंद्रजित् मत्तप्रमत्तान् अतिशयेनमत्तानित्यर्थः । कामातुरंदशाननंविलोक्य

आरब्धंयत्त्वयाकर्मस्वात्मनाशायकेवलम् ॥ नदृष्टोऽसितदाभाग्यात्त्वंरामेणमहात्मना ॥१४॥ यदिपश्यतिरामस्त्वांजीवन्नायासिरावण॥
रामोनमानुषोदेवःसाक्षान्नारायणोऽव्ययः ॥ १५ ॥ सीताभगवतीलक्ष्मीरामपत्नीयशस्विनी ॥ राक्षसानांविनाशायत्वयानीतासुमध्य
मा ॥ १६ ॥ विषपिंडमिवागीर्यमहामीनोयथातथा ॥ आनीताजानकीपश्चात्त्वयाकिंवाभविष्यति ॥ १७ ॥ यद्यप्यनुचितंकर्मत्वयाकृ
तमजानता ॥ सर्वंसमंकरिष्यामिस्वस्थचित्तोभवप्रभो ॥ १८ ॥ कुंभकर्णवचः श्रुत्वावाक्यमिंद्रजिदब्रवीत् ॥ देहिदेवममानुज्ञांहत्वारामं
सलक्ष्मणम् ॥ सुग्रीवंवानरांश्चैवपुनर्यास्यामितेंऽतिकम् ॥ १९ ॥ तत्रागतोभागवतप्रधानोविभीषणोबुद्धिमतांवरिष्ठः ॥ श्रीरामपाद
द्वयएकतानःप्रणम्यदेवारिमुपोपविष्टः ॥२०॥ विलोक्यकुंभश्रवणादिदैत्यान्मत्तप्रमत्तानतिविस्मयेन॥विलोक्यकामातुरमप्रमत्तोदशाननं
प्राहविशुद्धबुद्धिः ॥ २१ ॥ नकुंभकर्णेंद्रजितौचराजंस्तथामहापार्श्वमहोदरौतौ ॥ निकुंभकुंभौचतथातिकायःस्थातुंनशक्तायुधिराघव
स्य ॥ २२ ॥ सीताभिधानेनमहाग्रहेणग्रस्तोऽसिराजन्नचतोविमोक्षः ॥ तामेवसत्कृत्यमहाधनेनदत्वाभिरामायसुखीभवत्वम् ॥ २३ ॥
यावन्नरामस्यशिताः शिलीमुखालंकामभिव्याप्यशिरांसिरक्षसाम् ॥ छिंदंतितावद्रघुनायकस्यभोस्तांजानकींत्वंप्रतिदातुमर्हसि ॥२४॥

प्राह ॥ २१ ॥ कुंभकर्णेंद्रजितौयस्ययुधिस्थातुंनशक्तौतौप्रसिद्धौमहापार्श्वमहोदरावपिनशक्तौ तथानिकुंभकुंभातिकायाअपिनशक्ताः । अन्येषांकागणनेति
भावः ॥ २२ ॥ नचतेविमोक्षःततोमहाग्रहादितिशेषः । महाधनेनरत्नादिना ॥ २३ ॥ अभिव्याप्येत्यनेनयुगपत्सर्वदेशावच्छेदेनशिरश्छेदसूचनम् । तेनपराक्र
मातिशयवर्णनम् । तांरक्षःकुलस्यकालरात्रिरूपाम् ॥ २४ ॥

हरींद्रतुल्याःमहासिंहसदृशायावन्नविनाशयंतिवावत्ततःप्राक्देहीत्यन्वयः ॥ २५ ॥ सुरेंद्रैःकुबेरादिभिः देवराजःइंद्रः नमृत्योःलोकंगवोऽपीतिशेषः ॥ २६ ॥ ॥ २७ ॥ दैत्योरावणः मद्दत्तैर्भोगैःभोगसाधनैः ॥ २८ ॥ प्रतीपंप्रतिकूलम् ॥ २९ ॥ कृतघ्नत्वादेवानार्येण । अत्रार्थांतरन्यासमाह । विनाशमिति ॥ ३० ॥ योऽन्योनिशाचरएवंविधंवाक्यंब्रूयात्तंतस्मिन्क्षणेएववचनकथनकालएवहन्मि । त्वंतुभ्रातृत्वाद्धननायोग्यइतितवधिक्कारएववधइत्याह । धिगि त्यादि ॥ ३१ ॥ परुषंधिगितिवचनम् ॥ ३२ ॥ रावणंप्रतिवचोऽब्रवीदित्यन्वयः । यदब्रवीत्तदाह । मेति । यद्यपिप्रियवादिनमेवमाम् ॥ ३३ ॥ त्वंधि

यावन्नगाभाःकपयोमहाबलाहरींद्रतुल्यानखदंष्ट्रयोधिनः ॥ लंकांसमाक्रम्यविनाशयंतितेतावद्द्रुतंदेहिरघूत्तमायताम् ॥ २५॥ जीवन्नरामेण विमोक्ष्यसेत्वंगुप्तःसुरेंद्रैरपिशंकरेण ॥ नदेवराजांकगतोनमृत्योः पाताललोकानपिसंप्रविष्टः ॥ २६ ॥ शुभंहितंपवित्रंचविभीषणवचः खलः ॥ प्रतिजग्राहनैवासौम्रियमाणइवौषधम् ॥२७॥ कालेननोदितोदैत्योविभीषणमथाब्रवीत्॥ मद्दत्तभोगैःपुष्टांगोमत्समीपेवसन्नपि ॥ ॥ २८ ॥ प्रतीपमाचरत्येषममैवाहितकारिणः ॥ मित्रभावेनशत्रुर्मेजातोनास्त्यत्रसंशयः ॥ २९ ॥ अनार्येणकृतघ्नेनसंगतिर्मेनयुज्यते ॥ विनाशमभिकांक्षंतिज्ञातीनांज्ञातयःसदा ॥ ३० ॥ योऽन्यस्त्वेवंविधंब्रूयाद्वाक्यमेकंनिशाचरः ॥ हन्मितास्मिन्क्षणेएवाधिक्त्वांरक्षःकुलाध मम् ॥ ३१ ॥ रावणेनैवमुक्तःसन्परुषंसविभीषणः ॥ उत्पपातसभामध्याद्गदापाणिर्महाबलः ॥ ३२ ॥ चतुर्भिर्मंत्रिभिःसार्धंगगनस्थोऽब्र वीद्वचः ॥ क्रोधेनमहताविष्टोरावणंदशकंधरम् ॥ माविनाशमुपैहित्वंप्रियवादिनमेवमाम्॥ ३३ ॥ धिक्करोषितथापित्वंज्येष्ठोभ्रातापितुः समः ॥ कालोराघवरूपेणजातोदशरथालये ॥ ३४ ॥ कालीसीताभिधानेनजाताजनकनंदिनी ॥ तावुभावागतावत्रभूमेर्भारापनुत्तये ॥ ॥ ३५ ॥ तेनैवप्रेरितस्त्वंतुनशृणोषिहितंमम ॥ श्रीरामःप्रकृतेः साक्षात्परस्तात्सर्वदास्थितः ॥ ३६ ॥

क्करोषितथापिपितुःसमोज्येष्ठोभ्रातात्वमितितवहितंब्रवीमिइतिशेषः । तदाह । कालइति । सर्वसंहर्तेत्यर्थः ॥ ३४ ॥ कालीसर्वसंहारेसहायभूताशक्तिः ॥ ॥ ३५ ॥ तेनैवरामेणअंतर्यामित्वादितिभावः । स्वकर्तव्यनिर्वाहार्थंववतथाप्रेरणेवितात्पर्यम् । अंतर्यामित्वमेवतस्यव्युत्पादयति । श्रीरामइति । प्रकृतेः साक्षाद्द्रष्टेत्यर्थः । एवंचप्रकृतिकार्यद्रष्टृत्वमर्थात्सिद्धम् । तत्किंप्रकृतिसंबद्धस्तथासतितद्धर्मलेपापत्तिर्हारिद्रादिसंबंधाद्वस्त्रस्येवेत्यतआह । परस्तात्सर्वदेति । पंकपद्मन्यायेनतद्धर्मासंबद्धः ॥ ३६ ॥

प्रकृतिद्रष्टृत्वमेवाह । बहिरिति । समोनतुन्यूनाधिकभावेनापिवैषम्येण । यथाकर्मफलप्रदत्वादितिभावः । वस्तुतस्तद्व्यतिरिक्तंनैवकिंचित्सदस्तीत्याह । नामेति । यत्किंचित्सत्त्वेननामादिप्रतीयतेतत्सर्वंतन्मयत्वादेवतथाप्रतीतिविषयइतिभावः ॥ ३७ ॥ एकस्यानेकरूपत्वंदृष्टांतेनसाधयति । यथेति ॥ ३८ ॥ दार्ष्टांतिकेयोजयति । पंचेति । अन्नमयप्राणमयमनोमयविज्ञानमयानंदमयाःपंचकोशाः । आदिनाभूतादीनि । तत्रान्नमयःस्थूलशरीरम् ततःक्रमेणसूक्ष्माअन्ये । दृष्टांतांतरमाह । नीलेति ॥ ३९ ॥ सएषःरामः स्वमायागुणाःसत्त्वादयस्तेर्बिंबितायस्मिन्निितिविग्रहः तेषुप्रतिबिंबितइतिवा ॥ ४० ॥ तत्ररजोगुणप्रतिबिंबे प्रधानपुरुषावित्याह । प्रधानेति । प्रधानंपरिणामि पुरुषःस्वभोगापवर्गार्थंतत्प्रवर्तकइत्युभाभ्यांसृष्टिः । तमोगुणप्रतिबिंबंकालइत्याह । कालरूपेणेति । कल नांसंहारम् । अर्थात्सत्त्वगुणप्रतिबिंबितोव्यक्तमित्युच्यते । सचांतर्यामितयासर्वपालकोदुर्ज्ञेयतयाचाव्यक्तमितिभावः ॥ ४१ ॥ तत्रकालरूपीसंहारप्रधानइदा

बहिरंतश्चभूतानांसमःसर्वत्रसंस्थितः ॥ नामरूपादिभेदेनतत्तन्मयइवामलः ॥ ३७ ॥ यथानानाप्रकारेषुवृक्षेष्वेकोमहानलः ॥ तत्तदाकृतिभेदेनभिद्यतेज्ञानचक्षुषाम् ॥ ३८ ॥ पंचकोशादिभेदेनतत्तन्मयइवावभौ ॥ नीलपीतादियोगेनानिर्मलः स्फटिकोयथा ॥ ३९ ॥ सएव नित्यमुक्तोऽपिस्वमायागुणबिंबितः ॥ कालःप्रधानंपुरुषोऽव्यक्तंचेतिचतुर्विधः ॥४०॥ प्रधानपुरुषाभ्यांसजगत्कृत्स्नंसृजत्यजः ॥ कालरूपेणकलनांजगतःकुरुतेऽव्ययः ॥ ४१ ॥ कालरूपीसभगवान्रामरूपेणमायया ॥ ४२ ॥ ब्रह्मणाप्रार्थितोदेवस्त्वद्वधार्थमिहागतः ॥ तदन्यथाकथंकुर्यात्सत्यसंकल्पईश्वरः ॥ ४३ ॥ हनिष्यातित्वांरामस्तुसपुत्रबलवाहनम् ॥ हन्यमानंनशक्नोमिद्रष्टुंरामेणरावण ॥ ४४ ॥

नींरामइत्याह । कालेति ॥ ४२ ॥ ननुसर्वसमस्यभगवतोमद्वधेकथंप्रवृत्तिरतआह । ब्रह्मणेति । परिपालनानुगुण्येनदुष्टनिग्रहेऽपिनसमत्वहानिः । कर्मानुरूपफलदातृत्वमेवतस्यसमत्वम् । तदननुरूपफलदानेहितस्यवैषम्यमापद्येत । नचतदस्तियथानेकेषुकर्मानुरूपफलदोराजासर्वेषुसमइत्येवव्यवह्रियतेनतुविषमइतिभावः । अन्यथाकारणाभावेहेतुः सत्यसंकल्पत्वम् ॥ ४३ ॥ हनिष्यतीति । सत्यसंकल्पत्वादेवेतिभावः । नन्वेवमवश्यंभाविनिमद्वधेतवगमनेनकिंतत्राह । हन्यमानमिति । हेरावणत्वांस्वामिबुद्धिविषयंस्वीयत्वबुद्धिविषयंचराक्षसकुलंहन्यमानंद्रष्टुंनशक्नोमिअतस्त्वयिराक्षसकुलेचतांबुद्धिंविहायरामेवानरेषुचोक्तबुद्धिंकृत्वाराघवं गच्छामि । तथाबुद्धिकृतमेवचदुःखमितिभावः ॥ ४४ ॥

॥ ४५ ॥ विसृज्यसर्वमित्यनेनवैराग्यमुक्तम् । भगवद्भजनेतस्यमुख्यांगत्वात् ॥ परिपूर्णोमनसिभावोमानसोमनोरथोयस्यसः भगवद्भजनंकार्यमितितस्य सार्वदिकोमनोरथः ॥ ४६ ॥ ॥ इति श्रीमत्सकलराजविपदुद्धरण०युद्धकांडेद्वितीयःसर्गः ॥ २ ॥ ॥ विभीषणइति ॥ १ ॥ ते दारहर्तूरावणस्याह मनुजोनाम्नाविभीषणइत्यन्वयः ॥ २ ॥ भ्रात्रारावणेनाहंनिरस्तःधिक्कृतः अविदितात्मनःअविदितस्वस्वरूपस्य ॥ ३ ॥ प्रेषयसत्कृत्यप्रेषयेत्यर्थः । काल रूपस्यतवपाशःअंतर्यामितयाप्रेरणातदधीनतांप्राप्तः ॥ ४ ॥ अश्रवणमात्रमेवनकिंत्वधिकमयीत्याह । हंतुमिति । भयात् । तद्भयात्संसारेएववैराग्येणतस्मादे

त्वांराक्षसंकुलंकृत्स्नंततोगच्छामिराघवम्॥मयियातेसुखीभूत्वारमस्वभवनेचिरम्॥४५॥ विभीषणोरावणवाक्यतःक्षणाद्विसृज्यसर्वंसपरि च्छदंगृहम् ॥ जगामरामस्यपदारविंदयोःसेवाभिकांक्षीपरिपूर्णमानसः ॥ ४६ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेयुद्धकांडेद्वि तीयःसर्गः ॥ २ ॥ ॥ छ ॥ ॥ विभीषणोमहाभागश्चतुर्भिर्मंत्रिभिःसह ॥ आगत्यगगनेरामसंमुखेसमवस्थितः ॥ १ ॥ उच्चैरुवाचभोः स्वामिन्रामराजीवलोचन ॥ रावणस्यानुजोऽहंतेदारहर्तुर्विभीषणः ॥ २ ॥ नाम्नाभ्रात्रानिरस्तोऽहंत्वामेवशरणंगतः ॥ हितमुक्तंमयादेवत स्यचाविदितात्मनः ॥ ३ ॥ सीतांरामायवैदेहींप्रेषयेतिपुनःपुनः ॥ उक्तोऽपिनशृणोत्येषकालपाशवशंगतः ॥ ४ ॥ हंतुंमांखड्गमादायप्रा द्रवद्राक्षसाधमः ॥ ततोऽचिरेणसचिवैश्चतुर्भिःसहितोभयात् ॥५॥ त्वामेवभवमोक्षायमुमुक्षुःशरणंगतः ॥ विभीषणवचःश्रुत्वासुग्रीवोवा क्यमब्रवीत् ॥ ६ ॥ विश्वासार्होनतेराममायावीराक्षसाधमः ॥ सीताहर्तुर्विशेषेणरावणस्यानुजोबली ॥ ७ ॥ मंत्रिभिःसायुधैरस्मान्विव रेनिहनिष्यति ॥ तदाज्ञापयमेदेववानरैर्हन्यतामयम् ॥ ८ ॥ ममैवंभातितेरामबुद्ध्याकिंनिश्चितंवद ॥ श्रुत्वासुग्रीववचनंरामःसस्मितम ब्रवीत् ॥ ९ ॥ यदीच्छामिकपिश्रेष्ठलोकान्सर्वान्सहेश्वरान् ॥ निमिषार्धेनसंहन्यांसृजामिनिमिषार्धतः ॥ १० ॥

वमोक्षायतदिच्छावान्त्वांशरणंगतइत्यन्वयः ॥ ५ ॥ ६ ॥ सीताहर्तुरनुजइतिविशेषेणविश्वासार्होनेत्यन्वयः ॥७॥ विवरेऽन्येनयुद्धासक्त्यादिरूपेछिद्रे ॥ ८ ॥ ममैवंबुद्धिःतवबुद्ध्यांतःकरणेनकिंनिश्चितंतद्वदेत्यर्थः ॥९॥ यदीच्छामीति । अनेनसत्यसंकल्पईश्वरोहमितिसूचितम् । सहेश्वरान् । अत्रेश्वराइंद्राद्याः ॥ १० ॥

१ सर्वदाभवः । संततमनुवर्तमान इत्यर्थः ।

अभयमितिच्छेदः ॥ ११ ॥ नन्वेवंविधेभ्योऽभयदानंनोचितमितिचेत्तत्राह । सकृदेवेति । तवास्मीतिप्रपन्नायअंगीकृतवते याचते । शं[1]त्रंतम् । अभयमिति शेषः । सर्वभूतेभ्यः सर्वप्राणिभ्यः । निकृष्टायापीतिशेषः । तादृशायाप्यभयंददामीतिमेव्रतम् । तत्रास्मैअभयादानेमेव्रतभंगःस्यादितिनकिंचिद्वाच्यमिति भावः ॥ १२ ॥ १३ ॥ १४ ॥ रामंश्याममित्यादिध्यानप्रकारः ॥ १५ ॥ १६ ॥ अथस्तौति । नमस्तेइति ॥ १७ ॥ १८ ॥ जगदिति । यतोवाइमानिभूतानिजायंते येनजातानिजीवंति यत्प्रयंत्यभिसंविशंति । इतिश्रुतिबोधितजगत्स्थित्युत्पत्तिनाशकरणायेत्यर्थः । त्रैलोक्यगुरवेअंतर्यामितयेतिभावः ।

अतोमयाऽभयंदत्तंशीघ्रमानयराक्षसम् ॥ ११ ॥ सकृदेवप्रपन्नायतवास्मीतिचयाचते ॥ अभयंसर्वभूतेभ्योददाम्येतद्व्रतंमम ॥ १२ ॥ रामस्यवचनंश्रुत्वासुग्रीवोहृष्टमानसः ॥ विभीषणमथानाय्यदर्शयामासराघवम् ॥ १३ ॥ विभीषणस्तुसाष्टांगंप्रणिपत्यरघूत्तमम् ॥ हर्षगद्गदयावाचाभक्त्याचपरयान्वितः ॥ १४ ॥ रामंश्यामंविशालाक्षंप्रसन्नमुखपंकजम् ॥ धनुर्बाणधरंशांतंलक्ष्मणेनसमन्वितम् ॥ १५ ॥ कृतांजलिपुटोभूत्वास्तोतुंसमुपचक्रमे ॥ १६ ॥ विभीषणउवाच ॥ नमस्तेरामराजेंद्रनमःसीतामनोरम ॥ नमस्तेचंडकोदंडनमस्तेभक्तवत्सल ॥ ॥ १७ ॥ नमोऽनंतायशांतायरामायामिततेजसे ॥ सुग्रीवमित्रायचतेरघूणांपतयेनमः ॥ १८ ॥ जगदुत्पत्तिनाशानांकारणायमहात्मने॥ त्रैलोक्यगुरवेऽनादिगृहस्थायनमोनमः ॥ १९ ॥ त्वमादिर्जगतांरामत्वमेवस्थितिकारणम् ॥ त्वमंतेनिधनस्थानंस्वेच्छाचारस्त्वमेवहि ॥ ॥ २० ॥ चराचराणांभूतानांबहिरंतश्चराघव ॥ व्याप्यव्यापकरूपेणभवान्भातिजगन्मयः ॥ २१ ॥ त्वन्माययाहृतज्ञानानष्टात्मानोविचेतसः ॥ गतागतंप्रपद्यंतेपापपुण्यवशात्सदा ॥ २२ ॥

अनादिगृहस्थायसदामायागृहिण्यास्वशक्तिरूपयायुतायेत्यर्थः ॥ १९ ॥ तदेवपुनःस्पष्टमाह । त्वमादिरिति । उत्पत्तिकारणस्थानमित्यर्थः । निधनस्थानं लयस्थानम् एवंचोत्पत्त्यादयोऽपित्वद्विवर्तभूताएवनातिरिक्ताइतिसूचितम् । स्वेच्छाचारत्वेननपराधीनत्वंसूचितम् ॥ २० ॥ व्याप्यव्यापकरूपेणेति । यथामहामत्स्यस्याल्पमत्स्योव्याप्यः ॥ २१ ॥ हृतज्ञानास्त्वद्रूपंजगदितिज्ञानहीनाः अतएवनष्टात्मानः अतएवनष्टकंठचामीकरवत्अज्ञातंस्वस्वरूपंयेषांतेअतएवविचेतसःविरुद्धेप्रवृत्तिमार्गेचेतोयेषांते गतागतंजन्ममरणरूपंसंसारम् ॥ २२ ॥

---

१ शतृप्रत्ययान्तं ' याचत् ' इत्याकारकं रूपमित्यर्थः । छान्दसं परस्मैपदम् ।

यावदन्यविषयरहितेनज्ञानस्वरूपभवद्विषयचित्तेनभवान्नज्ञायते तावज्जगत्सत्यंभातित्वत्स्वरूपज्ञाने तुत्वमेवसर्वरूपेणैवभासीतिज्ञानेतुभासमानस्यजगतोमिथ्यात्वं भाति । यथायावच्छुक्तिकास्वरूपेणनज्ञायतेतावत्तत्रभातरजतंसत्यमितिभातिशुक्तिकाज्ञानेतुतन्मिथ्येतिज्ञायतेतद्वत् ॥ २३ ॥ तदेवदार्ढ्यायपुनराह । त्वदज्ञाना दिति । युक्ताःतत्रैवसत्यत्वाभिमानेनलीनचित्ताः रमंतेप्रीत्याभुंजंते अंतेवियोगेदुःखप्रदान् ॥ २४ ॥ त्वमेवसर्वरूपइत्याह । त्वमिति ॥ २५ ॥ अणीयान्सर्व थादुर्ज्ञेयत्वात् । स्थूलतरःविभुत्वात् । मातापितृवत्सर्वत्रसमःपालनेइत्याह । त्वंपितेत्यादि ॥ २६ ॥ अच्युतःकयापिशक्त्याच्युतोहीनोन । अनेनसर्वशक्ति मत्त्वम् । अव्ययःव्ययोऽत्रवृद्ध्यपक्षयस्तद्रहितः । त्वंपाणीति ॥ अपाणिपादोजवनोग्रहीता इतिश्रुतेः ॥ २७ ॥ विपरीतक्रमेणश्रोतेत्याद्युक्तिः । कोशेभ्यः अन्नमयप्राणमयमनोमयविज्ञानमयानंदमयेभ्यःपंचकोशेभ्योव्यतिरिक्तस्तद्दोषास्पृष्टः निर्गुणःस्वतोनिर्गुणइत्यर्थः । मायासंबंधात्तुगुणवानिव निरुपाश्रयःआधारां

तावत्सत्यंजगद्भातिशुक्तिकारजतंयथा ॥ यावन्नज्ञायतेज्ञानचेतसानान्यगामिना ॥ २३ ॥ त्वदज्ञानात्सदायुक्ताःपुत्रदारगृहादिषु ॥ रमं तेविषयान्सर्वानंतेदुःखप्रदान्विभो ॥ २४ ॥ त्वमिंद्रोऽग्निर्यमोरक्षोवरुणश्चतथानिलः ॥ कुवेरश्चतथारुद्रस्त्वमेवपुरुषोत्तम ॥ २५ ॥ त्वमणोरप्यणीयांश्चस्थूलात्स्थूलतरःप्रभो ॥ त्वंपितासर्वलोकानांमाताधातात्वमेवहि ॥ २६ ॥ आदिमध्यांतरहितःपरिपूर्णोऽच्युतोऽ व्ययः ॥ त्वंपाणिपादरहितश्चक्षुःश्रोत्रविवर्जितः ॥ २७ ॥ श्रोताद्रष्टाग्रहीताचजवनस्त्वंखरान्तकः ॥ कोशेभ्योव्यतिरिक्तस्त्वंनिर्गुणोनि रुपाश्रयः ॥ २८ ॥ निर्विकल्पोनिर्विकारोनिराकारोनिरीश्वरः ॥ षड्भावरहितोऽनादिःपुरुषःप्रकृतेःपरः ॥ २९ ॥ माययागृह्यमाणस्त्वं मनुष्यइवभाव्यसे ॥ ज्ञात्वात्वांनिर्गुणमजंवैष्णवामोक्षगामिनः ॥ ३० ॥

तररहितः ॥ २८ ॥ निर्विकल्पःवस्तुतोनिर्धर्मकत्वान्निर्विकल्पकज्ञानस्यैवविषयोनसविकल्पकस्येतिभावः । अतएवनिराकारःत्वत्पूज्यस्येश्वरांतरस्याभावा न्निरीश्वरः । उक्तंनिर्विकारत्वंविवृणोति । षड्भावरहितइति । जायतेऽस्तिविपरिणमतेवर्धतेऽपक्षीयतेनश्यतीतिनिरुक्तौ षड्भावविकारहीनः अतएवानादिः जग त्तुत्वद्विवर्तएवेतिभावः । प्रकृतिसंबंधादपितेनविकारइत्याह । प्रकृतेःपरःतद्दोषगुणासंस्पृष्टइत्यर्थः ॥ २९ ॥ नन्वीदृशस्यममग्रहणंकुतस्तत्राह । माययेति । इदंत्वद्दर्शनंमायैव । तदेवाह । मनुष्यइवेति । एवंमायिकस्यास्यतवरूपस्यज्ञानान्नमुक्तिःकिंतुपूर्वोक्तरूपज्ञानादेवेत्याह । ज्ञात्वेति । तज्ज्ञानकारणंचात्रमायिकेत वरूपेभक्तिरित्येवज्ञानमपिपरंपरयातदुपयोगीतिभावः ॥ ३० ॥

तदेवाह । अहमिति । भक्तिरूपांनिःश्रेणींप्राप्यज्ञानयोगाख्यंसौधंपूर्वोक्तज्ञानयोगाख्यंसौधम् ॥ ३१ ॥ सर्वविधभक्त्यपेक्षयानतिरूपाभक्तिरेवमुख्येतिध्वनय
न्नाह । नमइति ॥ ३२ ॥ वांछितंवरंवृणीष्वयतोऽहंवरदोस्मीत्यन्वयः ॥ ३३ ॥ कृतकृत्यत्वम् सर्वधर्मजनककर्मकृतत्वमतएवधन्यत्वम् । भगवद्दर्शनस्यसर्व
धर्मत्वमितिभावः । कृतकार्यत्वंचधातूनामनेकार्थत्वात्प्राप्तसकलप्राप्यत्वम् प्राप्यंचसकलधर्मफलम् । तदेवाह । त्वत्पादेति । मुक्तिर्हिसर्वपुण्यफलम् ॥
॥ ३४ ॥ तदेवाह । नास्तीति ॥ ३५ ॥ कर्मकृतोबंधःसंसारस्तन्नाशफलंभक्तिलक्षणंकरणंयस्यतादृशंत्वद्विषयज्ञानंदेहि । एवंफलंसंप्रार्थ्यतस्यकारणंविनाऽ

अहंत्वत्पादसद्भक्तिनिःश्रेणींप्राप्यराघव ॥ इच्छामिज्ञानयोगाख्यंसौधमारोढुमीश्वर ॥ ३१ ॥ नमःसीतापतेरामनमःकारुणिकोत्तम ॥
रावणारेनमस्तुभ्यंत्राहिमांभवसागरात् ॥३२॥ ततःप्रसन्नःप्रोवाचश्रीरामोभक्तवत्सलः ॥ वरंवृणीष्वभद्रंतेवांछितंवरदोऽस्म्यहम् ॥३३॥
विभीषणउवाच ॥ धन्योऽस्मिकृतकृत्योऽस्मिकृतकार्योंस्मिराघव ॥ त्वत्पाददर्शनादेवविमुक्तोऽस्मिनसंशयः ॥ ३४ ॥ नास्तिमत्स
दृशोधन्योनास्तिमत्सदृशःशुचिः ॥ नास्तिमत्सदृशोलोकेरामत्वन्मूर्तिदर्शनात् ॥ ३५ ॥ कर्मबंधविनाशायत्वज्ज्ञानंभक्तिलक्षणम् ॥
त्वद्ध्यानंपरमार्थंचदेहिमेरघुनन्दन ॥ ३६ ॥ नयाचेरामराजेन्द्रसुखंविषयसंभवम् ॥ त्वत्पादकमलेसक्ताभक्तिरेवसदास्तुमे ॥ ३७ ॥
ओमित्युक्त्वापुनःप्रीतोरामःप्रोवाचराक्षसम् ॥ शृणुवक्ष्यामितेभद्ररहस्यंममनिश्चितम् ॥ ३८ ॥ मद्भक्तानांप्रशांतानांयोगिनांवीतरागेणाम् ॥
हृदयेसीतयानित्यंवसाम्यत्रनसंशयः ॥ ३९ ॥ तस्मात्त्वंसर्वदाशांतःसर्वकल्मषवर्जितः मांध्यात्वामोक्ष्यसेनित्यंघोरसंसारसागरात् ॥ ४० ॥
स्तोत्रमेतत्पठेद्यस्तुलिखेद्यःशृणुयादपि ॥ मत्प्रीतयेममाभीष्टंसारूप्यंसमवाप्नुयात् ॥ ४१ ॥ इत्युक्त्वालक्ष्मणंप्राहश्रीरामोभक्तभक्तिमान् ॥
पश्यत्विदानीमेवैषममसंदर्शनेफलम् ॥ ४२ ॥

संभवाचत्कारणीभूतांभक्तिंप्रार्थयते । त्वद्ध्यानमिति । एतदेवमुख्याभक्तिरित्यर्थः । परमार्थपरमउत्कृष्टोमोक्षार्थः प्रयोजनंपरंपरयायस्य ॥ ३६ ॥ तदेवपुनराह ।
नयाचेइति ॥ ३७ ॥ ३८ ॥ मद्भक्तानामिति । सर्वथातवध्यानविषयोभवामीतिभावः ॥ ३९ ॥ शांतःजितेंद्रियःअतएवसर्वपापहीनः ॥ ४० ॥ ४१ ॥
ममसंदर्शनेफलंतज्जन्यंफलंमोक्षरूपंकालांतरभवंविष्ठतु । इदानींसांप्रतमेवैहिकंपश्यतु ॥ ४२ ॥

॥ ४३ ॥ ४४ ॥ सचिवैश्चतुर्भिर्विभीषणसचिवैः ॥ ४५ ॥ ४६ ॥ मुख्यत्वेहेतुर्भक्त्यारामपरिग्रहात् ॥ ४७ ॥ परमात्मत्वेनसहायानपेक्षतासूचिता । अमा
ययाअच्छलेन ॥ ४८ ॥ दशग्रीवेणेति । अस्यांबरेइत्यादिः ॥ ४९ ॥ भ्रातरंवालिनाभ्रातृत्वव्यवहारस्यमैत्रीकरणोत्तरंकृतत्वेनतद्भ्रातृत्वाद्भ्रातृसदृशंत्वा
मित्यन्वयः । वनचारिणांवानराणाम् ॥५०॥ अर्थविप्लवोमत्कृतोऽर्थनाशः अहंयद्राजपुत्रस्यभार्यामहरंतत्रतवकिंदुःखमितिशेषः ॥५१॥ दैवतैःदैवतैरपि॥५२॥

लंकाराज्येऽभिषेक्ष्यामिजलमानयसागरात् ॥ यावच्चंद्रश्चसूर्यश्चयावात्तिष्ठतिमेदिनी ॥ ४३ ॥ यावन्ममकथालोकेतावद्राज्यंकरोत्वसौ ॥
इत्युक्त्वालक्ष्मणेनांबुह्यानाय्यकलशेनतम् ॥ ४४ ॥ लंकाराज्याधिपत्यार्थमभिषेकंरमापतिः ॥ कारयामाससचिवैर्लक्ष्मणेनविशेष
तः ॥ ४५ ॥ साधुसाध्वितितेसर्वेवानरास्तुष्टुवुर्भृशम् ॥ सुग्रीवोऽपिपरिष्वज्यविभीषणमथाब्रवीत् ॥ ४६ ॥ विभीषणवयंसर्वेरामस्य
परमात्मनः ॥ किंकरास्तत्रमुख्यस्त्वंभक्त्यारामपरिग्रहात् ॥ ४७ ॥ रावणस्यविनाशेत्वंसाहाय्यंकर्तुमर्हसि ॥ विभीषणउवाच ॥
अहंकियान्सहायत्वेरामस्यपरमात्मनः ॥ किंतुदास्यंकरिष्येऽहंभक्त्याशक्त्यात्वमायया ॥ ४८ ॥ दशग्रीवेणसंदिष्टःशुकोनाममहासु
रः ॥ संस्थितोह्यंबरेवाक्यंसुग्रीवमिदमब्रवीत् ॥ ४९ ॥ त्वामाहरावणोराजाभ्रातरंराक्षसाधिपः ॥ महाकुलप्रसूतस्त्वंराजासिवनचारि
णाम् ॥ ५० ॥ ममभ्रातृसमानस्त्वंतवनास्त्यर्थविप्लवः ॥ अहंयदहरंभार्यांराजपुत्रस्यकिंतव ॥ ५१ ॥ किष्किंधांयाहिहरिभिर्लंकाश
क्यानदैवतैः ॥ प्राप्तुंकिमानवैरल्पसत्त्वैर्वानरयूथपैः ॥ ५२ ॥ तंप्रापयंतंवचनंतूर्णमुत्प्लुत्यवानराः ॥ प्रापद्यंततदाक्षिप्रंनिहंतुंदृढमुष्टि
भिः ॥ ५३ ॥ वानरैर्हन्यमानस्तुशुकोराममथाब्रवीत् ॥ नदूतान्घ्नन्तिराजेंद्रवानरान्वारयप्रभो ॥ ५४ ॥ रामःश्रुत्वातदावाक्यंशुक
स्यपरिदेवितम् ॥ मावधिष्टेतिरामस्तान्वारयामासवानरान् ॥ ५५ ॥ पुनरम्बरमासाद्यशुकःसुग्रीवमब्रवीत् ॥ ब्रूहिराजन्दशग्रीवंकिं
वक्ष्यामिव्रजाम्यहम् ॥ ५६ ॥ सुग्रीवउवाच ॥ यथावालीममभ्रातातथात्वंराक्षसाधम ॥ हंतव्यस्त्वंमयायत्नात्सपुत्रबलवाहनः ॥ ५७ ॥

निहंतुंप्रापयंतंप्रपन्नाः कृतारंभाइत्यर्थः ॥ ५३ ॥ घ्नंतिराजानइतिशेषः ॥ ५४ ॥ ५५ ॥ ५६ ॥ यथावालीतिव्यंग्योक्तिः । यथाजायापहारित्वात्समेवध्यस्त
थास्वामिभार्यापहारित्वात्त्वमपिवध्यइतिभावः ॥ ५७ ॥

मेस्वामिनः श्रीरामचंद्रस्यभार्याह्रत्वाक्क्यास्यसीतिब्रूहीत्यन्वयः । शुकमन्वरक्षयत । वानरैःसुग्रीवइतिशेषः । अयमत्राशयः । शुकवचनात्सुग्रीवस्यभेदायोग्यत्वं निर्णीयविशकलितंस्थितेषुवानरेषुस्वनगरघातस्यैतैरशक्यत्वंसमुद्रव्यवधानान्निर्णीयघातादिमाकरोत्विति ॥ ५८ ॥ शार्दूलोदर्शनमात्रेनियुक्तोनतुसुग्रीवभेदनेइति तस्याग्रहणम् ॥ ५९ ॥ कपिबलस्यातिमहत्त्वश्रवणमात्रेणदीर्घचिंतापरत्वंरावणस्येत्यनेनशौर्यहानिःसूचिता ॥ ६० ॥ उपागतंस्वतटंप्राप्तम् । अनभिनंदनोचिह्न

ब्रूहिमेरामचन्द्रस्यभार्यांहृत्वाक्कयास्यसि ॥ ततोरामाज्ञयाधृत्वाशुकंबद्धान्वरक्षयत् ॥ ५८ ॥ शार्दूलोऽपिततःपूर्वंदृष्ट्वाकपिबलंमहत् ॥ यथावत्कथयामासरावणायसराक्षसः ॥ ५९ ॥ दीर्घचिंतापरोभूत्वानिःश्वसन्नास्समंदिरे ॥ ततःसमुद्रमावेक्ष्यरामोरक्तांतलोचनः ॥ ६० ॥ पश्यलक्ष्मणदुष्टोऽसौवारिधिर्मामुपागतम् ॥ नाभिनंदतिदुष्टात्मादर्शनार्थंममानघ ॥ ६१ ॥ जानातिमानुषोऽयंमेकिंकरिष्यतिवानरैः ॥ अद्यपश्यमहाबाहोशोषयिष्यामिवारिधिम् ॥ ६२ ॥ पादेनैवगमिष्यंतिवानराविगतज्वराः ॥ इत्युक्त्वाक्रोधताम्राक्षआरोपितधनुर्धरः ॥ ॥ ६३ ॥ तूणीराद्बाणमादायकालाग्निसदृशप्रभम् ॥ संधायचापमाकृष्यरामोवाक्यमथाब्रवीत् ॥ ६४ ॥ पश्यंतुसर्वभूतानिरामस्यशर विक्रमम् ॥ इदानींभस्मसात्कुर्यांसमुद्रंसरितांपतिम् ॥ ६५ ॥ एवंब्रुवतिरामेतुसशैलवनकानना ॥ चचालवसुधाद्यौश्चदिशश्चतमसावृताः ॥ ॥ ६६ ॥ चुक्षुभेसागरोवेलांभयाद्योजनमत्यगात् ॥ तिमिनक्रझषामीनाः प्रतप्ताःपरितत्रसुः ॥ ६७ ॥ एतस्मिन्नंतरेसाक्षात्सागरोदिव्य रूपधृक् ॥ दिव्याभरणसंपन्नःस्वभासाभासयन्दिशः ॥ ६८ ॥

माह । दर्शनार्थमिति । नायातीतिशेषः ॥ ६१ ॥ ६२ ॥ आरोपितेति । आरोपितज्यंधनुर्धरतीत्यर्थः ॥ ६३ ॥ कालाग्नीति । कालाग्नितुल्यकांतिंसंधायध नुंषियोजयित्वेत्यर्थः ॥ ६४ ॥ भस्मसात्कुर्यांभस्मसात्करोमीत्यर्थः ॥ ६५ ॥ तमसावृताआसन्निविशेषः ॥ ६६ ॥ सागरक्षोभमेवाह । योजनंवेलामत्यगात् अतिक्रांतः वेलामारभ्ययोजनपर्यंतंसजलोदेशःशुष्कोजातइत्यर्थः । प्रतप्ताःजलौष्ण्यवशात् ॥ ६७ ॥ ६८ ॥

१ जलापगमप्रदेशावस्थानेन जलजीवनत्वात्तदभावेन सूर्यकिरणतापाद्रामचन्द्रप्रतापतपनाच्च प्रतप्ताः इति मे भाति ।

उपायनंरत्नानिपादयोःक्षिप्त्वा ॥ ६९ ॥ प्रणिपत्यचराममाहइत्यन्वयः ॥ ७० ॥ स्वस्यशीघ्रमनागमनेहेतुमाह । जडइति । जडःतमआच्छादितज्ञानः । एवंच त्वत्सृष्टस्वभावेनजडत्वेनमदनागमनमितिनमेदोषइतिभावः ॥ ७१ ॥ ननुतवजडत्वंकुतइतिचेत्तत्राह । स्थूलानीति । स्वभावतोजडान्येवभवतासृष्टानि । तामसाहंकारतस्त्वयावत्सृष्टेरितिभावः । अतस्त्वदाज्ञारूपंजडत्वंनलंघयंतिनत्यजंतीतितेष्वापोरूपंभूतमहमितिभावः ॥ ७२ ॥ तदेवाह, तामसादिति । अहमःअहंकारात् । कारणगुणाहिकार्यगुणानारंभत इतिभावः ॥ ७३ ॥ ननुनिर्गुणस्यममकथंभूतस्रष्टृत्वमतआह । निर्गुणइति । निर्गुणोनिराकारोऽपिलीलयायदामायागुणा

स्वांतःस्थदिव्यरत्नानिकराभ्यांपरिगृह्यसः ॥ पादयोःपुरतःक्षिप्त्वारामस्योपायनंबहु ॥ ६९ ॥ दंडवत्प्रणिपत्याहरामंरक्तांतलोचनम् ॥ त्राहित्राहिजगन्नाथरामत्रैलोक्यरक्षक ॥७०॥ जडोऽहंरामतेसृष्टःसृजतानिखिलंजगत् ॥ स्वभावमन्यथाकर्तुंकःशक्तोदेवनिर्मितम्॥७१॥ स्थूलानिपंचभूतानिजडान्येवस्वभावतः ॥ सृष्टानिभवतैतानित्वदाज्ञांलंघयंतिन ॥ ७२ ॥ तामसादहमोरामभूतानिप्रभवंतिहि ॥ कारणानुगमात्तेषांजडत्वंतामसंस्वतः॥ ७३ ॥ निर्गुणस्त्वंनिराकारोयदामायागुणान्प्रभो ॥ लीलयांगीकरोषित्वंतदावैराजनामवान्॥७४॥गुणात्मनोविराजश्चसत्वाद्देवाबभूविरे ॥ रजोगुणात्प्रजेशाद्यामन्योर्भूतपतिस्तव ॥ ७५ ॥ त्वामहंमाययाच्छन्नंलीलयामानुषाकृतिम् ॥ ७६ ॥ जडबुद्धिर्जडोमूर्खःकथंजानामिनिर्गुणम् ॥ दंडएवहिमूर्खाणांसन्मार्गप्रापकःप्रभो ॥ ७७ ॥ भूतानाममरश्रेष्ठपशूनांलगुडोयथा ॥ शरणं तेव्रजामीशशरण्यंभक्तवत्सल ॥ अभयंदेहिमेरामलंकामार्गंददामिते ॥७८॥ रामउवाच ॥ अमोघोऽयंमहाबाणःकस्मिन्देशेनिपात्यताम्॥ लक्षंदर्शयमेशीघ्रंबाणस्यामोघपातिनः ॥ ७९ ॥

नंगीकरोषितदास्रष्टृत्वाद्वैराजनामा । स्वार्थेऽण् ॥ ७४ ॥ तत्रकस्माद्गुणात्कस्यसृष्टिस्तत्राह गुणात्मनोविराजइति । देवाअत्रसनकादयः प्रजेशामन्वाद्याइंद्राद्याश्च मन्योस्तमसः भूतपतिःसंहर्तारुद्रः ॥ ७५ ॥ माययाच्छन्नंछन्नात्मस्वरूपम् । तदेवाह । लीलयेति ॥ ७६ ॥ जडबुद्धिस्तमोवृतत्वात् । जडःस्वरूपेणापिजलरूपत्वात् । अतएवमूर्खःत्वांनिर्गुणंसर्वनियंतृपरमेश्वरत्वेनकथंजानामीत्यर्थः । इदानींतुत्वत्कृतदंडात्त्वत्स्वरूपंज्ञातमितिवदन्नर्थांतरन्यासमाह । दंडएवेति ॥ ७७ ॥ भूतानांप्राणिनाम् ॥ ७८ ॥ अमोघमनिष्फलंयथाभवतितथापातिनः ॥ ७९ ॥

॥ ८० ॥ हेराम उत्तरप्रदेशेद्रुमकुल्यस्तदाख्यः ॥ ८१ ॥ तत्रतेषुपापात्मसु ॥ ८२ ॥ ८३ ॥ ब्रह्मणोलब्धवरत्वात । अस्मिन्कार्येसेतुबंधनकार्ये ॥ ८४ ॥ कीर्तिंसेतुबंधनकृतां याकीर्तिःसेवात्मिकादृष्टासतीसर्वलोकपापहर्त्री ॥ ८५ ॥ वानरैःसहेतिशेषः ॥ ८६ ॥ पर्वतपादपैःपर्वतैःपादपैश्च ॥ ८७ ॥ इति श्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादि० युद्धकांडे तृतीयःसर्गः ॥ ३ ॥ ॥ छ ॥ ॥ सेतुमितिनिर्विघ्नत्वार्थंद्रष्टृणांपुण्यार्थंच । तदेवाह । लोकहितायचेति

रामस्यवचनंश्रुत्वाकरेदृष्ट्वामहाशरम् ॥ महोदधिर्महातेजाराघवंवाक्यमब्रवीत ॥ ८० ॥ रामोत्तरप्रदेशेतुद्रुमकुल्यइतिश्रुतः ॥ प्रदेशस्तत्रबहवःपापात्मानोदिवानिशम् ॥ ८१ ॥ बाधंतेमांरघुश्रेष्ठतत्रतेपात्यतांशरः ॥ रामेणसृष्टोबाणस्तुक्षणादाभीरमंडलम् ॥ ८२ ॥ हत्वापुनःसमागत्यतूणीरेपूर्ववत्स्थितः ॥ ततोऽब्रवीद्रघुश्रेष्ठंसागरोविनयान्वितः ॥ ८३ ॥ नलःसेतुंकरोत्वस्मिञ्जलेमेविश्वकर्मणः ॥ सुतोधीमान्समर्थोऽस्मिन्कार्येलब्धवरोहरिः ॥ ८४ ॥ कीर्तिंजानंतुतेलोकाःसर्वलोकमलापहाम् ॥ इत्युक्त्वाराघवंनत्वाययौसिंधुरदृश्यताम् ॥ ॥८५॥ ततोरामस्तुसुग्रीवलक्ष्मणाभ्यांसमन्वितः ॥ नलमाज्ञापयच्छीघ्रंवानरैःसेतुबंधने ॥८६॥ ततोऽतिहृष्टःप्लवगेंद्रयूथपैर्महानगेंद्रप्रतिमैर्युतोनलः ॥ बबंधसेतुंशतयोजनायतंसुविस्तृतंपर्वतपादपैर्दृढम् ॥ ८७ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेयुद्धकांडेतृतीयःसर्गः ॥ ३ ॥ ॥ छ ॥ ॥ सेतुमारभमाणस्तुतत्ररामेश्वरंशिवम् ॥ संस्थाप्यपूजयित्वाहरामोलोकहितायच ॥ १ ॥ प्रणमेत्सेतुबंधंयोदृष्ट्वारामेश्वरंशिवम् ॥ ब्रह्महत्यादिपापेभ्योमुच्यतेमदनुग्रहात् ॥ २ ॥ सेतुबंधेनरःस्नात्वादृष्ट्वारामेश्वरंहरम् ॥ संकल्पनियतोभूत्वागत्वावाराणसींनरः ॥ ३ ॥ आनीयगंगासलिलंरामेशमभिषिच्यच ॥ समुद्रेक्षिप्ततद्भारोब्रह्मप्राप्नोत्यसंशयम् ॥ ४ ॥ कृतानिप्रथमेनाह्नायोजनानिचतुर्दश ॥ द्वितीयेनतथाचाह्नायोजनानितुविंशतिः ॥ ५ ॥

॥ १ ॥ तदेवस्पष्टयति । प्रणमेदिति ॥ २ ॥ संकल्पनियतःसंकल्पपूर्वमित्यर्थः । मध्येकार्यांतरमकुर्वन्नितियावत् ॥ ३ ॥ क्षिप्ततद्भारःजलनयनपात्रादिभारः ॥ ४ ॥ चतुर्दशयोजनानिसेतुयुक्तानिकृतानि ॥ ५ ॥

॥ ६ ॥ त्रयोविंशदितित्रयोविंशतिरित्यर्थेआर्षम् । बबंधएवंक्रमेणबबंधेत्यर्थः ॥ ७ ॥ ८ ॥ महदिति । क्लीबत्वमार्षम् ॥ ९ ॥ तोरणंपुरद्वारम्॥ १०॥ ॥ ११ ॥ १२ ॥ १३ ॥ हेशुकत्वंपरैःपीडितःकिम् ॥ १४ ॥ शुकउवाच तेतववचनमब्रुवम् । सुग्रीवंप्रतीतिशेषः ॥ १५ ॥ मुष्टिभिर्हंतुंनखदंतैर्लोप्तुं

तृतीयेनतथाचाह्नायोजनान्येकविंशतिः ॥ चतुर्थेनतथाचाह्नाद्वाविंशतिरितिश्रुतम् ॥ ६ ॥ पंचमेनत्रयोविंशद्योजनानिसमंततः ॥ बबंध सागरेसेतुंनलोवानरसत्तमः ॥ ७ ॥ तेनैवजग्मुःकपयोयोजनानांशतंद्रुतम् ॥ असंख्याताःसुवेलाद्रिंरुरुधुःप्लवगोत्तमाः ॥ ८ ॥ आरुह्य मारुतिंरामोलक्ष्मणोऽप्यंगदंतथा ॥ दिदृक्षूराघवोलंकामारुरोहाचलंमहत् ॥ ९ ॥ दृष्ट्वालंकांसुविस्तीर्णांनानाचित्रध्वजाकुलाम् ॥ चित्र प्रासादसंबाधांस्वर्णप्राकारतोरणाम् ॥१०॥ परिखाभिःशतघ्नीभिःसंक्रमैश्चविराजिताम् ॥ प्रासादोपरिविस्तीर्णप्रदेशेदशकंधरः ॥११ ॥ मंत्रिभिःसहितोवीरैःकिरीटदशकोज्ज्वलः ॥ नीलाद्रिशिखराकारःकालमेघसमप्रभः ॥ १२ ॥ रत्नदंडैःसितच्छत्रैरनेकैःपरिशोभितः ॥ एतस्मिन्नंतरेबद्धोमुक्तोरामेणवैशुकः ॥ १३ ॥ वानरैस्ताडितःसम्यग्दशाननमुपागतः ॥ प्रहसन्रावणःप्राहपीडितःकिंपरैःशुक ॥ १४ ॥ रावणस्यवचःश्रुत्वाशुकोवचनमब्रवीत् ॥ सागरस्योत्तरेतीरेऽब्रुवंतेवचनंयथा ॥ ततउत्प्लुत्यकपयोगृहीत्वामांक्षणात्ततः ॥ १५ ॥ मुष्टि भिर्नखदंतैश्चहंतुंलोप्तुंप्रचक्रमुः ॥ ततोमांरामरक्षेतिक्रोशंतंरघुपुंगवः ॥ १६ ॥ विसृज्यतामितिप्राहविसृष्टोऽहंकपीश्वरैः ॥ ततोऽहमागतो भीत्यादृष्ट्वातद्वानरंबलम् ॥ १७ ॥ राक्षसानांबलौघस्यवानरेन्द्रबलस्यच ॥ नैतयोर्विद्यतेसंधिर्देवदानवयोरिव ॥ १८ ॥ पुरप्राका रमायांतिक्षिप्रमेकतरंकुरु ॥ सीतांवास्मैप्रयच्छाशुयुद्धंवादीयतांप्रभो ॥ १९ ॥ मामाहरामस्त्वंब्रूहिरावणंमद्वचःशुक ॥ यद्बलंचसमाश्रि त्यसीतांमेहृतवानसि ॥ २० ॥ तद्दर्शययथाकामंससैन्यःसहबांधवः ॥ श्वःकालेनगरींलंकांसप्रकारांसतोरणाम् ॥ २१ ॥

छेत्तुं हेराममांरक्षेतिक्रोशंतंमांदृष्ट्वाअयंविसृज्यतामिति वानरान्प्राह ॥ १६ ॥ १७ ॥ त्वदुक्तसंधिभेदादिअसंभावितमित्याह । राक्षसानामिति ॥ १८ ॥ आयांति । वानराइतिशेषः ॥ १९ ॥ २० ॥ श्वःकाले श्वःप्रातःकालइत्यर्थः । नगरींलंकामित्यत्रशरैर्विध्वंसितामितिविभक्तिविपरिणामेनान्वयः ॥ २१ ॥

॥ २२ ॥ २३ ॥ २४ ॥ लंकानाशस्यप्रकारविशेषमाह । उत्पाद्यभस्मीकरणेइति । पुनर्विचार्यएकोरामएवतन्नाशेऽलमित्याह । तस्येति ॥ २५ ॥
प्रपूरिताम् प्रकर्षेणपूरितालंकाययाताम् । यद्वारामतेजसापूरिताम् ॥ २६ ॥ २७ ॥ २८ ॥ अग्निनंदनःअग्निपुत्रः।अथांगदंदर्शयति । एषइति ॥ २९ ॥
लांगूलंस्फोटयतिभुव्याहंति ॥ ३० ॥ हनूमंतंदर्शयति । येनेति ॥ ३१ ॥ श्वेतःनाम्नायःसुग्रीवसमीपमागम्यपुनर्गच्छतिसश्वेतनामा ॥ ३२ ॥ रंभाख्यं

राक्षसंचबलंपश्यशरैर्विध्वंसितंमया ॥ घोररोषमहंमोक्ष्येबलंधारयरावण ॥ २२ ॥ इत्युक्त्वोपररामाथरामःकमललोचनः ॥ एकस्था
नगतायत्रचत्वारःपुरुषर्षभाः ॥ २३ ॥ श्रीरामोलक्ष्मणश्चैवसुग्रीवश्चविभीषणः ॥ एतएवसमर्थास्तेलंकांनाशयितुंप्रभो ॥२४॥ उत्पाद्य
भस्मीकरणेसर्वेतिष्ठंतुवानराः ॥ तस्ययादृग्बलंदृष्टंरूपंप्रहरणानिच ॥ २५ ॥ वधिष्यतिपुरंसर्वमेकस्तिष्ठंतुतेत्रयः ॥ पश्यवानरसेनांता
मसंख्यातांप्रपूरिताम् ॥ २६॥ गर्जंतिवानरास्तत्रपश्यपर्वतसन्निभाः ॥ नशक्यास्तेगणयितुंप्राधान्येनब्रवीमिते ॥२७॥ एषयोऽभिमुखो
लंकांनदंस्तिष्ठतिवानरः ॥ यूथपानांसहस्राणांशतेनपरिवारितः ॥ २८ ॥ सुग्रीवसेनाधिपतिर्नीलोनामाग्निनंदनः ॥ एषपर्वतशृंगाभःपद्म
किंजल्कसन्निभः ॥ २९ ॥ स्फोटयत्यभिसंरब्धोलांगूलंचपुनःपुनः ॥ युवराजोंऽगदोनामवालिपुत्रोऽतिवीर्यवान् ॥ ३० ॥ येनदृष्टाजन
कजारामस्यातीववल्लभा ॥ हनूमानेषविख्यातोहतोयेनतवात्मजः ॥ ३१ ॥ श्वेतोरजतसंकाशोमहाबुद्धिपराक्रमः ॥ तूर्णंसुग्रीवमागम्यपु
नर्गच्छतिवानरः ॥ ३२ ॥ यस्त्वेषसिंहसंकाशःपश्यत्यतुलविक्रमः ॥ रंभोनाममहासत्त्वोलंकांनाशयितुंक्षमः ॥ ३३ ॥ एषपश्यतिवैलं
कादिधक्षन्निववानरः ॥ शरभोनामराजेंद्रकोटियूथपनायकः ॥ ३४ ॥ पनसश्चमहावीर्योमैंदश्चद्विविदस्तथा ॥ नलश्चसेतुकर्तासौविश्वक
र्मसुतोबली ॥ ३५ ॥ वानराणांवर्णनेवासंख्यानेवाकईश्वरः ॥ शूराःसर्वेमहाकायाःसर्वेयुद्धाभिकांक्षिणः ॥ ३६ ॥ शक्ताःसर्वेचूर्णयितुंलं
कांरक्षोगणैःसह ॥ एतेषांबलसंख्यानंप्रत्येकंवच्मितेशृणु ॥ ३७ ॥

दर्शयति । यस्त्विति ॥ ३३ ॥ शरभंदर्शयति एषइति ॥ ३४ ॥ अथपनसादीन्दर्शयति । पनसश्चेति ॥ ३५ ॥ वर्णनेगुणकथने संख्यानेगणने ॥ ३६ ॥
रक्षोगणसहितांलंकामित्यर्थः । बलसंख्यानंयोद्धृगणनम् ॥ ३७ ॥

एषांनीलांगदहनूमच्छ्वेतरंभशरभपनसमैंदद्विविदानांदशानाम् नवपंचसप्तएकविंशदिरित्यर्थः ॥ ३८ ॥ ३९ ॥ जगदात्मिकाजगत्स्वरूपामायास्वरूपंदृश्यम् । जगदेवसूक्ष्मरूपेणेत्याशयः ॥ ४० ॥ समुत्पन्नंस्थूलरूपेणेत्यर्थः । जगतस्तस्थुषश्चस्थावरजंगमात्मकस्यसंसारस्य तौसीतारामौ ॥ ४१ ॥ पितरौमावापि तरौ तयोर्वैरीतद्वैरवान्कथंभवेत् । कथंजीवेदित्यर्थः । जगन्मातैवेत्यनेनार्थात्त्वापिमातेतिव्यंग्यम् ॥ ४२ ॥ क्षणनाशित्वेनात्यंतास्थिरत्वबोधनम् । तत्र हेतुः । पंचभूतात्मकेइति । पंचविंशतितत्वकेतदात्मकेबुद्ध्यहंकारैकादशेंद्रियपंचभूततद्गुणरूपादिपंचकात्मकत्वात् । विकारद्वाराचप्रकृतेरप्यत्रानुगमइतिच

एषांकोटिसहस्राणिनवपंचचसप्तच ॥ तथाशंखसहस्राणितथार्बुदशतानिच ॥ ३८ ॥ सुग्रीवसचिवानांतेबलमेतत्प्रकीर्तितम् ॥ अन्येषां तुबलंनाहंवक्तुंशक्तोऽस्मिरावण ॥ ३९ ॥ रामोनमानुषःसाक्षादादिनारायणःपरः ॥ सीतासाक्षाज्जगद्धेतुश्चिच्छक्तिर्जगदात्मिका ॥ ४० ॥ ताभ्यामेवसमुत्पन्नंजगत्स्थावरजंगमम् ॥ तस्माद्रामश्चसीताचजगतस्तस्थुषश्चतौ॥४१॥पितरौपृथिवीपालतयोर्वैरीकथंभवेत् ॥ अजान तात्वयाऽऽनीताजगन्मातैवजानकी ॥ ४२ ॥ क्षणनाशिनिसंसारेशरीरेक्षणभंगुरे ॥ पंचभूतात्मकेराजंश्चतुर्विंशातितत्त्वके ॥४३॥ मलमांसास्थिदुर्गंधभूयिष्ठेऽहंकृतालये ॥ केवास्थाव्यतिरिक्तस्यकायेतवजडात्मके ॥४४॥ यत्कृतेब्रह्महत्यादिपातकानिकृतानिते ॥ भोगभोक्तातुयोदेहःसदेहोऽत्रपतिष्यति ॥ ४५ ॥ पुण्यपापेसमायातोजीवेनसुखदुःखयोः ॥ कारणेदेहयोगादिनात्मनःकुरुतोऽनिशम् ॥ ४६ ॥याव द्देहोस्मिकर्तास्मीत्यात्माहंकुरुतेऽवशः ॥ अध्यासात्तावदेवस्याज्जन्मनाशादिसंभवः ॥ ४७ ॥ तस्मात्त्वंत्यजदेहादावभिमानंमहामते ॥ आत्मातिनिर्मलःशुद्धोविज्ञानात्माऽचलोव्ययः ॥ ४८ ॥

तुर्विंशतितत्त्वात्मकत्वम् ॥ ४३ ॥ अहंकृतालयेअहंकारस्यालयेस्थानभूते तेभ्यश्चतुर्विंशतिभ्योभिन्नस्यचेतनस्यजडात्मकेदेहेकेवास्था ॥ ४४ ॥ यस्यदेहस्यकृतेतत्पोषणादिनिमित्तम् योदेहःस्थूलः ॥ ४५ ॥ सुखदुःखयोःकारणेपुण्यपापे जीवेनसहसमायातः । समायास्यतइत्यर्थेआर्षंतत् । तेचपुण्यपापे देहयोगादिनाआत्मनःसुखदुःखेकुरुतोनतुस्वतस्तेआत्मनइत्यर्थः ॥ ४६ ॥ देहयोगःकीदृशस्तत्राह । यावदिति । अध्यासादहंकारतादात्म्याध्यासात् । उक्तरीत्यायावदवशोऽहंकुरुतइत्यर्थः । एतेनज्ञानिनोदेहसंबंधोऽपिदुःखाद्यभावाद्देहयोगेनैवदुःखमित्युक्तमित्यपास्तम् । उक्ताध्यासरूपस्यैवयोगस्यविवक्षितत्वात् ॥ ४७ ॥ उपसंहरति । तस्मादिति ॥ ४८ ॥

स्वाज्ञानंस्वस्वरूपस्यशुद्धत्वादेर्यदज्ञानंतद्वशतोबंधंशरीरादिसंबंधंप्राप्यमुह्यति । पुनःपुनःकर्मसुप्रवर्तते । आत्मानंशुद्धबुद्धमुक्तस्वभावंज्ञात्वा सदास्मरेत्यनेनावि
च्छेदेनतत्स्मरणाभ्यासोमोक्षदइत्युक्तम् ॥ ४९ ॥ अथतादृशज्ञानसाधनंवैराग्यमाह । विरतिमिति । ननुसर्वत्रविरतौभोगसुखंहीयेतेतितत्राह । निरयेष्वपीति ।
एवंचेदृशभोगोपिहेयएवेतिभावः ॥ ५० ॥ सर्वथादुर्लभंतत्रापिभारतेवर्षेकर्मभूमौसुतरांदुर्लभम् । विवेकाढ्यंतदाढ्यतायोग्यंदेहंलब्ध्वाविशेषतश्चद्विजत्वंलब्ध्वा
॥ ५१ ॥ कोविद्वान्देहमात्मसात्आत्माधीनंकृत्वा । अर्थात्स्वयंदेहभोगानुगोभवेदित्यन्वयः । पौलस्त्यतनयश्चेत्यनेनविशुद्धवंशतोक्ता ॥ ५२ ॥ सर्वसंगंत्य

स्वाज्ञानवशतोबंधंप्रतिपद्यविमुह्यति ॥ तस्मात्त्वंशुद्धभावेनज्ञात्वाऽऽत्मानंसदास्मर ॥ ४९ ॥ विरतिंभजसर्वत्रपुत्रदारगृहादिषु ॥
निरयेष्वपिभोगःस्याच्छ्वसूकरतनावपि ॥ ५० ॥ देहंलब्ध्वाविवेकाढ्यंद्विजत्वंचविशेषतः ॥ तत्रापिभारतेवर्षेकर्मभूमौसुदुर्लभम् ॥५१॥
कोविद्वानात्मसात्कृत्वादेहंभोगानुगोभवेत् ॥ अतस्त्वंब्राह्मणोभूत्वापौलस्त्यतनयश्चसन् ॥ ५२ ॥ अज्ञानीवसदाभोगाननुधावसिकिं
सुधा ॥ इतःपरंवात्यक्त्वात्वंसर्वसंगंसमाश्रय ॥ ५३ ॥ राममेवपरात्मानंभक्तिभावेनसर्वदा ॥ सीतांसमर्प्यरामायतत्पादानुचरोभ
व ॥ ५४ ॥ विमुक्तःसर्वपापेभ्योविष्णुलोकंप्रयास्यसि ॥ नोचेद्गमिष्यसेऽधोऽधःपुनरावृत्तिवर्जितः ॥ अंगीकुरुष्वमद्वाक्यंहितमेववदा
मिते ॥ ५५ ॥ सत्संगतिंकुरुभजस्वहरिंशरण्यंश्रीराघवंमरकतोपलकांतिकांतम् ॥ सीतासमेतमनिशंधृतचापबाणंसुग्रीवलक्ष्मणवि
भीषणसेवितांघ्रिम् ॥ ५६ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेयुद्धकांडेचतुर्थःसर्गः ॥ ४ ॥ ॥ श्रुत्वाशुकमुखोद्गीतंवाक्य
मज्ञाननाशनम् ॥ रावणःक्रोधताम्राक्षोदहन्निवतमब्रवीत् ॥ १ ॥ अनुजीव्यसुदुर्बुद्धेगुरुवद्भाषसेकथम् ॥ शासिताऽहंत्रिजगतांत्वंमां
शिक्षन्नलज्जसे ॥ २ ॥

क्त्वाराममेवाश्रयेत्यन्वयः ॥ ५३ ॥ ५४ ॥ पुनरावृत्तिवर्जितइति । पुनरावृत्त्याउत्तमलोकाद्वर्जितःहीनःकृतइत्यर्थः ॥ ५५ ॥ मरकतोपलोमरकतमणिस्तद्व
त्कांतंश्यामदेहम् ॥ ५६ ॥ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादितिवि० युद्धकांडेचतुर्थःसर्गः ॥ ४ ॥ ॥ श्रुत्वेति ॥१॥ सुतरांदुर्मतेमामनुजीव्यममसे
वकोभूत्वेतियावत् । गुरुवत्कथंभाषसे सर्वशिक्षकंमांशिक्षन् । शिक्षयन्नित्यर्थः ॥ २ ॥

१ अनेन सर्वथापि उत्तमलोकप्राप्तिप्रतिबन्धएव तव रामचन्द्रप्रतिकूलाचरणेन भविष्यतीति ध्वनितम् ॥

पूर्वकृतंपूर्वोपकृतंयद्यपित्वंवधोचितस्तथापितेनपूर्वोपकारस्मरणेनत्वांरक्षामीत्यन्वयः ॥ ३ ॥ एवंविधंवाक्यं गृहंवैखानसाश्रमम् ॥ ४ ॥ अमुमेवार्थमिति हासपूर्वकमाह । शुकोऽपीति ॥ ५ ॥ अविच्छिन्नांयज्ञवितितिंमध्येविच्छेदरहितंयज्ञविस्तरम् ॥ ६ ॥ शुकोदेवहितोद्यतइविज्ञात्वाराक्षसानांशुकेविरोधो द्वेष्यत्वबुद्धिरभूत् ॥ ७ ॥ शुकापकरणेशुकस्यापकारेउद्यतःशुकापकारमातिष्ठत्प्रतिज्ञातवान् । परस्मैपदमार्षम् । तस्यशुकस्य ॥ ८ ॥ अंतरमवसरम् ॥

इदानीमेवहन्मित्वांकिंतुपूर्वकृतंतव ॥ स्मरामितेनरक्षामित्वांयद्यपिवधोचितम् ॥३॥ इतोगच्छविमूढत्वमेवंश्रोतुंनमेक्षमम् ॥ महाप्रसाद इत्युक्त्वावेपमानोगृहंययौ ॥ ४ ॥ शुकोऽपिब्राह्मणःपूर्वंब्राह्मिष्ठोब्रह्मवित्तमः ॥ वानप्रस्थविधानेनवनेतिष्ठन्स्वकर्मकृत् ॥ ५ ॥ देवानाम भिवृद्ध्यर्थंविनाशायसुरद्विषाम् ॥ चकारयज्ञवितितिमविच्छिन्नांमहामतिः ॥ ६ ॥ राक्षसानांविरोधोऽभूच्छुकोदेवहितोद्यतः ॥ वज्रदंष्ट्र इतिख्यातस्तत्रैकोराक्षसोमहान् ॥ ७ ॥ अंतरंप्रेप्सुरातिष्ठच्छुकापकरणोद्यतः ॥ कदाचिदागतोऽगस्त्यस्तस्याश्रमपदंमुनेः ॥ ८ ॥ तेन संपूजितोऽगस्त्योभोजनार्थंनिमंत्रितः ॥ गतेस्नातुंमुनौकुंभसंभवेप्राप्यचांतरम् ॥ ९ ॥ अगस्त्यरूपधृक्सोऽपिराक्षसःशुकमब्रवीत् ॥ यदिदास्यसिमेब्रह्मन्भोजनंदेहिसामिषम् ॥१०॥ बहुकालंनभुक्तंमेमांसंछागांगसंभवम् ॥ तथेतिकारयामासमांसभोज्यंसविस्तरम् ॥११॥ उपविष्टेमुनौभोक्तुंराक्षसोऽतीवसुंदरम् ॥ शुकभार्यावपुर्धृत्वातांचांतमोहयन्खलः ॥ १२ ॥ नरमांसंददौतस्मैसुपक्वंबहुविस्तरम् ॥ दत्त्वैवांतर्दधेरक्षस्ततोदृष्ट्वाचुकोपसः ॥ १३ ॥ अमेध्यंमानुषंमांसमगस्त्यःशुकमब्रवीत् ॥ अभक्ष्यंमानुषंमांसंदत्तवानासिदुर्मते ॥ १४ ॥ मह्यंत्वंराक्षसोभूत्वातिष्ठत्वंमानुषाशनः ॥ इतिशप्तःपुरोभीत्याप्राहागस्त्यंमुनेत्वया ॥ १५ ॥

॥ ९ ॥ सामिषंसमांसम् ॥ १० ॥ मांसभोज्यम् मांसयुक्तभोज्यम् ॥ ११ ॥ तांचशुकभार्यांचांतस्तच्छरीरांतमाययाप्रविश्यमोहयन्पाकशालातोबहि र्निःसरणाक्षमांकुर्वन् ॥ १२ ॥ सःअगस्त्यःअमेध्यंमानुषंमांसंदृष्ट्वाचुकोपकुपितश्चसन्नागस्त्यःशुकमब्रवीत् ॥ १३ ॥ १४ ॥ यतस्त्वंमह्यंमानुषंमांसंदत्तवा नसि अवस्त्वंमानुषाशनोराक्षसोभूत्वातिष्ठ ॥ १५ ॥

अयमेविस्तरयुतंमांसंदेहीतिइदानीमुक्तं तथैवमेमयादत्तमतोमेममशापंकिंप्रदास्यासि । आर्षमेतत् ॥ १६ ॥ १७ ॥ १८ ॥ यतोमेवचोऽमोघमनिष्फलमतएवमेव मदुक्तंभविष्यतितदेववदन्शापांतमाह । राक्षसंवपुरिति ॥ १९ ॥ २० ॥ तदागमनोत्तरंरावणेनप्रेषितश्चारोभूत्वारघूत्तमंदृष्ट्वाशापाद्विनिर्मुक्तःरक्षःस्वभावाद्विनिर्मुक्तः ॥ २१ ॥ रावणंतत्त्वज्ञानंबोधयित्वाचततोमुक्तःमत्समीपाद्गच्छेतितेनत्यक्तःपरंपदंस्वंवैखानसंपदम् ॥ २२ ॥ २३ ॥ २४ ॥ राज्ञोमातुःपिता राज्ञः

इदानींभाषितंमेऽयमांसंदेहीतिविस्तरम् ॥ तथैवदत्तंमेदेवकिंमेशापंप्रदास्यसि ॥ १६ ॥ श्रुत्वाशुकस्यवचनंमुहूर्तंध्यानमास्थितः ॥ ज्ञात्वारक्षःकृतंसर्वंततःप्राहशुकंसुधीः ॥ १७ ॥ तवापकारिणासर्वंराक्षसेनकृतंत्विदम् ॥ अविचार्यैवमेदत्तःशापस्तेमुनिसत्तम ॥ १८ ॥ तथापिमेवचोऽमोघमेवमेवभविष्यति ॥ राक्षसंवपुरास्थायरावणस्यसहायकृत् ॥ १९ ॥ तिष्ठतावद्यदारामोदशाननवधायाहि ॥ आगमिष्यतिलंकायाःसमीपंवानरैःसह ॥ २० ॥ प्रेषितोरावणेनत्वंचारोभूत्वारघूत्तमम् ॥ दृष्ट्वाशापाद्विनिर्मुक्तोबोधयित्वाचरावणम् ॥ २१ ॥ तत्त्वज्ञानंततोमुक्तःपरंपदमवाप्स्यसि ॥ इत्युक्तोऽगस्त्यमुनिनाशुकोब्राह्मणसत्तमः ॥ २२ ॥ बभूवराक्षसःसद्योरावणंप्राप्यसंस्थितः ॥ इदानींचाररूपेणदृष्ट्वारामंसहानुजम् ॥ २३ ॥ रावणंतत्त्वविज्ञानंबोधयित्वापुनर्द्रुतम् ॥ पूर्ववद्ब्राह्मणोभूत्वास्थितोवैखानसैःसह ॥ २४ ॥ ततःसमागमद्वृद्धोमाल्यवान्राक्षसोमहान् ॥ बुद्धिमान्नीतिनिपुणोराज्ञोमातुःप्रियःपिता ॥ २५ ॥ प्राहतंराक्षसंवीरंप्रशांतेनांतरात्मना ॥ शृणुराजन्वचोमेऽद्यश्रुत्वाकुरुयथेप्सितम् ॥२६॥ यदाप्रविष्टानगरींजानकीरामवल्लभा ॥ तदादिपुर्यांदृश्यंतेनिमित्तानिदशानन ॥ २७॥ घोराणिनाशहेतूनितानिमेवदतःशृणु ॥ खरस्तनितनिर्घोषामेघाअतिभयंकराः ॥ २८ ॥ शोणितेनाभिवर्षंतिलंकामुष्णेनसर्वदा ॥ रुदंतिदेवलिंगानिस्विद्यंतिप्रचलंतिच ॥ २९ ॥

प्रियश्चेत्यर्थः ॥ २५ ॥ २६ ॥ तदादिजानकीप्रवेशदिनादाराभ्यपुर्यांलंकायांघोराणिनिमित्तानिउत्पाताद्दृश्यंतेइत्यन्वयः ॥ २७ ॥ घोरत्वविवरणं नाशहेतूनीति । खरंकठोरंस्तनितंगर्जितंनिर्घोषःसवज्रपातःशब्दश्चयेषांते ॥ २८ ॥ देवलिंगानिदेवस्थानभूताःप्रतिमाःस्विद्यंतिस्वेदवंतिभवंति ॥ २९ ॥

अग्रतःप्रतिराक्षसंपुरःस्थिताकालिकापांडुरैःदंतैःप्रकाशितैर्हसति । सर्वान्भक्षयामीत्याशयेनहासः । नकुलसहितामूषकामार्जारभक्ष्यामार्जारैर्युध्यंति । तेनर
क्षोभक्ष्येभ्योवानरमनुष्येभ्यएवरक्षसांभयमितिसूचितम् ॥ ३० ॥ ३१ ॥ कालोमृत्युस्वरूपः । कालेकालेसायंप्रातश्चेत्यर्थः । एतान्युक्तानिएवंजातीय
कान्यन्यानिचजातानिदृश्यंते अन्यान्युद्भवंतिजायंते ॥ ३२ ॥ शांतिंउत्पातसूचितारिष्टनाशंकर्म । तदेवकर्माह सीतामिति ॥ ३३ ॥ रामस्यनारायण
त्वेगमकमाह । यत्पादेति । पोतोनौका ज्ञानिनस्तरंतीत्यन्वयः ॥ ३४ ॥ भक्त्यापूतंपवित्रमंतःअंतःकरणं येषांवेभक्तिपूतांताः । आर्षोरेफलोपः । सर्वेषां

कालिकापांडुरैर्दंतैःप्रहसत्यग्रतःस्थिता ॥ खरागोषुप्रजायंतेमूषकानकुलैःसह ॥ ३० ॥ मार्जारेणतुयुध्यंतिपन्नगागरुडेनतु ॥ करालो
विकटोमुंडःपुरुषःकृष्णपिंगलः ॥ ३१ ॥ कालोगृहाणिसर्वेषांकालेकालेत्ववेक्षते ॥ एतान्यन्यानिदृश्यंतेनिमित्तान्युद्भवंतिच ॥ ३२ ॥
अतःकुलस्यरक्षार्थंशांतिंकुरुदशानन ॥ सीतांसत्कृत्यसधनांरामायाशुप्रयच्छभोः ॥ ३३ ॥ रामंनारायणंविद्धिविद्वेषंत्यजराघवे ॥
यत्पादपोतमाश्रित्यज्ञानिनोभवसागरम् ॥ ३४ ॥ तरंतिभक्तिपूतांतास्ततोरामोनमानुषः ॥ भजस्वभक्तिभावेनरामंसर्वहृदालयम् ॥
॥ ३५ ॥ यद्यपित्वंदुराचारोभक्त्यापूतोभविष्यसि ॥ मद्वाक्यंकुरुराजेंद्रकुलकौशलहेतवे ॥ ३६ ॥ तत्तुमाल्यवतोवाक्यंहितमुक्तंदशा
ननः ॥ नमर्षयतिदुष्टात्माकालस्यवशमागतः ॥ ३७ ॥ मानवंकृपणंराममेकंशाखामृगाश्रयम् ॥ समर्थंमन्यसेकेनहीनंपित्रामुनिप्रियम् ॥
॥ ३८ ॥ रामेणप्रेषितोनूनंभाषसेत्वमनर्गलम् ॥ गच्छवृद्धोऽसिबंधुस्त्वंसोढंसर्वंत्वयोदितम् ॥ ३९ ॥ इतोमत्कर्णपदवींदहत्येतद्वचस्त
व ॥ इत्युक्त्वासर्वसचिवैःसहितःप्रस्थितस्तदा ॥ ४० ॥

हृदयमालयःस्थानंयस्य तेनसर्वांतर्यामिणमित्यर्थः ॥ ३५ ॥ भक्त्येत्यस्यतथापीत्यादिः । भक्त्यारामभक्त्या कुलस्यकुशलमेवकौशलंतद्धेतवेतान्निमित्तमि
त्यर्थः ॥ ३६ ॥ नमर्षयति नहितत्त्वेनगृह्णातीत्यर्थः ॥ ३७ ॥ अमर्षमेवप्रकटयति । मानवमिति । कृपणमस्मदादिदयापात्रम् शाखामृगा वानराः । मुनि
प्रियत्वेनातिनिःसारत्वंसूचितम् ॥ ३८ ॥ यतस्त्वंवृद्धोबंधुरतस्त्वयोदितंसर्वंसोढम् ॥ ३९ ॥ इतस्तववक्त्रान्निःसृतमेतद्वचःकर्णपदवींदहति प्रस्थितः
सभामध्याद्रावणइतिशेषः ॥ ४० ॥

समुपस्थितान्सन्निहितान् ॥ ४१ ॥ समाहृतंसमानीयदत्तम् ॥ ४२ ॥ ४३ ॥ श्वेतच्छत्रसहस्राणिअतिमहत्त्वाद्देहस्यानेकच्छत्रधारणा ॥ ४४ ॥ ४५ ॥
पणवानकगोमुखैः वाद्यविशेषैः ॥ ४६ ॥ कृतवाहनास्तद्वहनीयरथारूढाःखड्गादिभिरायुधैर्लक्षिताः । तादृशायुधधराइत्यर्थः ॥ ४७ ॥ लंकांसर्वतःप्रति
द्वारंचोपाययुः ॥ ४८ ॥ शृंगाणिसूक्ष्मोन्नतभागाः शिखराणिवततोविपुलानि युद्धाय । स्थिताइतिशेषः ॥ ४९ ॥ रावणस्यभागशः तत्तत्प्रदेशंस्वस्वरक्ष

प्रासादाग्रेसमासीनःपश्यन्वानरसैनिकान् ॥ युद्धायायोजयत्सर्वराक्षसान्समुपस्थितान् ॥ ४१ ॥ रामोऽपिधनुरादायलक्ष्मणेनसमाहृत
म् ॥ दृष्ट्वारावणमासीनंकोपेनकलुषीकृतः ॥ ४२ ॥ किरीटिनंसमासीनंमंत्रिभिःपरिवेष्टितम् ॥ शशांकार्धनिभेनैववाणेनैकेनराघवः ॥
॥ ४३ ॥ श्वेतच्छत्रसहस्राणिकिरीटदशकंतथा ॥ चिच्छेदनिमिषार्धेनतदद्भुतमिवाभवत् ॥ ४४ ॥ लज्जितोरावणस्तूर्णंविवेशभवनंस्व
कम् ॥ आहूयराक्षसान्सर्वान्प्रहस्तप्रमुखान्खलः ॥४५॥ वानरैःसहयुद्धायनोदयामाससत्वरः ॥ ततोभेरीमृदंगाद्यैःपणवानकगोमुखैः ॥
॥ ४६ ॥ महिषोष्ट्रैःखरैःसिंहैर्द्वीपिभिःकृतवाहनाः ॥ खड्गशूलधनुःपाशयष्टितोमरशक्तिभिः ॥ ४७ ॥ लक्षिताःसर्वतोलंकांप्रतिद्वारमुपा
ययुः ॥ तत्पूर्वमेवरामेणनोदितावानरर्षभाः ॥ ४८ ॥ उद्यम्यगिरिशृंगाणिशिखराणिमहांतिच ॥ तरूंश्चोत्पाट्यविविधान्युद्धायहरियूथ
पाः ॥ ४९ ॥ प्रेक्षमाणाराघवस्यतान्यनीकानिभागशः ॥ राघवप्रियकामार्थंलंकामारुरुहुस्तदा ॥ ५० ॥ तेद्रुमैःपर्वताग्रैश्चमुष्टिभिश्चप्लु
वंगमाः॥ततःसहस्रयूथाश्चकोटियूथाश्चयूथपाः॥५१॥कोटीशतयुताश्चान्येरुरुधुर्नगरंभृशम् ॥ आप्लुवंतःप्लुवंतश्चगर्जंतश्चप्लुवंगमाः ॥ ५२ ॥
रामोजयत्यतिबलोलक्ष्मणश्चमहाबलः ॥ राजाजयतिसुग्रीवोराघवेणानुपालितः ॥ ५३ ॥ इत्येवंघोषयंतश्चसमंयुयुधिरेऽरिभिः ॥ हनू
मानंगदश्चैवकुमुदोनीलएवच ॥ ५४ ॥ नलश्चशरभश्चैवमैंदोद्विविदएवच ॥ जांबवान्दधिवक्त्रश्चकेसरीतारएवच ॥ ५५॥ अन्येचबलिनः
सर्वेयूथपाश्चप्लुवंगमाः ॥ द्वाराण्युत्प्लुत्यलंकायाःसर्वतोरुरुधुर्भृशम् ॥ तदावृक्षैर्महाकायाःपर्वताग्रैश्चवानराः ॥ ५६ ॥

णीयांशत्वेनगृहीत्वास्थितवानीतिशेषः ॥ ५० ॥ तेद्रुमैरित्याद्यैरुपलक्षिताइतिशेषः । सहस्रयूथाःसहस्रसंख्येयायूथायेषाम् ॥ ५१ ॥ आप्लुवंतःऊर्ध्वंप्लुवंतः
पुनरधःपतंतः ५२ ॥ ५३ ॥ अरिभिःराक्षसैः ॥ ५४ ॥ ५५ ॥ सर्वतोरुरुधुः । यथारक्षसांबहिर्निर्गमोनभवतितथास्वयमंतः प्रविविशुरित्यर्थः ॥५६॥

॥ ५७ ॥ निर्गत्यबलेनवानरांस्ततोनिःसार्यस्वयंचबहिरागत्येत्यर्थः ॥ ५८ ॥ समरःमांसशोणिताभ्यांकर्दमयुतभूप्रदेशकः ॥ ५९ ॥ अद्भुतोपमःअद्भुतान्युप
मीयंतेऽनेनसःसकलाद्भुतयुद्धोपमानभूतःसमरोबभूवेत्यन्वयः ॥ ६० ॥ ६१ ॥ विष्णुदृष्टत्वात् वानराणांहृष्टत्वंबलित्वंच । सीतायादुष्टभावस्पर्शजनितपापवतारा
वणेनपालितत्वाद्रक्षसांहतश्रीकत्वाद्व्यतिरेकालंकारः ॥ ६२ ॥ ६३ ॥ ६४ ॥ अंतर्धानमदृश्यत्वम् ॥ ६५ ॥ ब्रह्मास्त्रेणयुतानिनानाविधानिशस्त्राणि । मुंच

विजघ्नुस्तानिरक्षांसिनखैर्दंतैश्चवेगिताः ॥ राक्षसाश्चतदाभीमाद्वारेभ्यःसर्वतोरुषा ॥ ५७ ॥ निर्गत्यभिंदिपालैश्चखड्गैःशूलैःपरश्वधैः ॥
निजघ्नुर्वानरानीकंमहाकायामहाबलाः ॥ ५८ ॥ राक्षसांश्चतथाजघ्नुर्वानराजितकाशिनः ॥ तथाबभूवसमरोमांसशोणितकर्दमः ॥५९ ॥
रक्षसांवानराणांचसंबभूवाद्भुतोपमः ॥ तेहयैश्चगजैश्चैवरथैःकांचनसन्निभैः ॥६०॥ रक्षोव्याघ्रायुयुधिरेनादयंतोदिशोदश ॥ राक्षसाश्चकपीं
द्राश्चपरस्परजयैषिणः ॥ ६१ ॥ राक्षसान्वानराजघ्नुर्वानरांश्चैवराक्षसाः ॥ रामेणविष्णुनादृष्टाहरयोदिविजांशजाः ॥ ६२ ॥ बभूवुर्बलि
नोहृष्टास्तदापीतामृताइव ॥ सीताभिमर्शपापेनरावणेनाभिपालितान् ॥ ६३ ॥ हतश्रीकान्हतबलान्राक्षसाञ्जघ्नुरोजसा ॥ चतुर्थांशाव
शेषेणनिहतंराक्षसंबलम् ॥ ६४ ॥ स्वसैन्यंनिहतंदृष्ट्वामेघनादोऽथदुष्टधीः ॥ ब्रह्मदत्तवरःश्रीमानंतर्धानंगतोऽसुरः ॥ ६५ ॥ सर्वास्त्रकुश
लोव्योम्निब्रह्मास्त्रेणसमंततः ॥ नानाविधानिशस्त्राणिवानरानीकमर्दयन् ॥ ६६ ॥ ववर्षशरजालानितदद्भुतमिवाभवत् ॥ रामोऽपिमान
यन्ब्राह्ममस्त्रमस्त्रविदांवरः ॥ ६७ ॥ क्षणंतूष्णीमुवासाथददर्शपतितंबलम् ॥ वानराणांरघुश्रेष्ठश्चुकोपानलसन्निभः ॥ ६८ ॥ चापमान
यसौमित्रेब्रह्मास्त्रेणासुरंक्षणात् ॥ भस्मीकरोमिमेपश्यबलमद्यरघूत्तम ॥६९॥ मेघनादोऽपितच्छ्रुत्वारामवाक्यमतंद्रितः ॥ तूर्णंजगामनग
रंमाययामायिकोऽसुरः ॥ ७० ॥

न्निति शेषः । वानरसेनांपीडयन्रामस्योपरिशरजालानिववर्ष ॥ ६६ ॥ ६७ ॥ वानराणांबलंपतितंददर्शततश्चुकोप ॥ ६८ ॥ कुपितश्चाह । चापमिति । चाप
हस्तस्यापिक्रोधातिशयेनतद्विस्मरणादिवचापमानयेत्युक्तिः । रघूत्तम लक्ष्मण ॥ ६९ ॥ रामवाक्यंश्रुत्वाभीतःसजगाममाययाऽदृश्यःसन्नेवजगाम ॥ ७० ॥

॥ ७१ ॥ दिव्यौषधिसमुद्भवःदिव्यौषधीनांसमुद्भवोयस्मिन्नित्यर्थः । संजीवयवानरौघानित्यन्वयः ॥ ७२ ॥ आययावितिच्छेदः । सिद्धसंकल्पस्यहनूमतएत त्कर्मनसंदेग्धव्यम् ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ मंत्रिणोयेचबांधवास्तेसर्वेगच्छंतु यतस्तेमत्प्रियकांक्षिणः ॥ ७७ ॥ प्राणविप्लुवात् प्राणनाशभयात् ।

पतितंवानरानीकंदृष्ट्वारामोऽतिदुःखितः ॥ उवाचमारुतिंशीघ्रंगत्वाक्षीरमहोदधिम् ॥ ७१ ॥ तत्रद्रोणगिरिर्नामदिव्यौषधिसमुद्भवः ॥ समानयद्रुतंगत्वासंजीवयमहामते ॥ ७२ ॥ वानरौघान्महासत्त्वान्कीर्तिस्तेसुस्थिराभवेत् ॥ आज्ञाप्रमाणमित्युक्त्वाजगामानिलनंदनः॥ ॥ ७३ ॥ आनीयचगिरिंसर्वान्वानरान्वानरर्षभः ॥ जीवयित्वापुनस्तत्रस्थापयित्वाययौद्रुतम् ॥ ७४ ॥ पूर्ववद्भैरवंनादंवानराणांबलौ घतः ॥ श्रुत्वाविस्मयमापन्नोरावणोवाक्यमब्रवीत् ॥ ७५ ॥राघवोमेमहाञ्छत्रुःप्राप्तोदेवविनिर्मितः ॥ हंतुंतंसमरेशीघ्रंगच्छंतुममयूथपाः॥ ॥ ७६ ॥ मंत्रिणोबांधवाःशूरायेचमात्प्रियकांक्षिणः ॥ सर्वेगच्छंतुयुद्धायत्वरितंममशासनात् ॥ ७७॥ येनगच्छंतियुद्धायभीरवःप्राणविप्लु वात् ॥ तान्हनिष्याम्यहंसर्वान्मच्छासनपराङ्मुखान् ॥ ७८॥ तच्छ्रुत्वाभयसंत्रस्तानिर्जग्मूरणकोविदाः ॥ अतिकायःप्रहस्तश्चमहानाद महोदरौ ॥७९॥ देवशत्रुर्निकुंभश्चदेवांतकनरांतकौ ॥ अपरेबलिनःसर्वेययुर्युद्धायवानरैः ॥८०॥ एतेचान्येचबहवःशूराःशतसहस्रशः ॥ प्रविश्यवानरंसैन्यंममंथुर्बलदर्पिताः ॥ ८१ ॥ भुशुंडिभिंदिपालैश्चबाणैःखड्गैःपरश्वधैः ॥ अन्यैश्चविविधैरस्त्रैर्निजघ्नुर्हरियूथपान्॥८२॥ तेपादपैःपर्वताग्रैर्नखदंतैश्चमुष्टिभिः ॥ प्राणैर्विमोचयामासुःसर्वराक्षसयूथपान् ॥८३॥ रामेणनिहताःकेचित्सुग्रीवेणतथापरे ॥ हनूमता चांगदेनलक्ष्मणेनमहात्मना ॥ यूथपैर्वानराणांतेनिहताःसर्वराक्षसाः ॥ ८४ ॥

एवंचप्राणनाशेसर्वथाप्राप्तेयशोरक्षणाययुद्धार्थंगमनमेवन्याय्यमितिभावः ॥ ७८ ॥ ७९ ॥ ८० ॥ वानराणामिदंवानरम् । आर्षम् । तत्सैन्यंप्राविश्यममथुरर्थो त्तत्सैन्यमेव ॥ ८१ ॥ भुशुंडिभिंदिपालाआयुधविशेषाः ॥ ८२ ॥ ८३ ॥ ८४ ॥

---

१ श्रीरामचन्द्रपरब्रह्मैकान्तिकभक्ततया ' यथात्मानं भक्तान्पश्यति ' इति सूत्रसिद्धान्तेन भगवत्तुल्याघटितघटनापटीयस्त्वंहनूमत्यपि संभावितामिति न केवलद्रोणाचलानयने संदेहो विधेय इत्याशयः ।

रामतेजःसमाविश्यप्राप्य । तत्तेजःसमावेशेनबलित्वेहेतुमाह । रामशक्तीति ॥ ८५ ॥ सर्वेश्वरःसंकल्पमात्रेणसर्वसंहारसमर्थोऽपिमाययामनुष्यत्वविडंबनं तदनुकरणंतेनहेतुनातन्निर्वाहाययुद्धादिलीलारूपांमायांवितनोति ॥ ८६ ॥ ॥ इतिश्रीमत्सकलराज० युद्ध कां० पंचमःसर्गः ॥ ५ ॥ ॥ श्रुत्वेति । अतिकायमुखंतत्प्रधानम् ॥ १ ॥ लंकारक्षणार्थमिंद्रजितंलंकायांनिधायस्थापयित्वा ॥ २ ॥ ३ ॥ आशीःसर्पाणांतालुगताजिह्वा दंतइत्यन्ये ॥ ४ ॥ महासत्त्वंमहाबलम् मयदत्तामंदोदरीपित्रादत्ताम् ॥ ५ ॥ विभीषणविघातिनींतत्प्राणहराम् रामदत्ताभयत्वादयमसुरएवाऽसुरःवधार्होन शक्तिश्चमादृशातिरि

रामतेजःसमाविश्यवानराबलिनोऽभवन् ॥ रामशक्तिविहीनानामेवंशक्तिःकुतोभवेत् ॥ ८५ ॥ सर्वेश्वरःसर्वमयोविधातामायामनुष्यत्व विडंबनेन ॥ सदाचिदानंदमयोऽपिरामोयुद्धादिलीलांवितनोतिमायाम् ॥ ८६ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेयुद्ध काण्डेपंचमःसर्गः ॥ ५ ॥ ॥ श्रुत्वायुद्धेबलंनष्टमतिकायमुखंमहत् ॥ रावणोदुःखसंतप्तःक्रोधेनमहतावृतः ॥ १ ॥ निधायेंद्र जितंलंकारक्षणार्थंमहाद्युतिः ॥ स्वयंजगामयुद्धायरामेणसहराक्षसः ॥ २ ॥ दिव्यंस्यंदनमारुह्यसर्वशस्त्रास्त्रसंयुतम् ॥ राममेवाभिदुद्राव राक्षसेंद्रोमहाबलः ॥ ३ ॥ वानरान्बहुशोहत्वाबाणैराशीविषोपमैः ॥ पातयामाससुग्रीवप्रमुखान्यूथनायकान् ॥४॥ गदापाणिंमहासत्त्वं तत्रदृष्ट्वाविभीषणम् ॥ उत्ससर्जमहाशक्तिंमयदत्तांविभीषणे ॥ ५ ॥ तामापतंतीमालोक्यविभीषणविघातिनीम् ॥ दत्ताभयोऽयंरामे णवधार्होनायमासुरः ॥ ६ ॥ इत्युक्त्वालक्ष्मणोभीमंचापमादायवीर्यवान् ॥ विभीषणस्यपुरतःस्थितोऽकंपइवाचलः ॥ ७॥ साशक्तिर्ल क्ष्मणतनुंविवेशामोघशक्तितः ॥ यावंत्यःशक्तयोलोकेमायायाःसंभवंतिहि ॥८॥ तासामाधारभूतस्यलक्ष्मणस्यमहात्मनः ॥ मायाशक्त्या भवेत्किंवाशेषांशस्यहरेस्तनोः ॥ ९ ॥

क्तेष्वमोघैवेति ॥ ६ ॥ उक्त्वाविचार्यविभीषणपुरतस्तंपृष्ठतःकृत्वाशक्तिसंमुखेस्थितः ॥ ७ ॥ अमोघशक्तितःअमोघसामर्थ्यवत्त्वात् । नन्वेवंकथंलक्ष्मणजी वनंतत्राह । यावंत्यइति । संभवंति प्रकटिताभवंति ॥ ८ ॥ ईश्वरचैतन्यसंबंधादेवजडायांमायायांसर्वशक्तिप्रादुर्भावइतितासामाधारभूतोलक्ष्मणोऽतःसर्वशक्तिचा लकस्यमायाशक्त्यामायानिर्मितयाशक्त्यानमृतिरिभावः ॥ ९ ॥

---

१ अतिकायादि ।

नन्वेवंमूर्च्छाऽपिकुतस्तत्राह । तथापीति । तदनुव्रतःनदवत् । अन्यथारावणस्यामनुष्यत्वज्ञानेतन्मृतिर्दुर्लभेत्याशयेनमूर्च्छादिनाट्यमितिभावः ॥ १० ॥ तोलयितुंचालयितुमपिनशक्तोबभूवसुतरामुत्थापयितुम् । तेनचातिविस्मितआसीत् । तत्रहेतुमाह । सर्वस्येति । विराजंसर्वजगद्रूपेणभासमानमतएवजगतः सारम् ॥ ११ ॥ १२ ॥ अपतद्रावणः ॥ १३ ॥ १४ ॥ १५ ॥ भक्त्यातस्यस्वभक्तत्वादितिभावः । गुरूणांगरिष्ठानाम् ॥ १६ ॥ नारायणांशजं तत्त्वेनस्वाविषयंज्ञात्वा ॥ १७ ॥ बाणासनंधनुः ॥ १८ ॥ रावणंरथस्थंदृष्ट्वालोकदृष्टयातत्साम्यायहनूमंतमारुह्याभिदुद्राव ॥ १९ ॥ वज्रस्यनिष्पेषो

तथापिमानुषंभावमापन्नस्तदनुव्रतः ॥ मूर्च्छितःपतितोभूमौतमादातुंदशाननः ॥ १० ॥ हस्तैस्तोलयितुंशक्तोनबभूवातिविस्मितः ॥ सर्वस्यजगतःसारंविराजंपरमेश्वरम् ॥ ११ ॥ कथंलोकाश्रयंविष्णुंतोलयेल्लघुराक्षसः ॥ ग्रहीतुकामंसौमित्रिंरावणंवीक्ष्यमारुतिः ॥ १२ ॥ आजघानोरसिक्रुद्धोवज्रकल्पेनमुष्टिना ॥ तेनमुष्टिप्रहारेणजानुभ्यामपतद्भुवि ॥ १३ ॥ आस्यैश्चनेत्रश्रवणैरुद्वमद्रुधिरंबहु ॥ निघूर्णमाननयनोरथोपस्थउपाविशत् ॥ १४ ॥ अथलक्ष्मणमादायहनूमान्रावणार्दितम् ॥ आनयद्रामसामीप्यंबाहुभ्यांपरिगृह्यतम् ॥ १५ ॥ हनूमतःसुहृत्त्वेनभक्त्याचपरमेश्वरः ॥ लघुत्वमगमद्देवोगुरूणांगुरुरप्यजः ॥ १६ ॥ साशक्तिरपितंत्यक्त्वाज्ञात्वानारायणांशजम् ॥ रावणस्यरथंप्रागाद्रावणोपिशनैस्ततः ॥ १७ ॥ संज्ञामवाप्यजग्राहबाणासनमथोरुषा ॥ राममेवाभिदुद्रावदृष्ट्वारामोऽपितंक्रुधा ॥ १८ ॥ आरुह्यजगतांनाथोहनूमंतंमहाबलम् ॥ रथस्थंरावणंदृष्ट्वाअभिदुद्रावराघवः ॥ १९ ॥ ज्याशब्दमकरोत्तीव्रंवज्रनिष्पेषनिष्ठुरम् ॥ रामोगंभीरयावाचाराक्षसेंद्रमुवाचह ॥ २० ॥ राक्षसाधमतिष्ठाद्यक्वगमिष्यसिमेपुरः । कृत्वाऽपराधमेवंमेसर्वत्रसमदर्शिनः ॥ २१ ॥ येनबाणेननिहताराक्षसास्तेजनालये ॥ तेनैवत्वांहनिष्यामितिष्ठाद्यममगोचरे ॥ २२ ॥

निर्घातः ॥ २० ॥ मेपुरःतिष्ठ क्वगमिष्यसि सर्वत्रसमदर्शिनः । तेनेतोगमनेऽपिमदृश्यविषयेगमनंनसंभावितमितिभावः । किंचयद्यप्यहंसर्वत्रसमदर्शीतथापिअपराधंकृत्वाजीवनंदुर्लभम् । एतावदेवमेसमदर्शित्वंयत्कर्मानुरूपफलदत्वम् । अन्यथावैषम्यनैर्घृण्येआपद्येतेइतिभावः ॥ २१ ॥ अन्यदपिसमदर्शित्वमाह । येनेति । नतुविषादिलिप्तादिभिरित्याशयः ॥ २२ ॥

राघवंवहंतंहनूमंतमताडयत् ॥ २३ ॥ स्वतेजसास्वीयेनस्मृतरौद्रतेजोव्यवर्धत । यद्वा रामःस्वतेजसाहनूमतस्तेजोव्यवर्धतव्यवर्धयदित्यर्थः ॥ २४ ॥
॥ २५ ॥ अंजसाशीघ्रंयुगपदेवेतियावत् ॥ २६ ॥ पाकारिरिंद्रः ॥ २७ ॥ तंसमीक्ष्यतादृशावस्थंरावणंसमीक्ष्य ॥ २८ ॥ तादृशावस्थस्यवीरस्यहन
नानौचित्यंस्मृत्वाकार्यशेषंचविचार्यकिरीटेमवचिच्छेद । ततोरावणंप्रतिउवाचेतिशेषः । तदेवाह । अनुजानामीति ॥ २९ ॥ लंकांप्रविश्याश्वास्यश्वोबलं

श्रीरामस्यवचःश्रुत्वारावणोमारुतात्मजम् ॥ वहंतंराघवंसंख्येशरैस्तीक्ष्णैरताडयत् ॥ २३ ॥ हतस्यापिशरैस्तीक्ष्णैर्वायुसूनोःस्वतेजसा ॥ व्यवर्धतपुनस्तेजोननर्दचमहाकपिः ॥ २४ ॥ ततोदृष्ट्वाहनूमंतंसव्रणंरघुसत्तमः ॥ क्रोधमाहारयामासकालरुद्रवापरः ॥ २५ ॥ साश्वंरथंध्वजंसूतंशस्त्रौघंधनुरंजसा ॥ छत्रंपताकांतरसाचिच्छेदशितसायकैः ॥ २६ ॥ ततोमहाशरेणाशुरावणंरघुसत्तमः ॥ विव्याधवज्रकल्पेनपाकारिरिवपर्वतम् ॥ २७ ॥ रामबाणहतोवीरश्चचालचमुमोहच ॥ हस्तान्निपतितश्चापस्तंसमीक्ष्यरघूत्तमः ॥ २८ ॥ अर्धचंद्रेणचिच्छेदतत्किरीटंरविप्रभम् ॥ अनुजानामिगच्छत्वमिदानींबाणपीडितः ॥२९॥ प्रविश्यलंकामाश्वास्यश्वःपश्यासिवलंमम ॥ रामबाणेनसंविद्धोहतदर्पोऽथरावणः ॥ ३० ॥ महत्यालज्जयायुक्तोलंकांप्राविशदातुरः ॥ रामोऽपिलक्ष्मणंदृष्ट्वामूर्छितंपतितंभुवि ॥ ३१ ॥ मानुषत्वमुपाश्रित्यलीलयाऽनुशुशोचह ॥ ततः प्राहहनूमंतंवत्सजीवयलक्ष्मणम् ॥ ३२ ॥ महौषधीःसमानीयपूर्ववद्वानरानपि ॥ तथेतिराघवेणोक्तोजगामाशुमहाकपिः॥ ३३ ॥ हनूमान्वायुवेगेनक्षणात्तीर्त्वामहोदधिम् ॥ एतस्मिन्नंतरेचाराराावणायन्यवेदयन् ॥ ३४ ॥ रामेणप्रेषितोदेवहनूमान्क्षीरसागरम् ॥ गतोनेतुंलक्ष्मणस्यजीवनार्थंमहौषधीः ॥३५॥ श्रुत्वातच्चारवचनंराजाचिंतापरोऽभवत् ॥ जगामरात्रावेकाकीकालनेमिगृहंक्षणात् ॥ ३६ ॥ गृहागतंसमालोक्यरावणंविस्मयान्वितः ॥ कालनेमिरुवाचेदंप्रांजलिर्भयविह्वलः ॥ अर्घ्यादिकंतः कृत्वारावणस्याग्रतःस्थितः ॥ ३७ ॥

पश्यसीत्युक्तइतिशेषः ॥ ३० ॥ ३१ ॥ लीलयेत्यनेनवस्तुतःशोकाभावउक्तः ॥ ३२ ॥ वानरानपिआपिनालक्ष्मणम् ॥ ३३ ॥ क्षणान्महोदधिंतीर्त्वा
गत्वौषधीरानयामीतिप्रतिज्ञायेतिशेषः । जगामेत्यनेनान्वयः । प्रस्थातुमुद्यतइत्यर्थः ॥ ३४ ॥ नेतुमानेतुम् ॥ ३५ ॥ ३६ ॥ स्थितः कालनेमिः ॥ ३७ ॥

किमागमनकारणमितिरावर्णपप्रच्छेविशेषः ॥ ३८ ॥ कष्टमेवाह। ममेति ॥ ३९ ॥ गतःयुद्धभूमेःप्रस्थितइत्यर्थः ॥ ४० ॥ कालात्ययःश्वस्तनसूर्योदय रूपः ॥ ४१ ॥ हेईशरावणेतिच्छेदः। धारयहृदयेइतिविशेषः ॥ ४२ ॥ ४३ ॥ तथैवमेभविष्यतिमृत्युरेवभविष्यतीत्यर्थः ॥ ४४ ॥ असुरकुलमितिच्छेदः ॥ किंकिंफलंजडात्मनाजडस्वरूपेण ॥ ४५ ॥ एवंजीवितादौवैराग्यमुपादिश्यकर्तव्यमुपदिशति। सीतामिति।रम्यत्वोपपादकंमुनिगणाश्रयमिति॥ ४६॥ यत्रै



किंतेकरोमिराजेंद्रकिमागमनकारणम् ॥ कालनेमिमुवाचेदंरावणोदुःखपीडितः ॥ ३८ ॥ ममापिकालवशतःकष्टमेतदुपस्थितम् ॥ मया शक्त्याहतोवीरोलक्ष्मणःपतितोभुवि ॥ ३९ ॥ तंजीवयितुमानेतुमोषधीर्हनुमान्गतः ॥ यथातस्यभवेद्विघ्नंतथाकुरुमहामते ॥ ४० ॥ मा ययामुनिवेषेणमोहयस्वमहाकपिम्॥कालात्ययोयथाभूयात्तथाकृत्वैहिमंदिरे॥४१॥रावणस्यवचःश्रुत्वाकालनेमिरुवाचतम् ॥ रावणेशव चोमेऽद्यशृणुधारयतत्वतः ॥ ४२ ॥ प्रियंतेकरवाण्येवनप्राणान्धारयाम्यहम् ॥ मारीचस्ययथारण्येपुराभून्मृगरूपिणः ॥ ४३ ॥ तथै वमेनसंदेहोभविष्यतिदशानन ॥ हताःपुत्राश्चपौत्राश्चबांधवाराक्षसाश्चते ॥ ४४ ॥ घातयित्वाऽसुरकुलंजीवितेनापिकिंतव ॥ राज्येन वासीतयावाकिंदेहेनजडात्मना ॥४५॥ सीतांप्रयच्छरामायराज्यंदेहिविभीषणे ॥ वनंयाहिमहाबाहोरम्यंमुनिगणाश्रयम् ॥ ४६ ॥ स्नात्वा प्रातःशुभजलेकृत्वासंध्यादिकाःक्रियाः ॥ ततएकांतमाश्रित्यसुखासनपरिग्रहः॥४७॥विसृज्यसर्वतःसंगमितरान्विषयान्बहिः॥ बहिःप्रवृ त्ताक्षगणंशनैःप्रत्यक्प्रवाहय ॥ ४८ ॥ प्रकृतेर्भिन्नमात्मानंविचारयसदाऽनघ ॥ चराचरंजगत्कृत्स्नंदेहबुद्धींद्रियादिकम् ॥ ४९ ॥

वपद्मासनादौस्थित्वास्थातासुखंलभतेतत्सुखासनम् ॥ ४७ ॥ बहिःकृत्वेतिशेषः । दूरेकृत्वाइत्यर्थः । बहिःप्रवृत्तंबाह्यविषयेषुप्रवृत्तमक्षगणमिंद्रियगणंप्रत्य क्प्रवाहयआत्मविषयंकुरु । सर्वसहायस्यमनसआत्मविषयत्वकरणमेवसर्वेंद्रियाणामात्मविषयत्वकरणम् ॥ ४८ ॥ तदेवोपपादयति । प्रकृतेरिति । प्रकृति स्वरूपमाह। चराचरमिति। एतदेवप्रकृतिरित्यर्थः ॥ ४९ ॥

किंविशेषेणदृश्यंसर्वमेवमायेत्याह । आब्रह्मेति ॥ ५० ॥ सैवजगद्वृक्षस्यसर्गादिकारणम् । लोहितेत्यादि । स्वस्यत्रिगुणात्मकत्वात् । राजससात्विकतामसाःप्रजाः सृजति ॥ ५१ ॥ तथाकामक्रोधादीन्पुत्रान्हिंसाद्याश्चकन्यकाःसृजति । स्वसृष्टस्यजगतोवृद्ध्यर्थमित्यर्थः । एवंसृष्ट्वाआत्मानमात्मपदवाच्यंविभुंदेवंस्वैर्गुणैःपदार्थैर्मोहयति । तेष्वहंममेति बुद्धिमंतंकरोति ॥ ५२ ॥ स्वनिष्ठान्जगत्कर्तृत्वादीन्गुणान्सन्निधानेनतत्रारोप्यस्ववशंकृत्वाअहंकर्तेत्यादिबुद्धिमत्त्वकरणमेवतस्य वशीकरणम् ॥ ५३ ॥ शुद्धोऽप्ययंदर्शनादिविकाररहीनोऽपिपश्यतीवबहिर्विषयान् । स्वमात्मानंस्वस्वरूपम् । विस्मरणेहेतुर्मायागुणविमोहितत्वम् ॥ ५४ ॥ तर्हिकिंसर्वथाविस्मृतस्वस्वरूपस्यबंधएवनेत्याह । यदेति । बोधरूपिणाज्ञानस्वरूपएवाहमितिजानताजीवन्मूक्तेनेत्यर्थः । निवृत्तदृष्टिःबहिर्विषयेभ्यइति

आब्रह्मस्तंबपर्यंतंदृश्यतेश्रूयतेचयत् ॥ सैषाप्रकृतिरित्युक्तासैवमायेतिकीर्तिता ॥५०॥ सर्गस्थितिविनाशानांजगद्वृक्षस्यकारणम् ॥ लोहितश्वेतकृष्णादिप्रजाःसृजतिसर्वदा ॥ ५१ ॥ कामक्रोधादिपुत्राद्यान्हिंसातृष्णादिकन्यकाः ॥ मोहयत्यनिशंदेवमात्मानंस्वैर्गुणैर्विभुम् ॥५२॥ कर्तृत्वभोक्तृत्वमुखान्स्वगुणानात्मनीश्वरे ॥ आरोप्यस्ववशंकृत्वातेनक्रीडतिसर्वदा ॥५३॥ शुद्धोऽप्यात्मायययायुक्तःपश्यतीवसदाबहिः ॥ विस्मृत्यचस्वमात्मानंमायागुणविमोहितः ॥ ५४॥ यदासद्गुरुणायुक्तोबोध्यतेबोधरूपिणा ॥ निवृत्तदृष्टिरात्मानंपश्यत्येवसदास्फुटम् ॥ ५५ ॥ जीवन्मुक्तःसदादेहीमुच्यतेप्राकृतैर्गुणैः ॥ त्वमप्येवंसदात्मानंविचार्यनियतेंद्रियः ॥ ५६ ॥ प्रकृतेरन्यमात्मानंज्ञात्वामुक्तोभविष्यसि ॥ ध्यातुंयद्यसमर्थोऽसिसगुणंदेवमाश्रय ॥ ५७ ॥ हृत्पद्मकर्णिकेस्वर्णपीठेमणिगणान्विते ॥ मृदुश्लक्ष्णतरेतत्रजानक्यासहसंस्थितम् ॥ ५८ ॥ वीरासनंविशालाक्षंविद्युत्पुंजनिभांबरम् ॥ किरीटहारकेयूरकौस्तुभादिभिरन्वितम् ॥ ५९ ॥ नूपुरैःकटकैर्भांतंतथैववनमालया ॥ लक्ष्मणेनधनुर्द्वंद्वकरेणपरिसेवितम् ॥ ६० ॥

शेषः । आत्मानंशुद्धबुद्धमुक्तस्वभावमात्मस्वरूपम् ॥ ५५ ॥ तादृशसद्गुरूपदेशान्निदिध्यासनसंपत्त्याजीवन्मुक्तिदशांप्राप्तःप्राकृतैर्गुणैःसुखदुःखादिभिर्मुच्यते । अतोमदुपदेशाच्छ्रुतमात्मानमेवंविचार्यमदुक्तात्मस्वरूपंविचारेणदृढीकृत्य ॥ ५६ ॥ ध्यातुमिति । मदुक्तप्रकारेणध्यातुमित्यर्थः ॥ ५७ ॥ सगुणंध्येयंरूपमाह । हृत्पद्मेति । तत्कर्णिकास्थेस्वर्णपीठेस्थितमित्यन्वयः । श्लक्ष्णंस्निग्धम् ॥ ५८ ॥ वीरासनंवीरासनस्थम् । विद्युत्पुंजनिभांबरंपीतांबरमित्यर्थः ॥ ५९॥ भातंशोभायमानम् । धनुर्द्वंद्वकरेण एकंस्वस्यैकंरामस्येतिद्वयम् ॥ ६० ॥

सर्वहृदिस्थितमित्यनेनएवंभूतःसर्वप्रेरकत्वेनध्येयः । एवंहिसर्वस्यस्वतंत्रत्वाभावनिश्चयेद्वेषादिहानिर्भवतीत्यर्थः ॥ ६१ ॥ भक्तेःकथ्यमानमितिशेषः । कृतपूर्वा णिपूर्वंकृतानि यथाग्नेःस्पर्शात्तूलराशयोनश्यंतितद्वत् ॥ ६२ ॥ वैरंवैरभावम् निजभक्तियुक्तः अनन्यभक्तियुक्तः हृदाहृदयेन सदाभावितभावस्यसत्तारूपस्यब्रह्मणो रूपंशुद्धबुद्धमुक्तस्वभावंयेनतम् । वस्तुतःसएवब्रह्मेत्यादिना ॥ ६३ ॥ ॥ इति श्रीमत्सकलराजविपदुद्धरण०युद्धकांडेषष्ठःसर्गः ॥ ६ ॥ अग्निमत् अतितप्तम् सर्पिर्घृतम् जलसंयोगाद्यथामहाज्वालावद्भवतितथाजज्वालेत्यर्थः ॥ १ ॥ परैर्दत्तंकिंचिद्गृहीत्वाधनलोभाद्रामकिंकरतांप्राप्तइवभाषसे ॥ २ ॥ यदिमेवचोनरोचते

एवंध्यात्वसदात्मानंरामंसर्वहृदिस्थितम् ॥ भक्त्यापरमयायुक्तोमुच्यतेनात्रसंशयः ॥ ६१ ॥ शृणुवैचरितंतस्यभक्तोर्नित्यमनन्यधीः ॥ एवंचेत्कृतपूर्वाणिपापानिचमहान्त्यपि ॥ क्षणादेवविनश्यंतियथाऽग्नेस्तूलराशयः ॥ ६२ ॥ भजस्वरामंपरिपूर्णमेकंविहायवैरंनिजभक्तियुक्तः ॥ हृदासदाभावितभावरूपमनामरूपंपुरुषंपुराणम् ॥ ६३ ॥ इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकांडेषष्ठः संर्गः ॥ ६ ॥ ॥ छ ॥ ॥ श्रीमहादेवउवाच ॥ कालनेमिवचःश्रुत्वारावणोऽमृतसन्निभम् ॥ जज्वालक्रोधताम्राक्षः सर्पिरद्भिरिवाग्निमत् ॥ १ ॥ निहन्मित्वांदुरात्मानंमच्छासनपराङ्मुखम् ॥ परैःकिंचिद्गृहीत्वात्वंभाषसेरामकिंकरः ॥ २ ॥ कालनेमिरुवाचेदंरावणंदेवकिंक्रुधा ॥ नरोचतेमेवचनंयदिगत्वाकरोमितत् ॥ ३ ॥ इत्युक्त्वाप्रययौशीघ्रंकालनेमिर्महासुरः ॥ नोदितोरावणेनैवहनूमद्विघ्नकारणात् ॥ ४ ॥ सगत्वाहिमवत्पार्श्वंतपोवनमकल्पयत् ॥ तत्रशिष्यैःपरिवृतोमुनिवेषधरःखलः ॥ ५ ॥ गच्छतोमार्गमासाद्यवायुसूनोर्महात्मनः ॥ ततोगत्वाददर्शाथहनूमानाश्रमंशुभम् ॥ ६ ॥ चिंतयामासमनसाश्रीमान्पवननंदनः ॥ पुरानदृष्टमेतन्मेमुनिमंडलमुत्तमम् ॥ ७ ॥ मार्गोविभ्रंशितोवामेभ्रमोवाचित्तसंभवः ॥ यद्वाऽऽविश्याश्रमपदंदृष्ट्वामुनिमशेषतः ॥ ८ ॥

तदागत्वातत्त्वदाज्ञप्तमेवकरोमि ॥ ३ ॥ रावणेनैवस्वयमेवनोदितइत्यर्थः ॥ ४ ॥ खलःअंतर्दुष्टःअतएवमुनिवेषधरोनतुमुनिः ॥ ५ ॥ गच्छतोवायुसूनोर्मार्गमासाद्यतदीयमार्गमध्येतपोवनमकल्पयदित्यर्थः ॥ ६ ॥ ७ ॥ मार्गोमेविभ्रंशितःत्यक्तः । मार्गांतरेआगतमितियावत् । उतानाश्रमेआश्रमत्वभ्रमः । अथवाकिमनेनविचारेणेत्याह । यद्वेति । मुनिमिति । जातावेकवचनम् । अशेषतोमुनीन्दृष्ट्वेत्यर्थः ॥ ८ ॥

॥ ९ ॥ उक्तगुणैःपादपैश्चसमावृतमाश्रमंप्रविवेशेत्यन्वयः ॥ १० ॥ वैरभावविनिर्मुक्तंयत्राश्रमेऽहिनकुलादयोऽपिपरस्परवैरभावंत्यक्त्वातिष्ठंतितमित्याश्रमविशेषणम् ॥ ११ ॥ इंद्रयोगःकपटम् ॥ १२ ॥ १३ ॥ १४ ॥ ममकमंडलुगतमित्यन्वयः ॥ १५ ॥ तदनंतरंजलपानानंतरंगमनेत्वरामास्तु ॥ १६ ॥ १७ ॥

पीत्वाजलंततोयामिद्रोणाचलमनुत्तमम् ॥ इत्युक्त्वाप्रविवेशाथसर्वतोयोजनायतम् ॥ ९ ॥ आश्रमंकदलीशालखर्जूरपनसादिभिः ॥ समावृतंपक्वफलैर्नम्रशाखैश्चपादपैः ॥ १० ॥ वैरभावविनिर्मुक्तंशुद्धंनिर्मललक्षणम् ॥ तस्मिन्महाश्रमेरम्येकालनेमिःसराक्षसः ॥ ११ ॥ इंद्रयोगंसमास्थायचकारशिवपूजनम् ॥ हनूमानभिवाद्याहगौरवेणमहासुरम् ॥१२॥ भगवन्रामदूतोऽहंहनूमान्नामनामतः ॥ रामकार्येण महताक्षीराब्धिंगंतुमुद्यतः ॥ १३ ॥ तृषामांबाधतेब्रह्मन्नुदकंकुत्रविद्यते ॥ यथेच्छंपातुमिच्छामिकथ्यतांमेमुनीश्वर ॥ १४ ॥ तच्छ्रुत्वामारुतेर्वाक्यंकालनेमिस्तमब्रवीत् ॥ कमंडलुगतंतोयंममत्वंपातुमर्हसि ॥ १५ ॥ भुंक्ष्वचेमानिपक्वानिफलानितदनंतरम् ॥ निवसस्वसुखेनात्रनिद्रामेहित्वरास्तुमा ॥ १६ ॥ भूतंभव्यंभविष्यंचजानामितपसास्वयम् ॥ उत्थितोलक्ष्मणःसर्वैर्वानरारामवीक्षिताः ॥ १७॥ तच्छ्रुत्वाहनुमानाहकमंडलुजलेनमे ॥ नशाम्यत्यधिकातृष्णाततोदर्शयमेजलम् ॥ १८ ॥ तथेत्याज्ञापयामासवटुंमायाविकल्पितम् ॥ बटोदर्शयविस्तीर्णंवायुसूनोर्जलाशयम् ॥ १९ ॥ निमील्यचाक्षिणीतोयंपीत्वागच्छममांतिकम् ॥ उपदेक्ष्यामितेमंत्रंयेनद्रक्ष्यसिचौषधीः ॥ २० ॥ तथेतिदर्शितंशीघ्रंवटुनासलिलाशयम् ॥ प्रविश्यहनुमांस्तोयमपिबन्मीलितेक्षणः ॥ २१ ॥ ततश्चागत्यमकरीमहामायामहाकपिम् ॥ अग्रसत्तंमहावेगान्मारुतिंघोररूपिणी ॥ २२ ॥ ततोददर्शहनुमान्ग्रसंतींमकरींरुषा ॥ दारयामासहस्ताभ्यांवदनंसाममारह ॥ २३ ॥

जलंजलाशयम् ॥ १८ ॥ मायाविकल्पितंस्वमाययाकल्पितंबटुंशिष्यम् ॥ १९ ॥ अथहनूमंतंनत्याह । निमील्यचेति ॥ २० ॥ तथेतिउक्त्वेतिशेषः । अपिबदितिच्छेदः ॥ २१ ॥ महामायाबहुमायावतीमकरीमकराकारा ॥ २२ ॥ २३ ॥

इतिविख्याताअप्सराइतिशेषः ॥ २४ ॥ २५ ॥ २६ ॥ असौनमुनिःकिंतुमुनिवेषधरः ॥ २७ ॥ २८ ॥ महताविलंबेनकिंकृतमतिविलंबःकिंकृतइ
त्यर्थः ॥ २९ ॥ ३० ॥ ३१ ॥ महामायिकोरामः मायिनांदैत्यानाम् ॥ ३२ ॥३३॥ ३४ ॥ ३५ ॥ गृहीत्वातासांतेजोऽभिवृद्ध्यर्थंस्वयंगृहीत्वा



ततोंऽतरिक्षेददृशेदिव्यरूपधरांगना ॥ धान्यमालीतिविख्याताहनूमंतमथाब्रवीत् ॥ २४ ॥ त्वत्प्रसादादहंशापाद्विमुक्तास्मिकपीश्वर ॥
शप्ताहंमुनिनापूर्वमप्सराःकारणांतरे ॥ २५ ॥ आश्रमेयस्तुतेदृष्टःकालनेमिर्महाऽसुरः ॥ रावणप्रहितोमार्गेविघ्नंकर्तुंतवानघ ॥ २६ ॥ मु
निवेषधरोनासौमुनिर्विप्रविहिंसकः ॥ जहिदुष्टंगच्छशीघ्रंद्रोणाचलमनुत्तमम् ॥ २७ ॥ गच्छाम्यहंब्रह्मलोकंत्वत्स्पर्शाद्धूतकल्मषा ॥
इत्युक्त्वासाययौस्वर्गंहनूमानप्यथाश्रमम् ॥२८॥ आगतंतंसमालोक्यकालनेमिरभाषत ॥ किंविलंबेनमहतातवद्यानरसत्तम ॥२९॥
गृहाणमत्तोमंत्रांस्त्वंदेहिमेगुरुदक्षिणाम् ॥ इत्युक्तोहनुमान्मुष्टिंदृढंबद्ध्वाहराक्षसम् ॥ ३० ॥ गृहाणदक्षिणामेतामित्युक्त्वानिजघानतम् ॥
विसृज्यमुनिवेषंसकालनेमिर्महासुरः ॥ ३१॥ युयुधेवायुपुत्रेणनानामायाविधानतः ॥ महामायिकदूतोऽसौहनूमान्मायिनांरिपुः ॥३२॥
जघानमुष्टिनाशीर्ष्णिभग्नमूर्धाममारसः ॥ ततःक्षीरनिधिंगत्वादृष्ट्वाद्रोणंमहागिरिम् ॥ ३३॥ अदृष्ट्वाचौषधीस्तत्रगिरिमुत्पाट्यसत्वरः ॥
गृहीत्वावायुवेगेनगत्वारामस्यसन्निधिम् ॥ ३४ ॥ उवाचहनुमान्राममानीतोऽयंमहागिरिः ॥ यद्युक्तंकुरुदेवेशविलंबोनात्रयुज्यते ॥३५॥
श्रुत्वाहनूमतोवाक्यंरामःसंतुष्टमानसः ॥ गृहीत्वाचौषधीःशीघ्रंसुषेणेनमहामतिः ॥ ३६ ॥ चिकित्सांकारयामासलक्ष्मणायमहात्मने ॥
ततःसुप्तोत्थितइवबुद्ध्वाप्रोवाचलक्ष्मणः ॥ ३७॥ तिष्ठतिष्ठक्वगंतासिहन्मीदानींदशानन ॥ इतिब्रुवंतमालोक्यमूर्ध्न्यवघ्रायराघवः ॥३८॥
मारुतिंप्राहवत्साद्यत्वत्प्रसादान्महाकपे ॥ निरामयंप्रपश्यामिलक्ष्मणंभ्रातरंमम ॥ ३९ ॥



सुषेणस्यवैद्यत्वात्तेनाचिकित्सांकारयामास । एतेनवैद्यकशास्त्राभिनिविष्टत्वेनप्रसिद्धस्यैवचिकित्साधिकारइतिसूचितम् ॥ ३६ ॥ बुद्ध्वामोहंत्यक्त्वा ॥ ३७ ॥
॥ ३८ ॥ ममभ्रातरमहंनिरामयंगतपीडंपश्यामीत्यन्वयः ॥ ३९ ॥

विभीषणमतेनैव । तस्यलंकाच्छिद्रज्ञत्वात् ॥ ४० ॥ युद्धायाभिमुखाः । युद्धंकर्तुंरिपूणामभिमुखाइत्यर्थः ॥ ४१ ॥ मातंगोगजः ॥ ४२ ॥ राघवेणा
ऽभिभूतोऽगमत् । गृहमितिशेषः । समाविश्येति । उपविश्येत्यर्थः ॥ ४३ ॥ मृत्युमेतद्देहप्राण वियोगम् ॥ ४४ ॥ समुपस्थितः लंकामागतइत्यर्थः ॥ ४५ ॥
हनिष्यसेइत्यंतःशापःनसंदेहइतितस्यैवस्थिरीकरणम् । सचानरण्योमामित्युक्त्वादिवंगतइत्यन्वयः ॥ ४६ ॥ ४७ ॥ मदर्थेमद्वधार्थेइत्यर्थः । समांहनिष्यतिह

इत्युक्त्वावानरैःसार्धंसुग्रीवेणसमन्वितः ॥ विभीषणमतेनैवयुद्धायसमवस्थितः ॥ ४० ॥ पाषाणैःपादपैश्चैवपर्वताग्रैश्चवानराः ॥ युद्धा
याभिमुखाभूत्वाययुःसर्वेयुयुत्सवः ॥ ४१ ॥ रावणोविव्यथेरामबाणैर्विद्धोमहासुरः ॥ मातंगइवसिंहेनगरुडेनेवपन्नगः ॥ ४२ ॥ अभिभूतो
गमद्राजाराघवेणमहात्मना ॥ सिंहासनेसमाविश्यराक्षसानिदमब्रवीत् ॥ ४३ ॥ मानुषेणैवमेमृत्युमाहपूर्वंपितामहः ॥ मानुषोहिनमांहं
तुंशक्तोऽस्तिभुविकश्चन ॥ ४४ ॥ ततोनारायणःसाक्षान्मानुषोऽभून्नसंशयः ॥ रामोदाशरथिर्भूत्वामांहंतुंसमुपस्थितः ॥ ४५ ॥ अन
रण्येनयत्पूर्वंशप्तोऽहंराक्षसेश्वराः ॥ उत्पत्स्यतेचमद्वंशेपरमात्मासनातनः ॥ ४६ ॥ तेनत्वंपुत्रपौत्रैश्चबांधवैश्चसमन्वितः ॥ हनिष्यसेन
संदेहइत्युक्त्वामांदिवंगतः ॥ ४७ ॥ सएवरामःसंजातोमदर्थेमांहनिष्यति ॥ कुंभकर्णस्तुमूढात्मासदानिद्रावशंगतः ॥ ४८ ॥ तंविबो
ध्यमहासत्वमानयंतुममांतिकम् ॥ इत्युक्तास्तेमहाकायास्तूर्णंगत्वातुयत्नतः ॥ ४९ ॥ विबोध्यकुंभश्रवणंनिन्यूरावणसन्निधिम् ॥ नमस्कृ
त्यसराजानमासनोपरिसंस्थितः ॥ ५० ॥ तमाहरावणोराजाभ्रातरंदीनयागिरा ॥ कुंभकर्णनिबोधत्वंमहत्कष्टमुपस्थितम् ॥ ५१ ॥ रामे
णानिहताःशूराःपुत्राःपौत्राश्चबांधवाः ॥ किंकर्तव्यमिदानींमेमृत्युकालउपस्थिते ॥ ५२ ॥ एषदाशरथीरामःसुग्रीवसहितोबली ॥ समुद्रं
सबलस्तीर्त्वामूलंनःपरिकृंतति ॥ ५३ ॥

निष्यत्येवेतिस्वनिश्चयाभिलाषः । इदंज्ञानंरजस्तमोजन्यत्वान्नोत्तमायफलायेतिबोध्यम् । मूढात्माअत्यंततमःप्रकृतिः । निद्राप्रियत्वात् ॥ ४८ ॥ महासत्वंमहाब
लम् ॥ ४९ ॥ निन्युःप्रापयामासुः ॥ ५० ॥ ५१ ॥ मृत्युकालेउपस्थितेइदानींमेकिंकर्तव्यंतद्वदेतिशेषः ॥ ५२ ॥ सबलःससैन्यःमूलंसेनाम् ॥ ५३ ॥

१ अनरण्यनामा कश्चित्सूर्यवंशीयो राजर्षिः । तेन तपोविघातपूर्वकदेहनाशनिमित्तेन रावणःशप्त इति महारामायणादवगम्यते ।

वानरानाशनीयाइतिचेत्तत्राह । वानराणांयुद्धेक्षयंनाशंनपश्यामि । अनंतत्वात् । हनूमतौषध्यानयनेनजीवनाच्च ॥ ५४ ॥ अतस्तद्वानराणांबलंहनूमत्सहितंनाश
यस्व ॥ ५५ ॥ रावणेंद्रस्यसर्वश्रेष्ठस्यरावणस्येत्यर्थः । यद्वालोकरावणानांश्रेष्ठस्य परिदेवितं परिदेवनरूपंवचनम् ॥ ५६ ॥ यत्पापस्यकर्मणःफलंभावि
त्वेनतेमयागदितंतदद्योपगतंप्राप्तम् ॥ ५७ ॥ रामोनारायणइतिपूर्वमेवप्रोक्तःकथितः । तवेतिशेषः । एवमनेकप्रकारैःरामस्यनारायणत्वंनबुध्यसेवस्यैवत्कृ
लमागतमितिशेषः ॥ ५८ ॥ ननुत्वयेदंकथंज्ञाततंतत्राह । एकदेति । सानौपर्वतशिखरेविशालायाम् । शिलायामितिशेषः । विशालायांनगर्यामित्यन्ये ॥

येराक्षसामुख्यतमास्तेहतावानरैर्युधि ॥ वानराणांक्षयंयुद्धेनपश्यामिकदाचन ॥५४॥ नाशयस्वमहाबाहोयदर्थंपरिबोधितः ॥ भ्रातुर
र्थंमहासत्त्वकुरुकर्मसुदुष्करम् ॥ ५५ ॥ श्रुत्वातद्रावणेंद्रस्यवचनंपरिदेवितम् ॥ कुंभकर्णोजहासोच्चैर्वचनंचेदमब्रवीत् ॥ ५६ ॥ पुरामंत्र
विचारेतेगदितंयन्मयानृप ॥ तदद्यत्वामुपगतंफलंपापस्यकर्मणः ॥ ५७ ॥ पूर्वमेवमयाप्रोक्तोरामोनारायणःपरः ॥ सीताचयोगमायेति
बोधितोऽपिनबुध्यसे ॥ ५८ ॥ एकदाहंवनेसानौविशालायांस्थितोनिशि ॥ दृष्टोमयामुनिःसाक्षान्नारदोदिव्यदर्शनः ॥ ५९ ॥ तमब्रुवंम
हाभागकुतोगंतासिमेवद ॥ इत्युक्तोनारदःप्राहदेवानांमंत्रणेस्थितः ॥ ६० ॥ तत्रोत्पन्नमुदंतंतेवक्ष्यामिशृणुतत्त्वतः ॥ युवाभ्यांपीडिता
देवाःसर्वेविष्णुमुपागताः ॥ ६१ ॥ ऊचुस्तेदेवदेवेशंस्तुत्वाभक्त्यासमाहिताः ॥ जहिरावणमक्षोभ्यंदेवत्रैलोक्यकंटकम् ॥ ६२ ॥ मानुषे
णमृतिस्तस्यकल्पिताब्रह्मणापुरा ॥ अतस्त्वंमानुषोभूत्वाजहिरावणकंटकम् ॥ ६३ ॥ तथेत्याहमहाविष्णुःसत्यसंकल्पईश्वरः ॥ जातोर
घुकुलेदेवोरामइत्यभिविश्रुतः ॥ ६४ ॥ सहनिष्यतिवःसर्वानित्युक्त्वाप्रययौमुनिः ॥ अतोजानीहिरामंत्वंपरंब्रह्मसनातनम् ॥ ६५ ॥

॥ ५९ ॥ कुतोगंतासिकुतआगतोऽसीत्यर्थेआर्षम् । देवानांमंत्रणेदेवानांविचारस्थानेइत्यर्थः । तत्रस्थितोऽहंतवआगतइतिप्राहेत्यन्वयः ॥ ६० ॥ युवाभ्यां
रावणकुंभकर्णाभ्याम् ॥ ६१ ॥ अक्षोभ्यंकेनाप्यप्रापणीयक्षोभं जहीत्यत्रहेतुगर्भविशेषणंत्रैलोक्यकंटकमिति ॥६२॥ रावणकंटकंरावणरूपंकंटकम् ॥ ६३ ॥
विष्णोरीश्वरत्वसूचकंसत्यसंकल्पत्वम् ॥ ६४ ॥ ६५ ॥

माययामानुष्यशरीरंनत्वसौवस्तुतोमानुषःकश्चिज्जीवइत्यर्थः । भजतइतिद्वितीयावहुवचनम् ॥ ६६ ॥ भक्तान्प्रसीदतिइत्यस्योपपत्तयेभक्तेरुत्कर्षमाह । भक्तिरिति । ज्ञानजनकत्वादेवतस्यामोक्षदत्वंकिंवहुनाकर्मभक्तिहीनंकृतमसत्सममकृततुल्यंफलाजनकमित्यर्थः ॥ ६७ ॥ सर्वावतारेष्वयंमुख्योऽवतारइत्याह । अवताराइति । लीलानुकारिणस्तत्तज्जातिचेष्टानुकरणशीलस्येत्यर्थः ॥ ६८ ॥ येनिपुणारामंभजंतितेसंसारंतीर्त्वाहरेः पदंयांति ॥ ६९ ॥ शुद्धसत्त्वाःशुद्धांतःकरणाः भवःसंसारोभोगःशरीरंयस्यताद्दशोयोमहानहिःकालस्तदीयैःपाशैर्वंधनैर्मुक्ताः सीतापतेरनंतसुखंपदंशुद्धंब्रह्मप्रयांतिप्राप्नुवंति ॥ ७० ॥

त्यजवैरंभजस्वाद्यमायामानुषविग्रहम् ॥ भजतोभक्तिभावेनप्रसीदातिरघूत्तमः ॥ ६६ ॥ भक्तिर्जनित्रीज्ञानस्यभक्तिर्मोक्षप्रदायिनी ॥ भक्तिहीनेनयत्किंचित्कृतंसर्वमसत्समम् ॥ ६७ ॥ अवताराःसुबहवोविष्णोर्लीलानुकारिणः ॥ तेषांसहस्रसद्दशोरामोज्ञानमयःशिवः ॥ ॥ ६८ ॥ रामंभजंतिनिपुणामनसावचसानिशम् ॥ अनायासेनसंसारंतीर्त्वायांतिहरेःपदम् ॥ ६९ ॥ येराममेवसततंभुविशुद्धसत्त्वाध्यायंतितस्यचरितानिपठंतिसंतः ॥ मुक्तास्तएवभवभोगमहाहिपाशैःसीतापतेःपदमनंतसुखंप्रयांति ॥ ७० ॥ इति श्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेयुद्धकांडेसप्तमःसर्गः ॥ ७ ॥ ॥ छ ॥ ॥ कुंभकर्णवचःश्रुत्वाभ्रुकुटीविकटाननः ॥ दशग्रीवोजगादेदमासनादुत्पतन्निव ॥ १ ॥ त्वमानीतोनमेज्ञानवोधनायसुबुद्धिमान् ॥ मयाकृतंसमीकृत्ययुद्धयस्वयदिरोचते ॥ २ ॥ नोचेद्गच्छसुषुप्त्यर्थंनिद्रात्वांबाधतेधुना ॥ रावणस्यवचःश्रुत्वाकुंभकर्णोमहावलः ॥ ३ ॥ रुष्टोऽयमितिविज्ञायतूर्णंयुद्धायनिर्ययौ ॥ सलंघयित्वाप्राकारंमहापर्वतसन्निभः ॥ ४ ॥ निर्ययौनगरात्तूर्णंभीषयन्हरिसैनिकान् ॥ सननादमहानादंसमुद्रमभिनादयन् ॥ ५ ॥ वानरान्कालयामासवाहुभ्यांभक्षयन्रुषा ॥ कुंभकर्णंतदाद्दष्ट्वासपक्षमिवपर्वतम् ॥ ६ ॥ दुद्रुवुर्वानराःसर्वेकालांतकमिवाखिलाः ॥ भ्रमंतंहरिवाहिन्यांमुद्गरेणमहावलम् ॥ ७ ॥

इति श्रीमत्सकलराजविपदुद्धर० अध्यात्मरामायणसेतौयुद्धकांडेसप्तमःसर्गः ॥ ७ ॥ ॥ उत्पतन्निव । क्रोधादितिशेषः ॥ १ ॥ समीकृत्यअंगीकृत्यमत्समव्यवहारोभूत्वा ॥ २ ॥ ३ ॥ ४ ॥ अभिनादयन्स्वनादप्रतिध्वनियुतंकुर्वन् ॥ ५ ॥ कालयामासपीडयामास ॥ ६ ॥ कालांतकमिवकालमिवांतकमिवचतंद्दष्ट्वादुद्रुवुरित्यर्थः । मुद्गरेणयुतमितिशेषः ॥ ७ ॥

पाणिपादैश्चस्वीयैश्चूर्णयंतम् । एकवत्त्वाभावआर्षः । एवमनेकप्रकारेणचूर्णयंतम् ॥ ८ ॥ बुद्धिमान्सर्वास्वप्यवस्थासुज्येष्ठोमन्तव्यइतिसदाचाराभिज्ञः ॥
॥ ९ ॥ १० ॥ परिबोधनप्रकारमाह । सीतामित्यादि । इतिबोधितस्तन्नश्रृणोतिश्रुतवान्विपरीतंखड्गमुद्यम्यहंतुमुद्यतइतिशेषः । ततःकथंचिन्निवृत्तोमां
पदाहत्वाउक्तवांश्च ॥ ११ ॥ किमुक्तवांस्तदाह । धिक्त्वांगच्छेति । ततोऽहंचतुर्भिर्मंत्रिभिरिति ॥ १२ ॥ समालिंग्यचाहेतिशेषः । तदेवाह । वत्सत्व
मिति ॥ १३ ॥ ननुमेजीवनंकथंसंभाव्यतेतत्राह । महाभागवतोऽसीति । भगवद्भक्तस्यतेनाशःकथमपिनसंभाव्यइतिभावः ॥ १४ ॥ यतोहंमदेनमत्तनेत्र

कालयंतंहरीन्वेगाद्भक्षयंतंसमंततः॥ चूर्णयंतंमुद्गरेणपाणिपादैरनेकधा ॥८॥ कुंभकर्णंतदादृष्ट्वागदापाणिर्विभीषणः ॥ ननामचरणौत
स्यभ्रातुर्ज्येष्ठस्यबुद्धिमान् ॥ ९ ॥ विभीषणोऽहंभ्रातुर्मेदयांकुरुमहामते ॥ रावणस्तुमयाभ्रातर्बहुधापरिबोधितः ॥ १० ॥ सीतांदेही
तिरामायरामःसाक्षाज्जनार्दनः ॥ नश्रृणोतिचमांहंतुंखड्गमुद्यम्यचोक्तवान् ॥ ११ ॥ धिक्त्वांगच्छेतिमांहत्वापदापापिभिरावृतः ॥ चतु
र्भिर्मंत्रिभिःसार्धंरामंशरणमागतः ॥१२॥ तच्छ्रुत्वाकुंभकर्णोऽपिज्ञात्वाभ्रातरमागतम् ॥ समालिंग्यचवत्सत्वंजीवरामपदाश्रयः ॥१३॥
कुलसंरक्षणार्थायराक्षसानांहितायच ॥ महाभागवतोऽसित्वंपुरामेनारदाच्छ्रुतम् ॥ १४ ॥ गच्छताममेदानींदृश्यतेनचकिंचन ॥ मदी
योवापरोवापिमदमत्तविलोचनः ॥ १५ ॥ इत्युक्तोऽश्रुमुखोभ्रातुश्चरणावभिवंद्यसः ॥ रामपार्श्वमुपागत्यचिंतापरउपस्थितः ॥ १६ ॥
कुंभकर्णोऽपिहस्ताभ्यांपादाभ्यांपेषयन्हरीन् ॥ चचारवानरींसेनांकालयन्गंधहस्तिवत् ॥१७॥ दृष्ट्वातंराघवःक्रुद्धोवायव्यंशस्त्रमादरात्॥
चिक्षेपकुंभकर्णायतेनाचिच्छेदरक्षसः ॥ १८ ॥ समुद्गरंदक्षहस्तंतेनघोरंननादसः ॥ सहस्तःपतितोभूमावनेकानर्दयन्कपीन् ॥ १९ ॥
पर्यंतमाश्रिताःसर्वेवानराभयवेपिताः ॥ रामराक्षसयोर्युद्धंपश्यंतःपर्यवस्थिताः ॥ २० ॥

स्वतोममस्वीयपरविभागेनकिमपिनदृश्यतेऽतस्त्वंगच्छ । कदाचित्त्वय्यपिप्रहारसंभवात् ॥ १५ ॥ चिंतापरःकुंभकर्णःकथंनाशमेष्यतीतिचिंतापरः ॥ १६ ॥
यस्यगंधंसमाघ्रायान्येगजाःपलायंतेसगंधगजः सयथाक्षुद्रपशून्कालयंश्चरतितद्वदयंचचार ॥ १७ ॥ वायव्यंशस्त्रंवायव्यास्त्राभिमंत्रितंशस्त्रम् ॥ १८ ॥
॥ १९ ॥ पर्यंतमाश्रितायुद्धभूमध्येस्थिताहस्तपातभयात्तत्प्रांतमाश्रिताइत्यर्थः ॥ २० ॥

॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ वडवामुखंनामसमुद्रेशतयोजनविस्तीर्णवडवाग्निवासस्थानम् ॥ २५ ॥ २६ ॥ सशरः । तत्शिरः ॥ २७ ॥ शिरोलंका द्वारिपतितम् कायोमहोदधौ । पतितइतिशेषः ॥ २८ ॥ अस्यशिरोद्वारंरोधयत् । अरुंधदित्यर्थः । अडभावआर्षः । निवृत्तप्रेषणाण्णिच् ॥ नक्रादि समुद्रे कायपातात् । खगाःपक्षिणः ॥ २९ ॥ अप्सरोभिःसहेतिशेषः । ईडिरेतुष्टुवुः । कुसुमासारैरामंवर्षतःअभिनंदिताअभिनंदवंतोबभूवुरितिशेषः ॥ ३० ॥

कुंभकर्णश्छिन्नहस्तःशालमुद्युम्यवेगतः ॥ समरेराघवंहंतुंदुद्रावतमथोच्छिनत् ॥ २१ ॥ शालेनसहितंवामहस्तमैंद्रेणराघवः ॥ छिन्नबाहुमथायांतंनर्दंतंवीक्ष्यराघवः ॥ २२ ॥ द्वावर्धचंद्रौनिशितावादायास्यपदद्वयम् ॥ चिच्छेदपतितौपादौलंकाद्वारिमहास्वनौ ॥ २३ ॥ निकृत्तपाणिपादोऽपिकुंभकर्णोऽतिभीषणः ॥ वडवामुखवद्वक्त्रंव्यादायरघुनंदनम् ॥ २४ ॥ अभिदुद्रावनिनदन्राहुश्चंद्रमसंयथा ॥ अपूरयत्सितान्ग्रेश्चसायकैस्तद्रघूत्तमः ॥ २५ ॥ शरपूरितवक्त्रोऽसौचुक्रोशातिभयंकरः ॥ अथसूर्यप्रतीकाशमैंद्रंशरमनुत्तमम् ॥ २६ ॥ वज्राशनिसमंरामश्चिक्षेपासुरमृत्यवे ॥ सतत्पर्वतसंकाशंस्फुरत्कुंडलदंष्ट्रकम् ॥ २७ ॥ चकर्तरक्षोधिपतेःशिरोवृत्रमिवाशनिः ॥ तच्छिरःपतितंलंकाद्वारिकायोमहोदधौ ॥ २८ ॥ शिरोऽस्य रोधयद्द्वारंकायौनक्राद्यचूर्णयत् ॥ ततोदेवाःसऋषयोगंधर्वाःपन्नगाःखगाः॥२९॥ सिद्धायक्षागुह्यकाश्चअप्सरोभिश्चराघवम् ॥ ईडिरेकुसुमासारैर्वर्षंतश्चाभिनंदिताः ॥ ३० ॥ आजगामतदारामंद्रष्टुंदेवमुनीश्वरः ॥ नारदोगगनात्तूर्णंस्वभासाभासयन्दिशः ॥ ३१ ॥ राममिंदीवरश्यामसुदारांगंधनुर्धरम् ॥ ईषत्ताम्रविशालाक्षमैंद्रास्त्रांचितबाहुकम् ॥ ३२ ॥ दयार्द्रदृष्ट्यापश्यंतंवानरांच्छरपीडितान् ॥ दृष्ट्वागद्गदयावाचाभक्त्यास्तोतुंप्रचक्रमे ॥ ३३ ॥ नारदउवाच ॥ देवदेवजगन्नाथपरमात्मन्सनातन ॥ नारायणाखिलाधारविश्वसाक्षिन्नमोऽस्तुते ॥ ३४ ॥ विशुद्धज्ञानरूपोऽपित्वंलोकानतिवंचयन् ॥ माययामनुजाकारःसुखदुःखादिमानिव ॥ ३५ ॥

॥ ३१ ॥ ऐंद्रास्त्रेणयुक्तोबाहुर्यस्यतम् ॥ ३२ ॥ ३३ ॥ देवानांहिरण्यगर्भादीनामपिदेवपूज्य परमात्मन्सर्वेजीवाअंशायस्यतादृश अतएवसनातनसदाभव नित्येत्यर्थः । नारंजीवसमूहस्तस्यायन अखिलाधारजगदुत्पत्तिस्थितिनाशकारण विश्वसाक्षिन् । अंतर्यामितयेतिभावः ॥ ३४ ॥ अतिवंचयन्स्वस्वरूपगोपने संसारपातिनःकुर्वन् एतदपिमायाकृतमेवनत्त्वतस्तत्रारोपितंबोध्यम् ॥ ३५ ॥

सर्वेषांहृदिस्थितोऽपिस्वप्रकाशोऽपित्वंमाययागूह्यमानोभवसि । तर्हीदृशत्वेकिंमानमित्यतआह । अमलात्मनाव्यक्तएवेति । तदनुभवएवतवतादृशत्वेप्रमाणमिति भावः ॥ ३६ ॥ उन्मीलयन्निति । तवनिमेषोन्मेषावेवसृष्टिप्रलयावितिभावः ॥ ३७ ॥ यस्मिन्निति । यदाधारत्वादिदंभातीतिव्यवहारविषयः । भानस्यत्वद्रूप त्वादितिभावः । यतएतच्चराचरंजायतेयस्मिन्लीयतेयेनतिष्ठतिचेत्यर्थः । सार्वविभक्तिकस्तसिः । यस्मादधिकंनकिंचित्तस्मैब्रह्मरूपिणेनमइत्यर्थः ॥ ३८ ॥ यंप्रकृतिंजानंति । शक्तिशक्तिमतोरभेदात् । यंपुरुषंजानंति । अंशांशिनोरभेदात् । ममैवांशोजीवलोकेजीवभूतःसनातनः । इतिगीतोक्तेः । व्यक्तस्वरूपःकालो निमिषादिःअव्यक्तःक्षणरूपस्तदुभयरूपंकालंयंत्वांजानंतितस्मैनमः ॥ ३९ ॥ ४० ॥ विकाररहितत्ववादसर्वाकारवादयोरापाततोविरोधोदृश्यतेजगतोविकार

त्वंमाययागूह्यमानःसर्वेषांहृदिसंस्थितः ॥ स्वयंज्योतिःस्वभावस्त्वंव्यक्तएवामलात्मनाम् ॥ ३६ ॥ उन्मीलयन्सृजस्येतन्नेत्रेरामजगत्त्रयम् ॥ उपसंह्रियतेसर्वंत्वयाचक्षुर्निमीलनात् ॥ ३७ ॥ यस्मिन्सर्वमिदंभातियतश्चैतच्चराचरम् ॥ यस्मान्नकिंचिल्लोकेऽस्मिंस्तस्मैतेब्रह्मणेनमः ॥ ३८ ॥ प्रकृतिंपुरुषंकालंव्यक्ताव्यक्तस्वरूपिणम् ॥ यंजानंतिमुनिश्रेष्ठास्तस्मैरामायतेनमः ॥३९॥ विकाररहितंशुद्धंज्ञानरूपंश्रुतिर्जगौ ॥ त्वांसर्वजगदाकारमूर्तिंचाप्याहसाश्रुतिः ॥ ४० ॥ विरोधोदृश्यतेदेववैदिकोवेदवादिनाम् ॥ निश्चयंनाधिगच्छंतित्वत्प्रसादंविनाबुधाः ॥ ४१ ॥ माययाक्रीडतोदेवनविरोधोमनागपि ॥ रश्मिजालंरवेर्यद्वद्दृश्यतेजलवद्भ्रमात् ॥ ४२ ॥ भ्रांतिज्ञानात्तथरामत्वयिसर्वंप्रकल्प्यते ॥ मनसोविषयोदेवरूपंतेनिर्गुणंपरम् ॥ ४३ ॥

रूपत्वात् ॥ ४१ ॥ त्वत्प्रसादलभ्यंनिश्चयमाह । माययेति । एवंचजगदाकाररूपत्वंमायिकमितिनविरोधः । मायिकत्वज्ञानंचजगतित्वत्प्रसादंविनादुर्लभमिति भावः । ननुमायिकत्वेऽपिजगतस्तद्रूपत्वंभगवतःकथमित्यत्राह । रश्मिजालमिति । यथातत्रमरुदेशावच्छिन्नेरविरश्मिजालेजलभ्रमोमृगाणाम् ॥ ४२ ॥ तथा त्वयिजगद्भ्रांतिज्ञानाच्छुक्तौरजतमिवप्रकल्प्यतेजनैः माययापिनिरधिष्ठानकभ्रमोत्पादनासंभवात् । अतस्त्वतद्रूपइत्युच्यसे । यत्तुतेवास्तवंनिर्गुणंरूपंतन्मनसःश्रवणमनननिदिध्यासनादिसंस्कृतस्यमनसोविषयः । दृश्यतेपरयाबुद्ध्याइतिश्रुतेः ॥ ४३ ॥

तत्त्वनिर्गुणंरूपं दृश्यंचक्षुरादिविषयःकथंभवेद्दृश्याभावेदृश्यत्वाभावेकथंभजेत्सेवेत । अतःतज्ज्ञानासंभवात्तद्रूपाविचारेणावताररूपाणिभजंतितावत्वैवभवार्ण
वंतरंत्येव ॥ ४४ ॥ ४५ ॥ भीषयंतित्वद्ध्यानान्निवर्तयंति । ध्यानदार्ढ्योपायमाह । त्वन्नामस्मरतांपुंसांत्वद्रूपमपिमानसेभवतीतिशेषः । नामस्मरणमेव
भगवद्रूपध्यानेदृढउपायइतिभावः ॥ ४६ ॥ सगुणसेवाऽपिमोक्षदेत्याह । त्वत्पूजेत्यादि । गोष्पदायतेइत्यनेनतस्यशक्यतरणत्वंसूच्यते ॥ ४७ ॥ अतोनि
र्गुणसेवायादुष्करत्वात्सगुणसेवायाअपिमोक्षदत्वाच्चेत्यर्थः । मुक्तःसंसारक्लेशात् । मुक्तावस्थत्वंस्वस्यसूचितम् । अतएवसर्वदेवतैःपूज्यः ॥ ४८ ॥ एवंमु
ख्यरूपेणस्तुत्वाप्रकृतकर्मणापिस्तौति । रामेति । गतःगतप्रायः ॥ ४९ ॥ श्वइति । इदंतद्वधस्यासन्नकालताद्योतकंवाल्मीक्युक्त्याअग्निवेश्योक्त्याच

कथंदृश्यंभवेदेवदृश्याभावेभजेत्कथम् ॥ अतस्तवावतारेषुरूपाणिनिपुणाभुवि ॥ ४४ ॥ भजंतिबुद्धिसंपन्नास्तरंत्येवभवार्णवम् ॥ का
मक्रोधादयस्तत्रबहवःपरिपंथिनः ॥ ४५ ॥ भीषयंतिसदाचेतोमार्जारामूषकंयथा ॥ त्वन्नामस्मरतानित्यंत्वद्रूपमपिमानसे ॥४६॥ त्वत्पू
जानिरतानांतेकथामृतपरात्मनाम् ॥ त्वद्भक्तसंगिनांरामसंसारोगोष्पदायते ॥ ४७ ॥ अतस्तेसगुणंरूपंध्यात्वाहंसर्वदाहृदि ॥ मुक्तश्च
रामिलोकेषुपूज्योऽहंसर्वदेवतैः ॥ ४८ ॥ रामत्वयामहत्कार्यंकृतंदेवहितेच्छया ॥ कुंभकर्णवधेनाद्यभूभारोऽयंगतःप्रभो ॥ ४९ ॥ श्वोह
निष्यतिसौमित्रिरिंद्रजेतारमाहवे ॥ हनिष्यसेऽथरामत्वंपरश्वोदशकंधरम् ॥ ५० ॥ पश्यामिसर्वदेवेशासिद्धैःसहनभोगतः ॥ अनुगृह्णी
ष्वमांदेवगमिष्यामिसुरालयम् ॥ ५१ ॥ इत्युक्त्वाराममामंत्र्यनारदोभगवानृषिः ॥ ययौदेवैःपूज्यमानोब्रह्मलोकमकल्मषम् ॥ ५२ ॥
भ्रातरंनिहतंश्रुत्वाकुंभकर्णंमहाबलम् ॥ रावणःशोकसंतप्तोरामेणाक्लिष्टकर्मणा ॥ ५३ ॥

दिनत्रयेणेंद्रजितोवधःप्रतीयतेअग्रेऽत्रापिवक्ष्यति । अहोरात्रैस्त्रिभिर्वीरः कथंचिद्विनिपातितः । इति । एवंपरश्वइत्यपि । अग्निवेश्यरामायणेअष्टादशाहा
निरामरावणयोर्द्वंद्वयुद्धस्योक्तेः ॥ ५० ॥ नभोगतः नभःशब्देनभूलोकोर्ध्वलोकास्तदन्यतमस्थितःसर्वयुद्धवृत्तांतंपश्यामिसाक्षात्करोमि । त्वद्भक्तिजनितज्ञानोत्कर्षे
णज्ञानप्रतिबंधकस्यसर्वेंद्रियतमसोनिवर्तनात् । अनेनगमनानुज्ञार्थमुक्तयुद्धदर्शनार्थंस्थेयमित्यस्यावसरोनिराकृतः ॥ ५१ ॥ ५२ ॥ रामेणनिहतंश्रुत्वेत्यन्वयः ॥ ५३ ॥

१ अनयोक्त्या च प्रस्तुत एव व्याघातः संपन्न इति च न वाच्यम् । पश्यामीत्यस्य साक्षात्करोमीत्यर्थेन प्रतिबन्धकतमोनिवृत्तिसद्भावत् ।

पितरंचातिविह्वलंदृष्ट्वेतिशेषः ॥ ५४ ॥ शोकार्तंरावणंप्राह । त्यजेत्यादि ॥ ५५ ॥ देवांतकेति । देवनाशकस्यमनुष्यमात्राद्दुःखावसरः क्वेत्यर्थः ॥ ५६ ॥ समीकरिष्यामि । तदीयमुख्यहननेनात्मीयंसर्वंदुःखंदुःखेनसमंकरिष्यामीत्यर्थः । तदेवाह । हनिष्यामीति । तदुपायमाह । गत्वेति ॥ ५७ ॥ लब्ध्वेत्यस्ययो त्स्यामीतिशेषः । तस्माद्रथादिलाभात् अजेयःयुद्धेइतिशेषः ॥५८॥ निर्दिष्टमुक्तंहवनस्थलंगत्वाहवनायोपचक्रमेइत्यन्वयः ॥५९॥ दुरात्मनइंद्रजितः॥ ६० ॥

मूर्च्छितःपतितोभूमावुत्थायविललापह ॥ पितृव्यंनिहतंश्रुत्वापितरंचातिविह्वलम् ॥५४॥ इंद्रजित्प्राहशोकार्तंत्यजशोकंमहामते ॥ मयि जीवतिराजेंद्रमेघनादेमहाबले ॥ ५५ ॥ दुःखस्यावसरःकुत्रदेवांतकमहामते ॥ व्येतुतेदुःखमखिलंस्वस्थोभवमहीपते ॥ ५६ ॥ सर्वंस मीकरिष्यामिहनिष्यामिचवैरिपून् ॥ गत्वानिकुंभिलांसद्यस्तर्पयित्वाहुताशनम् ॥ ५७ ॥ लब्ध्वारथादिकंतस्मादजेयोऽहंभवाम्यरेः ॥ इत्युक्त्वात्वरितंगत्वानिर्दिष्टंहवनस्थलम् ॥ ५८ ॥ रक्तमाल्यांबरधरोरक्तगंधानुलेपनः ॥ निकुंभिलास्थलेमौनीहवनायोपचक्रमे ॥५९॥ विभीषणोऽथतच्छ्रुत्वामेघनादस्यचेष्टितम् ॥ प्राहरामायसकलंहोमारंभंदुरात्मनः ॥ ६० ॥ समाप्यतेचेद्धोमोऽयंमेघनादस्यदुर्मतेः ॥ तदाऽजेयोभवेद्राममेघनादःसुरासुरैः ॥ ६१ ॥ अतः शीघ्रंलक्ष्मणेनघातयिष्यामिरावणिम् ॥ आज्ञापयमयासार्धंलक्ष्मणंबलिनांवरम् ॥ हनिष्यतिनसंदेहोमेघनादंतवानुजः ॥ ६२ ॥ श्रीरामउवाच ॥ अहमेवागमिष्यामिहंतुमिंद्रजितंरिपुम् ॥ आग्नेयेनमहास्त्रेणसर्वराक्षस घातिना ॥ ६३ ॥ विभीषणोऽपितंप्राहनासावन्यैर्निहन्यते ॥ यस्तुद्वादशवर्षाणिनिद्राहारविवर्जितः ॥ ६४ ॥ तेनैवमृत्युर्निर्दिष्टोब्रह्मणा स्यदुरात्मनः ॥ लक्ष्मणस्तुअयोध्यायानिर्गम्यायात्त्वयासह ॥ ६५ ॥ तदादिनिद्राहारादीन्नजानातिरघूत्तम ॥ सेवार्थंतवराजेंद्रज्ञातंसर्व मिदंमया ॥ ६६ ॥ तदाज्ञापयदेवेशलक्ष्मणंत्वरयामया ॥ हनिष्यतिनसंदेहःशेषःसाक्षाद्धराधरः ॥ ६७ ॥

तदाअजेयइतिच्छेदः ॥ ६१ ॥ शीघ्रंहोमसमाप्तेःप्रागेव । बालोलक्ष्मणःकथंतंहन्यादितिसंदेहोमास्त्वित्याह । हनिष्यतीति ॥ ६२ ॥ रामोमायामानुष्यत्वंनाटय न्नाह । अहमेवेति ॥ ६३ ॥ ६४ ॥ लक्ष्मणस्तुतादृशइत्याह लक्ष्मणस्त्विति । त्वयासहयत्प्रभृत्यायात ॥ ६५ ॥ तदादिनिद्रादीनिनजानातिनस्मरति । अनु ष्ठानंतुदूरापास्तमित्यर्थः । तत्त्यागेहेतुः । सेवार्थंतवेति ॥ ६६ ॥ मयासहेतिशेषः ॥ ६७ ॥

तस्यशेषत्वमेवदार्ढ्यायपुनराह । त्वमेवेति । जगतोनिर्माणरूपंनाटकंतस्यसूत्रधारौमुख्यकारणे ॥ ६८ ॥ ॥ इति श्रीमत्सकलराजविपदु० युद्धकांडेऽष्टमः सर्गः ॥ ८ ॥ विभीषणेति । तस्यइंद्रजितः रौद्रस्यअतितामसस्य ॥ १ ॥ ममसेवनंमत्सेवाकरणंनिद्रादिराहित्यरूपम् ॥ २ ॥ पूर्ववनवाससमयेऽहंतस्य निद्राहारादिराहित्यंज्ञात्वापिभविष्यतःकार्यस्येंद्रजिद्वधरूपस्यगुरुत्वात्तूष्णीमासम् । तन्नानिषिद्धवानित्यर्थः । इत्युक्त्वाविभीषणमितिशेषः ॥ ३ ॥ लक्ष्मणे

त्वमेवसाक्षाज्जगतामधीशोनारायणोलक्ष्मणएवशेषः ॥ युवांधराभारनिवारणार्थंजातौजगन्नाटकसूत्रधारौ ॥ ६८ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेयुद्धकाण्डेऽष्टमःसर्गः ॥ ८ ॥ ॥ विभीषणवचःश्रुत्वारामोवाक्यमथाब्रवीत् ॥ जानामितस्यरौद्रस्यमायांकृत्स्नांविभीषण ॥ १ ॥ सहिब्रह्मास्त्रविच्छूरोमायावीचमहाबलः ॥ जानामिलक्ष्मणस्यापिस्वरूपंममसेवनम् ॥ २ ॥ ज्ञात्वैवासमहंतूष्णींभविष्यत्कार्यगौरवात् ॥ इत्युक्त्वालक्ष्मणंप्राहरामोज्ञानवतांवरः ॥३॥ गच्छलक्ष्मणसैन्येनमहताजहिरावणिम् ॥ हनूमत्प्रमुखैःसर्वैर्यूथपैःसहलक्ष्मण ॥ ४ ॥ जांबवानृक्षराजोऽयंसहसैन्येनसंवृतः ॥ विभीषणश्चसचिवैःसहत्वामभियास्यति ॥ ५ ॥ अभिज्ञस्तस्यदेशस्यजानातिविवराणिसः ॥ रामस्यवचनंश्रुत्वालक्ष्मणःसविभीषणः ॥ ६ ॥ जग्राहकार्मुकंश्रेष्ठमन्यद्भीमपराक्रमः ॥ रामपादांबुजंस्पृश्यहृष्टःसौमित्रिरब्रवीत् ॥ ७ ॥ अद्यमत्कार्मुकान्मुक्ताःशरानिर्भिद्यरावणिम् ॥ गमिष्यंतिहिपातालंस्नातुंभोगावतीजले ॥ ८ ॥ एवमुक्त्वाससौमित्रिःपरिक्रम्यप्रणम्यतम् ॥ इंद्रजिन्निधनाकांक्षीययौत्वरितविक्रमः ॥ ९ ॥ वानरैर्बहुसाहस्रैर्हनूमान्पृष्ठतोऽन्वगात् ॥ विभीषणश्चसहितोमंत्रिभिस्त्वरितंययौ ॥ १० ॥ जांबवत्प्रमुखाऋक्षाःसौमित्रिंत्वरयाऽन्वयुः ॥ गत्वानिकुंभिलादेशंलक्ष्मणोवानरैःसह ॥ ११ ॥

तिद्भिःसंबोधनमादरपूर्वमन्यासाध्यत्वसूचनाय ॥ ४ ॥ सःसैन्यसंवृतऋक्षराजःसचिवसहितोविभीषणश्चत्वामभियास्यति अनुयास्यति ॥ ५ ॥ विभीषणस्यानुगमनं कार्यसाधकमित्याह । अभिज्ञइति । तस्यइंद्रजिद्धननदेशस्यविवराणिरिपूणांछिद्राणि ॥ ६ ॥ स्पृश्यस्पृष्ट्वा ॥ ७ ॥ भोगवतीपातालगंगा ॥ ८ ॥ सःसंस्मृतात्मरूपःस्मृतस्वनिवासश्च तंरामम् ॥ ९ ॥ १० ॥ ११ ॥

बलसंघातंइंद्रजिद्रक्षणार्थंस्थितम् । राक्षससंकुलंराक्षसव्याप्तम् ॥ १२ ॥ अंगदेनवीरेणजांबवान्यत्तोभूदित्यनुकर्षः । राक्षसाधिपइत्युत्तरार्धस्थविभीषणा न्वयि । राक्षसान्इंद्रजिद्रक्षकान् ॥ १३ ॥ १४ ॥ अस्मिन्रक्षोनीकेभिन्नेत्वच्छरभेदेनपलायिते एतत्कर्मइंद्रजिद्धवनकर्म ॥ १५ ॥ १६ ॥ राक्षसेंद्रसुतं प्रतिवत्सेनांप्रतीत्यर्थः ॥ १७ ॥ तेराक्षसाः ॥ १८ ॥ शब्दःशूराणांसिंहनादरूपः ॥ १९ ॥ निकुंभिलांचहोमंचेविकेवलंकर्मत्यागएवनकिंतुतद्देशत्यागो

अपश्यद्बलसंघातंदूराद्राक्षससंकुलम् ॥ धनुरानम्यसौमित्रिर्यत्तोऽभूद्भूरिविक्रमः ॥ १२ ॥ अंगदेनचवीरेणजांबवान्राक्षसाधिपः ॥ तदा विभीषणःप्राहसौमित्रिंपश्यराक्षसान् ॥ १३ ॥ यदेतद्राक्षसानीकंमेघश्यामंविलोक्यते ॥ अस्यानीकस्यमहतोभेदनेयत्नवान्भव ॥१४॥ राक्षसेंद्रसुतोऽप्यस्मिन्भिन्नेदृश्योभविष्यति ॥ अभिद्रवाशुयावद्वैनैतत्कर्मसमाप्यते ॥ १५ ॥ जहिवीरदुरात्मानंहिंसापरमधार्मिकम् ॥ विभीषणवचःश्रुत्वालक्ष्मणःशुभलक्षणः ॥ १६ ॥ ववर्षशरवर्षाणिराक्षसेंद्रसुतंप्रति ॥ पाषाणैःपर्वताग्रैश्चवृक्षैश्चहरियूथपाः ॥ १७ ॥ निर्जघ्नुःसर्वतोदैत्यांस्तेऽपिवानरयूथपान् ॥ परश्वधैःशितैर्बाणैरसिभिर्यष्टितोमरैः ॥ १८ ॥ निर्जघ्नुर्वानरानीकंतदाशब्दोमहानभूत् ॥ ससंप्रहारस्तुमुलःसंजज्ञेहरिरक्षसाम् ॥ १९ ॥ इंद्रजित्स्वबलंसर्वमर्द्यमानंविलोक्यसः ॥ निकुंभिलांचहोमंचत्यक्त्वाशीघ्रंविनिर्गतः ॥ ॥२०॥ रथमारुह्यसधनुःक्रोधेनमहताऽगतम् ॥ समाह्वयित्वासौमित्रिंयुद्धायरणमूर्धनि ॥२१॥ सौमित्रेमेघनादोऽहंमयाजीवन्नमोक्ष्यसे ॥ तत्रदृष्ट्वापितृव्यंसप्राहनिष्ठुरभाषणम् ॥ २२ ॥ इहैवजातःसंवृद्धःसाक्षाद्भ्रातापितुर्मम ॥ यस्त्वंस्वजनमुत्सृज्यपरभृत्यत्वमागतः ॥ २३ ॥ कथंद्रुह्यसिपुत्रायपापीयानसिदुर्मतिः ॥ इत्युक्त्वालक्ष्मणंदृष्ट्वाहनूमत्पृष्ठतःस्थितम् ॥ २४ ॥ उद्यदायुधनिस्त्रिंशेरथेमहतिसंस्थितः ॥ महाप्रमाणमुद्यम्यघोरंविस्फारयन्धनुः ॥ २५ ॥

पीत्यर्थः ॥ २० ॥ महताक्रोधेनयुतोयुद्धायसौमित्रिंलक्ष्मणमाह्वयित्वारणमूर्धनिरणभूमध्यभागमगमत्प्राप्तः । ल्यबभावआर्षः ॥ २१ ॥ समाह्वयन्नेवाह । सौमित्रेइति । निष्ठुरभाषणंनिष्ठुरवाक्यम् ॥ २२ ॥ परभृत्यत्वमागतइत्यस्येदृशंत्वां धिगितिशेषः ॥ २३ ॥ द्रुह्यसिमदीयंछिद्रंशत्रुभ्योदर्शयन्नित्यर्थः । पृष्ठतः । सार्वविभक्तिकस्तसिः।पृष्ठेइत्यर्थः ॥२४॥ उर्ध्वंतिप्रकाशंस्थितानिआयुधानिनिस्त्रिंशाश्चयस्मिंस्तादृशेरथेइत्यर्थः । महाप्रमाणंसार्धसप्तवितस्ति ॥ २५ ॥

भोवानरायुष्माकंप्राणान्ममबाणाःपास्यंतीतिअवददितिशेषः । दाशरथिर्लक्ष्मणः ॥ २६ ॥ इंद्रजित्क्रोधाद्रक्तनयनोबाणपातसमकालंलक्ष्मणमपश्यत् ।
॥ २७ ॥ ततःशरैराहतःपीडितोमूढोमूर्छितोभवत् । प्रत्याहृतेंद्रियःप्राप्तेंद्रियज्ञानः पुनर्व्यपगतमूर्च्छोऽभवदितियावत् ॥ २८ ॥ सौमित्रिमभिचक्रामत
त्संमुखंजगामेत्यर्थः ॥ २९ ॥ ३० ॥ ३१ ॥ संप्रयुक्तेनधनुषःसकाशात्प्रेरितेन ॥ ३२ ॥ ३३ ॥ सुसंविद्धंसुतरांसम्यग्विद्धंरथमध्येविशीर्णंतत्रपुनर्बाणै

अद्यवोमामकाबाणाःप्राणान्पास्यंतिवानराः ॥ ततःशरंदाशरथिःसंधायामित्रकर्शनः ॥ २६ ॥ ससर्जराक्षसेंद्रायक्रुद्धःसर्पइवश्वसन् ॥
इंद्रजिद्रक्तनयनोलक्ष्मणंसमुदैक्षत ॥ २७ ॥ शक्राशनिसमस्पर्शैर्लक्ष्मणेनाहतःशरैः ॥ मुहूर्तमभवन्मूढःपुनःप्रत्याहृतेंद्रियः ॥ २८ ॥
ददर्शावस्थितंवीरंवीरोदशरथात्मजम् ॥ सोऽभिचक्रामसौमित्रिंक्रोधसंरक्तलोचनः ॥ २९ ॥ शरान्धनुषिसंधायलक्ष्मणंचेदमब्रवीत् ॥
यदितेप्रथमेयुद्धेनदृष्टोमेपराक्रमः ॥ ३० ॥ अद्यत्वांदर्शयिष्यामितिष्ठेदानींव्यवस्थितः ॥ इत्युक्त्वासप्तभिर्बाणैरभिविव्याधलक्ष्मणम् ॥
॥ ३१ ॥ दशभिश्चहनूमंतंतीक्ष्णधारैःशरोत्तमैः ॥ ततःशरशतेनैवसंप्रयुक्तेनवीर्यवान् ॥ ३२ ॥ क्रोधाद्विगुणसंरब्धोनिर्बिभेदविभीषणम् ॥
लक्ष्मणोपितथाशत्रुंशरवर्षैरवाकिरत् ॥ ३३ ॥ तस्यबाणैःसुसंविद्धंकवचंकांचनप्रभम् ॥ व्यशीर्यतरथोपस्थेतिलशःपतितंभुवि ॥
॥ ३४ ॥ ततःशरसहस्रेणसंक्रुद्धोरावणात्मजः ॥ विभेदसमरेवीरंलक्ष्मणंभीमविक्रमम् ॥ ३५ ॥ व्यशीर्यतापतद्दिव्यंकवचंलक्ष्मणस्यच ॥
कृतप्रतिकृतान्योऽन्यंबभूवतुरभिद्रुतौ ॥ ३६ ॥ अभीक्ष्णंनिःश्वसंतौतौयुद्ध्येतांतुमुलंपुनः ॥ शरसंवृतसर्वांगौसर्वतोरुधिरोक्षितौ ॥ ३७ ॥
सुदीर्घकालंतौवीरावन्योन्यंनिशितैःशरैः ॥ अयुध्येतांमहासत्त्वौजयाजयविवर्जितौ ॥ ३८ ॥ एतस्मिन्नंतरेवीरोलक्ष्मणःपंचभिःशरैः ॥
रावणेःसारथिंसाश्वंरथंचसमचूर्णयत् ॥ ३९ ॥

स्तिलशःखंडितंभुविपतितम् ॥ ३४ ॥ ३५ ॥ दिव्यमपिलक्ष्मणस्यकवचंतद्बाणैर्व्यशीर्यतापतच्च । अन्योन्यंकृतप्रतिकृतौकृतेप्रतिकृतंयाभ्यांवादृशौ ।
संधिरार्षः ॥ ३६ ॥ तुमुलमत्याश्चर्यंद्रष्टृभिर्विशिष्यज्ञातुमशक्यंच ॥ ३७ ॥ जयाजयविवर्जितावित्यनेनसमयुद्धतोक्ता ॥ ३८ ॥ ३९ ॥

॥ ४० ॥ ४१ ॥ ४२ ॥ ऐंद्रमैंद्रास्त्राभिमंत्रितम् । यद्वा । अगस्त्यद्वाराइंद्रदत्तंतूणीराद्रामेणदत्तमित्यर्थः ॥ ४३ ॥ ४४ ॥ ४५ ॥ तंबाणमैंद्रबाणम् ॥ ४६ ॥ ४७ ॥ रघूत्तमंकीर्तयंतः । तद्गुणान्कीर्तयंतः । तैरेवस्तुवंतश्चेत्यर्थः ॥ ४८ ॥ ४९ ॥ स्थिराभूत् । तावत्पर्यंतंराक्षसभारेणकंपमानेवासीदि

चिच्छेदकार्मुकंतस्यदर्शयन्हस्तलाघवम् ॥ सोऽन्यत्तुकार्मुकंभद्रंसज्यंचक्रेत्वरान्वितः ॥ ४० ॥ तच्चापमपिचिच्छेदलक्ष्मणस्त्रिभिराशुगैः ॥ तमेवच्छिन्नधन्वानंविव्याधानेकसायकैः ॥ ४१ ॥ पुनरन्यत्समादायकार्मुकंभीमविक्रमः ॥ इंद्रजिल्लक्ष्मणंबाणैःशितैरादित्यसन्निभैः ॥ ४२ ॥ बिभेदवानरान्सर्वान्बाणैरापूरयन्दिशः ॥ ततऐंद्रंसमादायलक्ष्मणोरावणिंप्रति ॥ ४३ ॥ संधायाकृष्यकर्णांतंकार्मुकंदृढनिष्ठुरम् ॥ उवाचलक्ष्मणोवीरःस्मरन्रामपदांबुजम् ॥ ४४ ॥ धर्मात्मासत्यसंधश्चरामोदाशरथिर्यदि ॥ त्रिलोक्यामप्रतिद्वंद्वस्तदेनंजहिरावणिम् ॥ ४५ ॥ इत्युक्त्वाबाणमाकर्णाद्विकृष्यतमजिह्मगम् ॥ लक्ष्मणःसमरेवीरःससर्जेंद्रजितंप्रति ॥ ४६ ॥ सशरःसशिरस्त्राणंश्रीमज्ज्वलितकुंडलम् ॥ प्रमथ्येंद्रजितःकायात्पातयामासभूतले ॥ ४७ ॥ ततःप्रमुदितादेवाःकीर्तयंतोरघूत्तमम् ॥ ववर्षुःपुष्पवर्षाणिस्तुवंतश्चमुहुर्मुहुः ॥ ४८ ॥ जहर्षशक्रोभगवान्सहदेवैर्महर्षिभिः ॥ आकाशेऽपिचदेवानांशुश्रुवेदुंदुभिस्वनः ॥ ४९ ॥ विमलंगगनंचासीत्स्थिराभूद्विश्वधारिणी ॥ निहतंरावणिंदृष्ट्वाजयजल्पसमन्वितः ॥ ५० ॥ गतश्रमःससौमित्रिःशंखमापूरयद्रणे ॥ सिंहनादंततःकृत्वाज्याशब्दमकरोद्विभुः ॥ ५१ ॥ तेननादेनसंहृष्टावानराश्चगतश्रमाः ॥ वानरेंद्रैश्चसहितःस्तुवद्भिर्हृष्टमानसैः ॥ ५२ ॥ लक्ष्मणःपरितुष्टात्माददर्शाभ्येत्यराघवम् ॥ हनूमद्राक्षसाभ्यांचसहितोविनयान्वितः ॥ ५३ ॥ ववंदेभ्रातरंरामंज्येष्ठंनारायणंविभुम् ॥ त्वत्प्रसादाद्रघुश्रेष्ठहतोरावणिराहवे ॥ ५४ ॥ श्रुत्वातल्लक्ष्मणाद्वृत्तंयातमालिंग्यरघूत्तमः ॥ मूर्ध्न्यवघ्रायमुदितःसस्नेहमिदमब्रवीत् ॥ ५५ ॥ साधुलक्ष्मणतुष्टोऽस्मिकर्मतेदुष्करंकृतम् ॥ मेघनादस्यनिधनेजितंसर्वमरिंदम ॥ ५६ ॥

तिर्यग्गम् । जयजल्पःदेवसृष्टोजयशब्दः ॥ ५० ॥ ५१ ॥ तेगतश्रमाआसन्निति शेषः स्तुवद्भिर्लक्ष्मणमितिशेषः ॥ ५२ ॥ राक्षसोविभीषणः ॥ ५३ ॥ ॥ ५४ ॥ लक्ष्मणात्तदिंद्रजिन्निधनंश्रुत्वेत्यर्थः ॥ ५५ ॥ सर्वंराक्षसकुलम् ॥ ५६ ॥

॥ ५७ ॥ मयायोद्धुंनिर्यास्यतीत्यन्वयः ॥ ५८ ॥ ५९ ॥ पर्यदेवयत्शोकंकृतवानित्यर्थः ॥ ६० ॥ पुत्रलालसःपुत्रेलालसाप्रीतिर्यस्यसः ॥ ६१ ॥
सर्वान्राक्षसान्निनाशयिषुर्नाशयितुमिच्छुरुवाच । युद्धायगच्छध्वमितिशेषः ॥ ६२ ॥ बुद्धयासंवीक्ष्य । सीतानाशेरामनाशइतिविचार्येत्यर्थः ॥ ६३ ॥
॥ ६४ ॥ ६५ ॥ हेदशग्रीववैश्रवणानुजत्वादिभिर्ननुनामअतिशयेनप्रसिद्धःकथंस्त्रीवधमिच्छसीत्यन्वयः ॥ ६६ ॥ इतिसुपार्श्वेनोक्तःसरावणोन्यवर्त

अहोरात्रैस्त्रिभिर्वीरःकथंचिद्विनिपातितः ॥ निःसपत्नःकृतोऽस्म्यद्यनिर्यास्यतिहिरावणः ॥ ५७ ॥ पुत्रशोकान्मयायोद्धुंतंहनिष्यामिराव
णम् ॥ मेघनादंहतंश्रुत्वालक्ष्मणेनमहाबलम् ॥ ५८ ॥ रावणःपतितोभूमौमूर्च्छितःपुनरुत्थितः ॥ विललापातिदीनात्मापुत्रशोकेनरा
वणः ॥ ५९ ॥ पुत्रस्यगुणकर्माणिसंस्मरन्पर्यदेवयत् ॥ अद्यदेवगणाःसर्वेलोकपालामहर्षयः ॥ ६० ॥ हतमिंद्रजितंज्ञात्वासुखंस्वप्स्यंति
निर्भयाः ॥ इत्यादिबहुशःपुत्रलालसोविललापह ॥ ६१ ॥ ततःपरमसंक्रुद्धोरावणोराक्षसाधिपः ॥ उवाचराक्षसान्सर्वान्निनाशयिषुराहवे
॥ ६२ ॥ सपुत्रवधसंतप्तःशूरःक्रोधवशंगतः ॥ संवीक्ष्यरावणोबुद्ध्याहंतुंसीतांप्रदुद्रुवे ॥ ६३ ॥ खड्गपाणिमथायांतंक्रुद्धंदृष्ट्वादशाननम् ॥
राक्षसीमध्यगासीताभयशोकाकुलाभवत् ॥ ६४ ॥ एतस्मिन्नंतरेतस्यसाचिवोबुद्धिमाञ्छुचिः ॥ सुपार्श्वोनाममेधावीरावणंवाक्यमब्रवीत् ॥
॥ ६५ ॥ ननुनामदशग्रीवसाक्षाद्वैश्रवणानुजः ॥ वेदविद्याव्रतस्नातःस्वकर्मपरिनिष्ठितः ॥ ६६ ॥ अनेकगुणसंपन्नःकथंस्त्रीवधमिच्छसि ॥
अस्माभिःसहितोयुद्धेहत्वारामंचलक्ष्मणम् ॥ प्राप्स्यसेजानकींशीघ्रमित्युक्तःसन्यवर्तत ॥ ६७ ॥ ततोदुरात्मासुहृदानिवेदितंवचःसुध
र्म्यंप्रतिगृह्यरावणः ॥ गृहंजगामाशुशुचाविमूढधीःपुनःसभांचप्रययौसुहृद्वृतः ॥ ६८ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेयुद्ध
कांडेनवमःसर्गः ॥ ९ ॥ ॥ ७ ॥ ॥ श्रीमहादेवउवाच ॥ सविचार्यसभामध्येराक्षसैःसहमंत्रिभिः ॥ निर्ययौयेऽवशिष्टास्तेराक्षसैःसहरा
घवम् ॥ १ ॥ शलभःशलभैर्युक्तःप्रज्वलंतमिवानलम् ॥ ततोरामेणनिहताःसर्वेतेराक्षसायुधि ॥ २ ॥ स्वयंरामेणनिहतस्तीक्ष्णबाणेनव
क्षसि ॥ व्यथितस्त्वरितंलंकांप्रविवेशदशाननः ॥ ३ ॥

तन्निवृत्तः ॥ ६७ ॥ शुचाशोकेनविमूढधीः । सभागमनमेवतदवसरेयुक्तंतत्रगृहगमनंविमोहः ॥ ६८ ॥ ॥ इतिश्रीमत्सकलराजविपदुद्धरणस० युद्धकां०
नवमःसर्गः ॥ ९ ॥ ७ ॥ १ ॥ २ ॥ ३ ॥

चापीपादपूरणे । मारुतेश्चपौरुषंदृष्ट्वेत्यनुकर्षः ॥ ४ ॥ एवंप्रकारेणराक्षसयूथपैः सहलंकाविनाशितेत्यन्वयः ॥ ५ ॥ तदेवाह । महादैत्याइत्यादि । दुःखसंदोहो दुःखसमूहः ॥ ६ ॥ ७ ॥ ८ ॥ तूणीरसायकाःतूणीरस्थिताःसायकाइत्यर्थः । संभविष्यंतित्वांसम्यक्प्राप्स्यंति ॥ ९ ॥ १० ॥ सर्वत्रसर्वदिक्षु आदिनाअ

दृष्ट्वारामस्यबहुशःपौरुषंचाप्यमानुषम् ॥ रावणोमारुतेश्चैवशीघ्रंशुक्रांतिकंययौ ॥ ४ ॥ नमस्कृत्यदशग्रीवःशुक्रंप्रांजलिरब्रवीत् ॥ भगवन्राघवेणैवंलंकाराक्षसयूथपैः ॥ ५ ॥ विनाशितामहादैत्यानिहताःपुत्रबांधवाः ॥ कथंमेदुःखसंदोहस्त्वयितिष्ठतिसद्गुरौ ॥ ६ ॥ इति विज्ञापितोदैत्यगुरुःप्राहदशाननम् ॥ होमंकुरुप्रयत्नेनरहसित्वंदशानन ॥ ७ ॥ यदिविघ्नोनचेद्धोमेतर्हिहोमानलोत्थितः ॥ ८ ॥ महान्रथश्चवाहाश्चचापतूणीरसायकाः ॥ संभविष्यंतितैर्युक्तस्त्वमजेयोभविष्यसि ॥९॥ गृहाणमंत्रान्मद्दत्तान्गच्छहोमंकुरुद्रुतम् ॥ इत्युक्तस्त्वरितंगत्वारावणोराक्षसाधिपः ॥ १० ॥ गुहांपातालसदृशींमंदिरेस्वेचकारह ॥ लंकाद्वारकपाटादिबद्ध्वासर्वत्रयत्नतः ॥ ११ ॥ होमद्रव्याणिसंपाद्ययान्युक्तान्याभिचारिके ॥ गुहांप्रविश्यचैकांतेमौनीहोमंप्रचक्रमे ॥ १२ ॥ उत्थितंधूममालोक्यमहांतंरावणानुजः ॥ रामायदर्शयामासहोमधूमंभयाकुलः ॥ १३ ॥ पश्यरामदशग्रीवोहोमंकर्तुंसमारभत् ॥ यदिहोमःसमाप्तःस्यात्तदाऽजेयोभविष्यति ॥ १४ ॥ अतोविघ्नायहोमस्यप्रेषयाशुहरीश्वरान् ॥ तथेतिरामः सुग्रीवसंमतेनांगदंकपिम् ॥ १५ ॥ हनूमत्प्रमुखान्वीरानादिदेशमहाबलान् ॥ प्राकारंलंघयित्वातेगत्वारावणमंदिरम् ॥ १६ ॥ दशकोट्यःप्लवंगानांगत्वामंदिररक्षकान् ॥ चूर्णयामासुरश्वांश्चगजांश्चन्यहनन्क्षणात् ॥ १७ ॥ ततश्चसरमानामप्रभातेहस्तसंज्ञया ॥ विभीषणस्यभार्यासाहोमस्थानमसूचयत् ॥ १८ ॥ गुहापिधानपाषाणमंगदःपादघट्टनैः ॥ चूर्णयित्वामहासत्त्वःप्रविवेशमहागुहाम् ॥ १९ ॥ दृष्ट्वादशाननंतत्रमीलिताक्षंदृढासनम् ॥ ततोऽगदाज्ञयासर्वेवानराविविशुर्द्रुतम् ॥ २० ॥

न्यान्यपिच्छिद्राणि ॥ ११ ॥ १२ ॥ रावणानुजोविभीषणः ॥ १३ ॥ समारभत् आरब्धवान् । अजेयइतिच्छेदः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ विभीषणस्यभार्यासरमानामहस्तसंज्ञयाहोमस्थानमसूचयत्ज्ञापितवती ॥ १८ ॥ पादघट्टनैःपादाघातैः ॥ १९ ॥ २० ॥

संभारान्होमसाधनानि ॥ २१ ॥ हनुमान्स्रुवमाच्छिद्यतेनैवजघान ॥ २२ ॥ २३ ॥ २४ ॥ विददारनखैर्विदीर्णंकृतवान् ॥ २५ ॥ ततःकंचुकाद्विमुक्ताविभक्तामुक्ताः । रत्नसंचयैस्ततोविभक्तैःसहभूमौपतिताइत्यर्थः । त्रुटितंवानराणामाकर्षणेनभग्नम् ॥ २६ ॥ तस्यरावणस्यपश्यतएवेत्यर्थः ॥ २७ ॥ नीतारावणहोमस्थानमितिशेषः ॥ २८ ॥ करुणंयथास्यात्तथाक्रोशंतीजगादेत्यन्वयः । त्वंनिर्लज्जोसियत्तवभार्यातवैवाग्रेपरैर्वानरैःकेशपाशेधृत्वाविकृष्य

तत्रकोलाहलंचक्रुस्ताडयंतश्चसेवकान् ॥ संभारांश्चिक्षिपुस्तत्रहोमकुंडेसमंततः ॥ २१ ॥ स्रुवमाच्छिद्यहस्ताच्चरावणस्यबलाद्रुषा ॥ तेनैवसंजघानाशुहनुमान्प्लवगाग्रणीः ॥२२॥ घ्नंतिदंतैश्चकाष्ठैश्चवानरास्तमितस्ततः ॥ नजहौरावणोध्यानंहतोऽपिविजिगीषया ॥२३॥ प्रविश्यांतःपुरेवेश्मन्यंगदोवेगवत्तरः ॥ समानयत्केशबंधेधृत्वामंदोदरींशुभाम् ॥ २४ ॥ रावणस्यैवपुरतोविलपंतीमनाथवत् ॥ विददारांगदस्तस्याःकंचुकंरत्नभूषितम् ॥ २५ ॥ मुक्ताविमुक्ताःपतिताःसमंताद्रत्नसंचयैः ॥ श्रोणिसूत्रंनिपतितंत्रुटितंरत्नचित्रितम् ॥२६॥ कटिप्रदेशाद्विस्रस्तानीवीतस्यैवपश्यतः ॥ भूषणानिचसर्वाणिपतितानिसमंततः ॥ २७ ॥ देवगंधर्वकन्याश्चनीताहृष्टैःप्लवंगमैः ॥ मंदोदरीरुरोदाथरावणस्याग्रतोभृशम् ॥ २८ ॥ क्रोशंतीकरुणंदीनाजगाददशकंधरम् ॥ निर्लज्जोऽसिपरैरेवंकेशपाशेविकृष्यते ॥ २९ ॥ भार्यातवैवपुरतःकिंजुहोषिनलज्जसे ॥ हन्यतेपश्यतोयस्यभार्यापापैश्चशत्रुभिः ॥ ३० ॥ मर्तव्यंतेनतत्रैवजीवितान्मरणंवरम् ॥ हामेघनादतेमाताक्लिश्यतेबतवानरैः ॥ ३१ ॥ त्वयिजीवतिमेदुःखमीदृशंचकथंभवेत् ॥ भार्यालज्जाचसंत्यक्ताभर्त्रामेजीविताशया ॥ ३२ ॥ श्रुत्वातद्देवितंराजामंदोदर्यादशाननः ॥ उत्तस्थौखड्गमादायत्यजदेवीमितिब्रुवन् ॥ ३३ ॥ जघानांगदमव्यग्रःकटिदेशेदशाननः ॥ ततोत्सृज्यययुःसर्वेविध्वंस्यहवनंमहत् ॥ ३४ ॥ रामपार्श्वमुपागम्यतस्थुःसर्वेप्रहर्षिताः ॥ रावणस्तुततोभार्यामुवाचपरिसांत्वयन् ॥ ३५ ॥

तेच ॥ २९ ॥ अतःकिंजुहोषिकिंनलज्जसे । तदेवाह । हन्यतेपश्यतइत्यादि ॥ ३० ॥ ३१ ॥ त्वयिजीवतिईदृशंदुःखंभवेदेव । नभवेदेव । त्वन्नाशात्तुमेइदंदुःखंप्राप्तम् । चपादपूरणे । मेभर्त्राजीविताशयाभार्यालज्जाचेत्युभयमपित्यक्तमित्यर्थः ॥ ३२ ॥ ३३ ॥ ततोत्सृज्ययततउत्सृज्येतिच्छेदः । आर्षःसंधिः । महन्महाफलजनकंहवनमित्यर्थः ॥ ३४ ॥ ३५ ॥

जीवताप्राणिनाकिंनदृश्यतेअसंभावितमपिदृश्यतइत्यर्थः । ततोममेदृश्यवस्थेतिशोकंत्यजज्ञानमाविदुर्लभ्यमितिज्ञानम् ॥ ३६ ॥ अज्ञानकृतस्यवस्तुतोज्ञाने ननाशइतिचेत्सर्वमिदमज्ञानकृतमेवेत्याह । अज्ञानेति । अतएवकर्तव्याकर्तव्यविषयज्ञाननाशकोऽतःसर्वथाज्ञानालंबेनसत्यकुंशक्यइतिभावः । किंबहुनासर्वः संसारएवाज्ञानमूलकस्तन्मूलस्यशरीरादिष्वहंज्ञानस्याज्ञानप्रभवत्वादित्याह । अज्ञानप्रभवेति ॥ ३७ ॥ पुत्रदारादिसंबंधएतेमदीयाइत्यध्यासः । ततःसंसृतिःबंधककर्मोत्पत्तिः एवंहर्षादयोजन्मायाश्चाज्ञानमूलाः तत्तज्जनककर्मणामज्ञानजन्यत्वात् । इदंलब्धमितिहर्षजनकस्येदंमेनष्टमितिशोकजनकस्यायंमेहंतेत्यादिभयादिजनकज्ञानस्याज्ञानमूलकत्वाच्च ॥ ३८ ॥ आत्मनस्तुवास्तवोनकेनापिसंबंधइत्याह । आत्मात्विति । बहुशोव्याख्यातमेतत् ॥ ३९ ॥ सर्वभावैःसुखदुःखैर्विवर्जितः ॥ तदेवाह । नसंयोगइति । तद्बुद्धिरेवमुख्यतयाहर्षशोकादिकारणमितिभावः ॥ ४० ॥ ४१ ॥ दारयिष्यतिदारणेननाशयिष्यतीत्यर्थः । वज्रकल्पैःसायकैर्दारयिष्यतीत्यन्वयः । ततस्तत्पदंसर्वोत्तमंस्थानंवैकुंठंगमिष्यामि ॥ ४२ ॥ सीतांहत्वात्वयामेक्रियासपिंडीकरणांताकर्तव्या । पुत्राभावेतुपत्नीस्यात् । इतिस्मृतेः । यद्वा । मयासार्धंपावकंप्रवेक्ष्यासि सत्यामिच्छायामितिशेषः ॥ ४३ ॥ सत्यंवाक्यंशृणुतथाकुरुच मद्वाक्यार्थमनुतिष्ठचेत्यर्थः ॥ ४४ ॥

दैवाधीनामिदंभद्रेजीवताकिंनदृश्यते ॥ त्यजशोकंविशालाक्षिज्ञानमालंब्यनिश्चितम् ॥ ३६ ॥ अज्ञानप्रभवःशोकःशोकोज्ञानविनाशकृत् ॥ अज्ञानप्रभवाहंधीःशरीरादिष्वनात्मसु ॥ ३७ ॥ तन्मूलःपुत्रदारादिसंबंधःसंसृतिस्ततः ॥ हर्षशोकभयक्रोधलोभमोहस्पृहादयः ॥ ३८ ॥ अज्ञानप्रभवाह्येतेजन्ममृत्युजरादयः ॥ आत्मातुकेवलःशुद्धोव्यतिरिक्तोह्यलेपकः ॥ ३९ ॥ आनंदरूपोज्ञानात्मासर्वभावविवर्जितः॥ नसंयोगोवियोगोवाविद्यतेकेनाचित्सतः॥४०॥एवंज्ञात्वात्वमात्मानंत्यजशोकमनिंदिते ॥ इदानीमेवगच्छामिगत्वारामंसलक्ष्मणम् ॥ ४१ ॥ आगमिष्यामिनोचेन्मांदारयिष्यतिसायकैः ॥ श्रीरामोवज्रकल्पैश्चततोगच्छामितत्पदम् ॥ ४२ ॥ तदात्वयामेकर्तव्याक्रियामच्छासनात्प्रिये ॥ सीतांहत्वामयासार्धंत्वंप्रवेक्ष्यसिपावकम् ॥ ४३ ॥ एवंश्रुत्वावचस्तस्यरावणस्यातिदुःखिता ॥ उवाचनाथमेवाक्यंशृणुसत्यंतथाकुरु ॥ ४४ ॥

प्रधानस्यप्रकृतेःपुरुषाणांजीवानांचेश्वरःनियंता ॥ ४५ ॥ तदेवबोधयंतीतदवतारानाह । मत्स्यइति । इदंपुराणेप्रसिद्धम् ॥ ४६ ॥ ४७ ॥ क्रोडरूपेणवाराहरूपेण ॥ ४८ ॥ ४९ ॥ जगत्रयमाक्रम्यपादैरितिशेषः ॥ ५० ॥ रामःपरशुरामः मुनेःकश्यपस्य ॥५१॥ भवदर्थेभवन्नाशार्थम् ॥ ५२ ॥ ५३ ॥ रघूत्तमेतत्समीपमित्यर्थः ॥ ५४ ॥ राघवेणघातयित्वाकथंजीवामिजीवनेप्रियताबुद्धिंकरोमि ॥ ५५ ॥ मरणस्यसन्निहितत्वाद्विपरीतबुद्धिंरावणस्याह ।

शक्योनराघवोजेतुंत्वयाचान्यैःकदाचन ॥ रामोदेववरःसाक्षात्प्रधानपुरुषेश्वरः ॥ ४५ ॥ मत्स्योभूत्वापुराकल्पेमनुंवैवस्वतंप्रभुः ॥ ररक्षसकलापद्भ्योराघवोभक्तवत्सलः ॥ ४६ ॥ रामःकूर्मोऽभवत्पूर्वंलक्षयोजनविस्तृतः ॥ समुद्रमथनेपृष्ठेदधारकनकाचलम्[1] ॥ ४७ ॥ हिरण्याक्षोऽतिदुर्वृत्तोहतोनेनमहात्मना ॥ क्रोडरूपेणवपुषाक्षोणीमुद्धरताक्कचित् ॥ ४८ ॥ त्रिलोककंटकंदैत्यंहिरण्यकशिपुंपुरा ॥ हतवान्नारसिंहेनवपुषारघुनंदनः ॥ ४९ ॥ विक्रमैस्त्रिभिरेवासौबलिंवद्ध्वाजगत्त्रयम् ॥ आक्रम्यादात्सुरेंद्रायभृत्यायरघुसत्तमः ॥ ५० ॥ राक्षसाःक्षत्रियाकाराजाताभूमेर्भरावहाः ॥ तान्हत्वाबहुशोरामोभुवंजित्वाह्यदान्मुनेः ॥ ५१ ॥ सएवसांप्रतंजातोरघुवंशेपरात्परः ॥ भवदर्थेरघुश्रेष्ठोमानुषत्वमुपागतः ॥ ५२ ॥ तस्यभार्याकिमर्थंवाहृतासीतावनाद्बलात् ॥ ममपुत्रविनाशार्थंस्वस्यापिनिधनायच ॥५३॥ इतःपरंवावैदेहींप्रेषयस्वरघूत्तमे ॥ विभीषणायराज्यंतुदत्त्वागच्छामहेवनम्[2] ॥ ५४ ॥ मंदोदरीवचःश्रुत्वारावणोवाक्यमब्रवीत् ॥ कथंभद्रेरणेपुत्रान्भ्रातॄन्राक्षसमंडलम् ॥ घातयित्वाराघवेणजीवामिवनगोचरः ॥ ५५ ॥ रामेणसहयोत्स्यामिरामबाणैःसुशीघ्रगैः ॥ विदार्यमाणोयास्यामितद्विष्णोःपरमंपदम् ॥ ५६ ॥ जानामिराघवंविष्णुंलक्ष्मींजानामिजानकीम् ॥ ज्ञात्वैवजानकींसीतामयानीतावनाद्बलात् ॥ ५७ ॥ रामेणनिधनंप्राप्ययास्यामीतिपरंपदम् ॥ विमुच्यत्वांतुसंसाराद्गमिष्यामिसहप्रिये ॥ ५८ ॥

रामेणसहेत्यादि । जानामिराघवमितिच ॥ ५६ ॥ ५७ ॥ रामेणनिधनंप्राप्यपरंपदंयास्यामीतिज्ञात्वैवजानकीबलादानीतेत्यन्वयः ॥ हेप्रियेत्वांविमुच्यत्यक्त्वासंसारात् । ल्यब्लोपेपंचमी । संसारंसंत्यज्यमृतैर्बंधुभिःसहगमिष्यामि ॥ ५८ ॥

---

१ मंदराचलमित्यर्थः । तस्यैवाचलस्य कनकाचल इति नाम । २ गच्छावहे इतिपाठोऽपेक्षित इति भाति ।

गम्यतेसागतिःस्थानंपरानंदमयीदुःखराहित्याद्ब्रह्मलोकैकदेशवैकुंठरूपाशुद्धारजस्तमोऽस्पृष्टशुद्धसत्त्वमयीयामुमुक्षुभिःसेव्यतेदहराद्युपासनाभिःप्राप्यते । रामेण संयुगेहतस्तांगतिंगमिष्यामि ॥ ५९ ॥ इहकल्मषाणिराक्षसदेहेनकृतानिपापानि अंतकालेरामनामस्मरणाद्राममूर्तिदर्शनाच्चप्रक्षाल्यदूरीकृत्यमुक्तिंयास्यामि ॥ ६० ॥ क्लेशादीति । अविद्यास्मितारागद्वेषाभिनिवेशाःपंचक्लेशाइतियोगशास्त्रोक्ताः तत्राविद्याअनित्याशुचिदुःखरूपानात्मसुनित्यशुचिसुखात्मत्वख्यातिः शुक्तिरजतादिज्ञानानिच अस्मिताशरीराद्व्यतिरिक्तआत्मानास्तीत्येवंप्रत्ययःरागद्वेषौप्रसिद्धौ अभिनिवेशोमरणादित्रासः तज्जन्याःस्थूलवृ

परानंदमयीशुद्धासेव्यतेयामुमुक्षुभिः ॥ तांगतिंतुगमिष्यामिहतोरामेणसंयुगे ॥ ५९ ॥ प्रक्षाल्यकल्मषाणीहमुक्तिंयास्यामिदुर्लभाम् ॥ ६० ॥ क्लेशादिपंचकतरंगयुगंभ्रमाढ्यंदारात्मजाप्तधनबंधुझषाभियुक्तम् ॥ और्वानलाभनिजरोषमनंगजालंसंसारसागरमतीत्य हरिंव्रजामि ॥ ६१ ॥ इति श्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेयुद्धकांडेदशमःसर्गः ॥ १० ॥ ॥ श्रीमहादेवउवाच ॥ इत्युक्त्वावचनंप्रेम्णाराज्ञींमंदोदरींतदा ॥ रावणःप्रययौयोद्धुंरामेणसहसंयुगे ॥ १ ॥ दृढंस्यंदनमास्थायवृतोघोरैर्निशाचरैः ॥ चक्रैःषोडशभिर्युक्तंसवरूथंसकूबरम् ॥ २ ॥ पिशाचवदनैर्घोरैःखरैर्युक्तंभयावहम् ॥ सर्वास्त्रशस्त्रसहितंसर्वोपस्करसंयुतम् ॥ ३ ॥ निश्चक्रामाथसहसारावणोभीषणाकृतिः ॥ आयांतंरावणंदृष्ट्वाभीषणंरणकर्कशम् ॥ ४ ॥ संत्रस्ताभूत्तदासेनावानरीरामपालिता ॥ ५ ॥ हनूमानथचोत्प्लुत्यरावणंयोद्धुमाययौ ॥ आगत्यहनुमान्रक्षोवक्षस्यतुलविक्रमः ॥ ६ ॥ मुष्टिंबंधंदृढंबद्धाताडयामासवेगतः ॥ तेनमुष्टिप्रहारेणजानुभ्यामपतद्रथे ॥ ७ ॥ मूर्च्छितोऽथमुहूर्तेनरावणःपुनरुत्थितः ॥ उवाचचहनूमंतंशूरोऽसिममसंमतः ॥८॥ हनूमानाहतंधिङ्मांयस्त्वंजीवसिरावण॥ त्वंतावन्मुष्टिनावक्षोममताडयरावण ॥ ९ ॥

त्तयआदिपदग्राह्याः यासांध्यानहेयत्वंयोगशास्त्रेउक्तं तद्रूपास्तरंगायत्रतंचेमंयुगंतत्परिवृत्तिरूपभ्रमेनाढ्यंद्वारादिरूपैर्झषैर्ग्राहैर्युक्तंतत्तत्प्राणिनांरोषएवौर्वानलाभोयत्रशोषकत्वात्तम् अनंगःकामएवजालंबंधकत्वाद्यत्रतं कामेनहितत्तद्विषयेजनोबध्यते ॥ ६१ ॥ ॥ इति श्रीमत्सकलराजविपदुद्धरणसमर्थे०युद्धकां०दशमःसर्गः ॥ १० ॥ इत्युक्त्वेतिः ॥ १ ॥ वरूथोरथगुप्तिः ॥ २ ॥ उपस्करोयुद्धसामग्री ॥ ३ ॥ रणकर्कशमतिनिर्दयम् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

॥ १० ॥ ११ ॥ १२ ॥ समवेताः अग्रेइतिच्छेदः । संधिरार्षः ॥ १३ ॥ १४ ॥ पृथक्सिंहनादंकृत्वाप्रत्येकंसिंहनादंकृत्वेत्यर्थः । दशनच्छदमोष्ठम् ॥
॥ १५ ॥ विवृत्यक्रोधवशाद्विस्तार्य ॥ १६ ॥ तोयदोधाराभिरिव । पर्वतमितिशेषः । विव्यथेव्यथयामास । अंतर्भावितण्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥

पश्चान्मयाहतःप्राणान्मोक्ष्यसेनात्रसंशयः ॥ तथेतिमुष्टिनावक्षोरावणेनापिताडितः ॥ १० ॥ विघूर्णमाननयनःकिंचित्कश्मलमाययौ ॥
संज्ञामवाप्यकपिराड्रावणंहंतुमुद्यतः ॥ ११ ॥ ततोऽन्यत्रगतोभीत्यारावणोराक्षसाधिपः ॥ हनूमानंगदश्चैवनलोनीलस्तथैवच ॥ १२ ॥
चत्वारःसमवेताग्रेदृष्ट्वाराक्षसपुंगवान् ॥ अग्निवर्णंतथासर्परोमाणंखड्गरोमकम् ॥ १३ ॥ तथावृश्चिकरोमाणंनिर्जघ्नुःक्रमशोऽसुरान् ॥ च
त्वारःश्चतुरोहत्वाराक्षसान्भीमविक्रमान् ॥ १४ ॥ सिंहनादंपृथक्कृत्वारामपार्श्वमुपागताः ॥ ततःक्रुद्धोदशग्रीवःसंदश्यदशनच्छदम् ॥
॥ १५ ॥ विवृत्यनयनेक्रूरोराममेवान्वधावत ॥ दशग्रीवोरथस्थस्तुरामंवज्रोपमैःशरैः ॥ १६ ॥ आजघानमहाघोरैर्धाराभिरिवतोयदः ॥
रामस्यपुरतःसर्वान्वानरानपिविव्यथे ॥ १७ ॥ ततःपावकसंकाशैःशरैःकांचनभूषणैः ॥ अभ्यवर्षद्रणेरामोदशग्रीवंसमाहितः ॥ १८ ॥
रथस्थंरावणंदृष्ट्वाभूमिष्ठंरघुनन्दनम् ॥ आहूयमातलिंशक्रोवचनंचेदमब्रवीत् ॥ १९ ॥ रथेनममभूमिष्ठंशीघ्रंयाहिरघूत्तमम् ॥ त्वरितंभू
तलंगत्वाकुरुकार्यंममानघ ॥ २० ॥ एवमुक्तोऽथतंनत्वामातलिर्देवसारथिः ॥ ततोहयैश्चसंयोज्यहरितैःस्यंदनोत्तमम् ॥ २१ ॥
स्वर्गाज्जयार्थंरामस्यह्युपचक्राममातलिः ॥ अब्रवीच्चततोराममप्रतर्क्यरथेस्थितः ॥ प्रांजलिर्देवराजेनप्रेषितोऽस्मिरघूत्तम ॥ २२ ॥ रथोऽयंदे
वराजस्यविजयायतवप्रभो ॥ प्रेषितश्चमहाराजधनुरैंद्रंचभूषितम् ॥ २३ ॥

ममकार्यंरामस्यरथेनयोजनरूपम् ॥ २० ॥ हरितैःहरितवर्णैः ॥ २१ ॥ उपचक्रामरामसमीपमाजगामेत्यर्थः । अप्रतर्क्यरथेअन्यैःसर्वैरदृश्यरथेप्रांजलिर
ब्रवीदित्यन्वयः । किमब्रवीत्तदाह । देवराजेनेत्यादि ॥ २२ ॥ अयंदेवराजस्यरथइतिरूपबोधनंसचतवविजयायतेनप्रेषितःऐंद्रंस्वीयंधनुश्चतेनप्रेषितम् ॥ २३ ॥

१ अनेनच केवलं रामस्य स्यन्दनारोहणात्प्रागेवस्वर्गादवतरणसमय एव वान्यैस्तस्यरथस्यादृश्यत्वम् । रथारूढे तु श्रीरामे तस्यादृश्यत्वम् न । रावणकृतरथवाहमध्वंसस्याग्रे दृश्यमानत्वात् ।

॥ २४ ॥ २५ ॥ लोकान्‌लक्ष्म्यानियोजयन् । रावणवधस्याल्पकालावशिष्टत्वबोधनेनानंदयन्नित्यर्थः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ अनलमग्निम् ॥ ३० ॥ पुरःरावणसंमुखे ॥ ३१ ॥ ३२ ॥ ३३ ॥ घोरेणबाणेनेतिशेषः ॥ ३४ ॥ रथोपस्थे रथकेतुंपातयित्वेत्यनेनतस्यवेवसादिवच्छरैर्नग्नीकरणंविवक्षि



अभेद्यंकवचंखङ्गंदिव्यतूणीयुगंतथा ॥ आरुह्यचरथंरामरावणंजहिराक्षसम् ॥ २४ ॥ मयासारथिनादेववृत्रंदेवपतिर्यथा ॥ इत्युक्तस्तं परिक्रम्यनमस्कृत्यरथोत्तमम् ॥ २५ ॥ आरुरोहरथंरामोलोकाँल्लक्ष्म्यानियोजयन् ॥ ततोऽभवन्महायुद्धंभैरवंरोमहर्षणम् ॥ २६ ॥ महात्मनोराघवस्यरावणस्यचधीमतः ॥ आग्नेयेनचआग्नेयंदैवंदैवेनराघवः ॥ २७ ॥ अस्त्रंराक्षसराजस्यजघानपरमास्त्रवित् ॥ ततस्तुससृजेघोरंराक्षसंचास्त्रमस्त्रवित् ॥ २८ ॥ क्रोधेनमहताविष्टोरामस्योपरिरावणः ॥ रावणस्यधनुर्मुक्ताःसर्पाभूत्वामहाविषाः ॥ शराःकांचनपुंखाभाराघवंपरितोऽपतन् ॥ २९ ॥ तैःशरैःसर्पवदनैर्वमद्भिरनलंमुखैः ॥ दिशश्चविदिशश्चैवव्याप्तास्तत्रतदाभवन् ॥ ३० ॥ रामःसर्पांस्ततोदृष्ट्वासमंतात्परिपूरितान् ॥ सौपर्णमस्त्रंतद्घोरंपुरःप्रावर्तयद्रणे ॥ ३१ ॥ रामेणमुक्तास्तेबाणाभूत्वागरुडरूपिणः ॥ चिच्छिदुःसर्पबाणाँस्तान्समंतात्सर्पशत्रवः ॥ ३२ ॥ अस्त्रेप्रतिहतेयुद्धेरामेणदशकंधरः ॥ अभ्यवर्षत्ततोरामंघोराभिःशरवृष्टिभिः ॥ ३३ ॥ ततःपुनःशरानीकैराममक्लिष्टकारिणम् ॥ अर्दयित्वातुघोरेणमातलिंप्रत्यविध्यत ॥ ३४ ॥ पातयित्वारथोपस्थेरथकेतुंचकांचनम् ॥ ऐंद्रानश्वानभ्यहनद्रावणःक्रोधमूर्च्छितः ॥ ३५ ॥ विषेदुर्देवगंधर्वाश्चारणाःपितरस्तथा ॥ आर्ताकारंहरिंदृष्ट्वाव्यथिताश्चमहर्षयः ॥ ३६ ॥ व्यथितावानरेंद्राश्चबभूवुःसविभीषणाः ॥ दशास्योविंशतिभुजःप्रगृहीतशरासनः ॥ ३७ ॥ ददृशेरावणस्तत्रमैनाकइपर्वतः ॥ रामस्तुभ्रुकुटिंबद्ध्वाक्रोधसंरक्तलोचनः ॥ ३८ ॥ कोपंचकारसदृशंनिर्दहन्निवराक्षसम् ॥ धनुरादायदेवेन्द्रधनुराकारमद्भुतम् ॥ ३९ ॥ गृहीत्वापाणिनाबाणंकालानलसमप्रभम् ॥ निर्दहन्निवचक्षुर्भ्यांददृशेरिपुमंतिके ॥ ४० ॥ पराक्रमंदर्शयितुंतेजसाप्रज्वलन्निव ॥ प्रचक्रमेकालरूपीसर्वलोकस्यपश्यतः ॥ ४१ ॥

तम् । क्रोधमूर्च्छितःउच्छ्रितक्रोधइत्यर्थः ॥ ३५ ॥ आर्ताकारमार्तसदृशाकारमभिनीतवदाकारम् । नतुवस्तुतस्तदाकारम् ॥ ३६ ॥ ३७ ॥ ३८ ॥ सदृशंकोपमात्मनःसदृशंकोपं देवेंद्रधनुर्वर्षाकालेदृश्यमानमिंद्रधनुरितिख्यातंतत्सदृशम् ॥ ३९ ॥ ४० ॥ कालरूपीरामस्तद्रूपमनुसंधायप्रचक्रमे । रावणवधार्थमितिशेषः ॥ ४१ ॥

॥ ४२ ॥ ४३ ॥ ४४ ॥ लोकसंवर्तकोपमंसर्वलोकप्रलयकं दाढीवकादियुद्धसदृशम् ॥ ४५ ॥ मूर्धानःरामबाणकृत्ताइतिशेषः ॥ ४६ ॥ नदिनमित्या दिअनेनानेकदिनंरामरावणयोर्निरंतरंयुद्धंवृत्तमितिसूचितम् । तद्रूपंछिन्नमस्तकरावणरूपंपुनःपुनःशिरःप्रादुर्भावात् ॥ ४७ ॥ तदेवाह । ततइति । एकवर्च

विकृष्यचापंरामस्तुरावणंप्रतिविध्यच ॥ हर्षयन्वानरानीकंकालांतकइवाबभौ ॥ ४२ ॥ क्रुद्धंरामस्यवदनंदृष्ट्वाशत्रुंप्रधावतः ॥ तत्रसुः सर्वभूतानिचचालचवसुंधरा ॥ ४३ ॥ रामंदृष्ट्वामहारौद्रमुत्पातांश्चसुदारुणान् ॥ त्रस्तानिसर्वभूतानिरावणंचाविशद्भयम् ॥ ४४ ॥ वि मानस्थाःसुरगणाःसिद्धगंधर्वकिन्नराः ॥ ददृशुःसुमहायुद्धंलोकसंवर्तकोपमम् ॥ ऐंद्रमस्त्रंसमादायरावणस्याशिरोऽच्छिनत् ॥ ४५ ॥ मूर्धानोरावणस्याथबहवोरुधिरोक्षिताः ॥ गगनात्प्रपतंतिस्मतालादिवफलानिहि ॥४६॥ नदिनंनचवैरात्रिर्नसंध्यानादिशोऽपिवा ॥ प्रका शंतेनतद्रूपंदृश्यतेतत्रसंगरे ॥ ४७ ॥ ततोरामोबभूवाथविस्मयाविष्टमानसः ॥ शतमेकोत्तरंछिन्नंशिरसांचैकवर्चसाम् ॥ ४८ ॥ नचैवराव णःशांतोदृश्यतेजीवितक्षयात् ॥ ततःसर्वास्त्रविद्वीरःकौसल्यानंदवर्धनः ॥ ४९ ॥ अस्त्रैश्चबहुभिर्युक्तश्चिंतयामासराघवः ॥ यैर्यैर्बाणैर्हता दैत्यामहासत्वपराक्रमाः ॥ ५० ॥ एतेतेनिष्फलंयातारावणस्यनिपातने ॥ इतिचिंताकुलेरामेसमीपस्थोविभीषणः ॥ ५१ ॥ उवाचराघ वंवाक्यंब्रह्मदत्तवरोह्यसौ ॥ विच्छिन्नावाहवोऽप्यस्यविच्छिन्नानिशिरांसिच ॥ ५२ ॥ उत्पत्स्यंतिपुनःशीघ्रमित्याहभगवानजः ॥ नाभि देशेऽमृतंतस्यकुंडलाकारसंस्थितम् ॥ ५३ ॥ तच्छोषयानलास्त्रेणतस्यमृत्युस्ततोभवेत्॥विभीषणवचःश्रुत्वारामःशीघ्रपराक्रमः ॥५४॥ पावकास्त्रेणसंयोज्यनाभिंविव्याधरक्षसः ॥ अनंतरंचचिच्छेदशिरांसिचमहाबलः ॥ ५५ ॥ बाहूनपिचसंरब्धोरावणस्यरघूत्तमः ॥ ततोघो रांमहाशक्तिमादायदशकंधरः ॥ ५६ ॥

सांतुल्यतेजसाम् ॥ ४८ ॥ शांतोगतचेष्टः ॥ ४९ ॥ ५० ॥ निष्फलंनिष्फलत्वंयावाःप्राप्ताः । निष्फलाजाताइतिक्वचित्पाठः ॥ ५१ ॥ ५२ ॥ कुंड लाकारेगर्तेसंस्थितम् ॥ ५३ ॥ अनलास्त्रेणाग्नेयास्त्रेण ॥ ५४ ॥ ५५ ॥ ५६ ॥

---

१ वसिष्ठविश्वामित्रयोरेतद्रूपधारिणोराकाशमण्डलमध्येऽपरिमितकालपर्यन्तं महाघोरं सकललोकभयंकरं युद्धमनुपमं प्रवृत्तमासीदिति देवीभागवतादवगम्यते ।

शितैस्तीक्ष्णैः ॥ ५७ ॥ तेजोऽपगमाच्चम्लानरूपोबभूव ॥ ५८ ॥ मुख्यशिरसेत्यनेनान्यानियुद्धादिकालेएवप्रादुर्भवंतीतिसूचितम् ॥ ५९ ॥ ६० ॥ ६१ ॥
प्रथितःकथितः उत्तमांगंशिरः ॥ ६२ ॥ मर्मणि उरःस्थलरूपे ॥ ६३ ॥ ६४ ॥ आकाशमयमित्यनेनातिमहत्त्वंसूचितम् । आकाशपदेनव्यापकत्वाद्धिरण्य



विभीषणवधार्थायचिक्षेपक्रोधविह्वलः ॥ चिच्छेदराघवोबाणैस्तांशितैर्हेमभूषितैः ॥ ५७ ॥ दशग्रीवशिरश्छेदात्तदातेजोविनिर्गतम् ॥
म्लानरूपोबभूवाथच्छिन्नैःशीर्षैर्भयंकरैः ॥ ५८ ॥ एकेनमुख्यशिरसाबाहुभ्यांरावणोबभौ ॥ रावणस्तुपुनःक्रुद्धोनानाशस्त्रास्त्रवृष्टिभिः ॥
॥ ५९ ॥ ववर्षरामंतंरामस्तथाबाणैर्ववर्षच ॥ ततोयुद्धमभूद्घोरंतुमुलंलोमहर्षणम् ॥ ६० ॥ अथसंस्मारयामासमातलीराघवंतदा ॥
विसृज्यास्त्रंवधायास्यब्राह्मंशीघ्रंरघूत्तम ॥ ६१ ॥ विनाशकालःप्रथितोयःसुरैःसोऽद्यवर्तते॥उत्तमांगंनचैतस्यच्छेत्तव्यंराघवत्वया ॥६२॥
नैवशीर्ष्णिप्रभोवध्योवध्यएवहिमर्मणि ॥ ततःसंस्मारितोरामस्तेनवाक्येनमातलेः ॥ ६३ ॥ जग्राहसशरंदीप्तंनिःश्वसंतमिवोरगम् ॥ य
स्यपार्श्वेतुपवनःफलेभास्करपावकौ ॥ ६४ ॥ शरीरमाकाशमयंगौरवेमेरुमंदरौ ॥ पर्वस्वपिचविन्यस्तालोकपालामहौजसः ॥ ६५ ॥
जाज्वल्यमानंवपुषाभांतंभास्करवर्चसा ॥ तमुग्रमस्त्रंलोकानांभयनाशनमद्भुतम् ॥ ६६ ॥ अभिमंत्र्यततोरामस्तंमहेषुंमहाभुजः ॥
वेदप्रोक्तेनविधिनासंदधेकार्मुकेबली ॥ ६७ ॥ तस्मिन्संधीयमानेतुराघवेणशरोत्तमे ॥ सर्वभूतानिवित्रेसुश्चचालचवसुंधरा ॥ ६८ ॥ स
रावणायसंक्रुद्धोभृशमानम्यकार्मुकम् ॥ चिक्षेपपरमायत्तस्तमस्त्रंमर्मघातिनम् ॥ ६९ ॥ सवज्रइवदुर्धर्षोवज्रपाणिविसर्जितः ॥ कृतांतइव
घोरास्योन्यपतद्रावणोरसि ॥ ७० ॥

गर्भोवा गौरवेमेरुमंदरौयस्यसदृशावितिशेषः ॥ ६५ ॥ भास्करवर्चसाभातंतत्तुल्यतेजःप्रकाशम् । अस्त्रशब्दोऽर्थवाचीशस्त्रपर्यायोत्र ॥ ६६ ॥ वेदप्रोक्तेनब्रह्मा
स्त्रविधिनाअभिमंत्र्येत्यन्वयः ॥ ६७ ॥ ६८ ॥ भृशमतिशयेन ॥ ६९ ॥ वज्रपाणिनात्यक्तोवज्रइवसबाणोरावणोरसिन्यपतत् ॥ ७० ॥

१ यस्मिन्युद्धप्रसंगे दृष्टेऽपि श्रुतेपि वा तनूरुहाणां लोम्नामाकस्मिकपुलकोद्गमेनाश्चनं भवति मनोवृत्तिश्च कम्पा भवति तल्लोमहर्षणमित्युच्यते ।

॥ ७१ ॥ वेगवशाद्रावणप्राणहरणोत्तरंभूमौप्रविश्यपुनःस्वाधिष्ठातृदेवतातेजोवशाद्रामतूणीरंप्रविष्टः ॥ ७२ ॥ भ्रमीति । शरपतनकालजातभ्रमिवेगेन ॥
॥ ७३ ॥ ७४ ॥ दशग्रीवनिधनंरामविजयंचदृष्ट्वादुद्रुवुरित्यन्वयः ॥ ७५ ॥ ततोरामजयंरावणस्यतद्वधंततोरामाद्वधंचवदंतोविनेदुरनेनान्वयः । सिंहनादां
श्चक्रुरित्यर्थः ॥ ७६ ॥ ७७ ॥ सूर्यतुल्यंरावणस्यदेहोत्थंतेजोरघुश्रेष्ठं प्रविवेश । तंप्रविश्यतदाज्ञयावैकुंठलोकंजगामेतिबोध्यम् ॥ ७८ ॥ ७९ ॥ वयं

सनिमग्नोमहाघोरःशरीरांतकरःपरः॥बिभेदहृदयंतूर्णंरावणस्यमहात्मनः ॥७१॥ रावणस्याहरत्प्राणान्विवेशधरणीतले ॥ सशरोरावणं
हत्वारामतूणीरमाविशत् ॥ ७२ ॥ तस्यहस्तात्पपाताशुसशरंकार्मुकंमहत् ॥ गतासुर्भ्रमिवेगेनराक्षसेंद्रोऽपतद्भुवि ॥ ७३ ॥ तंदृष्ट्वाप
तितंभूमौहतशेषाश्चराक्षसाः ॥ हतनाथाभयत्रस्तादुद्रुवुःसर्वतोदिशम् ॥ ७४ ॥ दशग्रीवस्यनिधनंविजयंराघवस्यच ॥ ततोविनेदुःसंहृ
ष्टावानराजि[1]तकाशिनः ॥ ७५ ॥ वदंतोरामविजयंरावणस्यचतद्वधम् ॥ अथांतरिक्षेव्यनदत्सौम्यस्त्रिदशदुंदुभिः ॥ ७६ ॥ पपातपुष्प
वृष्टिश्चसमंताद्राघवोपरि ॥ तुष्टुवुर्मुनयःसिद्धाश्चारणाश्चदिवौकसः ॥ ७७ ॥ अथांतरिक्षेननृतुःसर्वतोप्सरसोमुदा ॥ रावणस्यचदेहोत्थं
ज्योतिरादित्यवत्स्फुरत् ॥ ७८ ॥ प्रविवेशरघुश्रेष्ठंदेवानांपश्यतांसताम् ॥ देवाऊचुरहोभाग्यंरावणस्यमहात्मनः ॥ ७९ ॥ वयंतुसा
त्विकादेवाविष्णोःकारुण्यभाजनाः ॥ भयदुःखादिभिर्व्याप्ताःसंसारेपरिवर्तिनः ॥ ८० ॥ अयंतुराक्षसःक्रूरोब्रह्महातीवतामसः ॥ परदार
रतोविष्णुद्वेषीतापसहिंसकः ॥ ८१ ॥ पश्यत्सुसर्वभूतेषुराममेवप्रविष्टवान् ॥ एवंब्रुवत्सुदेवेषुनारदःप्राहसुस्मितः ॥ ८२ ॥

त्विति । वयंदेवाअपितेजसाद्योतमानाअपिसात्त्विकाअपिसत्वप्रधानाअपिविष्णोर्भगवतःकरुणापात्रभूताअपिभवदुःखादिव्याप्ताःपुनःपुनःसंसारभाजश्च ॥ ८० ॥
अयंराक्षसःक्रूरोऽपिब्रह्महापिअत्यंततामसोऽपिपरदाररतत्वादिगुणोऽपि ॥ ८१ ॥ रामंप्रविष्टवांस्तत्प्रवेशेनमोक्षद्वारंलब्धवान् । वैकुंठगतानांप्रविसंचरेमुक्ति
श्रवणादित्याश्चर्यमित्यर्थः ॥ ८२ ॥

---

१ जिताः काशिनो योद्धारो यैस्ते जितकाशिनः । निर्जितप्रतिपक्षयोधा इत्यर्थः ।

रावणोद्वेषसंयुक्तोऽपिभृत्यैःसहरामचरित्रंशुकसारणादिभ्यःश्रुत्वातद्वेषादेवानिशंवंहृदिभावयन् । अत्रश्रुत्वाभावयन्नित्यनेनश्रवणमनननिदिध्यासनसंपदुक्ता । मननमनुक्तमपिअर्थाक्षिप्तंबोध्यम् । तथारामात्स्वनिधनंश्रुत्वाभयात्सर्वत्रराघवंपश्यन् । इदंफलंलब्धवानितिशेषः । तस्यचदर्शनस्यसार्वकालिकत्वमाह । अनुदिनंस्वप्नेऽपिराममेवपश्यति । अनेनसाक्षात्कार उक्तः । एवं सगुणविषयत्वादेषांवैकुंठलोकप्राप्तिद्वारामोक्षजनकत्वंदहरायुपासगावदितिबोध्यम् ॥ ८३ ॥ ॥८४॥ उपसंहरति।क्रोधोऽपीति।अपिनायःप्रीत्यैवमाचरेत्तस्यमुक्तिःसर्वथेतिध्वनितम् । गुरुबोधःगुरुसेवाजन्योबोधस्तद्वत् । अधिकःसर्वधर्मादिकोऽभवदित्यर्थः ॥ ८५ ॥ भगवतोहस्तान्मृत्युरप्येवंफलकइत्याह । रामेणेति । सहसमानेदेशेयुज्यतेसयुक्तस्यभावःसायुज्यम् । समानलोकवासइत्यर्थः । तदेवाभिप्रेत्याग्रे

श्रृणुतात्रसुरायूयंधर्मतत्त्वविचक्षणाः ॥ रावणोराघवद्वेषादनिशंहृदिभावयन् ॥ ८३ ॥ भृत्यैःसहसदारामचरित्रंद्वेषसंयुतः ॥ श्रुत्वारामात्स्वनिधनंभयात्सर्वत्रराघवम् ॥८४॥ पश्यन्ननुदिनंस्वप्नेराममेवानुपश्यति ॥ क्रोधोऽपिरावणस्याशुगुरुबोधाधिकोऽभवत्॥८५॥रामेण निहतश्चांतेनिर्धूताशेषकल्मषः ॥ रामसायुज्यमेवापरावणोमुक्तबंधनः ॥८६॥ पापिष्ठोवादुरात्मापरधनपरदारेषुसक्तोयदिस्यान्नित्यंस्नेहाद्भयाद्वारघुकुलतिलकंभावयन्संपरेतः ॥ भूत्वाशुद्धांतरंगोभवशतजनितानेकदोषैर्विमुक्तःसद्योरामस्यविष्णोःसुरवरविनुतंयातिवैकुंठमाद्यम् ॥ ८७ ॥ हत्वायुद्धेदशास्यंत्रिभुवनविषमंवामहस्तेनचापंभूमौविष्टभ्यतिष्ठन्नितरकरधृतंभ्रामयन्बाणमेकम् ॥ आरक्तोपांतनेत्रःशरदलितवपुःसूर्यकोटिप्रकाशोवीरश्रीबंधुरांगस्त्रिदशपतिनुतःपातुमांवीररामः ॥ ८८ ॥ इति श्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेयुद्धकांडेरावणवधोनामैकादशःसर्गः ॥ ११ ॥

वक्ष्यति । वैकुंठंयातीति ॥ ८६ ॥ दुरात्मापरानिष्टादिचिंतकः । पापिष्ठत्वंकायिकपापवत्त्वम् । तदेवस्फुटयति । परधनपरदारेत्यादि । स्नेहाद्भयाद्वेत्यनेनोभयोस्तुल्यफलत्वम् । श्नेहाद्गोप्यादिः । भयाद्रावणादिस्तत्रस्नेहवतामैहलौकिकसुखाधिक्यंविशेषइतिबोध्यम् । पारलौकिकंतुफलंतुल्यमित्याशयेनवाशब्दः । अंतरंगमंतःकरणंतच्छुद्धंयस्यससुरवरोब्रह्मा ॥ ८७ ॥ त्रिभुवनस्यविषमंदुःखदं शरैर्दलितंविदारितंवपुर्यस्यसः बंधुरांगःयथोचितंनतोन्नतांगः । एवंध्यातॄणांसर्वभयापहमितितंत्रेषुप्रसिद्धम् ॥ ८८ ॥ इतिश्रीमत्सकलराजविपदु० युद्धकांडेएकादशःसर्गः ॥ ११ ॥

रामइति ॥ १ ॥ तेषांवीराणामुत्साहार्थंवाक्यमाह । भवतामिति । एवंविधवाक्येनबोधितावीरारणेप्राणव्ययेनापिस्वाभीष्टंसाधयंतीतिसूचितम् ॥ २ ॥ अथ पारितोषिकंददाति । कीर्तिरिति । वःपुण्याकीर्तिःस्थास्यतीति । किंच ययाकीर्त्यासंयुक्तामिमांभवतांविजयकथांयेकीर्तयिष्यंतितेपरमांगतिंयास्यंति ॥ ३ ॥ ॥ ४ ॥ ५ ॥ पर्यदेवयत्शोकेनविललापेत्यर्थः ॥ ६ ॥ बोधयस्वशोकापनयनवाक्यैःसंसारानित्यत्वंबोधयेत्यर्थः ॥ ७ ॥ ८ ॥ मृतकस्यरावणस्यसमीपेमृतकतुल्यतयानिश्चेष्टंपतितम् ॥ ९ ॥ अयंतवकःआत्मनःशुद्धबुद्धस्वभावत्वान्नकेनापिसंबंधइतिभावः ॥ १० ॥ किंचसृष्टेःपुरातवास्यकश्चित्संबंधोनैवासीत् । एवमितःपरमिदानींचनकश्चित्संबंधःपूर्वापरकालयोःसंबंधाभावेनमध्येपिनवास्तवःसंबंधः । किंत्वाभिमानिकएवेतिभावः । तदेवदृष्टांतेनाह । यद्वदिति । तोयौघेपतिताःसिकताजलवेगाहताःकिंचिद्दूरंमिलितायांतिततःकाश्चिद्गुरुतयाअधस्तिष्ठंतिलघुतयाविलीयंतेवाअपरागच्छंतितासांयथानकश्चित्संबंधः ॥ ११ ॥ एवंदेहिनःकालेनतद्वेगेनसंयुज्यंतेवियुज्यंतेचवस्तुतश्चतेषांनकश्चित्संबंधइत्यर्थः । दृष्टांतांतरमाह । यथेति । धानाभृष्टयवास्तासुऊर्ध्वाधरभावेनकाश्चिद्धानाःक्षणंभवंतिततःपुनस्तासांस्निग्धत्वात्ततोनभवंतिवियुज्यंते ॥ १२ ॥

श्रीमहादेवउवाच॥रामोविभीषणंदृष्ट्वाहनूमंतंतथांगदम् ॥लक्ष्मणंकपिराजंचजांबवंतंतथापरान् ॥ १॥परितुष्टेनमनसासर्वानेवाब्रवीद्वचः ॥
भवतांबाहुवीर्येणनिहतोरावणोमया ॥ २ ॥ कीर्तिःस्थास्यतिवःपुण्यायावच्चंद्रदिवाकरौ ॥ कीर्तयिष्यंतिभवतांकथांत्रैलोक्यपावनीम् ॥ ३ ॥ ययोपेतांकलिहरांयास्यंतिपरमांगतिम् ॥ एतस्मिन्नंतरेदृष्ट्वारावणंपतितंभुवि ॥४॥ मंदोदरीमुखाःसर्वाःस्त्रियोरावणपालिताः ॥
पतितारावणस्याग्रेशोचंत्यःपर्यदेवयन् ॥ ५ ॥ विभीषणःशुशोचार्तःशोकेनमहतावृतः ॥ पतितोरावणस्याग्रेवहुधापर्यदेवयत् ॥ ६ ॥
रामस्तुलक्ष्मणंप्राहवोधयस्वाविभीषणम् ॥ करोतुभ्रातृसंस्कारंकिंविलंबेनमानद ॥ ७ ॥ स्त्रियोमंदोदरीमुख्याःपतिताविलपंतिच ॥
निवारयतुताःसर्वाराक्षसीरावणप्रियाः ॥ ८ ॥ एवमुक्तोऽथरामेणलक्ष्मणोऽगाद्विभीषणम् ॥ उवाचमृतकोपांतेपतितंमृतकोपमम् ॥९॥
शोकेनमहताविष्टंसौमित्रिरिदमब्रवीत् ॥ यंशोचसित्वंदुःखेनकोऽयंतवविभीषण ॥ १० ॥ त्वंवास्यकतमःसृष्टेःपुरेदानीमतःपरम् ॥
यद्वत्तोयौघपतिताःसिकतायांतितद्वशाः ॥११॥ संयुज्यंतेवियुज्यंतेतथाकालेनदेहिनः ॥ यथाधानासुवैधानाभवंतिनभवंतिच ॥ १२ ॥

एवमीशमायया प्रेरितानि भूतानि भूतेषु संयुज्यंते वियुज्यंते चेत्यर्थः । एवमयं संयोगो वियोगश्च तवैवेति न किंतु सर्वेषामस्माकं तुल्य इत्याह । त्वंचेमेवयमित्यादि । अस्माकमप्येवं वियोगो भावीतिभावः ॥ १३ ॥ यदा यस्मिन्काले यस्माज्जन्ममृत्यू कर्मसहकृतौ भगवत्कल्पितौ तदा तस्मिन्काले तौ भविष्यत एव न त्वन्यथेत्यर्थः ॥ १४ ॥ यथा बालोनपेक्षोपि बाल्यस्वभावादेव सृष्टैर्मृन्मयादिभिश्चित्रैः स्वनिर्मितानि तादृशानि सृजति द्वे स्त्रीपुरुषाकारे कृत्वा तृतीयमेकं निर्माय तेत इदं जातमनयोरपत्यमिति व्यवहरति परस्पराभिघातेन नाशयति चैवमीश्वरोऽनपेक्षोऽपि सर्जनजन्यफलानपेक्षोपि आत्मसृष्टैरेवभूतैः प्राणिभिः स्त्रीपुरुषग्राम्यव्यवहारद्वारा पराणि सृजति ततः केनचित्कंचिद्धंति च । ननु तेषामेव तत्र कर्तृत्वमस्त्वित्यत्राह । अस्वतंत्रैरिति । तृणमात्रचालनेऽपि स्वातंत्र्यरहितैः । ननु तत्किं सृज्यमानदेह एव जीवो नेत्याह । देहेनेति । जीवास्तेन देहेन देहिनो न तु देहात्मान एवते । ननु देहः किमपि कारणमेव नेत्याह । देहादिति । कर्मद्वारेति शेषः ॥ १५ ॥ अस्य व्यवहारस्यानादि

एवंभूतेषु भूतानि प्रेरितानीशमायया ॥ त्वंचेमेवयमन्ये च तुल्याकालवशोद्भवाः ॥ १३ ॥ जन्ममृत्यू यदा यस्मात्तदा तस्माद्भविष्यतः ॥
ईश्वरः सर्वभूतानि भूतैः सृजति हंत्यजः ॥ १४ ॥ आत्मसृष्टैरस्वतंत्रैरनपेक्षोऽपि बालवत् ॥ देहेन देहिनो जीवा देहाद्देहोऽभिजायते ॥ १५ ॥
बीजादेव यथा बीजं देहान्य इव शाश्वतः ॥ देहिदेहविभागोऽयमविवेककृतः पुरा ॥ १६ ॥ नानात्वं जन्मनाशश्च क्षयो वृद्धिः क्रियाफलम् ॥
द्रष्टुराभांत्यतद्धर्मा यथाऽग्नेर्दारुविक्रियाः ॥ १७ ॥

त्वे दृष्टांतमाह । बीजादेवेति । स च देहादन्य इव अन्य एवेत्यर्थः । भेदकं धर्ममाह । शाश्वत इति । तेन नित्यत्वानित्यत्वाभ्यां देहदेहिनोर्भेद उक्तः । वस्तुतस्तस्य देहिव्यवहारप्रयोजको देहसंबंधोऽपि कल्पित एवेत्याह । देहीति । अविवेककृतः अंतःकरणेनात्मनोऽविवेकात् । अहंममेत्यादिबुद्धिरितिभावः । एवंच देह एव ममताबुद्धेरवास्तवत्वे भ्रात्रादौ ममत्वबुद्धिः सुतरामवास्तवीति सूचितम् ॥ १६ ॥ वस्तुतो भ्रात्रादौ स्वातिरिक्तत्वबुद्धिर्नाशादिबुद्धिश्च सर्वं मिथ्यैव शुक्तिरजतादिबुद्धिवदित्याह । नानात्वमिति । नानात्वं भेदः क्रियाफलं सुखदुःखे एते अतद्धर्मा अनात्मधर्मा द्रष्टुस्तद्वृत्तित्वेन भांति । अंतःकरणतत्कार्यधर्मा एवैते तदविवेकात् आत्मनि भाति यथा दारुगतवक्रत्वादिना तद्गताग्नेर्वक्रत्वादीतिभावः ॥ १७ ॥

तद्वमेनानात्वादयः देहसंयोगात् । देहपदेनांतःकरणमप्युपलक्ष्यते । असद्ग्रहोऽहंममताबुद्धिः यथासदसद्वान्यत्किंचिद्वस्तुआग्रहाद्ध्यायतोभृंगिकीटन्यायेनतथात्र
थाभवतिध्यायमानवस्तुसदसत्त्वाभ्यांधातुरपिसदसत्त्वमथाभवतितद्वत् । अनेनवास्तवतानाशादीनांनिराकृता । एवंचशोकोनिरालंबइतितात्पर्यम् ॥ १८ ॥ ज्ञाना
च्चदुःखनिवृत्तिरित्याह । प्रसुप्तस्येति । यथाप्रसुप्तस्याहंभावाभावात्संसृतिर्नभाति । प्रस्वापोऽत्र सुषुप्तिःतथाविमुक्तस्यतत्त्वज्ञानाज्जीवन्मुक्तस्यजीवतोऽपिअनहंकृतेरहंका
राभावात्तथासंसाराभावात्तज्जन्यदुःखशोकाद्यभावइत्यर्थः ॥१९॥ उपसंहरति । तस्मादिति । मायामनोधर्मंमायापरिणाममनोधर्ममहंममताभ्रमंजहि । अन्यधर्म
स्यान्यनिष्ठत्वेनग्रहाद्भ्रमत्वंमायापरिणामत्वेनमनसोजडत्वमुक्तमनोमात्रांतःकरणम् आत्मनीश्वरेइत्यनेनतस्यैवमुख्यमात्मत्वंमन्ये । तत्प्रतिबिंबत्वादात्मव्यवहारमा

तद्वमेदेहसंयोगादात्मनाभांत्यसद्ग्रहात् ॥ प्रथायथातथाचान्यद्ध्यायतोसत्सदाग्रहात् ॥ १८ ॥ प्रसुप्तस्यानहंभावात्तदाभातिनसंसृतिः ॥
जीवतोऽपितथातद्वद्विमुक्तस्यानहंकृतेः ॥१९॥ तस्मान्मायामनोधर्मंजह्यहंममताभ्रमम् ॥ रामभद्रेभगवतिमनोधेह्यात्मनीश्वरे ॥ २० ॥
सर्वभूतात्मनिपरेमायामानुषरूपिणि ॥ बाह्येंद्रियार्थसंबंधात्त्याजयित्वामनःशनैः ॥ २१ ॥ तत्रदोषान्दर्शयित्वारामानंदेनियोजय ॥ देह
बुद्ध्याभवेद्भ्रातापितामातासुहृत्प्रियः ॥ २२ ॥ विलक्षणंयदादेहाज्जानात्यानमात्मना ॥ तदाकःकस्यवाबंधुर्भ्रातामातापितासुहृत्
॥२३॥ मिथ्याज्ञानवशाज्जातादारागारादयःसदा॥शब्दादयश्चविषयाविविधाश्चैवसंपदः॥२४॥बलंकोशोभृत्यवर्गोराज्यंभूमिःसुतादयः॥
अज्ञानजत्वात्सर्वेतेक्षणसंगमभंगुराः॥२५॥अतोत्तिष्ठहृदारामंभावयन्भक्तिभावितम् ॥ अनुवर्तस्वराज्यादिभुंजन्प्रारब्धमन्वहम् ॥२६॥

त्रमितिभावः ॥ २० ॥ उक्तमेवपुनराह । सर्वभूतात्मनीति । बाह्येंद्रियविषयसंबंधात् मनोदूरीकृत्यभगवतिनियोजय । तत्संबंधत्यागोपायमाह । तत्रदोषानिति ।
ननुभगवतितदनुसंधानेऽपिकथंसंसारहानिस्तत्राह । देहबुद्ध्येति । देहेंऽतःकरणादावात्मबुद्ध्येत्यर्थः । भगवतोमनसानुसंधानेतत्प्रसादाद्देहभिन्नात्मप्रतीतौतदविवे
ककृतसंसारस्यस्वतएवहानिरितिभावः ॥ २१ ॥ २२ ॥ २३ ॥ तदेवपुनर्दार्ढ्यायाह । मिथ्येति । अगारंगृहम् ॥ २४ ॥ अज्ञानस्याजस्रंपरिणामात्स्वभावत
यातज्जन्यानांक्षणसंगमभंगुरत्वम् ॥ २५ ॥ प्रारब्धभोगंविनादुस्त्यजमितिबुद्ध्याराज्यादिभुंजन्ननुवर्तस्वतत्पालनेयतस्व ॥ २६ ॥

भूतंभविष्यच्चाभजन्कथमिदंगतंकथमग्रेभविष्यतीत्यविचारयन् एवंभवदोषैर्नलिप्यसे ॥ २७ ॥ २८ ॥ यथावद्वचनंयथोक्तंवचनम् ॥ २९ ॥ विमृश्यभगव
च्छत्रोःक्रियाकरणेभगवतोदुःखंस्यादितिविचार्य ॥ ३० ॥ ३१ ॥ ३२ ॥ निर्वृत्तंनिष्पन्नं यथातवभ्रातातथाममापि । मरणेनविरोधस्यापगमात् ॥ ३३ ॥
सांत्ववाक्यैःशोकापनोदकवाक्यैः ॥ ३४ ॥ ३५ ॥ अहिताग्नेरग्निहोत्रिणोयथाकार्ययोग्यंतथैवौर्ध्वदेहिकमकरोत् ॥ ३६ ॥ विधियुक्तंमंत्रादियुक्तम्

भूतंभविष्यद्भजन्वर्तमानमथाचरन् ॥ विहरस्वयथान्यायंभवदोषैर्नलिप्यसे॥२७॥आज्ञापयतिरामस्त्वांयद्भ्रातुःसांपरायिकम् ॥ तत्कु
रुष्वयथाशास्त्रंरुदतीश्चापियोषितः ॥२८॥ निवारयमहाबुद्धेलंकांगच्छंतुमाचिरम् ॥ श्रुत्वायथावद्वचनंलक्ष्मणस्याविभीषणः ॥ २९ ॥
त्यक्त्वाशोकंचमोहंचरामपार्श्वमुपागमत् ॥ विमृश्यबुद्ध्याधर्मज्ञोधर्मार्थसहितंवचः ॥ ३० ॥ रामस्यैवानुवृत्त्यर्थमुत्तरंपर्यभाषत ॥ नृशं
समनृतंक्रूरंत्यक्तधर्मव्रतंप्रभो ॥ ३१ ॥ नाहोंऽस्मिदेवसंस्कर्तुंपरदाराभिमर्शिनम् ॥ श्रुत्वातद्वचनंप्रीतोरामोवचनमब्रवीत् ॥ ३२ ॥ मर
णांतानिवैराणिनिर्वृत्तंनःप्रयोजनम् ॥क्रियतामस्यसंस्कारोममाप्येषयथातव॥३३॥रामाज्ञांशिरसाधृत्वाशीघ्रमेवविभीषणः॥सांत्ववाक्यै
र्महाबुद्धिराज्ञींमंदोदरींतदा ॥ ३४ ॥ सांत्वयामासधर्मात्माधर्मबुद्धिर्विभीषणः ॥ त्वरयामासधर्मज्ञःसंस्कारार्थंस्वबांधवान् ॥ ३५ ॥
चित्यांनिवेश्यविधिवत्पितृमेधविधानतः ॥ आहिताग्नेर्यथाकार्यंरावणस्यविभीषणः ॥ ३६ ॥ तथैवसर्वमकरोद्बंधुभिःसहमंत्रिभिः ॥ ददौ
चपावकंतस्यविधियुक्तंविभीषणः ॥ ३७ ॥ स्नात्वाचैवार्द्रवस्त्रेणतिलान्दर्भाभिमिश्रितान् ॥ उदकेनचसंमिश्रान्प्रदायविधिपूर्वकम् ॥
॥ ३८ ॥ प्रदायचोदकंतस्मैमूर्ध्नाचैनंप्रणम्यच ॥ ताःस्त्रियोऽनुनयामाससांत्वमुक्त्वापुनःपुनः ॥ ३९ ॥ गम्यतामितिताःसर्वाविविशुर्नग
रंतदा ॥ प्रविष्टासुचसर्वासुराक्षसीषुविभीषणः ॥ ४० ॥ रामपार्श्वमुपागत्यतदातिष्ठद्विनीतवत् ॥ रामोऽपिसहसैन्येनससुग्रीवः
सलक्ष्मणः ॥ ४१ ॥

॥ ३७ ॥ ३८ ॥ प्रदायचोदकंतस्मैइतिशुद्धंजलंकरकादिपात्रेऽश्वत्थशाखायांतदुद्देशेनबद्ध्वेत्यर्थः । अनुनयामासविगतशोकाश्चकार ॥ ३९ ॥ गम्यता
मितिविभीषणेनोक्ताइतिशेषः ॥ ४० ॥ युद्धमूर्ध्निहतस्यसद्यःशौचत्वात्तदहरेवसर्वमेवकृत्यंसमाप्यरामसमीपमागमनम् ॥ ४१ ॥

॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ लंकांजगामेत्यन्वयः । ततःस्वर्णकलशैराक्षसेंद्रस्याभिषेकंप्रचक्रे ॥ ४६ ॥ उपायनपुरस्कृतोऽग्रेकृतमुपायनंयेनसः ।
आहिताग्न्यादित्वात्परनिपातः ॥ ४७ ॥ आगत्यदंडप्रणामंदंडवत्प्रणामम् ॥ ४८ ॥ कृतकृत्यमिव । प्रतिज्ञातार्थसिद्ध्येतिभावः ॥ ४९ ॥ महान्दुर्वैर
पिदुर्जयःविभीषणःपूर्वंप्रतिज्ञाताभिषेकः ॥ ५० ॥ विभीषणस्यानुमतेलंकाधीशत्वात्तदाज्ञांगृहीत्वा ॥ ५१ ॥ ५२ ॥ ५३ ॥ अनिंदितांरावणतिरस्का

हर्षंलेभेरिपून्हत्वायथावृत्रंशतक्रतुः ॥ मातलिश्चतदारामंपरिक्रम्याभिवंद्यच ॥ ४२ ॥ अनुज्ञातश्चरामेणययौस्वर्गंविहायसा ॥ ततोहृ
ष्टमनारामोलक्ष्मणंचेदमब्रवीत् ॥ ४३ ॥ विभीषणायमेलंकाराज्यंदत्तंपुरैवहि ॥ इदानीमपिगत्वात्वंलंकामध्येविषणम् ॥ ४४ ॥
अभिषेचयविप्रैश्चमंत्रवद्विधिपूर्वकम् ॥ इत्युक्तोलक्ष्मणस्तूर्णंजगामसहवानरैः ॥४५॥ लंकांसुवर्णकलशैःसमुद्रजलसंयुतैः ॥ अभिषेकंशु
भंचक्रेराक्षसेंद्रस्यधीमतः ॥ ४६ ॥ ततःपौरजनैःसार्धंनानोपायनपाणिभिः ॥ विभीषणःससौमित्रिरुपायनपुरस्कृतः ॥ ४७ ॥ दं
डप्रणाममकरोद्रामस्याक्लिष्टकर्मणः ॥ रामोविभीषणंदृष्ट्वाप्राप्तराज्यंमुदान्वितः ॥ ४८ ॥ कृतकृत्यमिवात्मानममन्यतसहानुजः सुग्री
वंचसमालिंग्यरामोवाक्यमथाब्रवीत् ॥४९॥ सहायेनत्वयावीरजितोमेरावणोमहान् ॥ विभीषणोऽपिलंकायामभिषिक्तोमयानघ ॥५०॥
ततःप्राहहनूमंतं पार्श्वस्थंविनयान्वितम् ॥ विभीषणस्यानुमतेगच्छत्वंरावणालयम् ॥ ५१ ॥ जानक्यैसर्वमाख्याहिरावणस्यवधा
दिकम् ॥ जानक्याःप्रतिवाक्यंमेशीघ्रमेवनिवेदय ॥ ५२ ॥ एवमाज्ञापितोधीमान्रामेणपवनात्मजः ॥ प्रविवेशपुरींलंकांपूज्यमानो
निशाचरैः ॥ ५३ ॥ प्रविश्यरावणगृहंशिंशपामूलमाश्रिताम् ॥ ददर्शजानकींतत्रकृशांदीनामनिंदिताम् ॥ ५४ ॥ राक्षसीभिःप
रिवृतांध्यायंतींराममेवहि ॥ विनयावनतोभूत्वाप्रणम्यपवनात्मजः ॥५५॥ कृतांजलिपुटोभूत्वाप्रह्वोभक्त्यागतःस्थितः ॥ तंदृष्ट्वाजानकी
तूर्ष्णींस्थित्वापूर्वस्मृतिंययौ ॥ ५६ ॥ ज्ञात्वातंरामदूतंसाहर्षात्सौम्यमुखीभवत् ॥ सतांसौम्यमुखींदृष्ट्वातस्यैपवननंदनः ॥ रामस्यभा
षितंसर्वमाख्यातुमुपचक्रमे ॥ ५७ ॥

रादप्राप्तनिंदाम् ॥ ५४ ॥ ५५ ॥ भक्त्येति । प्रह्वत्वादेर्हेतुकथनंपूर्वस्मृतिंपूर्वमागतोयःसएवायमितिस्मृतिंस्मरणंययौप्राप्तवती ॥ ५६ ॥ भवत् अभवदि
त्यर्थः । अडभावआर्षः । रामस्यभाषितंसंदेशम् ॥ ५७ ॥

वानराणांसैन्यैःसहैवलक्ष्मणश्चकुशलीसर्वेकुशलिनइत्यर्थः ॥ ५८ ॥ राज्येविभीषणंकृत्वाइत्यनेननिरवशेषसर्वकृत्यासिद्धिरुक्ता ॥ ५९ ॥ वेप्रियवाक्यस्य समंरत्नादिषुनकिंचित्पश्यामि ॥ ६० ॥ ६१ ॥ देवराज्यादित्यस्यापीतिशेषः । प्राप्तजयस्यरामस्यसर्वतोऽप्यधिकंनिरवधिफलदातृत्वादितिभावः ॥ ६२ ॥ सौम्याःसोमवत्चंद्रवत्प्रियदर्शनाःशोभमानाइतियावत् । सौम्यसोमवत्प्रियदर्शन ॥ ६३ ॥ ६४ ॥ कर्मणांयुद्धादीनांफलोदयरूपांतांदेवीमित्यन्वयः ॥

देविरामःससुग्रीवोविभीषणसहायवान् ॥ कुशलीवानराणांचसैन्यैश्चसहलक्ष्मणः ॥ ५८ ॥ रावणंससुतंहत्वासबलंसहमंत्रिभिः ॥ त्वामाहकुशलंरामोराज्येकृत्वाविभीषणम् ॥ ५९ ॥ श्रुत्वाभर्तुःप्रियंवाक्यंहर्षगद्गदयागिरा ॥ किंतेप्रियंकरोम्यद्यनपश्यामिजगत्त्रये ॥ ६० ॥ समंतेप्रियवाक्यस्यरत्नान्याभरणानिच ॥ एवमुक्तस्तुवैदेह्याप्रत्युवाचप्लवंगमः ॥ ६१ ॥ रत्नौघाद्विविधाद्वापिदेवराज्याद्विशिष्यते ॥ हतशत्रुंविजयिनंरामंपश्यामिसुस्थिरम् ॥ ६२ ॥ तस्यतद्वचनंश्रुत्वामैथिलीप्राहमारुतिम् ॥ सर्वेसौम्यगुणाःसौम्यत्वय्येवपरिनिष्ठिताः ॥ ६३ ॥ रामंद्रक्ष्यामिशीघ्रंमामाज्ञापयतुराघवः ॥ तथेतितांनमस्कृत्यययौद्रष्टुंरघूत्तमम् ॥ ६४ ॥ जानक्याभाषितंसर्वंरामस्याग्रेन्यवेदयत् ॥ यन्निमित्तोऽयमारंभःकर्मणांचफलोदयः ॥ ६५ ॥ तांदेवींशोकसंतप्तांद्रष्टुमर्हसिमैथिलीम् ॥ एवमुक्तोहनुमतारामोज्ञानवतांवरः ॥६६॥ मायासीतांपरित्यज्यजानकीमनलेस्थिताम् ॥ आदातुंमनसाध्यात्वारामःप्राहविभीषणम् ॥६७॥ गच्छराजञ्जनकजामानयाशुममांतिकम् ॥ स्नातांविरजवस्त्राढ्यांसर्वाभरणभूषिताम् ॥ ६८ ॥ विभीषणोऽपितच्छ्रुत्वाजगामसहमारुतिः ॥ राक्षसीभिःसुवृद्धाभिःस्नापयित्वातुमैथिलीम् ॥६९॥ सर्वाभरणसंपन्नामारोप्याशिबिकोत्तमे ॥ याष्टीकैर्बहुभिर्गुप्तांकंचुकोष्णीषिभिःशुभाम् ॥ ७० ॥ तांद्रष्टुमागताःसर्वेवानराजनकात्मजाम् ॥ तान्वारयंतोबहवःसर्वतोवेत्रपाणयः ॥ ७१ ॥

॥ ६५ ॥ ६६ ॥ अनलेअग्नौस्थितांजानकीमादातुंमनसाध्यात्वानिश्चित्यप्राहेत्यन्वयः ॥ ६७ ॥ विरजवस्त्राणिनिर्मलवस्त्राणितदाढ्यांतैःशोभिताम् ॥ ६८ ॥ सहमारुतिः । समासेऽपिवैकल्पिकत्वात्सत्वाभावः ॥ ६९ ॥ शिबिकोत्तमेसर्वाशिबिकाभ्यउत्तमेशिबिकारूपेवाहने याष्टीकैः आचारवशाद्यष्टिहस्तैरक्षकैःषंढैर्बहुभिर्गुप्ताम् ॥ ७० ॥ ७१ ॥

कोलाहलंप्रकुर्वंतः दूरेतिष्ठतेविवदंतः ॥ ७२ ॥ तेयाष्टीकाः ॥ ७३ ॥ सायासूर्यचंद्रादिभिरपितत्त्वतोऽज्ञातावादृशींवानराःसुखेनपश्यंत्वित्याशयः । शिबिकाच्छिबिकायाः । लिंगव्यत्ययआर्षः ॥ ७४ ॥ ७५ ॥ अवाच्यवादानूवक्तुमनर्हवचनानिपरपुरुषगृहेस्थितासिधिक्त्वामित्यादीनि ॥ ७६ ॥ प्रत्ययायविश्वासाय ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ सर्वतःपातुशीतोभवत्वित्यर्थः ॥ ८२ ॥ ८३ ॥ ज्ञःसर्वज्ञोऽपिसरामःकथंसीतामत्यजत्वह्निप्रवेशमनुज्ञातवानितिप्राहुः ॥ ८४ ॥

कोलाहलंप्रकुर्वंतोरामपार्श्वमुपाययुः ॥ दृष्ट्वातांशिबिकारूढांदूरादथरघूत्तमः ॥ ७२ ॥ विभीषणकिमर्थंतेवानरान्वारयंतिहि ॥ पश्यंतुवानराःसर्वेमैथिलींमातरंयथा ॥ ७३ ॥ पादचारेणसाऽऽयातुजानकीममसन्निधिम् ॥ श्रुत्वातद्रामवचनंशिबिकादवरुह्यसा ॥ ७४ ॥ पादचारेणशनैकरागतारामसान्निधिम् ॥ रामोऽपिदृष्ट्वातांमायासीतांकार्यार्थनिर्मिताम् ॥ ७५ ॥ अवाच्यवादान्बहुशःप्राहतांरघुनंदनः ॥ अमृष्यमाणासासीतावचनंराघवोदितम् ॥ ७६ ॥ लक्ष्मणंप्राहमेशीघ्रंप्रज्वालयहुताशनम् ॥ विश्वासार्थंहिरामस्यलोकानांप्रत्ययायच ॥ ७७ ॥ राघवस्यमतंज्ञात्वालक्ष्मणोऽपितदैवहि ॥ महाकाष्ठचयंकृत्वाज्वालयित्वाहुताशनम् ॥ ७८ ॥ रामपार्श्वमुपागम्यतस्थौतूष्णीमरिंदमः ॥ ततःसीतापरिक्रम्यराघवंभक्तिसंयुता ॥ ७९ ॥ पश्यतांसर्वलोकानांदेवराक्षसयोषिताम् ॥ प्रणम्यदेवताभ्यश्चब्राह्मणेभ्यश्चमैथिली ॥ ८० ॥ बद्धांजलिपुटाचेदमुवाचाग्निसमीपगा ॥ यथामेहृदयंनित्यंनापसर्पतिराघावत् ॥ ८१ ॥ तथालोकस्यसाक्षीमांसर्वतःपातुपावकः ॥ एवमुक्त्वातदासीतापरिक्रम्यहुताशनम् ॥ ८२ ॥ विवेशज्वलनंदीप्तंनिर्भयेनहृदासती ॥ ८३ ॥ दृष्ट्वाततोभूतगणाःससिद्धाःसीतांमहावाह्निगतांभृशार्ताः ॥ परस्परंप्राहुरहोससीतांरामःश्रियंस्वांकथमत्यजज्ज्ञः ॥ ८४ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेयुद्धकांडेद्वादशःसर्गः ॥ १२ ॥ ॥ श्रीमहादेवउवाच ॥ ततःशक्रःसहस्राक्षोयमश्चवरुणस्तथा ॥ कुबेरश्चमहातेजाःपिनाकीवृषवाहनः ॥ १ ॥ ब्रह्माब्रह्मविदांश्रेष्ठोमुनिभिःसिद्धचारणैः ॥ पितरोऋषयःसाध्यागंधर्वाप्सरसोरगाः ॥ २ ॥

॥ इति श्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराजमानस्यहिम्मतिवर्मणःपुत्रस्यरामवर्मणःकृतावध्यात्मरामायणसेतौ युद्धकांडेद्वादशःसर्गः ॥ १२ ॥ ततइति ॥ १ ॥ २ ॥

॥ ३ ॥ साक्षीअंतर्यामितयासर्वद्रष्टा । अथसार्वात्म्यमाह । वसूनामित्यादि ॥ ४ ॥ आदिकर्ता सृष्टेःप्रथमकर्ता । विराड्रूपमाह । अश्विनावित्यादि
इदंपुराणांतरोक्तस्यसर्वस्योपलक्षणम् ॥ ५ ॥ आदिरुत्पत्तिकृत् अंतोनाशकृत् सदोदितःरात्रिदिनव्यवहारहीनःशुद्धःमायागुणास्पृष्टःअतएवसदाबुद्धःज्ञान
स्वरूपःअतएवमुक्तोऽसंसारी । अगुणःअद्वयइतिच्छेदः ॥ ६ ॥ त्वन्माययासंवृतानांसंवृतज्ञानानांचिदात्मकःशुद्धज्ञानस्वरूपः ॥ ७ ॥ तेजसासहस्थानंह
तंतेजोऽपिहृतंस्थानंचेत्यर्थः ॥ ८ ॥ ९ ॥ अशेषस्यस्थितिकारणम् अध्यात्मज्ञानिनआत्मविषयतत्त्वज्ञानवंतः । हेयाहेयेदुःखसुखतत्साधनेतद्रूपद्वंद्वविहीनं

एतेचान्येविमानाग्र्यैराजग्मुर्यत्रराघवः ॥ अब्रुवन्परमात्मानंरामंप्रांजलयश्चते ॥ ३ ॥ कर्तात्वंसर्वलोकानांसाक्षीविज्ञानविग्रहः ॥ वसू
नामष्टमोऽसित्वंरुद्राणांशंकरोभवान् ॥ ४ ॥ आदिकर्तासिलोकानांब्रह्मात्वंचतुराननः ॥ अश्विनौघ्राणभूतौतेचक्षुषीचंद्रभास्करौ ॥ ५ ॥
लोकानामादिरंतोऽसिनित्यएकःसदोदितः॥सदाशुद्धःसदाबुद्धःसदामुक्तोऽगुणोऽद्वयः॥६॥ त्वन्मायासंवृतानांत्वंभासिमानुषविग्रहः ॥त्व
न्नामस्मरतांरामसदाभासिचिदात्मकः ॥ ७ ॥ रावणेनहृतंस्थानमस्माकंतेजसासह ॥ त्वयाद्यनिहतोदुष्टःपुनःप्राप्तंपदंस्वकम् ॥८॥ एवं
स्तुवत्सुदेवेषुब्रह्मासाक्षात्पितामहः॥ अब्रवीत्प्रणतोभूत्वारामंसत्यपथेस्थितम् ॥ ९ ॥ ब्रह्मोवाच ॥ वंदेदेवंविष्णुमशेषस्थितिहेतुंत्वामध्या
त्मज्ञानिभिरंतर्हृदिभाव्यम् ॥ हेयाहेयद्वंद्वविहीनंपरमेकंसत्तामात्रंसर्वहृदिस्थंदृशिरूपम् ॥ १० ॥ प्राणापानौनिश्चयबुद्ध्याहृदिरुद्ध्वाछि
त्वासर्वंसंशयबंधंविषयौघान् ॥ पश्यंतीशंयंगतमोहायतयस्तंवंदेरामंरत्नकिरीटंरविभासम् ॥ ११ ॥

कूटस्थत्वात्सत्तामात्रंसर्वस्यहृदितिष्ठतीतिव्यवहारनियामकं दृशिर्ज्ञानम् । "इकृष्यादिभ्यः" इतिइक्प्रत्ययः ॥ १० ॥ निश्चयबुद्ध्याहठयोगेनावश्यंभग
वंतंज्ञास्यामीत्येवंरूपेणकुंभकेनहृदिप्राणापानौरुद्ध्वासंचारहीनौकृत्वातत्रप्राणऊर्ध्वचारीअपानोधश्चारीश्रवणादिभिरीश्वरविषयसंशयबंधमीश्वरोऽस्तिनवाज्ञानरूपोवा
शरीरीवेत्यादिसंशयरूपबंधनम् । एवंसंशयस्यैवसंसारमूलकारणत्वात् । विषयौघांश्वछित्त्वाततोंऽतःकरणंविमुखंकृत्वा तत्रेश्वरविषयसंदेहस्यश्रवणादिनाच्छेदः ।
विषयाणांचानित्याशुचित्वप्रतिसंधानेनत्यागः । गतमोहास्त्यक्तवमसःयंपश्यंतितंरामंवंदेइत्यन्वयः ॥ ११ ॥

मायातीतंतद्गुणास्पृष्टम् । आद्यमित्यस्यैवविवरणंजगदादिमिति । मानातीतंदेशकालकृतपरिच्छेदशून्यं मोहविनाशंसेवकानांमोहनाशकंयोगविधानं योगवि
धातारंयोगमार्गप्रवर्तकम् ॥ १२ ॥ भावाभावप्रत्ययहीनंसंसारेमिथ्यात्वान्नतस्यभावप्रत्ययोनाप्यभावप्रत्ययोदृश्यत्वात् । तेनानिर्वचनीयत्वज्ञानविषयस्तस्यसइ
तिसूचितम्।यद्वाऽज्ञानाभावाभावप्रत्ययाविषयं शाश्वतःसत्त्वात्प्रत्यक्षेणानुपलंभाच्चतत्त्वम् । यद्वाभावोदृश्यमभावस्तुच्छंतद्विषयज्ञानाविषयमदृश्यत्वादतुच्छ
त्वाच्च । भोगासक्तैर्भोगेष्वसक्तैस्त्यक्तभोगैर्भवमुख्यैः शिवादिभिःपूजितचरणकमलंनित्यंकालत्रयाबाध्यं शुद्धंमायादोषास्पृष्टं बुद्धंज्ञानस्वरूपमनंतंदेशाद्यप
रिच्छेद्यं प्रणवआख्यानामयस्यतंप्रणवाख्यम् । तस्यवाचकःप्रणवः । इतिपातंजलसूत्रात् । अशेषासुरदावंसर्वदैत्यनाशकमित्यर्थः ॥ १३ ॥ मेब्रह्मणस्त्वं
नाथः । नाथत्वमेवोपपादयति । नाथितकार्याखिलकारीप्रार्थितसकलकार्यकर्ता । अखिलशब्दस्यपरनिपातआर्षः । मानातीतःदेशतःकालतोरूपतश्चेत्येवं

मायातीतंमाधवमाद्यंजगदादिंमानातीतंमोहविनाशंमुनिवंद्यम् ॥ योगिध्येयंयोगविधानंपरिपूर्णंवंदेरामंरंजितलोकंरमणीयम् ॥ १२ ॥ भा
वाभावप्रत्ययहीनंभवमुख्यैर्भोगासक्तैरर्चितपादांबुजयुग्मम् ॥ नित्यंशुद्धंबुद्धमनंतंप्रणवाख्यंवंदेराममवीतमशेषासुरदावम् ॥ १३ ॥ त्वंमेना
थोनाथितकार्याखिलकारीमानातीतोमाधवरूपोऽखिलधारी ॥ भक्त्यागम्योभावितरूपोभवहारीयोगाभ्यासैर्भावितचेतःसहचारी॥१४॥
त्वामाद्यंतंलोकततीनांपरमीशंलोकानांनोलौकिकमानैरधिगम्यम् ॥ भक्तिश्रद्धाभावसमेतैर्भजनीयंवंदेरामंसुंदरमिंदीवरनीलम् ॥ १५ ॥
कोवाज्ञातुंत्वामतिमानंगतमानंमानासक्तोमाधवशक्तोमुनिमान्यम् ॥ वृंदारण्येवंदितवृंदारकवृंदंवंदेरामंभवमुखवंद्यंसुखकंदम् ॥ १६ ॥

त्रिविधपरिच्छेदशून्यः । मालक्ष्मीस्तस्याःधवःपतिः भक्त्यानन्यशरणत्वरूपयागम्यःप्राप्यःभावितरूपःसन्भवस्यसंसारस्यहारीहर्तायोगाभ्यासैर्भावितंविहीन
दोषंतथाशुद्धंयच्चेतोंऽतःकरणंतत्रसहचारीतद्वृत्तिविषयइत्यर्थः । दृश्यतेत्वग्र्ययाबुद्ध्या इतिश्रुतेः ॥ १४ ॥ लोकततीनांपरंपराणामाद्यंतंसृष्टिनाश
हेतुम् । लोकानांपरमीशंपालनहेतुम् ॥ लौकिकैःप्रमाणैर्नाधिगम्यम् अज्ञेयम् । शास्त्रैकगम्यमित्यर्थः । भक्तिःपरमेश्वरेतत्पूजादौप्रीतिःश्रद्धाततःफलावश्यं
भावनिश्चयःतद्रूपैर्भावैश्चित्तधर्मैर्युक्तैः पुरुषैःसेव्यम् ॥ १५ ॥ हेमाधवअतिमानंसर्वतोऽपिव्यापकंगतमानंस्वगतेयत्तयाऽपरिच्छेद्यमीदृशंत्वांज्ञातुंमानासक्तः
मानेषुप्रमाणेषुइंद्रियेष्वसक्तःकोवाशक्तःसमर्थःकृष्णावतारेवृंदारण्येस्थित्वामाययावंदितंनमस्कृतंवृंदारकाणांदेवानांवृंदंयेन भवमुख्यैःशिवादिभिर्वंद्यंसुखकंदंसुखजन
कंत्वांवंदे ॥ १६ ॥

नानाशास्त्रैः निर्णीतार्थायेवेदकदंबावेदसमूहास्तैःप्रतिपाद्यम् निर्विषयज्ञानंनिर्विकल्पकज्ञानविषयम् । बाह्यविषयाविषयकज्ञानविषयमित्यर्थः । मत्सेवार्थं
रावणादिवधेनेतिशेषः । मथुरेशमग्रेशत्रुघ्नायमथुराराज्यदानात्तत्त्वम् । कृष्णावताराभिप्रायेणच ॥ १७ ॥ ब्राह्मंब्रह्मकृतंब्रह्मज्ञानविधानंतज्जनकम् । कामितका
मप्रदमभीष्टवस्तुदातारम् । तादृशंध्यात्वा यः पठतिसध्यातापुरुषःपातकजालैर्विगतःहीनःस्यात् ॥ १८ ॥ विभावसुरग्निःदिव्यविभूषणान्वितांतद्युक्ताम् ॥ १९ ॥
जगतांसाक्षीतत्पुण्यपापद्रष्टा । मय्यवरोपितांस्थापिताम् ॥ २० ॥ मायाजनकात्मजांमायारूपांतांजनकात्मजासदृशींमाययाविधायनिर्माय्येतियावत् । पुरामय्य

नानाशास्त्रैर्वेदकदंबैःप्रतिपाद्यंनित्यानंदंनिर्विषयज्ञानमनादिम् ॥ मत्सेवार्थंमानुषभावंप्रतिपन्नंवंदेराममंमरकतवर्णमथुरेशम् ॥ १७ ॥ श्र
द्धायुक्तोयःपठतीमंस्तवमाद्यंब्राह्मंब्रह्मज्ञानविधानंभुविमर्त्यः ॥ रामंश्यामंकामितकामप्रदमीशंध्यात्वाध्यातापातकजालैर्विगतःस्यात् ॥
॥ १८ ॥ श्रुत्वास्तुतिंलोकगुरोर्विभावसुःस्वांकेसमादायविदेहपुत्रिकाम् ॥ विभ्राजमानांविमलारुणद्युतिंरक्तांबरांदिव्यविभूषणान्विताम्
॥ १९ ॥ प्रोवाचसाक्षीजगतांरघूत्तमंप्रपन्नसर्वार्तिहरंहुताशनः ॥ गृहाणदेवींरघुनाथजानकींपुरात्वयामय्यवरोपितांवने ॥ २० ॥ विधाय
मायाजनकात्मजांहरेदशाननप्राणविनाशनायच ॥ हतोदशास्यःसहपुत्रबांधवैर्निराकृतोऽनेनभरोप्रभोर्भुवः ॥ २१ ॥ तिरोहितासा
प्रतिबिंबरूपिणीकृतायदर्थंकृतकृत्यतांगता ॥ ततोऽतिहृष्टांपरिगृह्यजानकींरामःप्रहृष्टःप्रतिपूज्यपावकम् ॥२२॥ स्वांकेसमावेश्यसदान
पायिनींश्रियंत्रिलोकीजननींश्रियःपतिः ॥ दृष्ट्वाथरामंजनकात्मजायुतंश्रियास्फुरंतंसुरनायकोमुदा ॥ २३ ॥ भक्त्यागिरागद्गदयासमे
त्यकृतांजलिःस्तोतुमथोपचक्रमे ॥इंद्रउवाच ॥ भजेऽहंसदाराममिंदीवराभंभवारण्यदावानलाभाभिधानम् ॥ भवानीहृदाभावितानंद
रूपंभवाभावहेतुंभवादिप्रपन्नम् ॥ २४ ॥

वरोपितामितिपूर्वेणान्वयः । इदानींतन्निर्माणकृत्यस्यजातत्वान्मायानिर्मितामयिलीनेत्याह । हतइति । अनेनदशास्यवधेन ॥ २१ ॥ प्रतिबिंबरूपिणीसीता
प्रतिबिंबरूपायदर्थंसाकृतानिर्मिताताद्विषयतःकृतकृत्यतांगवातास्तिरोहितालीना ॥ २२ ॥ सुरनायकइंद्रः ॥ २३ ॥ भक्त्यासमेत्यभक्तियुक्तोभूत्वाइंदीवरंनी
लोत्पलंतदाभंतत्कांतिम् । भवारण्यस्यसंसारारण्यस्यदावानलाभंतत्तुल्यंतन्नाशकत्वादभिधानंनामयस्यतम् । भवानीहृदापार्वतीहृदयेनभावितंध्यातमानंदरूपंयस्य
तम् । भवाभावहेतुंसंसारानिराकरणम् । भवादिभिःप्रपन्नंसेवितम् ॥ २४ ॥

सुरसमूहस्ययोदुखौघोदुःखसमूहस्तन्नाशस्यमुख्यकारणं नराकारदेहम् । माययेतिशेषः । वस्तुतोनिराकारमीड्यंस्तुत्यम् परेषांब्रह्मादीनामपीशंवरेण्यंश्रेष्ठं भारनाशंभूभारनाशकम् ॥ २५ ॥ प्रपन्नेति । शरणागतानामखिलानंददातारं प्रपन्नम् । भक्तैरितिशेषः । प्रपन्नानामार्तीनांनिःशेषंयथाभवतितथानाशंनाश कृत्अभिधानंनामयस्य । तपसाशमदमादिनायोगोयेषांतादृशैर्योगीशैर्भावेनसत्तयातद्रूपेणाभिभाव्यंध्येयम् । कपीशः सुग्रीवःआदिनाविभीषणस्तन्मित्रंराममित्रंरा मरूपंसूर्यम् ॥ २६ ॥ भोगभाजांभोगिनांसंसारिणांसुदूरेविभांतम् । तज्ज्ञानाविषयमितियावत् । योगिनांसदाऽदूरेविभांतंतेषांसर्वदाआत्मत्वेनज्ञानविषयमित्यर्थः। चिदानंदकंदंचितश्चैतन्यस्यानंदस्यकंदम् । सर्वचेतनानांसर्वानंदानांतन्मूलकत्वात् । अस्यैवानंदस्यसर्वेमात्रामुपजीवंति इतिश्रुतेः । राघवेशंरघुवंशस्वामिनं

सुरानीकदुःखौघनाशैकहेतुंनराकारदेहंनिराकारमीड्यम् ॥ परेशंपरानंदरूपंवरेण्यंहरिंराममीशंभजेभारनाशम् ॥ २५ ॥ प्रपन्नाखिलानंददोहंप्रपन्नंप्रपन्नार्तिनिःशेषनाशाभिधानम् ॥ तपोयोगयोगीशभावाभिभाव्यंकपीशादिमित्रंभजेराममित्रम् ॥ २६ ॥ सदाभोगभाजांसुदूरेविभांतंसदायोगभाजामदूरेविभांतम् ॥ चिदानंदकंदंसदाराघवेशंविदेहात्मजानंदरूपंप्रपद्ये ॥ २७ ॥ महायोगमायाविशेषानुयुक्तोविभासीशलीलानराकारवृत्तिः ॥ त्वदानंदलीलाकथापूर्णकर्णाःसदानंदरूपाभवंतीहलोके ॥ २८ ॥ अहंमानपानाभिमत्तप्रमत्तोनवेदाखिलेशाभिमानाभिमानः ॥ इदानींभवत्पादपद्मप्रसादात्त्रिलोकाधिपत्याभिमानोविनष्टः॥२९॥ स्फुरद्रत्नकेयूरहाराभिरामंधराभारभूतासुरानीकदावम् ॥ शरच्चंद्रवक्त्रंलसत्पद्मनेत्रंदुरावारपारंभजेराघवेशम् ॥ ३० ॥

विदेहात्मजानंदरूपंजानक्याआनंदरूपंसर्वानंदप्रदम् ॥ २७ ॥ महेति । महतीयोगमायातद्विशेषैःसत्वादिभिरनुयुक्तः यथाजपाकुसुमयुक्तःस्फटिकोरक्तोभातितथातदनुयोगाल्लीलयानराकारावृत्तिश्चेष्टायस्यतादृशोविभासि । तवयाआनंदेनलीलास्तत्कथाभिःपूर्णाःकर्णायेषांतेसदाआनंदरूपाइहलोकेभवंति ॥ २८ ॥ अहंमानोऽहंकारस्तद्रूपंपानंसुरादिकर्म । ल्युडंतः । तेनाभितोमत्तोऽतएवप्रकर्षेणमत्तः अखिलायेईशाभूम्यादेस्तदभिमानेनतुल्योऽभिमानोयस्यतादृशोऽहंत्वांनवेदनजानामि त्रिलोकेयदाधिपत्यंतत्प्रयुक्तोऽभिमानोविनष्टःगतः ॥ २९ ॥ स्फुरद्रत्नकेयूरहारैरभिरामंजनमनोहरं धरायाःपृथ्व्याभारभूतायेअसुरादैत्यास्तदनीकस्यदावाग्नितुल्यंदुरापःदुःखेनप्राप्यःअवारपारोयस्यतम् । पृषोदरादित्वाद्वर्णलोपः ॥ ३० ॥

सुराधीशनीलइंद्रनीलमणिरभ्रंचतद्वन्नीलाअंगकांतिर्यस्यतंलोकशांतिंलोकानांशांतिःसुखंयस्माचं किरीटादिभिःशोभायस्यतं पुरारातेर्लाभभूतंयत्नप्राप्यानि ध्यादिसद्दशम् ॥ ३१ ॥ लसच्चंद्रकोटिप्रकाशादियत्रतादृशेपीठेउक्तविशेषणांसीतामंकेसमाधायगृहीत्वासमासीनं निवृत्तेआर्तितंद्वेदुःखालस्येयस्मात्तंसदाप्रकाश रूपामित्यर्थः ॥ ३२ ॥ भवःशिवःनभस्थलेआकाशेविमानेस्थितःसन्प्रोवाचेत्यन्वयः ॥ ३३ ॥ अस्यतवदेहस्यपितरंजनयितारम् ॥ ३४ ॥ सहानुजःसल क्ष्मणःपादौस्पृष्ट्वाशिरसाननामेत्यन्वयः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ पूर्ववदिति । राक्षसानांतुनोत्थानम् । सत्यसंकल्पस्यभगवतः

सुराधीशनीलाभ्रनीलांगकांतिंविराधादिरक्षोवधाल्लोकशांतिम् ॥ किरीटादिशोभंपुरारातिलाभंभजेरामचंद्रंरघूणामधीशम् ॥३१॥ लसच्चंद्रकोटिप्रकाशादिपीठेसमासीनमंकेसमाधायसीताम् ॥ स्फुरद्धेमवर्णांतडित्पुंजभासांभजेरामचंद्रंनिवृत्तार्तितंद्रम् ॥ ३२ ॥ ततःप्रोवाचभगवान्भवान्यासहितोभवः ॥ रामंकमलपत्राक्षंविमानस्थोनभस्थले ॥ ३३ ॥ आगमिष्याम्ययोध्यायांद्रष्टुंत्वांराज्यसत्कृतम् ॥ इदानींपश्यपितरमस्यदेहस्यराघव ॥ ३४ ॥ ततोऽपश्यद्विमानस्थंरामोदशरथंपुरः ॥ ननामशिरसापादौमुदाभक्त्यासहानुजः ॥ ३५ ॥ आलिंग्यमूर्ध्न्यवघ्रायरामंदशरथोऽब्रवीत् ॥ तारितोऽस्मित्वयावत्ससंसाराद्दुःखसागरात् ॥३६॥ इत्युक्त्वापुनरालिंग्ययय़ौरामेणपूजितः ॥ रामोपिदेवराजंतंदृष्ट्वाप्राहकृतांजलिम् ॥३७॥ मत्कृतेनिहतान्संख्येवानरान्पतितान्भुवि ॥जीवयाशुसुधावृष्ट्यासहस्राक्षममाज्ञया॥३८॥ तथेत्यमृतवृष्ट्याताञ्जीवयामासवानरान् ॥ येयेमृतामृधेपूर्वंतेतेसुप्तोत्थिताइव ॥ पूर्ववद्बलिनोहृष्टारामपार्श्वमुपाययुः ॥३९॥ नोत्थितारा क्षसास्तत्रपीयूषस्पर्शनादपि ॥ विभीषणस्तुसाष्टांगंप्रणिपत्याब्रवीद्वचः ॥ ४० ॥ देवमामनुगृह्णीष्वमयिभक्तिर्यदातव ॥ मंगलस्नानमद्य त्वंकुरुसीतासमन्वितः ॥ ४१ ॥ अलंकृत्यसहभ्रात्राश्वोगमिष्यामहेवयम् ॥ विभीषणवचःश्रुत्वाप्रत्युवाचरघूत्तमः ॥ ४२ ॥

शरैर्दग्धानामुत्थापनेऽमृतस्यापिसामर्थ्याभावाच्छरपातकालेपुनर्जीवनस्यैवभगवताअसंकल्पनात् । केचित्तुरक्षसांगणनार्थंरावणेनसमुद्रेप्रक्षेपान्नोत्थानम् यद्वारावणदाहकालेसर्वेषांरक्षसांतत्संबंधिभिर्दाहकरणेनभस्मनश्चसमुद्रेप्रक्षेपेणनोत्थानमित्याहुः ॥ ४० ॥ यदेति यदीत्यर्थे ॥ ४१ ॥ गमिष्यामहे । अयोध्यायामितिशेषः ॥ ४२ ॥

शब्दब्रह्मप्रणवस्तत्रसमाहितःशब्दतोऽर्थतश्चतद्ध्यानवान् ॥ ४३ ॥ सुग्रीवेमुख्योयेषांतान्कपींद्रानितिशेषः ॥ ४४ ॥ ४५ ॥ ४६ ॥ अनुत्तमंनविद्यते उत्तमंयस्मात्तत् ॥ ४७ ॥ लज्जमानांतामिवजनाग्रेभर्तृसमीपस्थानात्तदभिनयः । विक्रांतेनपराक्रमशालिना ॥ ४८ ॥ ४९ ॥ स्वयंविमानमारुह्यभूमिष्ठान्सर्ववा नरादीनाह । मित्रकार्यमिति । वानरैःसहभवद्भिःसर्वकार्यंकृतमित्यन्वयः ॥ ५० ॥ ५१ ॥ हेविभीषणममभक्तःसन्स्वराज्येलंकायांवसेत्यन्वयः ।

सुकुमारोऽतिभक्तोमेभरतोमामवेक्षते ॥ जटावल्कलधारीसशब्दब्रह्मसमाहितः ॥ ४३ ॥ कथंतेनविनास्नानमलंकारादिकंमम ॥ अतः सुग्रीवमुख्यांस्त्वंपूजयाशुविशेषतः ॥ ४४ ॥ पूजितेषुकपींद्रेषुपूजितोऽहंनसंशयः ॥ इत्युक्तोराघवेणाशुस्वर्णरत्नांबराणिच ॥ ४५ ॥ ववर्षराक्षसश्रेष्ठोयथाकामंयथारुचि ॥ ततस्तान्पूजितान्दृष्ट्वारामोरत्नैश्चयूथपान् ॥४६॥ अभिनंद्ययथान्यायंविससर्जहरीश्वरान् ॥ विभीषणसमानीतंपुष्पकंसूर्यवर्चसम् ॥ ४७ ॥ आरुरोहततोरामस्तद्विमानमनुत्तमम् ॥ अंकेनिधायवैदेहींलज्जमानांयशस्विनीम् ॥ ४८ ॥ लक्ष्मणेनसहभ्रात्राविक्रांतेनधनुष्मता ॥ अब्रवीच्चविमानस्थःश्रीरामःसर्ववानरान् ॥ ४९ ॥ सुग्रीवंहरिराजंचअंगदंचविभीषणम् ॥ मित्रकार्यंकृतंसर्वंभवद्भिःसहवानरैः ॥ ५० ॥ अनुज्ञातामयासर्वेयथेष्टंगंतुमर्हथ ॥ सुग्रीवप्रतियाह्याशुकिष्किंधांसर्वसैनिकैः ॥ ५१ ॥ स्वराज्येवसलंकायांममभक्तोविभिषण ॥ नत्वांधर्षयितुंशक्ताःसेंद्राअपिदिवौकसः ॥ ५२ ॥ अयोध्यांगंतुमिच्छामिराजधानींपितुर्मम ॥ एवमुक्तास्तुरामेणवानरास्तेमहाबलाः ॥ ५३ ॥ ऊचुःप्रांजलयःसर्वेराक्षसश्चविभीषणः ॥ अयोध्यांगंतुमिच्छामस्त्वयासहरघूत्तम ॥ ५४ ॥ दृष्ट्वात्वामभिषिक्तंतुकौसल्यामभिवाद्यच ॥ पश्चाद्वृणीमहेराज्यमनुज्ञांदेहिनःप्रभो ॥ ५५ ॥ रामस्तथेतिसुग्रीववानरैःसविभीषणः ॥ पुष्पकंसहनूमांश्चशीघ्रमारोहसांप्रतम् ॥ ५६ ॥ ततस्तुपुष्पकंदिव्यंसुग्रीवःसहसेनया ॥ विभीषणश्चसामात्यःसर्वेंचारुरुहुर्द्रुतम् ॥ ५७ ॥

ननुपूर्वविरोधेनदेवामांपीडयिष्यंतितत्कथमत्रावस्थितिरतआह । नत्वामिति ॥ ५२ ॥ ५३ ॥ ५४ ॥ वृणीमहेसंभजिष्यामइत्यर्थः । रामस्तथेत्युक्त्वाहे सुग्रीवसविभीषणःसहनूमान्वानरैःसहशीघ्रमारोह ॥ ५५ ॥ ५६ ॥ ५७ ॥

॥ ५८ ॥ चतुर्मुखइवतस्यहंसवाहनत्वात् ॥ ५९ ॥ ६० ॥ ॥ इति श्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिविरु० युद्धकांडेत्रयोदशःसर्गः ॥ १३ ॥
॥ पातयित्वेति ॥ १ ॥ कर्दमोऽत्यंतार्द्रद्रव्यम् पंकईषदार्द्रइतिभेदः ॥ २ ॥ वैशसनंकदनम् ॥ महायुद्धमितियावत् । मेमयात्वत्प्रियेण ॥ ३ ॥ ४ ॥



तेष्वारूढेषुसर्वेषुकौबेरंपरमासनम् ॥ राघवेणाभ्यनुज्ञातमुत्पपातविहायसा ॥ ५८ ॥ बभौतेनविमानेनहंसयुक्तेनभास्वता ॥ प्रहृष्टश्चत दारामश्चतुर्मुखइवापरः ॥ ५९ ॥ ततोबभौभास्करबिंबतुल्यंकुबेरयानंतपसानुलब्धम् ॥ रामेणशोभांनितरांप्रपेदेसीतासमेतेनसहानुजे न ॥ ६० ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेयुद्ध० त्रयोदशःसर्गः ॥ १३ ॥ ॥ श्रीमहादेवउवाच ॥ पातयित्वाततश्चक्षुःस र्वतोरघुनंदनः ॥ अब्रवीन्मैथिलींसीतांरामःशशिनिभाननाम् ॥ १ ॥ त्रिकूटशिखराग्रस्थांपश्यलंकांमहाप्रभाम् ॥ एतांरणभुवंपश्यमां सकर्दमपंकिलाम् ॥ २ ॥ असुराणांप्लवंगानामत्रवैशसनंमहत् ॥ अत्रमेनिहतःशेतेरावणोराक्षसेश्वरः ॥ ३ ॥ कुंभकर्णेंद्रजिन्मुख्याःसर्वेचा त्रनिपातिताः ॥ एषसेतुर्मयाबद्धःसागरेसलिलाशये ॥ ४ ॥ एतच्चदृश्यतेतीर्थंसागरस्यमहात्मनः ॥ सेतुबंधमितिख्यातंत्रैलोक्येनचपूजि तम् ॥ ५ ॥ एतत्पवित्रंपरमंदर्शनात्पातकापहम् ॥ अत्ररामेश्वरोदेवोमयाशंभुःप्रतिष्ठितः ॥ ६ ॥ अत्रमांशरणंप्राप्तोमंत्रिभिश्चविभीष णः ॥ एषासुग्रीवनगरीकिष्किंधाचित्रकानना ॥ ७ ॥ तत्ररामाज्ञयाताराप्रमुखाहरियोषितः ॥ आनयामाससुग्रीवःसीतायाःप्रियकाम्य या ॥ ८ ॥ ताभिःसहोत्थितंशीघ्रंविमानंप्रेक्ष्यराघवः ॥ प्राहचाद्रिमृष्यमूकंपश्यवाल्यत्रमेहतः ॥ ९ ॥ एषापंचवटीनामराक्षसायत्रमेह ताः ॥ अगस्त्यस्यसुतीक्ष्णस्यपश्याश्रमपदेशुभे ॥ १० ॥ एतेतेतापसाःसर्वेदृश्यंतेवरवर्णिनि ॥ असौशैलवरोदेविचित्रकूटःप्रकाश ते ॥ ११ ॥ अत्रमांकैकयीपुत्रःप्रसादयितुमागतः ॥ भरद्वाजाश्रमंपश्यदृश्यतेयमुनातटे ॥ १२ ॥ एषाभागीरथीगंगादृश्यतेलोकपावनी ॥ एषासादृश्यतेसीतेसरयूर्यूपमालिनी ॥ १३ ॥

॥ ५ ॥ ६ ॥ ७ ॥ रामाज्ञया ताराप्रमुखाःसर्वाअयोध्यायामायांत्वितिरामाज्ञा ॥ ८ ॥ प्राह । सीतामितिशेषः । ऋष्यमूकमद्रिंपश्यअत्रमेवालीहतस्त त्स्थानंपश्य । अत्रमेइत्यादिषष्ठीछांदसी ॥ ९ ॥ आश्रमपदेआश्रमस्थाने ॥ १० ॥ ११ ॥ दृश्यतेभरद्वाजाश्रमइतिशेषः ॥ १२ ॥ सरयूरिति । अत्युच्च देशस्थत्वाद्विमानस्ययुगपत्सर्वदर्शनम् ॥ १३ ॥

एवंवदन्नितिशेषः ॥ १४ ॥ १५ ॥ कच्चिदितिप्रश्ने ॥ १६ ॥ चहीपादपूरणे । प्रहृष्टधीःप्रहृष्टचित्तः ॥ १७ ॥ १८ ॥ पादुकेपादुकयोः ॥ १९ ॥
सीताहरणपूर्वकंराक्षसानांविनाशकंकर्म ॥ २० ॥ यदादिमध्यांतवर्जितंब्रह्मतत्त्वमेव । आपोनाराइतिप्रोक्ताआपोवैनरसूनवः । अयनंतस्यताःपूर्वंतेननारायणः
स्मृतः । इतिव्युत्पत्तिंनारायणपदस्यदर्शयति । त्वमिति ॥ २१ ॥ नारंजीवसमूहस्तत्स्थानकत्वात्नारायणइतिव्युत्पत्त्यंतरमाह । नराणामिति ॥ २२ ॥

एषासादृश्यतेऽयोध्याप्रणामंकुरुभामिनि ॥ एवंक्रमेणसंप्राप्तोभरद्वाजाश्रमंहरिः ॥१४॥ पूर्णेचतुर्दशेवर्षेपंचम्यांरघुनंदनः ॥ भरद्वाजंमुनिं
दृष्ट्वाववंदेसानुजःप्रभुः ॥ १५ ॥ पप्रच्छमुनिमासीनंविनयेनरघूत्तमः ॥ शृणोषिकच्चिद्भरतःकुशल्यास्तेसहानुजः ॥ १६ ॥ सुभिक्षावर्त
तेऽयोध्याजीवंतिचहिमातरः॥ श्रुत्वारामस्यवचनंभरद्वाजःप्रहृष्टधीः ॥ १७ ॥ प्राहसर्वेकुशलिनोभरतस्तुमहामनाः ॥ फलमूलकृताहा
रोजटावल्कलधारकः ॥ १८ ॥ पादुकेसकलंन्यस्यराज्यंत्वांसुप्रतीक्षते ॥ यद्यत्कृतंत्वयाकर्मदंडकेरघुनंदन ॥ १९ ॥ राक्षसानांविनाशं
चसीताहरणपूर्वकम् ॥ सर्वंज्ञातंमयारामतपसातेप्रसादतः ॥ २० ॥ त्वंब्रह्मपरमंसाक्षादादिमध्यांतवर्जितः ॥ त्वमग्रेसलिलंसृष्ट्वातत्रसु
प्तोऽसिभूतकृत् ॥ २१ ॥ नारायणोऽसिविश्वात्मन्नराणामंतरात्मकः ॥ त्वन्नाभिकमलोत्पन्नोब्रह्मालोकपितामहः ॥ २२ ॥ अतस्त्वंजग
तामीशःसर्वलोकनमस्कृतः ॥ त्वंविष्णुर्जानकीलक्ष्मीःशेषोऽयंलक्ष्मणाभिधः ॥ २३ ॥ आत्मनासृजसीदंत्वमात्मन्येवात्ममायया ॥
नसज्जसेनभोवत्त्वंचिच्छक्त्यासर्वसाक्षिकः ॥ २४ ॥ बहिरंतश्चभूतानांत्वमेवरघुनंदन ॥ पूर्णोऽपिमूढदृष्टीनांविच्छिन्नइवलक्ष्यसे ॥
॥ २५ ॥ जगत्त्वंजगदाधारस्त्वमेवपरिपालकः ॥ त्वमेवसर्वभूतानांभोक्ताभोज्यंजगत्पते ॥ २६ ॥ दृश्यतेश्रूयतेयद्यत्स्मर्यतेवारघूत्तम ॥
त्वमेवसर्वमखिलंत्वद्भिनान्यन्नकिंचन ॥ २७ ॥

॥ २३ ॥ त्वमात्मनाइदंसृजसि आत्मनिअधिष्ठानेएवंसर्वंसृष्ट्वातत्रत्वंनसज्जसेआसक्तोनभवसिइतरजनवत् । असंगेदृष्टांतःनभोवत् । चिच्छक्त्यासर्वस्यसाक्षिकः ।
स्वार्थेकः ॥ २४ ॥ तदेवोपपादयति । बहिरिति । विच्छिन्नइव ॥ २५ ॥ इदानींभगवतोरामस्यसार्वात्म्यमाह । जगदिति । जगत्त्वम् । त्वद्विवर्तत्वाज्जगत
इतिभावः । भोक्ताभोज्यमत्ताअन्नमुभयमपित्वमेवेतिभावः ॥ २६ ॥ ॥ २७ ॥

ननुतात्किंस्रष्टृत्वादिकमपिमयिवास्तवंनेत्याह । मायेति । अहमादयोऽहंकारादयः त्वच्छक्त्यात्वद्दृष्ट्या । स्रष्टृप्रेरकत्वेनत्वयिस्रष्टृत्ववद्व्यवहारइतिभावः ॥ ॥ २८ ॥ तदेवाह । यथेति । अयःलोहम् ॥ २९ ॥ देहद्वयंस्थूलंसूक्ष्मंच सूत्रंहिरण्यगर्भः ॥ ३० ॥ विराजएवावतारकर्तृत्वमाह । विराज इति । यतः संभवस्तत्रैवलयइतिभावः ॥ ३१ ॥ गृणंतिकथयंतीत्यर्थः ॥ ३२ ॥ तपसातुष्टःब्रह्मणस्तपसातुष्टइत्यर्थः ॥ ३३ ॥ ३४ ॥ जनानांपापहराणि अतएवते

मायासृजतिलोकांश्चस्वगुणैरहमादिभिः ॥ त्वच्छक्तिप्रेरितारामतस्मात्त्वय्युपचर्यंते ॥२८॥ यथाचुंबकसान्निध्याच्चलंत्येवायआदयः ॥ जडातथात्वयादृष्टामायासृजतिवैजगत् ॥ २९ ॥ देहद्वयमदेहस्यतवविश्वंरिरक्षिषोः ॥ विराट्स्थूलंशरीरंतेसूत्रंसूक्ष्ममुदाहृतम् ॥ ॥३०॥ विराजःसंभवंत्येतेअवताराःसहस्रशः ॥ कार्यांतेप्रविशंत्येवविराजंरघुनंदन ॥ ३१ ॥ अवतारकथांलोकेयेगायंतिगृणंतिच ॥ अनन्यमनसोमुक्तिस्तेषामेवरघूत्तम ॥ ३२॥ त्वंब्रह्मणापुराभूमेर्भारहारायराघव ॥ प्रार्थितस्तपसातुष्टस्त्वंजातोऽसिरघोःकुले ॥ ३३ ॥ देवकार्यमशेषेणकृतंतेरामदुष्करम् ॥ बहुवर्षसहस्राणिमानुषंदेहमाश्रितः ॥ ३४ ॥ कुर्वन्दुष्करकर्माणिलोकद्वयहितायच ॥ पापहारीणिभुवनंयशसापूरयिष्यसि ॥ ३५ ॥ प्रार्थयामिजगन्नाथपवित्रंकुरुमेगृहम् ॥ स्थित्वाद्यभुक्त्वासबलःश्वोगमिष्यसिपत्तनम् ॥ ३६ ॥ तथेतिराघवोऽतिष्ठत्तस्मिन्नाश्रमउत्तमे ॥ ससैन्यःपूजितस्तेनसीतयालक्ष्मणेनच ॥३७॥ ततोरामश्चिंतयित्वामुहूर्तंप्राहमारुतिम् ॥ इतोगच्छहनूमंस्त्वमयोध्यांप्रतिसत्वरः ॥ ३८ ॥ जानीहिकुशलीकच्चिज्जनोनृपतिमंदिरे ॥ शृंगवेरपुरंगत्वाब्रूहिमित्रंगुहंमम ॥ ३९ ॥ जानकीलक्ष्मणोपेतमागतंमांनिवेदय ॥ नंदिग्रामंततोगत्वाभ्रातरंभरतंमम ॥ ४० ॥ दृष्ट्वाब्रूहिसभार्यस्यसभ्रातुःकुशलंमम ॥ सीतापहरणादीनिरावणस्यवधादिकम् ॥ ४१ ॥

षांलोकद्वयेइहलोकेपरलोकेचहितायान्यैर्दुष्कराणिकर्माणिकुर्वन्भुवनंचतुर्दशसंख्याकंयशसापूरयिष्यसि ॥ ३५ ॥ पत्तनमयोध्यानगरम् ॥ ३६ ॥ तथेत्युक्त्वातत्राश्रमेतिष्ठन्सतियेत्यादेःसहितइतिशेषः ॥ ३७ ॥ ३८ ॥ नृपतिमंदिरेअयोध्यायाम् ॥ ३९ ॥ ४० ॥ ४१ ॥

तत्ररणे ॥ ४२ ॥ ४३ ॥ ४४ ॥ भुजगोत्तमंजिघृक्षन्गरुडइववेगेनययौ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ संप्रहृष्टतनूरुहंगुहमितिशेषः ॥४९॥५०॥
॥ ५१ ॥ विदिग्धांगांलिप्तांगम् ॥ ५२ ॥ तेचित्रकूटेभगवतारामेणदत्ते काषायांबरधारिभिःप्रभुसमानशीलत्वस्यान्येषामौचित्येनमंत्र्यादीनांतत्त्वम् ॥ ५३ ॥

ब्रूहिक्रमेणमेभ्रातुःसर्वंतत्रविचेष्टितम् ॥ हत्वाशत्रुगणान्सर्वान्सभार्यःसहलक्ष्मणः ॥४२॥ उपयातिसमृद्धार्थःसहऋक्षहरीश्वरैः ॥ इत्युक्त्वा
तत्रवृत्तांतंभरतस्यविचेष्टितम् ॥ ४३ ॥ सर्वंज्ञात्वापुनःशीघ्रमागच्छममसन्निधिम् ॥ तथेतिहनुमांस्तत्रमानुषंवपुरास्थितः ॥४४॥ नंदिग्रा
मंययौतूर्णंवायुवेगेनमारुतिः ॥ गरुत्मानिववेगेनजिघृक्षन्भुजगोत्तमम् ॥ ४५॥ शृंगवेरपुरंप्राप्यगुहमासाद्यमारुतिः ॥ उवाचमधुरंवाक्यं
प्रहृष्टेनान्तरात्मना ॥ ४६ ॥ रामोदाशरथिःश्रीमान्सखातेसहसीतया ॥ सलक्ष्मणस्त्वांधर्मात्माक्षेमीकुशलमब्रवीत् ॥४७॥ अनुज्ञातोऽ
द्यमुनिनाभरद्वाजेनराघवः ॥ आगमिष्यतितंदेवंद्रक्ष्यासित्वंरघूत्तमम् ॥ ४८ ॥एवमुक्त्वामहातेजाःसंप्रहृष्टतनूरुहम् ॥ उत्पपातमहावेगो
वायुवेगेनमारुतिः ॥ ४९ ॥ सोऽपश्यद्रामतीर्थंचसरयूंचमहानदीम् ॥ तामतिक्रम्यहनुमान्नंदिग्रामंययौमुदा ॥ ५० ॥ क्रोशमात्रेत्वयोध्या
याश्चीरकृष्णाजिनांबरम् ॥ ददर्शभरतंदीनंकृशमाश्रमवासिनम् ॥५१ ॥ मलपंकविदिग्धांगंजटिलंवल्कलांबरम् ॥ फलमूलकृताहारं
रामचिंतापरायणम् ॥ ५२॥ पादुकेतेपुरस्कृत्यशासयंतंवसुंधराम्॥मंत्रिभिःपौरमुख्यैश्चकाषायांबरधारिभिः ॥ ५३ ॥ वृत्तदेहंमूर्तिमंतंसा
क्षाद्धर्ममिवस्थितम् ॥ उवाचप्रांजलिर्वाक्यंहनूमान्मारुतात्मजः ॥५४॥ यंत्वंचिंतयसेरामंतापसंदंडकेस्थितम् ॥ अनुशोचासिकाकुत्स्थः
सत्वांकुशलमब्रवीत् ॥ ५५ ॥ प्रियमाख्यामितेदेवशोकंत्यजसुदारुणम् ॥ अस्मिन्मुहूर्तेभ्रात्रात्वंरामेणसहसंगतः ॥ ५६ ॥ समरेरावणंह
त्वारामःसीतामवाप्यच ॥ उपयातिसमृद्धार्थःससीतःसहलक्ष्मणः ॥५७॥ एवमुक्तोमहातेजाभरतोहर्षमूर्छितः॥पपातभुविचास्वस्थःकैके
यीप्रियनंदनः ॥ ५८ ॥ आलिंग्यभरतःशीघ्रंमारुतिंप्रियवादिनम् ॥ आनंदजैरश्रुजलैःसिषेचभरतःकपिम् ॥ ५९ ॥

तादृशैर्मंत्रिभिःवृतःपरिवृतोदेहोयस्यतम् ॥ ५४ ॥ यंरामंत्वंचिंतयसेऽनुशोचसिचसकाकुत्स्थःत्वांकुशलमब्रवीत ॥ ५५ ॥ रामेणसहसंगतोभविष्यसीति
शेषः ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥

सौम्यसोमवत्प्रियदर्शन प्रियंब्रुवतस्तेप्रियाख्यानस्यप्रतिप्रियंददामीतिशेषः ॥ ६० ॥ मुग्धाःसुंदर्यः ॥ ६१ ॥ ६२ ॥ कल्याणीसत्येत्यर्थः ॥ ६३ ॥ ६४ ॥
तत्त्वमाख्याहियेनतेवचोविश्वसेयम् ॥ ६५ ॥ परमानंदम् । प्रापेतिशेषः ॥ ६६ ॥ शत्रुहणंशत्रुघ्नंरामकुशलश्रवणेनमुदायुक्तंतेनैववचस्स्वयंमुदान्वितःकि
माज्ञापयत्तदाह । दैवतानिचेति ॥ ६७ ॥ उपहाराःगंधधूपदीपनैवेद्यायाः ॥ ६८ ॥ वारमुख्यावेश्याः । हस्त्यश्वपत्तिरूपाःसेनाइत्यर्थः ॥ ६९ ॥ शशिनिभा

देवोवामानुषोवात्वमनुक्रोशाँदिहागतः ॥ प्रियाख्यानस्यतेसौम्यददामिब्रुवतःप्रियम् ॥ ६० ॥ गवांशतसहस्रंचग्रामाणांचशतंवरम् ॥ स
र्वाभरणसंपन्नामुग्धाःकन्यास्तुषोडश ॥६१॥ एवमुक्त्वापुनःप्राहभरतोमारुतात्मजम् ॥ बहूनीमानिवर्षाणिगतस्यसुमहद्वनम् ॥ ६२ ॥
शृणोम्यहंप्रीतिकरंममनाथस्यकीर्तनम् ॥ कल्याणीबतगाथेयंलौकिकीप्रतिभातिमे ॥ ६३ ॥ एतिजीवंतमानंदोनरंवर्षशतादपि ॥ राघ
वस्यहरीणांचकथमासीत्समागमः ॥ ६४ ॥ तत्त्वमाख्याहिभद्रंतेविश्वसेयंवचस्तव ॥ एवमुक्तोऽथहनुमान्भरतेनमहात्मना ॥६५॥ आच
चक्षेऽथरामस्यचरितंकृत्स्नशःक्रमात् ॥ श्रुत्वातुपरमानंदंभरतोमारुतात्मजात् ॥ ६६ ॥ आज्ञापयच्छत्रुहणंमुदायुक्तंमुदान्वितः ॥ दैव
तानिचयावंतिनगरेरघुनंदन ॥ ६७ ॥ नानोपहारबलिभिःपूजयंतुमहाधियः ॥ सूतावैतालिकाश्चैवबंदिनःस्तुतिपाठकाः ॥ ६८ ॥ वारमु
ख्याश्चशतशोनिर्यांत्वद्यैवसंघशः॥ राजदारास्तथाऽमात्याःसेनाहस्त्यश्वपत्तयः ॥६९॥ ब्राह्मणाश्चतथापौराराजानोयेसमागताः ॥ निर्यां
तुराघवस्याद्यद्रष्टुंशशिनिभाननम् ॥ ७० ॥ भरतस्यवचःश्रुत्वाशत्रुघ्नपरिचोदिताः ॥ अलंचक्रुश्चनगरींमुक्तारत्नमयोज्ज्वलैः ॥ ७१ ॥
तोरणैश्चपताकाभिर्विचित्राभिरनेकधा ॥ अलंकुर्वंतिवेश्मानिनानाबलिविचक्षणाः ॥ ७२ ॥ निर्यांतिवृंदशःसर्वेरामदर्शनलालसाः ॥
हयानांशतसाहस्रंगजानामयुतंतथा ॥ ७३॥ रथानांदशसाहस्रंस्वर्णसूत्रविभूषितम् ॥ पारमेष्ठीन्युपादायद्रव्याण्युच्चावचानिच ॥ ७४ ॥
ततस्तुशिविकारूढानिर्ययूराजयोषितः ॥ भरतःपादुकेन्यस्यशिरस्येवकृतांजलिः ॥ ७५ ॥

ननंशशिसदृशमुखमित्यर्थः ॥ ७० ॥ मुक्तारत्नमयोज्ज्वलैरितितोरणविशेषणम् ॥ ७१ ॥ अलंकुर्वंति शत्रुघ्नप्रेरिताजनाइतिशेषः ॥ ७२ ॥ वृंदशःसंघशः
॥ ७३ ॥ पारमेष्ठीनि ईश्वरार्हाणि ॥ ७४ ॥ ७५ ॥

राममवलोकयितुमितिशेषः । तदैवतस्मिन्नेवकालेभरतयात्राकालेइत्याह । पवनात्मजइत्यनेनान्वयः । यदुक्तंवाचातदाह । दृश्यतेइत्यादि ॥ ७६ ॥
॥ ७७ ॥ ७८ ॥ अयंरामोऽयंरामइतिनिःस्वनोदिवमस्पृशत् ॥ ७९ ॥ अंबरेसोममिवरामंददृशुः ॥ ८० ॥ अत्यानंदवतोभरतस्यवर्णनेकवेरपितन्मय
भावेनानंदमग्नतयाभरतपदपौनरुक्त्यंनदोषाय ॥ ८१ ॥ अत्यूर्ध्वदेशस्थविमानस्यगत्यारामस्यमेरुस्थभास्करोपमा ॥ ८२ ॥ ८३ ॥ ८४ ॥ ततोलक्ष्मण
मासाद्याभ्यवादयतेत्यन्वयः । अनयोःशास्त्रोक्तविधिनानामगोत्रोच्चारणपूर्वकमभिवादनंवैदेह्यास्तुस्त्रीत्वात्स्वनाममात्रकीर्तनपूर्वकमभिवादनमित्याह । नामकी

शत्रुघ्नसहितोरामंपादचारेणनिर्ययौ ॥ तदैवदृश्यतेदूराद्विमानंचंद्रसन्निभम् ॥ ७६ ॥ पुष्पकंसूर्यसंकाशंमनसाब्रह्मनिर्मितम् ॥ एतस्मि
न्भ्रातरौवीरौवैदेह्यारामलक्ष्मणौ॥७७॥सुग्रीवश्चकपिश्रेष्ठोमंत्रिभिश्चविभीषणः॥दृश्यतेपश्यतजनाइत्याहपवनात्मजः॥७८॥ ततोहर्षसमु
द्भूतोनिःस्वनोदिवमस्पृशत् ॥ स्त्रीबालयुववृद्धानांरामोऽयमितिकीर्तनात् ॥७९॥ रथकुंजरवाजिस्थाअवतीर्यमहींगताः॥ददृशुस्तेविमा
नस्थंजनाःसोममिवांबरे ॥ ८० ॥ प्रांजलिर्भरतोभूत्वाप्रहृष्टोराघवोन्मुखः ॥ ततोविमानाग्रगतंभरतोराघवंमुदा॥८१॥ ववंदेप्रणतोरामंमे
रुस्थमिवभास्करम् ॥ ततोरामाभ्यनुज्ञातंविमानमपतद्भुवि॥८२॥आरोपितोविमानंतद्भरतःसानुजस्तदा ॥ राममासाद्यमुदितःपुनरेवाभ्य
वादयत् ॥ ८३ ॥ समुत्थाप्यचिराद्दृष्टंभरतंरघुनंदनः ॥ भ्रांतरंस्वांकमारोप्यमुदातंपरिषस्वजे ॥ ८४ ॥ ततोलक्ष्मणमासाद्यवैदेहींनाम
कीर्तयन् ॥ अभ्यवादयतप्रीतोभरतःप्रेमविह्वलः ॥ ८५ ॥ सुग्रीवंजांबवंतंचयुवराजंतथांगदम्॥ मैंदद्विविदनीलांश्चऋषभंचैवसस्वजे ॥
॥ ८६ ॥ सुषेणंचनलंचैवगवाक्षंगंधमादनम् ॥ शरभंपनसंचैवभरतःपरिषस्वजे ॥ ८७ ॥

र्तयन्निति । भरतोऽहमभिवादयेमैथिलीति । रामस्यतुभरतवर्माअमुकगोत्रोऽहंत्वामभिवादये इत्येवमितिशेषः ॥ यद्यपिलक्ष्मणोभरतात्कनिष्ठोवयसा स्पष्टं
चेदंजन्मप्रकरणे तथापिज्येष्ठानुवर्तनेनस्वापेक्षयाधिकगुणत्वेनस्वव्यवहारेणज्येष्ठानुवृत्तिरेवंकर्तव्येतिभरतंप्रत्युपदेशदानेनचगुरुत्वबुद्ध्यातस्यनातिरुचितैव ।
किंच । कौसल्यायैप्रथमंदत्तपायसांशत्वाल्लक्ष्मणस्यज्येष्ठत्वंततोहिकैकेय्यैपायसार्धदानंतदंशजश्चशत्रुघ्नइतिसएवभरतात्कनिष्ठः । अतएववैदेहींचेतिचकार
स्वरसःसंगच्छते । अतएवचशत्रुघ्नकृतोलक्ष्मणनमस्कारउपपद्यतेतयोर्युगपदुत्पन्नत्वादित्याहुः ॥ ८५ ॥ सस्वजेमित्रत्वात् ॥ ८६ ॥ ८७ ॥

॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ प्रसादयन् प्रसन्नंकुर्वन् ॥ ९२ ॥ ९३ ॥ निर्यातितंप्रतिदत्तम् ॥९४॥ कोष्ठागारमन्नादिस्थापनगृहं कोशंधनगृहम्
॥ ९५ ॥ त्वत्तेजसेतिपूर्वान्वयि ॥ ९६ ॥ नेत्रजंतोयंमुमुचुः एवंसौभ्रात्रंकिलानयोरितिहर्षात् स्वस्यतद्वैपरीत्येनशोकाच्च । स्वांकगम् । कृत्वेतिशेषः



सर्वेतेमानुषंरूपंकृत्वाभरतमादृताः ॥ पप्रच्छुःकुशलंसौम्याःप्रहृष्टाश्चप्लवंगमाः ॥ ८८ ॥ ततःसुग्रीवमालिंग्यभरतःप्राहभक्तितः ॥ त्व
त्सहायेनरामस्यजयोऽभूद्रावणोहतः ॥ ८९ ॥ त्वमस्माकंचतुर्णांतुभ्रातासुग्रीवपंचमः ॥ शत्रुघ्नश्चतदारामभिवाद्यसलक्ष्मणम् ॥९० ॥
सीतायाश्चरणौपश्चाद्ववंदेविनयान्वितः ॥ रामोमातरमासाद्यविवर्णांशोकविह्वलाम् ॥ ९१ ॥ जग्राहप्रणतःपादौमनोमातुःप्रसादयन् ॥
कैकेयींचसुमित्रांचननामेतरमातरः ॥ ९२ ॥ भरतःपादुकेतेतुराघवस्यसुपूजिते ॥ योजयामासरामस्यपादयोर्भक्तिसंयुतः ॥ ९३ ॥
राज्यमेतन्न्यासभूतंमयानिर्यातितंतव ॥ अद्यमेसफलंजन्मफलितोमेमनोरथः ॥ ९४ ॥ यत्पश्यामिसमायातमयोध्यांत्वामहंप्रभो ॥ को
ष्ठागारंबलंकोशंकृतंदशगुणंमया ॥ ९५ ॥ त्वत्तेजसाजगन्नाथपालयस्वपुरंस्वकम् ॥ इतिब्रुवाणंभरतंदृष्ट्वासर्वेकपीश्वराः ॥९६॥मुमुचुर्नेत्र
जंतोयंप्रशशंसुर्मुदान्विताः ॥ ततोरामःप्रहृष्टात्माभरतंस्वांकगंमुदा ॥ ९७ ॥ ययौतेनविमानेनभरतस्याश्रमंतदा ॥ अवरुह्यतदारामोवि
मानाग्र्यान्महीतलम् ॥९८॥ अब्रवीत्पुष्पकंदेवोगच्छवैश्रवणंवह ॥ अनुगच्छानुजानामिकुबेरंधनपालकम् ॥९९॥ रामोवसिष्ठस्यगुरोः
पदांबुजंनत्वायथादेवगुरोःशतक्रतुः ॥ दत्त्वामहार्हासनमुत्तमंगुरोरुपाविवेशाथगुरोःसमीपतः ॥ १०० ॥ इति श्रीमदध्यात्मरामायणेउमा
महेश्वरसंवादेयुद्धकांडेचतुर्दशःसर्गः ॥ १४ ॥ ॥ श्रीमहादेवउवाच ॥ ततस्तुकैकयीपुत्रोभरतोभक्तिसंयुतः ॥ शिरस्यंजलिमाधायज्येष्ठं
भ्रातरमब्रवीत् ॥ १ ॥ मातामेसत्कृतारामदत्तंराज्यंत्वयामम ॥ ददामितत्तेचपुनर्यथात्वमददामम ॥ २ ॥

॥ ९७ ॥ ९८ ॥ धनपालकंकुबेरमनुगच्छेत्येतदनुजानामीत्यर्थः ॥ ९९ ॥ १०० ॥ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराज
मानस्यहिम्मतिवर्म०युद्धकांडेचतुर्दशःसर्गः ॥ १४ ॥ ततस्त्विति ॥ १ ॥ सत्कृतामत्पुत्रायराज्यदानपूर्वकंवनवासंकुर्वितितद्वाक्यपालनेन सत्कृता ॥ २ ॥

इत्युक्त्वारामपादयोर्भक्त्याप्रणम्यमातृत्वाद्गुरुणाकैकेय्यासहप्रार्थयामास । मद्वाक्यपालनेनाहंसंतुष्टा । अतःपरंस्वेच्छयापुनस्तद्दाभितत्सर्वथागृहाणेतिप्रार्थ
यामास ॥ ३ ॥ मायामाश्रित्येति । अन्यथासच्चिदानंदरूपस्यभगवतोदानप्रतिग्रहयोरनुपपत्तेरितिभावः । सकलंराज्यंप्रतिजग्राहेत्यन्वयः ॥ ४ ॥ मायाश्र
यणेहेतुमाह । स्वाराज्येति । स्वाराज्यमात्मनःसुखरूपतानिरस्तातिशयइतराभिभावकतारूपोयस्मात्तादृशानंदरूपस्यआनंदवल्यांमनुष्यानंदादुत्तरोत्तरशत
गुणानंदक्रमेणानंदकथनस्यब्रह्मानंदेसमाप्तेस्तदभिभावकत्वरूपातिशयस्यक्वाप्यभावादितिभावः ॥ ५ ॥ जगदीशितृत्वमेवदर्शयति । यस्येति ॥ ६ ॥ ली

इत्युक्त्वापादयोर्भक्त्यासाष्टांगंप्रणिपत्यच ॥ बहुधाप्रार्थयामासकैकेय्यागुरुणासह ॥३॥ तथेतिप्रतिजग्राहभरताद्राज्यमीश्वरः ॥ माया
माश्रित्यसकलांनरचेष्टामुपागतः ॥ ४ ॥ स्वाराज्यानुभवोयस्यसुखज्ञानैकरूपिणः ॥ निरस्तातिशयानंदरूपिणःपरमात्मनः ॥ ५ ॥
मानुषेणतुराज्येनकिंतस्यजगदीशितुः ॥ यस्यभ्रूभंगमात्रेणत्रिलोकीनश्यतिक्षणात् ॥ ६ ॥ यस्यानुग्रहमात्रेणभवंत्याखंडलश्रियः ॥ ली
लासृष्टमहासृष्टेःकियदेतद्रमापतेः ॥ ७ ॥ तथापिभजतांनित्यंकामपूरविधित्सया ॥ लीलामानुषदेहेनसर्वमप्यनुवर्तते ॥ ८ ॥ ततःश
त्रुघ्नवचनान्निपुणःश्मश्रुकृंतकः ॥ संभाराश्चाभिषेकार्थमानीताराघवस्यहि ॥ ९ ॥ पूर्वंतुभरतेस्नातेलक्ष्मणेचमहात्मनि ॥ सुग्रीवेवानरेंद्रे
चराक्षसेंद्रेविभीषणे ॥ १० ॥ विशोधितजटःस्नातश्चित्रमाल्यानुलेपनः ॥ महार्हवसनोपेतस्तस्थौतत्रश्रियाज्वलन् ॥ ११ ॥ प्रतिकर्म
चरामस्यलक्ष्मणश्चमहामतिः ॥ कारयामासभरतःसीतायाराजयोषितः ॥ १२ ॥ महार्हवस्त्राभरणैरलंचक्रुःसुमध्यमाम् ॥ ततोवानर
पत्नीनांसर्वासामेवशोभना ॥ १३ ॥

लयासृष्टमहासृष्टिरनेककोटिब्रह्मांडात्मिकायेनतस्य एतत् अयोध्याराज्यम् ॥ ७ ॥ भजतांभक्तानांकामपूरस्याभिलाषसमूहस्यविधित्सयापूरणेच्छया
लीलयागृहीतमानुषदेहेनसर्वमपिमानुषव्यवहारमनुवर्ततेलोकशिक्षणायकरोति ॥ ८ ॥ श्मश्रुकृंतकोनापितःसंभाराःसमुद्रजलादिरूपाः ॥ ९ ॥ स्नातेके
शसंस्कारोद्वर्तनादिपूर्वककृतस्नाने ॥ १० ॥ विशोधितजटःकेशरूपतांप्रापितजटः महार्हवसनोपेतःधृतबहुमूल्यवस्त्रः ॥ ११ ॥ प्रतिकर्मउद्वर्तनादिसंस्कारः
राजयोषितःदशरथस्त्रियः ॥ १२ ॥ सुमध्यमांजानकीम् ॥ १३ ॥

अकारयतप्रतिकर्मेतिशेषः ॥ १४ ॥ सूर्यसंकाशंस्यंदनमित्यन्वयः ॥ १५ ॥ १६ ॥ अन्वीयुः अनुजग्मुःपुरमयोध्यापुरम् ॥ १७ ॥ १८ ॥ रत्नदंड मितिश्वेतातपत्रव्यजनचामराणांविशेषणम् ॥ १९ ॥ अरिंदमःसुग्रीवः असुरनायकोबिभीषणः ॥ २० ॥ स्तूयमानस्यरामस्यस्तुतिवाक्यानामितिशेषः ॥ २१ ॥ वानराइत्यस्यप्रययुरितिशेषः ॥ २२ ॥ तेपुरवासिनः येवनगमनकालेदुःखिताबभूवुस्तेइत्यर्थः ॥ २३ ॥ आचितांगंव्याप्तांगम् कंजंकमलम्

अकारयतकौसल्याप्रहृष्टापुत्रवत्सला ॥ ततःस्यंदनमादायशत्रुघ्नवचनात्सुधीः ॥ १४ ॥ सुमंत्रःसूर्यसंकाशंयोजयित्वाग्रतःस्थितः ॥ आरुरोहरथंरामःसत्यधर्मपरायणः ॥ १५ ॥ सुग्रीवोयुवराजश्चहनुमांश्चविभीषणः ॥ स्नात्वादिव्यांबरधरादिव्याभरणभूषिताः ॥ १६ ॥ राममन्वीयुरग्रेचरथाश्वगजवाहनाः ॥ सुग्रीवपत्न्यःसीताचययुर्यानैःपुरंमहत् ॥ १७ ॥ वज्रपाणिर्यथादेवैर्हरिताश्वरथेस्थितः ॥ प्रययौरथमास्थायतथारामोमहत्पुरम् ॥ १८ ॥ सारथ्यंभरतश्चक्रेरत्नदंडमहाद्युतिः ॥ श्वेतातपत्रंशत्रुघ्नोलक्ष्मणोव्यजनंदधे ॥ १९ ॥ चामरंचसमीपस्थोन्यवीजयदरिंदमः ॥ शशिप्रकाशंत्वपरंजाहग्रासुरनायकः ॥ २० ॥ दिविजैःसिद्धसंघैश्चऋषिभिर्दिव्यदर्शनैः ॥ स्तूयमानस्यरामस्यशुश्रुवेमधुरध्वनिः ॥ २१ ॥ मानुषंरूपमास्थायवानरागजवाहनाः ॥ भेरीशंखनिनादैश्चमृदंगपणवानकैः॥२२॥ प्रययौराघवश्रेष्ठस्तांपुरींसमलंकृताम् ॥ ददृशुस्तेसमायांतंराघवंपुरवासिनः ॥ २३ ॥ दूर्वादलश्यामतनुंमहार्हकिरीटरत्नाभरणाचितांगम् ॥ आरक्तकंजायतलोचनांतंदृष्ट्वाययुर्मोदमतीवपुण्याः ॥ २४ ॥ विचित्ररत्नांचितसूत्रनद्धपीतांबरंपीनभुजांतरालम् ॥ अनर्घ्यमुक्ताफलदिव्यहारैर्विरोचमानंरघुनंदनंप्रजाः ॥२५॥ सुग्रीवमुख्यैर्हरिभिः प्रशांतैर्निषेव्यमाणंरवितुल्यभासम् ॥ कस्तूरिकाचंदनालिप्तगात्रंनिवीतकल्पद्रुमपुष्पमालम् ॥ २६ ॥ श्रुत्वास्त्रियोराममुपागतंमुदाप्रहर्षवेगोत्कलिताननाश्रियः ॥ अपास्यसर्वंगृहकार्यमाहितंहर्म्याणिचैवारुरुहुःस्वलंकृताः ॥ २७ ॥

पुण्याःपुण्यवंतः । अर्शआद्यजंतः । आययुःप्रापुः ॥ २४ ॥ विचित्ररत्नैरंचितंयुक्तंयत्सूत्रंस्वर्णमयंकटिसूत्रंतेनबद्धःपीतांबरोयस्यतम् अमूल्यमुक्ताफलकृतैर्दिव्यहारैः ॥ २५ ॥ हरिभिर्वानरैःरवितुल्यभासंतत्तुल्यकांतिं निवीताकंठकक्षमध्यधृताकल्पद्रुमपुष्पमालायेनतम् ॥ २६ ॥ प्रहर्षवेगेनोत्कलिताअतिप्रवृद्धाआननश्रीर्यासांताःआहितमत्यावश्यकमपिगृहकार्यमपास्येत्यर्थः ॥ २७ ॥

सर्वंदशामुत्सवभूताआकृतिर्यस्यतंनेत्रमनसोःरसायनभूतमत्यानंदकरत्वात्तादृशंरामंदृग्भिर्दर्शनव्यापारैर्मनसाचाभिरेभिरे आलिंगितवत्यः ॥ २८ ॥ स्मितयुक्त
याअतएवस्निग्धयादृशाप्रजाःपश्यन्दर्शनेनसर्वसंमाननंकुर्वन्प्रजानाथइवब्रह्मेव ॥ २९ ॥ स्वमातुश्चरणौववंदे । अनेनाग्रेसर्वमातृप्रवेशानंतरंसर्वप्रजासंमानन
विलंबेनपश्चाद्भगवत्प्रवेशइतिसूचितम् ॥ ३० ॥ ३१ ॥ सर्वेभ्यःअन्येभ्योवानरविभीषणादिभ्यः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ शातकुंभंजंबुरस

दृष्ट्वाहरिंसर्वदृगुत्सवाकृतिंपुष्पैःकिरंत्यःस्मितशोभिताननाः ॥ दृग्भिःपुनर्नेत्रमनोरसायनंस्वानंदमूर्तिंमनसाभिरेभिरे ॥ २८ ॥ रामः
स्मितस्निग्धदृशाप्रजास्तथापश्यन्प्रजानाथइवापरःप्रभुः ॥ शनैर्जगामाथपितुःस्वलंकृतंगृहंमहेंद्रालयसान्निभंहरिः॥२९॥प्रविश्यवेश्मां
तरसंस्थितोमुदारामोववंदेचरणौस्वमातुः ॥ क्रमेणसर्वाःपितृयोषितःप्रभुर्ननामभक्त्यारघुवंशकेतुः ॥ ३० ॥ ततोभरतमाहेदंरामःसत्य
पराक्रमः ॥ सर्वसंपत्समायुक्तंममंमंदिरमुत्तमम् ॥ ३१ ॥ मित्रायवानरेंद्रायसुग्रीवायप्रदीयताम् ॥ सर्वेभ्यःसुखवासार्थंमंदिराणिप्रकल्प
य ॥ ३२ ॥ रामेणैवंसमादिष्टोभरतश्चतथाकरोत् ॥ उवाचचमहातेजाःसुग्रीवंराघवानुजः ॥ ३३ ॥ राघवस्याभिषेकार्थंचतुःसिंधुजलंशु
भम् ॥ आनेतुंप्रेषयस्वाशुदूतांस्त्वरितविक्रमान् ॥ ३४ ॥ प्रेषयामाससुग्रीवोजांबवंतंमरुत्सुतम् ॥ अंगदंचसुषेणंचतेगत्वावायुवेगतः ॥
॥ ३५ ॥ जलपूर्णाञ्छातकुंभकलशांश्चसमानयन् ॥ आनीतंतीर्थसलिलंशत्रुघ्नोमंत्रिभिःसह ॥ ३६ ॥ राघवस्याभिषेकार्थंवसिष्ठायन्यवे
दयत् ॥ ततस्तुप्रयतोवृद्धोवसिष्ठोब्राह्मणैःसह ॥ ३७ ॥ रामंरत्नमयेपीठेससीतंसंन्यवेशयत् ॥ वसिष्ठोवामदेवश्चजावालिर्गौतमस्तथा ॥
॥ ३८ ॥ वाल्मीकिश्चतथाचक्रुःसर्वेरामाभिषेचनम् ॥ कुशाग्रतुलसीयुक्तपुण्यगंधजलैर्मुदा ॥ ३९ ॥ अभ्यषिंचन्रघुश्रेष्ठंवासववंसवोय
था ॥ ऋत्विग्भिर्ब्राह्मणैःश्रेष्ठैःकन्याभिःसहमंत्रिभिः ॥ ४० ॥ सर्वौषधीरसैश्चैवदैवतैर्नभसिस्थितैः ॥ चतुर्भिर्लोकपालैश्चस्तुवद्भिःसगणै
स्तथा ॥ ४१ ॥ छत्रंचतस्यजग्राहशत्रुघ्नःपांडुरंशुभम् ॥ सुग्रीवराक्षसेंद्रौतौदधतुःश्वेतचामरे ॥ ४२ ॥

र्णम् ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ सर्वौषधीरसैरभ्यषिंचन्नित्यन्वयः । नभःस्थितैर्दैवतैःसहस्तुवद्भिःसगणैश्चतुर्भिर्लोकपालैश्चसहवसिष्ठादयो
ऽभ्यषिंचन्नित्यन्वयः ॥ ४१ ॥ ४२ ॥

॥ ४३ ॥ ४४ ॥ खात्आकाशात् ॥ ४५ ॥ ४६ ॥ ४७ ॥ वामांकेवामभागेस्थिताम् ॥ ४८ ॥ ईदृशींसीतांवामेनकरेणालिंग्यसंस्थितंदृष्ट्वाशिवःस्तोतुमु पचक्रमेइत्यन्वयः ॥ ४९ ॥ ५० ॥ सशक्तिकायमायाशक्त्यवतारसीतासहिताय ॥ ५१ ॥ आद्यंतौउत्पत्तिनाशौतद्राहित्यादेवमध्यहीनंःयतोमाययासृजसि अतएवतेननलिप्यसे । तन्नाशादिकृतदोषभाङ्नभवसीत्यर्थः । नह्यैंद्रजालिकःस्वमायानिर्मितजीवादिनाशेऽपितद्वधभाग्भवति ॥ ५२ ॥ गुणसंवृतः गुणसमूहया माययासंवृतः । गुणशब्दोऽत्रतत्समूहमायापरः । प्रपन्नाःशरणागतायेभक्तास्तेषांयदनुविधानंमोक्षस्तन्निमित्तमित्यर्थः । त्वदवतारलीलाश्रवणादिभिस्तेषांपा

मालांचकांचनींवायुर्ददौवासवचोदितः ॥ सर्वरत्नसमायुक्तंमणिकांचनभूषितम् ॥ ४३ ॥ ददौहारंनरेंद्रायस्वयंशक्रस्तुभक्तितः ॥ प्रजगु र्देवगंधर्वानन्नृतुश्चाप्सरोगणाः ॥ ४४ ॥ देवदुंदुभयोनेदुःपुष्पवृष्टिःपपातखात् ॥ नवदूर्वादलश्यामंपद्मपत्रायतेक्षणम् ॥ ४५ ॥ रविको टिप्रभायुक्तकिरीटेनविराजितम् ॥ कोटिकंदर्पलावण्यंपीतांबरसमावृतम् ॥ ४६ ॥ दिव्याभरणसंपन्नंदिव्यचंदनलेपनम् ॥ अयुतादित्य संकाशंद्विभुजंरघुनंदनम् ॥ ४७ ॥ वामभागेसमासीनांसीतांकांचनसन्निभाम् ॥ सर्वाभरणसंपन्नांवामांकेसमुपस्थिताम् ॥ ४८ ॥ रक्तोत्पलकरांभोजांवामेनालिंग्यसंस्थितम् ॥ सर्वातिशयशोभाढ्यंदृष्ट्वाभक्तिसमान्वितः ॥ ४९ ॥ उमयासहितोदेवःशंकरोरघुनंदनम् ॥ सर्वदेवगणैर्युक्तःस्तोतुंसमुपचक्रमे ॥५०॥ श्रीमहादेवउवाच ॥ नमोऽस्तुरामायसशक्तिकायनीलोत्पलश्यामलकोमलाय ॥ किरीटहारां गदभूषणायसिंहासनस्थायमहाप्रभाय ॥ ५१ ॥ त्वमादिमध्यांतविहीनएकःसृजस्यवस्यत्सिचलोकजातम् ॥ स्वमाययातेननलिप्यसे त्वंयत्स्वेसुखेऽजस्नरतोऽनवद्यः ॥ ५२ ॥ लीलांविधत्सेगुणसंवृतस्त्वंप्रपन्नभक्तानुविधानहेतोः ॥ नानावतारैःसुरमानुषाद्यैःप्रतीयसेज्ञा निभिरेवनित्यम् ॥ ५३ ॥ स्वांशेनलोकंसकलंविधायतंविभर्षिचत्वंतदधःफणीश्वरः ॥ उपर्यधोभान्वनिलोडुपौषधीप्रवर्षरूपोऽवसि नैकधाजगत् ॥ ५४ ॥

पक्षयद्वारामोक्षोभवतीत्याशयः । सुरमानुषादिरूपैर्नानावतारैर्लीलांविधत्सेइत्यन्वयः । सुरावताराउपेंद्राद्याःमानुषारामकृष्णाद्याःएवंभूतस्त्वंज्ञानिभिरेवनित्यंप्रती यसेनत्वन्यैस्तेतुमनुष्योऽयंकश्चिदित्येवंप्रतियंति ॥ ५३ ॥ सकलंलोकंस्वांशेनविधायतंलोकंतदधःफणीश्वरोभूत्वात्वंबिभर्षि । भानुःसूर्यः अनिलोवायुः उडु पश्चंद्रःओषध्योव्रीह्याद्याःप्रवर्षोमेघः नैकधाअनेकप्रकारेण ॥ ५४ ॥

प्रकारांतरेणापिरक्षकत्वमाह । त्वमिति । शिखिरूपोजाठराग्निरूपः पवनपंचकंप्राणापानसमानोदानव्यानाः । तदुक्तंगीतायाम् । अहंवैश्वानरोभूत्वाप्राणिनां देहमाश्रितः । प्राणापानसमायुक्तःपचाम्यन्नंचतुर्विधम् ॥ इति ॥ ५५ ॥ हेईशचंद्रादिगतंयत्तेजोयच्चाशेषशरीरिणांचिच्चैतन्यंयच्चतनुभृतांशौर्यधैर्यमायुश्चतदखिलंतवसत्त्वंत्वद्रूपासत्त्वैवप्राभवत् । तत्तद्रूपेणप्रादुर्भूतेत्यर्थः ॥ ५६ ॥ विरिंचिर्ब्रह्मा विभागोभेदः हेईशत्वांदिनांतत्तद्रक्तत्वेनतत्रतत्रेश्वरत्वाभिमानवतांतत्तद्रूपेणपरस्परस्माद्भिन्नइवभासि । तत्त्वमाह । अनन्यद्भेदशून्यमतएवैकमीदृशंब्रह्मैवत्वं त्वमेवचब्रह्मादयः । अतोनैषांभेदइतिभावः ॥ ५७ ॥ प्रकारांतरेणापिसर्वस्यब्रह्मरूपतांस्थापयति । मत्स्यादीति । एकस्यैवयथादशरूपत्वंतथैकस्यैवसदसद्विभागरूपतासद्ब्रह्मविश्वादिकमसत्तदितरत्सर्वं सएकस्त्वमेव यतोभवतोऽन्यन्न

त्वमिहदेहभृतांशिखिरूपःपचसिभुक्तमशेषमजस्रम् ॥ पवनपंचकरूपसहायोजगदखंडमनेनबिभर्षि ॥ ५५ ॥ चंद्रसूर्यशिखिमध्यगतंयत्तेजईशचिदशेषतनूनाम् ॥ प्राभवत्तनुभृतामिहधैर्यंशौर्यमायुरखिलंतवसत्त्वम् ॥ ५६ ॥ त्वंविरिंचिशिवविष्णुविभेदात्कालकर्मशशिसूर्यविभागात् ॥ वादिनांपृथगिवेशविभासिब्रह्मनिश्चितमनन्यदिहैकम् ॥ ५७ ॥ मत्स्यादिरूपेणयथात्वमेकःश्रुतौपुराणेषुचलोकसिद्धः ॥ तथैवसर्वंसदसद्विभागस्त्वमेवनान्यद्भवतोविभाति ॥५८ ॥ यद्यत्समुत्पन्नमनंतसृष्टावुत्पत्स्यतेयच्चभवच्चयच्च ॥ नदृश्यतेस्थावरजंगमादौत्वयाविनातःपरतःपरस्त्वम् ॥ ५९ ॥ तत्त्वंनजानंतिपरात्मनस्तेजनाःसमस्तास्तवमाययाऽतः ॥ त्वद्भक्तसेवामलमानसानांविभांतितत्त्वंपरमेकमैशम् ॥ ६० ॥

विभाति । बहुशःपर्यालोचनेऽपिनज्ञानविषयोभववीत्यर्थः ॥ ५८ ॥ अनंतसृष्टौअंतरहितायांसृष्टौ । तदुक्तंपातंजले । सर्वथासृष्टयाद्युच्छेदोनैवकृतार्थमुक्तंप्रत्येवतुतन्निवृत्तिः । इति । अनादिर्भगवान्कालोनांतोऽस्यद्विजविद्यते । अव्युच्छिन्नास्ततस्त्वेतेसर्गस्थित्यंतसंयमाः ॥ इतिस्मृतिश्च । तादृश्यांसृष्टौयज्जातंयद्भावियच्चवर्तमानंतत्त्वयाविनानदृश्यते । सर्वंत्वद्रूपमेवदृश्यतेऽतस्त्वंपरतःसर्वोत्कृष्टाद्धिरण्यगर्भादपिपरइत्यर्थः ॥ ५९ ॥ नन्वेवंरूपंमांसर्वेजनाःकिमितिनजानंतितत्राह । तत्त्वमिति । परमात्मनस्तेएतत्तत्त्वमेतेसमस्ताजनास्तवमाययासंवृताइतिशेषः । अतोनजानंति । तर्हिसर्वथामामेवंकेऽपिनजानंतिनेत्याह । त्वद्भक्तेति । तेतवैशंतत्त्वंजानंतीत्यर्थः ॥ ६० ॥

वेवचैतन्यरूपमात्मतत्त्वंब्रह्मादयोऽपिनविदुः । यतस्तेबहिरर्थेषुभावश्चित्तंयेषांतादृशाः ततोऽबुधःत्वद्रूपज्ञानासमर्थोऽपिइदंरूपमेवत्वांप्रकृतदृश्यमानरूपमे
वत्वांभजन्ध्यायन् अदुःखोनिवृत्तसकलदुःखःसन्मुक्तिमुपैति ॥ ६१ ॥ अपरमपिसुलभंसाधनंस्वानुष्ठितत्वेनात्युपादेयतांचतत्रसूचयन्नाह । अहमिति । अ
निशंगृणन् उच्चारयन्मरणसमयेजंतूनांमुक्तयेहेरामतवनामरूपंमंत्रंदिशामिउपदिशामि ॥ ६२ ॥ ६३ ॥ अखिलदेवसौख्यमखिलदेवराज्यरूपसौख्यंयत
स्त्वयाराक्षसरूपोऽस्माकंदुष्टशत्रुर्हतः ॥ ६४ ॥ धरादेवाभूदेवाविद्वांस्तैर्यज्ञेषुदत्तायज्ञभागायेनखलेनहृताःसत्वयाहतस्तेनतेभागानोऽस्माकंपुरावद्रावणोत्प

ब्रह्मादयस्तेनाविदुःस्वरूपंचिदात्मतत्त्वंबहिरर्थभावाः ॥ ततोऽबुधस्त्वामिदमेवरूपंभक्त्याभजन्मुक्तिमुपैत्यदुःखः ॥ ६१ ॥ अहंभवन्ना
मगृणन्कृतार्थोवसामिकाश्यामनिशंभवान्या ॥ मुमूर्षमाणस्यविमुक्तयेऽहंदिशामिमंत्रंतवरामनाम ॥ ६२ ॥ इमंस्तवंनित्यमनन्यभ
क्त्याशृण्वंतिगायंतिलिखंतियेवै ॥ तेसर्वसौख्यंपरमंचलब्ध्वाभवत्पदंयांतुभवत्प्रसादात् ॥ ६३ ॥ इंद्रउवाच ॥ रक्षोऽधिपेनाखिलदेव
सौख्यंहृतंचमेब्रह्मवरेणदेव ॥ पुनश्चसर्वंभवतःप्रसादात्प्राप्तंहतोराक्षसदुष्टशत्रुः ॥ ६४ ॥ देवाऊचुः ॥ हृतायज्ञभागाधरादेवदत्तामुरारे
खलेनादिदैत्येनविष्णो ॥ हतोऽद्यत्वयानोवितानेषुभागाः पुरावद्भविष्यंतियुष्मत्प्रसादात् ॥ ६५ ॥ पितरऊचुः ॥ हतोऽद्यत्वयादुष्टदै
त्योमहात्मन्गयादौनरैर्दत्तपिंडादिकान्नः ॥बलादत्तिहत्वागृहीत्वासमस्तानिदानींपुनर्लब्धसत्त्वाभवामः॥६६॥यक्षाऊचुः ॥सदाविष्टिकर्म
ण्यनेनाभियुक्तावहामोदशास्यंबलाद्दुःखयुक्ताः ॥ दुरात्माहतोरावणोराघवेशत्वयातेवयंदुःखजाताद्विमुक्ताः ॥६७॥ गंधर्वाऊचुः ॥ वयं
संगीतनिपुणागायंतस्तेकथामृतम् ॥ आनंदामृतसंदोहयुक्ताःपूर्णाःस्थिताःपुरा ॥ ६८ ॥ पश्चाद्दुरात्मनारामरावणेनाभिविद्रुताः ॥ तमे
वगायमानाश्चतदाराधनतत्पराः ॥ ६९ ॥

त्तिप्राक्कालइवभविष्यंति ॥ ६५ ॥ लब्धसत्त्वास्तत्पिंडप्राप्त्यालब्धबलाः ॥ ६६ ॥ विष्टिकर्मणिवेतनदानंविनाबलात्कर्मकरणंविष्टिस्तत्कर्मणिअभियुक्ताः
प्रेरिताःदशास्यंवहामस्तदीयपल्लक्यादिवहनेनेतिशेषः । दुःखजाताद्दुःखसमूहात् ॥ ६७ ॥ पुरारावणराज्यात्पूर्वम् ॥ ६८ ॥ अभिविद्रुताबलेनस्व
वशतांनीताः ॥ ६९ ॥

यतोऽयंहतोऽतएवांस्थितास्त्वयावद्दुःखमोचनेनपरित्राताः ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ हृदिअंतर्यामित्वयास्थितश्चेवराजेंद्रंदृश्यमानराजेंद्ररूपंध्यायंतोययुरि त्यन्वयः ॥ ७४ ॥ ७५ ॥ इति श्रीमत्सक०युद्ध०पंचदशःसर्गः ॥ १५ ॥ ॥ रामेइति ॥ उत्तरार्धेजातेविजाताइविचशेषः ॥ १ ॥ निर्गंधानिगंधयुता

स्थितास्त्वयापरित्राताहतोऽयंदुष्टराक्षसः ॥ एवंमहोरगाःसिद्धाःकिन्नरामरुतस्तथा ॥ ७० ॥ वसवोमुनयोगावोगुह्यकाश्चपतत्रिणः ॥ सप्रजापतयश्चैतेतथाचप्सरसांगणाः॥७१॥सर्वैरामंसमासाद्यदृष्ट्वानेत्रमहोत्सवम् ॥ स्तुत्वापृथक्पृथक्सर्वैराघवेणाभिवंदिताः॥७२॥ययुः स्वंस्वंपदंसर्वैब्रह्मरुद्रादयस्तथा ॥ प्रशंसंतोमुदारामंगायंतस्तस्यचेष्टितम् ॥ ७३ ॥ ध्यायंतस्त्वभिषेकार्द्रंसीतालक्ष्मणसंयुतम् ॥ सिंहास नस्थंराजेंद्रंययुःसर्वेहृदिस्थितम् ॥ ७४ ॥ खेवाद्येषुध्वनत्सुप्रमुदितहृदयैर्देववृंदैःस्तुवद्भिर्वर्षद्भिःपुष्पवृष्टिंदिविमुनिनिकरैरीड्यमानंसमंता त् ॥ रामःश्यामःप्रसन्नस्मितरुचिरमुखःसूर्यकोटिप्रकाशःसीतासौमित्रिवातात्मजमुनिहरिभिःसेव्यमानोविभाति ॥७५॥ इति श्रीमदध्या त्मरामायणेउमामहेश्वरसंवादेयुद्धकांडेपंचदशःसर्गः॥१५॥ ॥ श्रीमहादेवउवाच ॥ रामेऽभिषिक्तेराजेंद्रेसर्वलोकसुखावहे ॥ वसुधासस्य संपन्नाफलवंतोमहीरुहाः ॥ १ ॥ गंधहीनानिपुष्पाणिगंधवंतिचकाशिरे ॥ सहस्रशतमश्वानांधेनूनांचगवांतथा ॥ २ ॥ ददौशतवृषान्पू र्वंद्विजेभ्योरघुनंदनः ॥ त्रिंशत्कोटिसुवर्णस्यब्राह्मणेभ्योददौपुनः ॥ ३ ॥ वस्त्राभरणरत्नानिब्राह्मणेभ्योमुदातथा ॥ सूर्यकांतिसम प्रख्यांसर्वरत्नमयींस्रजम् ॥ ४ ॥ सुग्रीवायददौप्रीत्याराघवोभक्तवत्सलः ॥अंगदायददौदिव्येह्यंगदेरघुनंदनः ॥५॥ चंद्रकोटिप्रतीकाशंम णिरत्नविभूषितम् ॥ सीतायैप्रददौहारंप्रीत्यारघुकुलोत्तमः ॥ ६ ॥ अवमुच्यात्मनःकंठाद्धारंजनकनंदिनी ॥अवैक्षतहरीन्सर्वान्भर्तारंचमुहु र्मुहुः ॥ ७ ॥ रामस्तामाहवैदेहीमिंगितज्ञोविलोकयन् ॥ वैदेहियस्यतुष्टासिदेहितस्मैवरानने ॥ ८ ॥ हनूमतेददौहारंपश्यतोराघवस्यच॥ तेनहारेणशुशुभेमारुतिर्गौरवेणच ॥ ९ ॥ रामोऽपिमारुतिंदृष्ट्वाकृतांजलिमुपास्थितम् ॥ भक्त्यापरमयातुष्टइदंवचनमब्रवीत् ॥ १० ॥ हनूमंस्तेप्रसन्नोऽस्मिवरंवरयकांक्षितम् ॥ दास्यामिदैवैरपियद्दुर्लभंभुवनत्रये ॥ ११ ॥

नि अश्वानांधेनूनांगवांचसहस्रशतंददौ ॥ २ ॥ शतवृषानित्यत्रशतशब्दोऽनंतवाची ॥ ३ ॥ ४ ॥ अंगदेबाहुभूषणे ॥५॥६॥ अवमुच्य भर्त्राकंठेप्रविमुक्तंपुनः कंठादवतार्येत्यर्थः ॥७॥ विलोकयन्वैदेहींपश्यन् ॥८॥ गौरवेणशीताकृतादरेण ॥ ९ ॥ १० ॥ यद्वस्तुदेवैरपिदुर्लभंतदपित्ववरूपंचदास्याम्येवेत्यर्थः॥११॥

उक्तंचान्यत्र । "राज्योत्सवागतजनायरघुप्रवीरःप्रीत्यात्वनेकमणिरत्नविभूषणानि । दत्त्वानिलात्मजमपास्यविदेहजायैमालांददौरघुपतिःपरमादरेण ॥ १ ॥
वयाहनूमतेदत्तासैवमालाह्यमूलिका । दशनैःशकलीकृत्यत्यक्तातेनजलाशये ॥ २ ॥ हाहेतिजल्पितंसर्वैस्तदासुरवानरैः । स्वजातीयमेरेकर्म
त्वयाकृतमरिंदम ॥ ३ ॥ रामस्ततोमारुतिमत्युदारमाहूयचारादभिवर्तमानम् । पप्रच्छकस्मान्महतीसुमालात्यक्तात्वयाब्रूहिविदेहजार्पिता ॥ ४ ॥
ब्रह्मेतियद्ब्रह्मविदोवदंतिह्यात्मेश्वरश्चेतिवदंतिसंतः । सीतापवेत्त्वंतदसीतिबुद्ध्यात्यक्तामयेयंसकलार्तिरूपा ॥ ५ ॥ हनुमन्यदिमत्तस्त्वंवरंकिमपिनेच्छसि ॥
तवेच्छांतर्हिनिर्मुक्तांकरिष्यामिचनिष्फलाम् ॥ ६ ॥ श्रीरामश्रवणेदास्येममास्तुसफलास्पृहा । तस्याविरोधिनीयातुनिर्मूलांकुरुतांप्रभो ॥ ७ ॥ ममस्वांते

हनूमानपितंप्राहनत्वारामंप्रहृष्टधीः ॥ त्वन्नामस्मरतोरामनतृप्यतिमनोमम ॥ १२ ॥ अतस्त्वन्नामसततंस्मरन्स्थास्यामिभूतले ॥ याव
त्स्थास्यतितेनामलोकेतावत्कलेवरम् ॥ १३ ॥ ममतिष्ठतुराजेंद्रवरोऽयंमेऽभिकांक्षितः ॥ रामस्तथेतितंप्राहमुक्तस्तिष्ठयथासुखम् ॥ १४ ॥
कल्पांतेममसायुज्यंप्राप्स्यसेनात्रसंशयः ॥ तमाहजानकीप्रीतायत्रकुत्रापिमारुते ॥ १५ ॥ स्थितंत्वामनुयास्यंतिभोगाःसर्वेममाज्ञया ॥
इत्युक्तोमारुतिस्ताभ्यामीश्वराभ्यांप्रहृष्टधीः ॥ १६ ॥ आनंदाश्रुपरीताक्षोभूयोभूयःप्रणम्यतौ ॥ कृच्छ्राद्ययौतपस्तप्तुंहिमवंतंमहाम
तिः ॥ १७ ॥ ततोगुहंसमासाद्यरामःप्रांजलिमब्रवीत् ॥ सखेगच्छपुरंरम्यंशृंगवेरमनुत्तमम् ॥ १८ ॥

सदैवत्वंसीतयासहतिष्ठसि । अद्यैवसर्वेपश्यंतुस्थितंत्वांजानकीपते ॥ ८ ॥ विदीर्यवक्षःस्थलमंजनीसुतःप्रदर्शयामासचराममद्वयम् । हृदंबुजेसंस्थितमब्जलो
चनंमहीसुताराधितपादपंकजम् ॥ ९ ॥ मारुतेर्वैभवंदृष्ट्वासर्वेसंतोषमागताः । रामेणालिंगितःश्रीमान्हनूमानंजनीसुतः ॥ १० ॥ जयशब्दोमहानासीत्तदा
राघवमंडपे । सीतामुदितातस्मैवरानभयदान्ददौ ॥ ११ ॥ रामलीलामृतंचैतत्परमानंददायकम् । श्रोतॄणांचाथगृणतांपापसंघविदाहकम् ॥ १२ ॥"
तंतथोदारचरितम् ॥ १२ ॥ १३ ॥ मुक्तःसततंममनामस्मरणाज्जीवन्मुक्तःसन्नतिष्ठ ॥ १४ ॥ १५ ॥ ईश्वराभ्यांसीतारामाभ्याम् ॥ १६ ॥ कृच्छ्रादि
ति । रामदर्शनवियोगतःकृच्छ्रम् ॥ १७ ॥ १८ ॥

मामेवचिंतयन्नित्यमनेनभोगेष्वनासक्तोभवेतिसूच्यते ॥ १९ ॥ विद्यमानराज्यादधिकदेशराज्यम् विज्ञानमात्मतत्त्वज्ञानम् ॥ २० ॥ आलिंगितःबहिःश
रीरेण सर्वदास्वानुसंधानदानेनांतश्चालिंगितः ॥ २१ ॥ पूजयामासतानितिशेषः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ अनिच्छन्नित्यस्ययौवराज्यमितिकर्म
॥ २६ ॥ कर्माध्यक्षःसर्वकर्मसाक्षी । कर्तृत्वादिविहीनोनिरभिमानित्वात् । अतएवानिर्विकारः ॥ २७ ॥ स्वानंदेनतुष्टइत्यनेनलौकिकानंदसामग्रीनिरपे

मामेवचिंतयन्नित्यंभुंक्ष्वभोगान्निजार्जितान् ॥ अंतेममैवसारूप्यंप्राप्स्यसेत्वंनसंशयः ॥ १९ ॥ इत्युक्त्वाप्रददौतस्मैदिव्यान्याभरणानि
च ॥ राज्यंचविपुलंदत्त्वाविज्ञानंचददौविभुः ॥ २० ॥रामेणालिंगितोहृष्टोययौस्वभवनंगुहः ॥येचान्येवानराःश्रेष्ठाअयोध्यांसमुपागताः
॥ २१ ॥ अमूल्याभरणैर्वस्त्रैःपूजयामासराघवः ॥ सुग्रीवप्रमुखाःसर्वेवानराःसविभीषणाः ॥ २२ ॥ यथार्हंपूजितास्तेनरामेणपरमात्म
ना॥प्रहृष्टमनसःसर्वेजग्मुरेवयथागतम् ॥२३॥सुग्रीवप्रमुखाःसर्वेकिष्किंधांप्रययुर्मुदा॥विभीषणस्तुसंप्राप्यराज्यंनिहतकंटकम् ॥ २४ ॥
रामेणपूजितःप्रीत्याययौलंकामनिंदितः ॥ राघवोराज्यमखिलंशशासाखिलवत्सलः ॥२५॥ अनिच्छन्नपिरामेणयौवराज्येऽभिषेचितः॥
लक्ष्मणःपरयाभक्त्यारामसेवापरोऽभवत् ॥२६ ॥ रामस्तुपरमात्मापिकर्माध्यक्षोऽपिनिर्मलः ॥ कर्तृत्वादिविहीनोऽपिनिर्विकारोऽपिस
र्वदा ॥ २७॥ स्वानंदेनापितुष्टःसँल्लोकानामुपदेशकृत् ॥ अश्वमेधादियज्ञैश्चसर्वैर्विपुलदक्षिणैः ॥ २८ ॥ अयजत्परमानंदोमानुषंवपुरा
श्रितः ॥ नपर्यदेवन्विधवानचव्यालकृतंभयम् ॥ २९ ॥ नव्याधिजंभयंचासीद्रामेराज्यंप्रशासति ॥ लोकेदस्युभयंनासीदनर्थोनास्तिक
श्चन ॥ ३० ॥ वृद्धेषुसत्सुबालानांनासीन्मृत्युभयंतथा ॥ रामपूजापराःसर्वेसर्वेराघवचिंतकाः ॥ ३१ ॥ ववषुर्जलदास्तोयंथाकालंयथा
रुचि ॥ प्रजाःस्वधर्मनिरतावर्णाश्रमगणान्विताः ॥ ३२ ॥

क्षत्वमुक्तम् । लोकानामुपदेशकृत् । अनेनलोकोपदेशएवयज्ञाद्यनुष्ठानप्रयोजनमुक्तम् ॥ २८ ॥ रामेराज्यमिति । सौराज्यमाह । नपर्यदेवन्निति । व्यालाः सर्पा
व्याघ्राश्च ॥ २९ ॥ दस्यवश्चोराः ॥ ३० ॥ अनर्थाभावमेवप्रपंचयति । वृद्धेष्विति ॥ ३१ ॥ वर्णाश्रमाणांयेगुणाःधर्माःपुराणेषूक्तास्तैरान्विताः ॥ ३२ ॥

औरसानिवस्वस्मिन्प्रीतिमतीःप्रजारामःपितृवज्जुगोप । पितरिपुत्राणामिवप्रजानारामेस्नेहःपितुःपुत्रेष्विवप्रजासुरामस्येतिबोधितम् । ३३ ॥ उपास्तअकरोदिति यावत् ॥ ३४ ॥ धनधान्यऋद्धिमत्तयुक्तंयद्दीर्घमायुरारोग्यंचतयोःकारकमात्मानमधिकृत्यभवमाध्यात्मिकम् ॥ ३५ ॥ समाहितस्तदेकचित्तःपरितुष्टमानसः । भगवत्कथापठनजानंदेनेतिभावः । मनोगताशिषःमनसाआशास्यमानानर्थान् ॥ ३६ ॥ रामाभिषेकंरावणजयपूर्वकंप्राप्तम् । आर्यसंमतंशिष्टसंमतंतेनस्वयंशिष्टभि

औरसानिवरामोऽपिजुगोपपितृवत्प्रजाः ॥ सर्वलक्षणसंयुक्तःसर्वधर्मपरायणः ॥ ३३ ॥ दशवर्षसहस्राणिरामोराज्यमुपास्तसः ॥ ३४ ॥ इदंरहस्यंधनधान्यऋद्धिमद्दीर्घायुरारोग्यकरंसुपुण्यदम् ॥ पवित्रमाध्यात्मिकसंज्ञितंपुरारामायणंभाषितमादिशंभुना ॥ ३५ ॥ शृणोतिभक्त्यामनुजःसमाहितोभक्त्यापठेद्वापरितुष्टमानसः ॥ सर्वाःसमाप्नोतिमनोगताशिषोविमुच्यतेपातककोटिभिःक्षणात् ॥ ३६ ॥ रामाभिषेकंप्रयतःशृणोतियोधनाभिलाषीलभतेमहद्धनम् ॥ पुत्राभिलाषीसुतमार्यसंमतंप्राप्नोतिरामायणमादितःपठन् ॥ ३७ ॥ शृणोतियोऽध्यात्मिकरामसंहितांप्राप्नोतिराजाभुवमृद्धसंपदम् ॥ शत्रून्विजित्यारिभिरप्रधार्षितोव्यपेतदुःखोविजयीभवेन्नृपः ॥ ३८ ॥ स्त्रियोऽपिशृण्वंत्यधिरामसंहितांभवंतिताजीवसुताश्चपूजिताः ॥ वंध्यापिपुत्रंलभतेसुरूपिणंकथामिमांभक्तियुताशृणोतिया ॥ ३९ ॥ श्रद्धान्वितोयःशृणुयात्पठेन्नरोविजित्यकोपंचतथाविमत्सरः दुर्गाणिसर्वाणिविजित्यनिर्भयोभवेत्सुखीराघवभक्तिसंयुतः ॥ ४० ॥ सुराःसमस्ताअपियांतितुष्टतांविघ्नाःसमस्ताअपयांतिशृण्वताम् ॥ अध्यात्मरामायणमादितोनृणांभवंतिसर्वाअपिसंपदःपराः ॥ ४१ ॥ रजस्वलावायदिरामतत्पराशृणोतिरामायणमेतदादितः ॥ पुत्रंप्रसूतेऋषभंचिरायुषंपतिव्रतालोकसुपूजिताभवेत् ॥ ४२ ॥

तियावत् ॥ ३७ ॥ यआध्यात्मिकेत्यत्रसंधिरार्षः ॥ ३८ ॥ अधिरामसंहितांराममधिकृत्यप्रवृत्तामध्यात्मरामायणाख्याम् ॥ ३९ ॥ कोपमित्युपलक्षणंकामादीनाम् । विमत्सरःअनीर्ष्यः सर्वाणिदुर्गाणिदुःखस्थानि ॥ ४० ॥ शृण्वतांपुंसांसुरास्तुष्यंति विघ्नानश्यंति संपदश्चभवंति ॥ ४१ ॥ रामतत्परारामैकचित्ता रजस्वलायाःश्रवणंचतुर्थेऽह्न्यारभ्यद्वादशरात्रांतम् ॥ ४२ ॥

पूजयित्वेत्यादेःपुस्तकमितिशेषः । ॥ ४३ ॥ ४४ ॥ ४५ ॥ आयुष्यमायुर्जनकम् कल्पकोटिपर्यंतंकृतमघम् ॥ ४६ ॥ ४७ ॥ वैराग्यविज्ञानयुतंश्रोतॄणां तदुभयदातृत्वादितिभावः । अस्मिन्भवेसंसारेइत्यर्थः ॥ ४८ ॥ योभूतेश्वरोभवःशिवोऽसकृदखिलवेदराशिमालोड्ययत्तारकंब्रह्मतदेवरामः विष्णुरहस्यमूर्तिषु अत्यंतरहस्यमूर्तिःमुख्यामूर्तिरितिविज्ञायाखिलवेदानासारभूताउपनिषदस्तदर्थसंग्रहमुद्धृत्यसंक्षेपतइदंरामस्यनिगूढतत्त्वंप्रियायैप्राह । तस्मैनमइतिशेषः ।

पूजयित्वातुयेभक्त्यानमस्कुर्वंतिनित्यशः ॥ सर्वैःपापैर्विनिर्मुक्ताविष्णोर्यांतिपरंपदम्॥४३॥अध्यात्मरामचरितंकृत्स्नंशृण्वंतिभक्तितः॥ पठंतिवास्वयंवक्त्रात्तेषांरामःप्रसीदति ॥ ४४ ॥ रामएवपरंब्रह्मतस्मिंस्तुष्टेऽखिलात्मनि ॥ धर्मार्थकाममोक्षाणांयद्यदिच्छतितद्भवेत् ॥ ॥ ४५ ॥ श्रोतव्यंनियमेनैतद्रामायणमखंडितम् ॥ आयुष्यमारोग्यकरंकल्पकोट्यघनाशनम् ॥ ४६ ॥ देवाश्चसर्वेतुष्यंतुग्रहाःसर्वेमहर्षयः ॥ रामायणस्यश्रवणेतुष्यंतिपितरस्तथा ॥ ४७ ॥ अध्यात्मरामायणमेतदद्भुतंवैराग्यविज्ञानयुतंपुरातनम् ॥ पठंतिशृण्वंतिलिखंतियेनरास्तेषांभवेऽस्मिन्नपुनर्भवोभवेत् ॥ ४८ ॥ आलोड्याखिलवेदराशिमसकृद्यत्तारकंब्रह्मतद्रामोविष्णुरहस्यमूर्तिरितियोविज्ञायभूतेश्वरः ॥ उद्धृत्याखिलसारसंग्रहमिदंसंक्षेपतःप्रस्फुटंश्रीरामस्यनिगूढतत्त्वमखिलंप्राहप्रियायैभवः ॥ ४९ ॥ ॥ इति श्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेयुद्धकांडेषोडशःसर्गः ॥ १६ ॥ इतियुद्धकांडंसमाप्तम् ॥ ॥ कांडेयुद्धात्मकेसर्गानवसप्तनीलकंठोक्ताः ॥ सार्धैकादशशतश्लोकामनुसंख्यायुताः ॥ सर्गाः ॥ १६ ॥ श्लोकाः ॥ ११६४ ॥

अयंश्लोकस्तत्रश्रोतुः शिवशिष्यस्येतिबोध्यम् ॥ ४९ ॥ ॥ इति श्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराजमानस्यहिम्मतिवर्मणः पुत्रस्य श्रीरामवर्मणःकृतावध्यात्मरामायणसेतौयुद्धकांडेषोडशःसर्गः ॥ १६ ॥ ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥ ॥ युद्धेयुद्धादिभिःश्रांतान्वानरान्प्रतिपूज्यच ॥ स्वानंदेनस्थितोयोध्यांसरामःपातुसर्वदा ॥ १ ॥

१ कैलासपर्वते पार्वत्यै कथ्यमानरामचरित्रप्रसंगे इत्यर्थः ।

श्रीगणेशायनमः ॥ १ ॥ मृधेयुद्धे ॥ २ ॥ कथंकेनप्रकारेण ॥ ३ ॥ श्रद्दधत्याः एतच्छ्रवणेश्रद्धावत्याः कथामृतमास्वाद्यमेममतदास्वादनविषयातृष्णा त्यंतंवर्धते ॥ ४ ॥ रामेराज्यमुपस्थिते । राज्यंप्राप्तवतीत्यर्थः । अभिवंदितुंनंतुस्तोतुंच ॥ ५ ॥ तानेवऋषीनाह विश्वामित्रइति ॥ ६ ॥ मुनिभिःशिष्यैः सहितइत्यर्थः ॥ ७ ॥ अगस्त्यप्रमुखामुनयआशीर्भिरभिनंदितुंसमागत्यबहिःस्थिताःसंतीतिरामायब्रूहीत्यन्वयः ॥ ८ ॥ ९ ॥ कृतांजलिःप्रतीहारइति

जयतिरघुंशातिलकःकौसल्याहृदयनंदनोरामः ॥ दशवदननिधनकारीदाशरथिःपुंडरीकाक्षः ॥ १ ॥ पार्वत्युवाच ॥ अथरामःकिमक रोत्कौसल्यानंदवर्धनः ॥ हत्वामृधेरावणादीन्राक्षसान्भीमविक्रमः॥१॥अभिषिक्तस्त्वयोध्यायांसीतयासहराघवः ॥ मायामानुषतांप्राप्य कतिवर्षाणिभूतले ॥ २ ॥ स्थितवाँल्लीलयादेवःपरमात्मासनातनः ॥ अत्यजन्मानुषंलोकंकथमंतेरघूद्वहः ॥ ३ ॥ एतदाख्याहिभगव ञ्छ्रद्दधत्याममप्रभो ॥ कथापीयूषमास्वाद्यतृष्णामेऽतीववर्धते॥रामचंद्रस्यभगवन्ब्रूहिविस्तरशःकथाम्॥४॥श्रीमहादेवउवाच ॥ राक्षसा नांवधंकृत्वाराज्यंरामउपस्थिते ॥ आययुर्मुनयःसर्वेश्रीराममभिवंदितुम् ॥५ ॥ विश्वामित्रोऽसितःकण्वोदुर्वासाभृगुरंगिराः ॥ कश्यपो वामदेवोऽत्रिस्तथासप्तर्षयोऽमलाः ॥ ६ ॥ अगस्त्यःसहशिष्यैश्चमुनिभिःसहितोऽभ्यगात् ॥ द्वारमासाद्यरामस्यद्वारपालमथाब्रवीत् ॥ ॥ ७ ॥ ब्रूहिरामायमुनयःसमागत्यबहिःस्थिताः ॥ अगस्त्यप्रमुखाःसर्वेआशीर्भिरभिनंदितुम् ॥ ८ ॥ प्रतीहारस्ततोराममगस्त्यवचना द्रुतम् ॥ नमस्कृत्याब्रवीद्वाक्यंविनयावनतःप्रभुम् ॥ ९ ॥ कृतांजलिरुवाचेदमगस्त्योमुनिभिःसह ॥ देवत्वद्दर्शनार्थायप्राप्तोबहिरुप स्थितः ॥१०॥ तमुवाचद्वारपालंप्रवेशययथासुखम् ॥ पूजितावितिशुर्वेश्मनानारत्नविभूषितम् ॥ ११ ॥ दृष्ट्वारामोमुनीञ्छीघ्रंप्रत्युत्था यकृतांजलिः ॥ पाद्यार्घ्यादिभिरापूज्यगांनिवेद्ययथाविधि ॥ १२ ॥ नत्वातेभ्योददौदिव्यान्यासनानियथार्हतः ॥ उपविष्टाःप्रहृष्टा श्चमुनयोरामपूजिताः ॥ १३ ॥

शेषः । प्रातःस्वाश्रमादागतःबहिर्द्वारिउपस्थितोऽस्तीतिशेषः ॥ १० ॥ पूजिताःप्रतीहारेणमार्गप्रदर्शनादिनापूजिताः कृतादराइतियावत् ॥ ११ ॥ गांमधु पर्कार्थंवृषभंच । ‘महोक्षंवामहाजंवाश्रोत्रियायोपकल्पयेत्’ । इतिस्मृतेः ॥ १२ ॥ यथार्हतः । अर्होयोग्यतातदनतिक्रमादित्यर्थः । भगवतःसकाशात् पूजालाभेनप्रहर्षः ॥ १३ ॥

अब्रुवन्अपृच्छन् । तमेवाभिनयति । कुशलमित्यादि ॥ १४ ॥ सरावणस्तेनभारः क्लेशवध्योन किंतु सुकरवधइत्यर्थः ॥ १५ ॥ सुकरत्वमेवदर्शयंति । सधनुरिति । इंद्रजितंस्मृत्वाहुर्दिष्टचेति ॥ १६ ॥ तदेवस्पष्टयंति । सह्यमिति । रावणेर्मेघनादस्य ॥ १७ ॥ १८ ॥ यादक्षिणापुरादत्तादातुंप्रतिज्ञातासा रक्षोगणान्हत्वापूर्णाकृताअतःकृतकृत्यःसन्जीवसित्वमेवजीव । तवजीवनमेवश्लाघ्यंजीवनमित्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ यथावृत्तंजातंतथा

संपृष्टकुशलाःसर्वैरामंकुशलमब्रुवन् ॥ कुशलंतेमहाबाहोसर्वत्ररघुनंदन ॥ १४ ॥ दिष्टचेदानींप्रपश्यामोहतशत्रुमरिंदम ॥ नहिभारः सतेरामरावणोराक्षसेश्वरः ॥ १५ ॥ सधनुस्त्वंहिलोकांस्त्रीन्विजेतुंशक्तएवहि ॥ दिष्टचात्वयाहताःसर्वैराक्षसारावणादयः ॥ १६ ॥ सह्यमेतन्महाबाहोरावणस्यनिबर्हणम् ॥ असह्यमेतत्संप्राप्तंरावणेर्यन्निषूदनम् ॥ १७ ॥ अंतकप्रतिमाःसर्वेकुंभकर्णादयोमृधे ॥ अंतकप्रतिमैर्बाणैर्हतास्तेरघुसत्तम ॥ १८ ॥ दत्ताचेयंत्वयाऽस्माकंपुराह्यभयदक्षिणा ॥ हत्वारक्षोगणान्संख्येकृतकृत्योऽद्यजीवसि ॥ १९ ॥ श्रुत्वातुभाषितंतेषांमुनीनांभावितात्मनाम् ॥ विस्मयंपरमंगत्वारामःप्रांजलिरब्रवीत ॥ २० ॥ रावणादीनतिक्रम्यकुंभकर्णादिराक्षसान् ॥ त्रिलोकजयिनोहित्वाकिंप्रशंसथरावणिम् ॥ २१ ॥ ततस्तद्वचनंश्रुत्वाराघवस्यमहात्मनः ॥ कुंभयोनिर्महातेजारामंप्रीत्यावचोऽब्रवीत ॥ २२ ॥ शृणुरामयथावृत्तंरावणेरावणस्यच ॥ जन्मकर्मवरादानंसंक्षेपाद्वदतोमम ॥ २३ ॥ पुराकृतयुगेरामपुलस्त्योब्रह्मणःसुतः ॥ तपस्तप्तुंगतोविद्वान्मेरोःपार्श्वमहामतिः ॥२४॥ तृणबिंदोराश्रमेऽसौन्यवसन्मुनिपुंगवः॥तपस्तेपेमहातेजाःस्वाध्यायनिरतःसदा॥२५॥ तत्राश्रमेमहारम्येदेवगंधर्वकन्यकाः ॥ गायंत्यौननृतुस्तत्रहसंत्योवादयंतिच ॥२६॥ पुलस्त्यस्यतपोविघ्नंचक्रुःसर्वाअनिंदिताः ॥ ततःक्रुद्धोमहातेजाव्याजहारवचोमहत् ॥ २७ ॥ यामेदृष्टिपथंगच्छेत्सागर्भंधारयिष्यति ॥ ताःसर्वाःशापसंविग्नानतंदेशंप्रचक्रमुः ॥ २८ ॥ तृणबिंदोस्तुराजर्षेःकन्यातन्नाशृणोद्वचः ॥ विचचारमुनेरग्रेनिर्भयातंप्रपश्यती ॥ २९ ॥

शृणु ॥ २३ ॥ २४ ॥ मुनिपुंगवःमुनिश्रेष्ठःसन् अवसत् । तपस्तेपेच ॥ २५ ॥ २६ ॥ विघ्नंचक्रुः गायननृत्यादिभिरितिशेषः ॥ २७ ॥ २८ ॥ प्रपश्यतीत्यत्रनुमभावआर्षः ॥ २९ ॥

व्यंजितः प्रकटीकृतोंऽतःमध्येशरीरजोंगर्भोयस्याःसा ॥ ३० ॥ अवैतअजानात् ॥ ३१ ॥ ॥ ३२ ॥ उभयोःमातापित्रोः ॥ ३३ ॥ यंप्रासूतसविश्रवाइतिवि
ख्यातइत्यर्थः ॥ ३४ ॥ शीलमुत्तमस्वभावः ॥ ३५ ॥ वैश्रवणःकुबेरः ॥ ३६ ॥ तत्तपसातस्यतपसामनोऽभिलषितंधनेशत्वरूपंददौ ॥ ३७ ॥ ३८ ॥ प्राह

बभूवपांडुरतनुर्व्यंजितांतःशरीरजा ॥ दृष्ट्वासादेहवैवर्ण्यंभीतापितरमन्वगात् ॥ ३० ॥ तृणबिंदुश्चतांदृष्ट्वाराजर्षिरमितद्युतिः ॥ ध्यात्वा
मुनिकृतंसर्वमवैद्विज्ञानचक्षुषा ॥ ३१ ॥ तांकन्यांमुनिवर्यायपुलस्त्यायददौपिता ॥ तांप्रगृह्याब्रवीत्कन्यांबाढमित्येवसद्विजः ॥ ३२ ॥
शुश्रूषणपरांदृष्ट्वामुनिःप्रीतोऽब्रवीद्वचः ॥ दास्यामिपुत्रमेकंतेउभयोर्वंशवर्धनम् ॥ ३३ ॥ ततःप्रासूतसापुत्रंपुलस्त्याल्लोकविश्रुतम् ॥ वि
श्रवाइतिविख्यातःपौलस्त्योब्रह्मविन्मुनिः ॥३४॥ तस्यशीलादिकंदृष्ट्वाभरद्वाजोमहामुनिः ॥ भार्यार्थंस्वांदुहितरंददौविश्रवसेमुदा ॥३५॥
तस्यांतुपुत्रःसंजज्ञेपौलस्त्याल्लोकसंमतः ॥ पितृतुल्योवैश्रवणोब्रह्मणाचानुमोदितः ॥ ३६ ॥ ददौतत्तपसातुष्टोब्रह्मातस्मैवरंशुभम् ॥ म
नोऽभिलषितंतस्यधनेशत्वमखंडितम् ॥ ३७ ॥ ततोलब्धवरःसोऽपिपितरंद्रष्टुमागतः ॥ पुष्पकेणधनाध्यक्षोब्रह्मदत्तेनभास्वता ॥ ३८ ॥
नमस्कृत्वाथपितरंनिवेद्यतपसःफलम् ॥ प्राहमेभगवान्ब्रह्मादत्त्वावरमनिंदितम् ॥ ३९ ॥ निवासायनमेस्थानंदत्तवान्परमेश्वरः ॥ ब्रूहिमे
नियतंस्थानंहिंसायत्रनकस्यचित् ॥४०॥ विश्रवाअपितंप्राहलंकानामपुरीशुभा ॥ राक्षसानांनिवासायनिर्मिताविश्वकर्मणा ॥४१॥ त्यक्त्वा
विष्णुभयाद्दैत्याविविशुस्तेरसातलम् ॥ सापुरीदुष्प्रधर्षान्यैर्मध्येसागरमास्थिता ॥ ४२ ॥ तत्रवासायगच्छत्वंनान्यैःसाधिष्ठितापुरा ॥
पित्रादिष्टस्त्वसौगत्वातांपुरींधनदोऽविशत् ॥ ४३ ॥ सतत्रसुचिरंकालमुवासपितृसंमतः ॥ कस्यचित्त्वथकालस्यसुमालीनामराक्षसः ॥
॥४४॥ रसातलान्मर्त्यलोकंचचारपिशिताशनः ॥ गृहीत्वातनयांकन्यांसाक्षाद्देवीमिवश्रियम् ॥४५॥ अपश्यद्धनदंदेवंचरंतंपुष्पकेणसः ॥
हितायचिंतयामासराक्षसानांमहामनाः ॥ ४६ ॥ उवाचतनयांतत्रकैकसींनामनामतः ॥ वत्सेविवाहकालस्तेयौवनंचातिवर्तते ॥४७॥

पितरमितिकर्म । वरंदत्त्वेत्यस्यस्थानंनदत्तवानित्यनेनान्वयः ॥ ३९ ॥ हिंसापीडायत्रकस्यापिस्वाम्यंनास्तितादृशंवदेत्यर्थः ॥ ४० ॥ ४१ ॥ अन्यैःरिपुभि
र्दुष्प्रधर्षा ॥ ४२ ॥ पुरादैत्यानांरसातलप्रवेशोत्तरमितःप्रागित्यर्थः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥

गृह्यसेप्रार्थ्यसे । कचित्तथैवपाठः ॥ ४८ ॥ ईदृशाइत्यस्यैवविवरणं धनदेनसमाइति ॥ ४९ ॥ साआश्रममितिच्छेदः । लज्जावशात् भूलेखनादि ॥ ५० ॥ का किंजातीया कन्यासिउतविवाहितासीतिप्रश्नः ॥ ५१ ॥ ५२ ॥ ५३ ॥ त्वत्तोऽप्येवंविधौसुतावित्यत्रकाकुः । यस्तेपुत्रोभविष्यतिसमहामतिर्भविष्यतीत्यर्थः ॥ ५४ ॥ तदेवाह । महाभागवतइति । रामभक्त्येत्यस्ययुक्तइतिशेषः । एकस्मिंस्तस्मिन्नेवतत्परःसर्वदादत्तचित्तः ॥ ५५ ॥ तद्रक्षोजातमात्रेण तस्यरक्षसो



प्रत्याख्यानाच्चभीतैस्त्वंनवरैर्गृह्यसेशुभे ॥ सात्वंवरयभद्रंतेमुनिंब्रह्मकुलोद्भवम्॥४८॥ स्वयमेवततःपुत्राभविष्यंतिमहाबलाः॥ईदृशाःसर्वशोभाढ्याधनदेनसमाःशुभे ॥४९॥ तथेतिसाश्रमंगत्वामुनेरग्रेव्यवस्थिता॥लिखंतीभुवमग्रेणपादेनाधोमुखीस्थिता ॥५०॥ तामपृच्छन्मुनिःकात्वंकन्यासिवरवर्णिनि ॥ साब्रवीत्प्रांजलिर्ब्रह्मन्ध्यानेनज्ञातुमर्हसि ॥ ५१ ॥ ततोध्यात्वामुनिःसर्वंज्ञात्वातांप्रत्यभाषत ॥ ज्ञातंतत्वाभिलषितंमत्तःपुत्रानभीप्स्यसि ॥ ५२ ॥ दारुणायांतुवेलायामागतासिसुमध्यमे॥ अतस्तेदारुणौपुत्रौराक्षसौसंभविष्यतः ॥ ५३ ॥ साब्रवीन्मुनिशार्दूलत्वत्तोऽप्येवंविधौसुतौ ॥ तामाहपश्चिमोयस्तेभाविष्यातिमहामतिः॥ ५४ ॥ महाभागवतःश्रीमान्रामभक्त्यैकतत्परः॥ इत्युक्तासातथाकालेसुषुवेदशकंधरम् ॥५५॥ रावणंविंशतिभुजंदशशीर्षंसुदारुणम् ॥ तद्रक्षोजातमात्रेणचचालचवसुंधरा ॥ ५६ ॥ वभूवुर्नाशहेतूनिनिमित्तान्यखिलान्यपि ॥ कुंभकर्णस्ततोजातोमहापर्वतसन्निभः ॥ ५७ ॥ ततःशूर्पणखानामजातारावणसोदरी ॥ ततोविभीषणोजातःशांतात्मासौम्यदर्शनः॥५८॥स्वाध्यायीनियताहारोनित्यकर्मपरायणः॥कुंभकर्णस्तुदुष्टात्माद्विजान्संतुष्टचेतसः॥५९ ॥ भक्षयन्नृषिसंघांश्चविचचारातिदारुणः ॥ रावणोऽपिमहासत्त्वोलोकानांभयदायकः ॥ वभूवेलोकनाशायह्यामयोदेहिनामिव ॥ ६० ॥



जन्ममात्रेण ॥ ५६ ॥ नाशहेतूनिरक्षोवंशस्यलोकानांचेतिशेषः ॥ ५७ ॥ ५८ ॥ स्वाध्यायीवेदाध्ययनवान्नित्यकर्माग्निहोत्रादितुष्टचेतसः । अतिशान्ता नित्यर्थः । भक्षयन्नित्यनेनान्वयः ॥ ५९ ॥ आमयोरोगः ॥ ६० ॥

सकलांतरस्थंजानासि । सर्वांतर्यामित्वात् । तदेवस्फुटयति । सर्वहृदिस्थितोहीत्यंतेन । हिर्यतइत्यर्थे । विज्ञानदृक्विज्ञानेनस्वरूपेणदृक्सर्वद्रष्टा अनेनचित्ता
दिकरणांतरनैरपेक्ष्यमुक्तम् अतएवसाक्षीसाक्षाद्द्रष्टा । नन्वहंमनुष्यःकुतोममेदृशत्वंतत्राह । त्वंलीलेति । वस्तुतोनमनुष्यस्त्वमितिभावः । स्वमहिमन्स्व
मात्रज्ञेयमहिमन् । अन्यैस्त्वन्महिमादुर्ज्ञेयइत्यर्थः । मायागुणैःरजआदिभिर्नाज्यसेनस्पृश्यसेएवंसर्वज्ञस्यतवाग्रेकथनंयद्यप्यनुचितंतथापिभवतालीलार्थंप्रति
चोदितःपृष्टोरक्षोद्भवंवक्ष्यामि । रक्षोद्भवमित्यत्रसंधिरार्षः ॥ ६१ ॥ ननुत्वंमामेवंकथंज्ञातवानसीत्यत्राह । जानामीति । मूढोऽप्यहंभवदनुग्रहतएवंविशेष
णंत्वांजानामि । अनंतंदेशकालापरिच्छेद्यम् । अक्षराजत्वाभ्यांनाशोत्पत्तिराहित्यमुक्तम् । सांसारिकान्प्रतिगूढंगुप्तंकृतंनिजरूपंयेनतम् । अथापित्वामनुप्रवृत्तःत्व

रामत्वंसकलांतरस्थमभितोजानासिविज्ञानदृक्साक्षीसर्वहृदिस्थितोहिपरमोनित्योदितोनिर्मलः ॥ त्वंलीलामनुजाकृतिःस्वमहिमन्मा
यागुणैर्नाज्यसेलीलार्थंप्रतिचोदितोऽद्यभवतोवक्ष्यामिरक्षोद्भवम् ॥६१॥ जानामिकेवलमनंतमचिंत्यशक्तिंचिन्मात्रमक्षरमजंविदितात्म
तत्त्वम् ॥ त्वांरामगूढनिजरूपमनुप्रवृत्तोमूढोऽप्यहंभवदनुग्रहतश्चरामि ॥ ६२ ॥ एवंवदंतमिनवंशपवित्रकीर्तिःकुंभोद्भवंरघुपतिःप्रहस
न्बभाषे ॥ मायाश्रितंसकलमेतदनन्यकत्वान्मत्कीर्तनंजगतिपापहरंनिबोध ॥ ६३ ॥ इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे
उत्तरकांडे प्रथमः सर्गः ॥ १ ॥ श्रीरामवचनंश्रुत्वापरमानंदनिर्भरः ॥ मुनिःप्रोवाचसदसिसर्वेषांतत्रशृण्वताम् ॥ १ ॥ अथवित्तेश्वरोदे
वस्तत्रकालेनकेनचित् ॥ आययौपुष्पकारूढःपितरंद्रष्टुमंजसा ॥ २ ॥

त्प्रवृत्तिमार्गमनुप्रवृत्तोंऽगीकृतप्रवृत्तिमार्गइहलोकेचरामि ॥ ६२ ॥ इनवंशेसूर्यवंशेपवित्राकीर्तिर्यस्यसः एतत्सकलमप्युदाहृतमंतर्यामित्वादिदृश्यमानंजगच्चमाया
श्रितमेव । तत्रहेतुः । अनन्यकत्वात्नविद्यतेऽन्यत्द्यस्यसोऽनन्यकस्तस्यभावस्तत्त्वंममतादृशत्वात्धर्मरहितत्वात्इतराधारत्वादेरप्यसंभवात् । सर्वधर्मजालम
पिगृह्यमाणंमायाश्रितमेवजानीहितिशेषः । स्वावतारस्यमुख्यप्रयोजनमाह । मत्कीर्तनमिति । स्वकीर्तनद्वारापापहरणार्थमेवावतारइतिभावः ॥ ६३ ॥
॥ ॥ इति श्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदावलीविराजमानस्यहिम्मतिवर्मणःपुत्रस्यश्रीरामवर्मणःकृतावध्यात्मरामायणसेतौउत्तरकांडेप्रथमःसर्गः
॥ १ ॥ अथेति । तत्रविश्रवसआश्रमेपितरंविश्रवसम् ॥ २ ॥

सामीप्यंगत्वासामीप्यंप्राप्य ॥ ३ ॥ ४ ॥ अचिरेणेतिच्छेदः ॥ ५ ॥ मांपश्यशिवेनचक्षुषेतिशेषः । दुष्करंतपःकर्तुमित्यन्वयः ॥ ६ ॥ फलस्यवांछितस्यसिद्ध्यर्थं सहानुजःकुंभकर्णविभीषणसहितः स्वंस्वंनियमंस्वस्ववासनोद्भूतंराजसतामससात्विकरूपम् ॥ ७ ॥ दुष्करमन्यैरितिशेषः ॥ ८ ॥ ९ ॥ १० ॥ दशमंशिरश्छेत्तुकामस्यप्रजापतिःप्राप्तःसमीपमितिशेषः ॥ ११ ॥ १२ ॥ वृतममरत्वमेवभगवदिच्छावशात्स्वयमेवविवृणोति । सुपर्णेत्यादि ॥ १३ ॥

दृष्ट्वातंकैकसीतत्रभ्राजमानंमहौजसम् ॥ राक्षसीपुत्रसामीप्यंगत्वारावणमब्रवीत् ॥३॥ पुत्रपश्यधनाध्यक्षंज्वलंतंस्वेनतेजसा ॥ त्वमप्येवंयथाभूयास्तथायत्नंकुरुप्रभो ॥ ४ ॥ तच्छ्रुत्वारावणोरोषात्प्रतिज्ञामकरोद्द्रुतम् ॥ धनदेनसमोवापिह्यधिकोवाचिरेणतु ॥ ५ ॥ भविष्याम्यंबमांपश्यसंतापंत्यजसुव्रते ॥ इत्युक्त्वादुष्करंकर्तुंतपःसदशकंधरः ॥६॥ आगमत्फलसिद्ध्यर्थंगोकर्णंतुसहानुजः ॥ स्वंस्वंनियममास्थायभ्रातरस्तेतपोमहत् ॥ ७ ॥ आस्थितादुष्करंघोरंसर्वलोकैकतापनम् ॥ दशवर्षसहस्राणिकुंभकर्णोऽकरोत्तपः ॥ ८ ॥ विभीषणोऽपिधर्मात्मासत्यधर्मपरायणः ॥ पंचवर्षसहस्राणिपादेनैकेनतस्थिवान् ॥ ९ ॥ दिव्यवर्षसहस्रंतुनिराहारोदशाननः ॥ पूर्णेवर्षसहस्रेतुशीर्षमग्नौजुहावसः ॥ एवंवर्षसहस्राणिनवतस्यातिचक्रमुः ॥ १० ॥ अथवर्षसहस्रेतुदशमेदशमंशिरः ॥ छेत्तुकामस्यधर्मात्माप्राप्तश्चाथप्रजापतिः ॥ वत्सवत्सदशग्रीवप्रीतोऽस्मीत्यभ्यभाषत ॥ ११ ॥ वरंवरयदास्यामियत्तेमनसिकांक्षितम् ॥ दशग्रीवोऽपितच्छ्रुत्वाप्रहृष्टेनांतरात्मना ॥ १२ ॥ अमरत्वंवृणोमीशवरदोयदिमेभवान् ॥ सुपर्णनागयक्षाणांदेवतानांतथासुरैः ॥ अवध्यत्वंतुमेदेहितृणभूताहिमानुषाः ॥ १३ ॥ तथास्त्वितिप्रजाध्यक्षःपुनराहदशाननम् ॥ अग्नौहुतानिशीर्षाणियानितेऽसुरपुंगव ॥ १४ ॥ भविष्यंतियथापूर्वमक्षयाणिचसत्तम ॥ १५ ॥ एवमुक्त्वाततोरामदशग्रीवंप्रजापतिः ॥ विभीषणमुवाचेदंप्रणतंभक्तवत्सलः ॥ १६ ॥ विभीषणत्वयावत्सकृतंधर्मार्थमुत्तमम् ॥ तपस्ततोवरंवत्सवृणीष्वाभिमतंहितम् ॥ १७ ॥

तथास्त्वित्यस्यावददितिशेषः ॥ १४ ॥ अक्षयाणिसुपर्णादिकृतक्षयरहितानि ॥ १५ ॥ १६ ॥ विभीषणस्यधर्मविषयबुद्धिप्रातिकामनयातपःकर्तृत्वादरेणवत्सेतिद्विःसंबोधनम् ॥ १७ ॥

तदेवाह । देवमेइत्यादिना ॥ १८ ॥ तथैवचभविष्यसि धर्मबुद्धिरेवभाविष्यसि ॥ १९ ॥ २० ॥ वाण्यादेवप्रार्थितया ॥ २१ ॥ २२ ॥ आस्यादिति
च्छेदः । अहोविधिर्दुर्लंघ्यइविशेषः ॥ २३ ॥ वरलब्धानुप्राप्तवरानूपौत्रानूपुत्रीपुत्रान् । बिदादित्वादञ् । प्रायात् रावणादिसमीपमितिशेषः ॥ २४ ॥
मेवांछितोमनोरथस्तेदिष्ट्यासंवृत्तः ॥ २५ ॥ अतोयद्भयादिति । तद्विष्णुकृतंभयंनोऽस्माकंगतम् । सर्वावध्यत्वस्यत्वयाप्राप्तत्वात् ॥ २६ ॥ इयंलंकापू

विभीषणोऽपितंनत्वाप्रांजलिर्वाक्यमब्रवीत् ॥ देवमेसर्वदाबुद्धिर्धर्मेतिष्ठतुशाश्वती ॥ मारोचयत्वधर्मेमेबुद्धिःसर्वत्रसर्वदा ॥ १८ ॥ ततः
प्रजापतिःप्रीतोविभीषणमथाब्रवीत् ॥ वत्सत्वंधर्मशीलोऽसितथैवचभाविष्यसि ॥१९॥ अयाचितोऽपितेदास्येह्यमरत्वंविभीषण ॥ कुंभ
कर्णमथोवाचवरंवरयसुव्रत ॥२०॥ वाण्याव्याप्तोऽथतंप्राहकुंभकर्णःपितामहम् ॥ स्वप्स्यामिदेवषण्मासान्दिनमेकंतुभोजनम् ॥ २१ ॥
एवमस्त्वितितंप्राहब्रह्माहृष्टादिवौकसः ॥ सरस्वतीचतद्वक्त्रान्निर्गताप्रययौदिवम् ॥ २२ ॥ कुंभकर्णस्तुदुष्टात्माचिंतयामासदुःखितः ॥
अनभिप्रेतमेवास्यात्किंनिर्गतमहोविधिः ॥२३॥ सुमालीवरलब्धांस्ताञ्ज्ञात्वापौत्रान्निशाचरान् ॥ पातालान्निर्भयःप्रायात्प्रहस्तादिभि
रन्वितः ॥२४॥ दशग्रीवंपरिष्वज्यवचनंचेदमब्रवीत् ॥ दिष्ट्यातेपुत्रसंवृत्तोवांछितोमेमनोरथः ॥ २५ ॥ यद्भयाच्चवयंलंकांत्यक्त्वायाता
रसातलम् ॥ तद्गतंनोमहाबाहोमहद्विष्णुकृतंभयम् ॥ २६ ॥ अस्माभिःपूर्वमुषितालंकेयंधनदेनते ॥ भ्रात्राऽक्रांतामिदानींत्वंप्रत्यानेतु
मिहार्हसि ॥ २७ ॥ साम्नावाथवलेनापिराज्ञांबंधुःकुतःसुहृत् ॥ इत्युक्तोरावणःप्राहनार्हस्येवंप्रभाषितुम् ॥ २८ ॥ वित्तेशोगुरुरस्माकमे
वंश्रुत्वातमब्रवीत् ॥ प्रहस्तःप्रश्रितंवाक्यंरावणंदशकंधरम् ॥ २९ ॥ शृणुरावणयत्नेननैवंत्वंवक्तुमर्हसि ॥ नाधीताराजधर्मास्तेनीतिशा
स्त्रंतथैवच ॥ ३० ॥ शूराणांनहिसौभ्रात्रंशृणुमेवदतःप्रभो ॥ कश्यपस्यसुतादेवाराक्षसाश्चमहाबलाः ॥ ३१ ॥

र्वमस्माभिरुषिता । अनेनास्मत्संबंधादियंतवधनभूतेतिध्वनितम् । इदानींतेभ्रात्राधनदेनाक्रांतांत्वंप्रत्यानेतुंस्वाधीनांकर्तुमर्हसि ॥ २७ ॥ ननुज्येष्ठेभ्रातरिक्र
धंबलंयोग्यंतत्राह । राज्ञांबंधुःकुतःसुहृत् । सर्वथैतानुपमर्द्यैवराज्यप्रवृत्तेरितिभावः ॥ २८ ॥ एवंश्रुत्वारावणवाक्यंश्रुत्वेत्यर्थः ॥ २९ ॥ ३० ॥
सौभ्रात्रंभ्रात्रादिभिःप्रीतिः ॥ ३१ ॥

देवैरनुष्ठितंलंकाहरणरूपंवैरमिदानींतनमेवनकिंतुप्राचीनमेव । एवंचतैरस्मद्द्वेषकरणवदस्माकमपितद्द्वेषकरणंनदोषायेतिभावः ॥ ३२ ॥ दुरात्मनःप्रहस्तस्येत्यन्वयः ॥ ३३ ॥ धनदनामकमीश्वरंनिष्कास्य ॥ ३४ ॥ धनदःतद्दूतगमनोत्तरंपितृसमीपंगत्वारावणएवमाहात्रकिमुचितमितिपृष्टवांस्तेनचत्यागएवोचितोऽस्यावध्यत्वा दित्युक्तेतांत्यक्तवानितिगाथापौराणिकी ॥ ३५ ॥ निर्ममेकारितवान् ॥ ३६ ॥ रावणोऽनुजैःसार्धंराक्षसैरभिषिक्तः । लंकाराज्ये इतिशेषः ॥ ३७ ॥ असुरा

परस्परमयुध्यंतत्यक्त्वासौहृदमायुधैः ॥ नैवेदानींतनंराजन्वैरंदेवैरनुष्ठितम् ॥ ३२ ॥ प्रहस्तस्यवचःश्रुत्वादशग्रीवोदुरात्मनः ॥ तथेति क्रोधताम्राक्षस्त्रिकूटाचलमन्वगात् ॥३३॥ दूतंप्रहस्तंसंप्रेष्यनिष्कास्यधनदेश्वरम् ॥ लंकामाक्रम्यसचिवैराक्षसैःसुखमास्थितः ॥ ३४ ॥ धनदःपितृवाक्येनत्यक्त्वालंकांमहायशाः ॥ गत्वाकैलासशिखरंतपसातोषयच्छिवम् ॥ ३५ ॥ तेनसख्यमनुप्राप्यतेनैवपरिपालितः ॥ अलकांनगरींतत्रनिर्ममेविश्वकर्मणा ॥ ३६ ॥ दिक्पालत्वंचकारात्रशिवेनपरिपालितः ॥ रावणोराक्षसैःसार्धमभिषिक्तःसहानुजैः॥३७॥ राज्यंचकारासुराणांत्रिलोकींबाधयन्खलः ॥ भगिनींकालखंजायददौविकटरूपिणीम्॥३८॥विद्युज्जिह्वायनाम्नासौमहामायीनिशाचरः॥ ततोमयोविश्वकर्माराक्षसानांदितेःसुतः ॥३९॥ सुतांमंदोदरींनाम्नाददौलोकैकसुंदरीम् ॥ रावणायपुनःशक्तिममोघांप्रीतमानसः ॥ ४० ॥ वैरोचनस्यदौहित्रींवृत्रज्वालेतिविश्रुताम् ॥ स्वयंदत्तामुदवहत्कुंभकर्णायरावणः ॥ ४१ ॥ गंधर्वराजस्यसुतांशैलूषस्यमहात्मनः ॥ विभीषणस्यभार्यार्थेधर्मज्ञांसमुदावहत् ॥ ४२ ॥ सरमांनामसुभगांसर्वलक्षणसंयुताम् ॥ ततोमंदोदरीपुत्रंमेघनादमजीजनत् ॥ ४३ ॥ जातमात्रस्तुयोनादंमेघवत्प्रमुमोचह ॥ ततःसर्वेऽब्रुवन्मेघनादोऽयमितिचासकृत् ॥ ४४ ॥ कुंभकर्णस्ततःप्राहनिद्रामांबाधतेप्रभो ॥ ततश्चकारयामासगुहांदीर्घांसुविस्तराम् ॥ ४५ ॥

णांतदवतारूपरक्षसाम् । यद्वाक्रूरकर्मत्वाद्रक्षःस्वप्यसुरपदप्रयोगः । एवमसुरेष्वपिराक्षसपदप्रयोगइतिबोध्यम् । कालखंजायतद्वंश्याय नाम्नाविद्युज्जिह्वाय भगिनींशूर्पणखाम् ॥ ३८ ॥ राक्षसानांविश्वकर्मादितेःसुतोमयःमंदोदरींकन्यांरावणायददौ पुनःशक्तिंचामोघांस्वनिर्मितांददौ ॥ ३९ ॥ ४० ॥ स्वयंदत्तामितितत्पित्रेतिशेषः ॥ ४१ ॥ ४२ ॥ ४३ ॥ मेघनादेतिनाम्नोऽन्वर्थत्वमाह । जातमात्रइति ॥ ४४ ॥ ४५ ॥

॥ ४६ ॥ देवादीन्समहोरगान्निजघ्ने देवश्रियश्चनिजघ्नेहृतवानित्यर्थः । देवस्त्रियइतिपाठांतरम् ॥ ४७ ॥ अक्रमंदेवादिष्वन्यायाचरणम् ॥ ४८ ॥ उत्तमपु
ष्पपकंवाहनेषूत्तमंपुष्पकाख्यंवाहनमित्यर्थः ॥ ४९ ॥ स्वर्गलोकंमेरूर्ध्वेस्थितंशक्रलोकम् । अनेनयमादिलोकास्तदधःस्थिताइतिध्वनयति ॥ ५० ॥ देवतैः
सहितेनेंद्रेणास्ययुद्धमभवदित्यर्थः ॥ ५१ ॥ ५२ ॥ प्रथमतइंद्रग्रहणंततस्तस्यबंधनम् ततोबद्धस्यस्वपुरेआनयनम् ॥ ५३ ॥ इंद्रमोचनप्रतिदानत्वेनतदभीष्टा

तत्रसुष्वापमूढात्माकुंभकर्णोविघूर्णितः ॥ निद्रितेकुंभकर्णेतुरावणोलोकरावणः ॥ ४६ ॥ ब्राह्मणानृषिमुख्यांश्चदेवदानवकिन्नरान् ॥
देवश्रियोमनुष्यांश्चनिजघ्नेसमहोरगान् ॥ ४७ ॥ धनदोऽपिततःश्रुत्वारावणस्याक्रमंप्रभुः ॥ अधर्ममाकुरुष्वेतिदूतवाक्यैन्र्यवारयत् ॥
॥ ४८ ॥ ततःक्रुद्धोदशग्रीवोजगामधनदालयम् ॥ विनिर्जित्यधनाध्यक्षंजहारोत्तमपुष्पकम् ॥ ४९ ॥ ततोयमंचवरुणंनिर्जित्यसमरेऽ
सुरः ॥ स्वर्गलोकमगात्तूर्णंदेवराजजिघांसया ॥ ५० ॥ ततोऽभवन्महद्युद्धमिंद्रेणसहदैवतैः ॥ ततोरावणमभ्येत्यबबंधत्रिदशेश्वरः ॥
॥ ५१ ॥ तच्छ्रुत्वासहसागत्यमेघनादःप्रतापवान् ॥ कृत्वाघोरंमहद्युद्धंजित्वात्रिदशपुंगवान् ॥ ५२ ॥ इंद्रंगृहीत्वाबद्धासौमेघनादोम
हाबलः॥ मोचयित्वातुपितरंगृहीत्वेंद्रंययौपुरम् ॥५३॥ ब्रह्मातुमोचयामासदेवेंद्रंमेघनादतः ॥ दत्त्वावरान्बहूंस्तस्मैब्रह्मास्वभवनंययौ ॥
॥५४॥ रावणोविजयीलोकान्सर्वाञ्जित्वाक्रमेणतु ॥ कैलासंतोलयामासबाहुभिःपरिघोपमैः॥५५॥तत्रनंदीश्वरेणैवंशप्तोऽयंराक्षसेश्वरः॥
वानरैर्मानुषैश्चैवनाशंगच्छेतिकोपिना ॥ ५६ ॥ शप्तोऽप्यगणयन्वाक्यंययौहैहयपत्तनम् ॥ तेनबद्धोदशग्रीवःपुलस्त्येनविमोचितः ॥
॥५७॥ ततोऽपिबलमासाद्यजिघांसुर्हरिपुंगवम् ॥ धृतस्तेनैवकक्षेणवालिनादशकंधरः ॥५८॥ भ्रामयित्वातुचतुरःसमुद्रान्रावणंहरिः ॥
विसर्जयामासततस्तेनसख्यंचकारसः ॥ ५९ ॥

नेकवरदानम् ॥ ५४ ॥ ५५ ॥ शापमाह । वानरैरिति । कोपिनाकोपवता । कैलासचालनादयंकोपः वानरमुखंनंदीश्वरंदृष्ट्वारावणेनहसितमित्यतोवाशापः
॥ ५६ ॥ अगणयन्किमस्यशापेनभवितेतितच्छापगणनामकुर्वन् हैहयपत्तनंसहस्रार्जुननगरम् ॥ ५७ ॥ बलंहैहयप्रतिरूपंबलम् हरिपुंगवंवालिनम् । तद्धननो
द्यमेनगतस्याविपरीतंततएवानिष्टलाभइत्याह । तेनैवकक्षेणधृतइति । विषममत्रालंकारः ॥ ५८ ॥ सरावणः ॥ ५९ ॥

॥ ६० ॥ ६१ ॥ अत्ररावणवंधकेंद्रवंधकतयारामपृष्टइंद्रजिदुत्कर्षउक्तः ॥ ६२ ॥ एतत्त्वानाश्चर्यमित्याह । भवानिति । आदिकृत्उत्पत्तिकर्ता ॥ ६३ ॥ जगतो भगवत्स्वरूपत्वमेवाह । त्वन्नाभीति । अग्निस्तेइति । मुखादग्निरजायत । इतिश्रुतेः । वागग्निमप्येति । इतिश्रुतेश्च ॥ ६४ ॥ बाहुभ्यामित्याद्यपिश्रुतिसिद्धमितितद्विदांस्पष्टमेव ॥ ६५ ॥ प्राणःप्राणवायुः जंघाजानूरुजघनादितिसमाहारद्वंद्वः ॥ ६६ ॥ वालखिल्याऋषिविशेषाः ॥ ६७ ॥ ६८ ॥ विश्वरूपः विराडित्यर्थः । मायागुणानांसत्त्वादीनांव्यतिकरेसतिआधिक्यन्यूनताभ्यांपरस्परसंश्लेषेसतिनानारूपोब्रह्मविष्णुरुद्रादिरूपोभासि ॥ ६९ ॥ अग्निरूपंत्वामाश्रित्ये

रावणःपरमप्रीतएवंलोकान्महाबलः ॥ चकारस्ववशेरामबुभुजेस्वयमेवतान् ॥ ६०॥ एवंप्रभावोराजेंद्रदशग्रीवःसहेंद्रजित् ॥ त्वयाविनिहतःसंख्येरावणोलोकरावणः ॥ ६१ ॥ मेघनादश्चनिहतोलक्ष्मणेनमहात्मना ॥ कुंभकर्णश्चनिहतस्त्वयापर्वतसन्निभः ॥ ६२ ॥ भवान्नारायणःसाक्षाज्जगतामादिकृद्विभुः ॥ त्वत्स्वरूपमिदंसर्वंजगत्स्थावरजंगमम् ॥ ६३ ॥ त्वन्नाभिकमलोत्पन्नोब्रह्मालोकपितामहः ॥ अग्निस्तेमुखतोजातोवाचासहरघूत्तम॥६४॥ बाहुभ्यांलोकपालौघाश्चक्षुर्भ्यांचंद्रभास्करौ ॥ दिशश्चविदिशश्चैवकर्णाभ्यांतेसमुत्थिताः ॥ ॥ ६५॥ घ्राणात्प्राणःसमुत्पन्नश्चाश्विनौदेवसत्तमौ ॥ जंघाजानूरुजघनाद्भुवर्लोकादयोऽभवन् ॥ ६६ ॥ कुक्षिदेशात्समुत्पन्नाश्चत्वारःसागराहरे ॥ स्तनाभ्यामिंद्रवरुणौवालखिल्याश्चरेतसः ॥ ६७ ॥ मेढ्राद्यमोगुदान्मृत्युर्मन्योरुद्रस्त्रिलोचनः ॥ अस्थिभ्यःपर्वताजाताःकेशेभ्योमेघसंहतिः ॥६८॥ ओषध्यस्तवरोमभ्योनखेभ्यश्चखरादयः ॥ त्वंविश्वरूपःपुरुषोमायाशक्तिसमन्वितः ॥ ६९ ॥ नानारूपइवाभासिगुणव्यतिकरेसति ॥ त्वामाश्रित्यैवविबुधाःपिबंत्यमृतमध्वरे ॥७०॥ त्वयासृष्टमिदंसर्वंविश्वंस्थावरजंगमम् ॥ त्वामाश्रित्यैवजीवंतिसर्वेस्थावरजंगमाः ॥ ७१ ॥ त्वद्युक्तमखिलंवस्तुव्यवहारेऽपिराघव ॥ क्षीरमध्यगतंसर्पिर्यथाव्याप्याखिलंपयः ॥ ७२ ॥

वअमृतंहविरध्वरेदेवाऽपिबंति ॥ ७० ॥ त्वमेवसृष्टिस्थितिकर्तेत्याह । त्वयेति ॥ ७१ ॥ व्यवहारेतत्कालेऽपि अखिलंवस्तुत्वद्युक्तमेव सत्त्वेनभातत्वेनचसर्वव्यवहारःसत्ताभातत्वेचसर्वत्रत्वदीयेएवेतिभावः । तदेवदृष्टांतेनोपपादयति । सर्पिर्यथाखिलंपयोव्याप्यतिष्ठतितथात्वमखिलंव्याप्यतिष्ठसीति । सर्वत्रसदितिभासतेइतिचव्यवहारः ।'तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंविभाति, इतिश्रुतेः ॥ ७२ ॥

तदेवाह । त्वद्भासेति । ईदृशस्त्वंनसर्ववेद्यइत्याह । सर्वगमिति ॥ ७३ ॥ ज्ञानचक्षुषोऽप्यात्मान्येवत्वांपश्यंतीत्याह । योगिनइति । नतुस्वस्माद्भेदेनेत्यर्थः । एते
नसर्वत्रचैतन्यभूतस्त्वमेवेतिसूचितम् । विचिन्वंतिपश्यंति ॥ ७४ ॥ तथादर्शनेकारणमाह । अतदिति । अतत्दृश्यंजडंतन्निरसनमुखैर्नब्रीनपुमानित्यादिरूपै
र्वेदशीर्षैरुपनिषद्भागैःपश्यंति । वस्तुतोनिर्धर्मकत्वात्केनापिरूपेणवक्तुमशक्यतयानिषेधमुखेनैवश्रुतयोब्रह्मप्रतिपादयंतीतिभावः । तदपितेषांज्ञानंत्वद्भक्तिंविनोपनिष
न्मात्रेणनेत्याह । त्वत्पादेति । अन्यथानेतिभावः ॥ ७५ ॥ विचिन्वंतःउपनिषत्सुविचारयंतः अन्यथाकेनचिद्धर्मेणधर्मवंतंनपश्यंतीत्यर्थः ॥ ७६ ॥ भजतां

त्वद्भासाभासतेऽर्कादिनत्वंतेनावभाससे॥सर्वगंनित्यमेकंत्वांज्ञानचक्षुर्विलोकयेत् ॥ ७३ ॥ नाज्ञानचक्षुस्त्वांपश्येदंधदृग्भास्करंयथा ॥
योगिनस्त्वांविचिन्वंतिस्वदेहेपरमेश्वरम् ॥ ७४ ॥ अतन्निरसनमुखैर्वेदशीर्षैरहर्निशम् ॥ त्वत्पादभक्तिलेशेनगृहीतायदियोगिनः ॥
॥ ७५ ॥ विचिन्वंतोहिपश्यंतिचिन्मात्रंत्वांनचान्यथा ॥ मयाप्रलपितंकिंचित्सर्वज्ञस्यतवाग्रतः ॥ क्षंतुमर्हसिदेवेशतवानुग्रहभागहम् ॥
॥७६॥ दिग्देशकालपरिहीनमनन्यमेकंचिन्मात्रमक्षरमजंचलनादिहीनम् ॥ सर्वज्ञमीश्वरमनंतगुणंव्युदस्तमायंभजेरघुपतिंभजतामभि
न्नम् ॥ ७७ ॥ इतिश्रीम०रा०उत्तरकांडेद्वितीयःसर्गः ॥ २ ॥ श्रीरामउवाच ॥ वालिसुग्रीवयोर्जन्मश्रोतुमिच्छामितत्त्वतः ॥ रवींद्रौवा
नराकारौजज्ञातेइतिनःश्रुतम् ॥ १ ॥अगस्त्यउवाच॥मेरोःस्वर्णमयस्याद्रेर्मध्यशृंगेमणिप्रभे ॥तस्मिन्सभाऽऽस्तेविस्तीर्णाब्रह्मणःशतयो
जना ॥ २ ॥ तस्यांचतुर्मुखः साक्षात्कदाचिद्योगमास्थितः ॥ नेत्राभ्यांपतितंदिव्यमानंदसलिलंबहु ॥ ३ ॥ तद्गृहीत्वाकरेब्रह्माध्या
त्वाकिंचित्तदत्यजत् ॥ भूमौपतितमात्रेणतस्माज्जातोमहाकपिः ॥ ४ ॥ तमाहद्रुहिणोवत्सकिंचित्कालंवसात्रमे ॥ समीपेसर्वशोभाढ्ये
ततःश्रेयोभविष्यति ॥ ५ ॥

भक्तानामभिन्नंस्वाभिन्नत्वेनबुद्धिविषयम् ॥ ७७ ॥ इतिश्रीमत्सकल०श्रीरामवर्मणःकृताव०उत्तरकांडेद्वितीयःसर्गः ॥ २ ॥ वालीति । रवींद्राविति । आत्मा
वैपुत्रनामासीतिश्रुतेस्तयोरेववानराकारत्वमुक्तम् ॥ १ ॥ सभाआस्तइतिच्छेदः ॥ २ ॥ योगंध्यानम् ॥ ३ ॥ किंचिद्ध्यात्वातदत्यजत् । भूमावितिशेषः ।
भूमौपतितमात्रेणतेनसलिलेनदार्ढ्यंप्राप्तमितिशेषः । तस्मात्कपिर्जातः ॥ ४ ॥ द्रुहिणोब्रह्मा मेसमीपेवसेत्यन्वयः ॥ ५ ॥

ब्रह्मणेति । एवमुक्तइत्यन्वयः । ऋक्षाधिपः सएवकपिः ॥ ६ ॥ उद्यतउद्यमवान् । फलमूलार्थंतल्लाभार्थमद्रौपर्यटन्वापीमपश्यत ॥ ७ ॥ छायामयंस्वच्छाया रूपंप्रतिकपिंस्वविरोधिकपिम् ॥ ८ ॥ आत्मानंसुंदरींरामांतद्रूपंस्त्रीरूपमपश्यत् ॥ ९ ॥ सुरेशइंद्रश्चतुर्मुखंपूजयित्वापुरंगच्छन्मनोरमांतांनारींदृष्ट्वातामप्राप्यैवत यासहमेलनंविनैववीर्यंत्यक्तवान् ॥ १० ॥ ११ ॥ १२ ॥ तस्यग्रीवादेशेमहद्बीजमसृजत् त्यक्तवान् ॥ १३ ॥ १४ ॥ पूर्ववत्पुंरूपमित्यर्थः ॥ १५ ॥

इत्युक्तोन्यवसत्तत्रब्रह्मणावानरोत्तमः ॥ एवंबहुतिथेकालेगतेऋक्षाधिपःसुधीः ॥ ६ ॥ कदाचित्पर्यटन्नद्रौफलमूलार्थमुद्यतः ॥ अपश्य द्दिव्यसलिलांवापींमणिशिलान्विताम् ॥७॥ पानीयंपातुमागच्छत्तत्रच्छायामयंकपिम् ॥ दृष्ट्वाप्रतिकपिंमत्वानिपपातजलांतरे ॥ ८ ॥ तत्रादृष्ट्वाहरिंशीघ्रंपुनरुत्प्लुत्यवानरः ॥ अपश्यत्सुंदरींरामामात्मानंविस्मयंगतः ॥ ९ ॥ ततःसुरेशोदेवेशंपूजयित्वाचतुर्मुखम् ॥ गच्छन्म ध्याह्नसमयेदृष्ट्वानारींमनोरमाम् ॥ १० ॥ कंदर्पशरविद्धांगस्त्यक्तवान्वीर्यमुत्तमम् ॥ तामप्राप्यैवतद्बीजंवालदेशे पतद्भुवि ॥ ११ ॥ वालीसमभवत्तत्रशक्रतुल्यपराक्रमः ॥तस्यदत्त्वासुरेशानःस्वर्णमालांदिवंगतः ॥१२॥ भानुरप्यागतस्तत्रतदानीमेवभामिनीम्॥दृष्ट्वाका मवशोभूत्वाग्रीवादेशेऽसृजन्महत् ॥ १३ ॥ बीजंतस्यास्ततःसद्योमहाकायोऽभवद्धरिः॥ तस्यदत्त्वाहनूमंतंसहायार्थंगतोरविः ॥ १४ ॥ पुत्रद्वयंसमादायगत्वासानिद्रिताक्वचित् ॥ प्रभातेऽपश्यदात्मानंपूर्ववद्वानराकृतिम् ॥१५॥ फलमूलादिभिःसार्धंपुत्राभ्यांसहितःकपिः॥ नत्वाचतुर्मुखस्याग्रेऋक्षराजःस्थितःसुधीः ॥ १६ ॥ ततोब्रवीत्समाश्वास्यबहुशःकपिकुंजरम् ॥ तत्रैकंदेवतादूतमाहूयामरसन्निभम् ॥ ॥ १७ ॥ गच्छदूतमयादिष्टोगृहीत्वावानरोत्तमम् ॥ किष्किंधांदिव्यनगरींनिर्मितांविश्वकर्मणा ॥ १८ ॥ सर्वसौभाग्यवलितांदेवैरपि दुरासदाम् ॥ तस्यांसिंहासनेवीरंराजानमभिषेचय ॥ १९ ॥ सप्तद्वीपगतायेयेवानराःसंतिदुर्जयाः ॥ सर्वेतेऋक्षराजस्यभविष्यंति वशेऽनुगाः ॥ २० ॥

॥ १६ ॥ समाश्वास्यभाविनोदुर्वारत्वान्ममस्त्रीरूपताकथमित्यादिखेदोमास्त्वित्याश्वास्येत्यर्थः देवतादूतंदेवदूतमित्यर्थः ॥ १७ ॥ १८ ॥ सौभाग्यवलितां तद्युक्ताम् ॥ १९ ॥ वशेभविष्यंतिअनुगाश्चभविष्यंति ॥ २० ॥

॥ २१ ॥ २२ ॥ तत्तस्यकिष्किंधाराज्यादिदानम् ॥ २३ ॥ तदादितत्प्रभृति हेनृप वानराणांसाकिष्किंधाआश्रयोऽभूत् त्वमेवेदानींब्रह्मणाऽर्थितःसन्नृसर्वेश्वरः
सर्ववानरेश्वरः ॥ २४ ॥ लीलानृदेहिनालीलागृहीतमनुष्यदेहेन । अयंपराक्रमस्तवनाश्चर्यायेत्याह । सर्वभूतेति । यस्त्वामेवंवेत्तिसोऽपिस्वेच्छयासृष्टिसंहारसम
र्थोभवतिचेत्साक्षात्तवकिंवाच्यमितिभावः ॥ २५ ॥ नन्वीदृश्यस्यानाश्चर्यस्यकिंवर्णनेनतत्राह । तथाऽपीति । सर्वलोकपापनाशायात्मनस्त्वेषांसुखायचानाश्चर्य

यदानारायणःसाक्षाद्रामोभूत्वासनातनः ॥ भूभारासुरनाशायसंभविष्यतिभूतले ॥ २१ ॥ तदासर्वेसहायार्थेतस्यगच्छंतुवानराः ॥ इत्यु
क्तोब्रह्मणादूतोदेवानांसमहामतिः ॥ २२ ॥ यथाज्ञप्तस्तथाचक्रेब्रह्मणातंहरीश्वरम् ॥ देवदूतस्ततोगत्वाब्रह्मणेतान्निवेदयत् ॥ २३ ॥ त
दादिवानराणांसाकिष्किंधाऽभून्नृपाश्रयः ॥ सर्वेश्वरस्त्वमेवासीरिदानींब्रह्मणार्थितः ॥ २४ ॥ भूमेर्भारोहृतःकृत्स्नस्त्वयालीलानृदेहि
ना ॥ सर्वभूतांतरस्थस्यनित्यमुक्तचिदात्मनः ॥ २५ ॥ अखंडानंदरूपस्यकियानेषपराक्रमः ॥ तथापिवर्ण्यतेसद्भिर्लीलामानुषरूपि
णः ॥ २६ ॥ यशस्तेसर्वलोकानांपापहत्यैसुखायच ॥ यइदंकीर्तयेन्मर्त्योवालिसुग्रीवयोर्महत् ॥ २७ ॥ जन्मत्वदाश्रयत्वात्समुच्य
तेसर्वपातकैः ॥ अथान्यांसंप्रवक्ष्यामिकथांरामत्वदाश्रयाम् ॥ २८ ॥ सीताहृतायदर्थेसारावणेनदुरात्मना ॥ पुराकृतयुगेरामप्रजापति
सुतंविभुम् ॥ २९ ॥ सनत्कुमारमेकांतेसमासीनंदशाननः ॥ विनयावनतोभूत्वाह्यभिवाद्येदमब्रवीत् ॥ ३० ॥ कोन्वस्मिन्प्रवरोलोकेदे
वानांबलवत्तरः ॥ देवाश्चयंसमाश्रित्ययुद्धेशत्रुंजयंतिहि ॥ ३१ ॥ कंयजंतिद्विजानित्यंकंध्यायंतिचयोगिनः ॥ एतन्मेशंसभगवन्प्रश्नं
प्रश्नविदांवर ॥ ३२ ॥ ज्ञात्वातस्यहृदिस्थंयत्तदशेषेणयोगदृक् ॥ दशाननमुवाचेदंशृणुवक्ष्यामिपुत्रक ॥ ३३ ॥

मपिआश्चर्यवत्कृत्वावर्ण्यतेइत्यर्थः ॥ २६ ॥ २७ ॥ तज्जन्मनस्त्वदाश्रयत्वात्त्वदुपकारार्थत्वात्यस्तयोर्जन्मकथयेत्सपातकैर्मुच्यते ॥ २८ ॥ यदर्थेसीताहृता
तांत्वदाश्रयांत्वद्विषयांकथांवक्ष्यामि प्रजापतेःसुतंमानसंसुतम् ॥ २९ ॥ ३० ॥ अस्मिँल्लोकेप्रवरःश्रेष्ठः । विवक्षितंश्रैष्ठ्यमेवाह । देवानामित्यादि । बलवत्तरत्व
मेवप्रकटयति । देवाश्चेति ॥ ३१ ॥ ३२ ॥ तस्यरावणस्यहृत्स्थंतादृशान्मेमरणंभवत्वितीच्छारूपम् ॥ ३३ ॥

यःसुरासुरैर्नुतःसहरिर्नारायणादिपदवाच्यइत्यर्थः ॥ ३४ ॥ अथतल्लक्षणमाह । यन्नाभीति । अनेनब्रह्मसहितजगत्स्रष्टृत्वरूपंतल्लक्षणमुक्तम् ॥ ३५ ॥ अनुजपंतिध्यायंति ॥ ३६ ॥ ३७ ॥ कांवेति । वाशब्दोवाक्यालंकारे ॥ ३८ ॥ ३९ ॥ हरेर्गतिंमुक्तिम् साचक्रमेणहिरण्यगर्भेणसहेतिबोध्यम् ॥ ४० ॥ एवंमुक्तीच्छुरपिरावणोभगवन्मायावशात्तमोगुणप्रधानत्वाच्चभगवद्द्वेषेणैवमुक्तिंप्रार्थयते । योत्स्यइत्यर्थः ॥ ४१ ॥ ४२ ॥ सुखीभवेत्यस्यततइत्यादिः ।

भर्तायोजगतांनित्यंयस्यजन्मादिकंनहि ॥ सुरासुरैर्नुतोनित्यंहरिर्नारायणोऽव्ययः ॥ ३४ ॥ यन्नाभिपंकजाज्जातोब्रह्माविश्वसृजांपतिः ॥ सृष्टंयेनैवसकलंजगत्स्थावरजंगमम् ॥ ३५ ॥ तंसमाश्रित्यविबुधाजयंतिसमरेरिपून् ॥ योगिनोध्यानयोगेनतमेवानुजपंतिहि ॥ ३६ ॥ महर्षेर्वचनंश्रुत्वाप्रत्युवाचदशाननः ॥ दैत्यदानवरक्षांसिविष्णुनानिहतानिच ॥ ३७ ॥ कांवागतिंप्रपद्यंतेप्रेत्यतेमुनिपुंगव ॥ तमुवाचमुनिश्रेष्ठोरावणंराक्षसाधिपम् ॥ ३८ ॥ दैवतैर्निहतानित्यंगत्वास्वर्गमनुत्तमम् ॥ भोगक्षयेपुनस्तस्माद्भ्रष्टाभूमौभवंतिते ॥ ३९ ॥ पूर्वार्जितैःपुण्यपापैर्म्रियंतेचोद्भवंतिच ॥ विष्णुनायेहतास्तेतुप्राप्नुवंतिहरेर्गतिम् ॥ ४० ॥ श्रुत्वामुनिमुखात्सर्वंरावणोहृष्टमानसः ॥ योत्स्येऽहंहरिणासार्धमितिचिंतापरोभवत् ॥ ४१ ॥ मनःस्थितंपरिज्ञात्वारावणस्यमहामुनिः ॥ उवाचवत्सतेऽभीष्टंभविष्यतिनसंशयः ॥ ४२ ॥ कंचित्कालंप्रतीक्षस्वसुखीभवदशानन ॥ एवमुक्त्वामहाबाहोमुनिःपुनरुवाचतम् ॥ ४३ ॥ तस्यस्वरूपंवक्ष्यामिह्यरूपस्यापिमायिनः ॥ स्थावरेषुचसर्वेषुनदेषुचनदीषुच ॥ ४४ ॥ ओंकारश्चैवसत्यंचसावित्रीपृथिवीचसः ॥ समस्तजगदाधारःशेषरूपधरोहिसः ॥ ४५ ॥ सर्वेदेवाःसमुद्राश्चकालःसूर्यश्चचंद्रमाः ॥ सूर्योदयोदिवारात्रीयमश्चैवतथाऽनिलः ॥ ४६ ॥

ततोमरणलाभेनसुखित्वम् ॥ ४३ ॥ स्थावरेषुनदेषुनदीषुचव्याप्तइतिशेषः ॥ ४४ ॥ इदमुपलक्षणंतदाह । ओंकारइति । प्रणवरूपत्वेनसर्ववाङ्मयव्यापिरुक्ता । ओंकारोवैसर्वावाक् । इतिश्रुतेः । तदेवाह । सत्यंवाक्यंसावित्रीगायत्रीच । सइत्यनेनार्थोऽपिसर्वस्तद्रूपएवेत्याह । पृथिवीचेति । इदमुपलक्षणम् । तदाह । समस्तेति ॥ ४५ ॥ ४६ ॥

१ सम्बधः । २ इदं रामचन्द्रसम्बोधनम् ।

शेषादयोदानवांताःसर्वेतद्रूपायवेतिविराड्रूपमुक्तम् ॥ ४७ ॥ सूर्यादौप्रकाशोऽग्नेर्ज्वलनंरक्षासंहारौचतदधीनाएवेत्याह । विद्योततीति । तत्सर्वमयत्नेनैवे त्याह । क्रीडांकरोतीति । क्रीडामिवकरोतीत्यर्थः । नतुकश्चिच्छ्रमस्तस्येतिभावः ॥ ४८ ॥ उक्तमेवार्थंसामान्येनोपसंहरति । तेनेति । अथैतद्ध्यानाश क्तंप्रतिअन्यद्ध्येयंरूपमाह । नीलोत्पलेति । विद्युद्वर्णांबरंपीतांबरंजांबूनदप्रख्यांतत्सदृशकांतिम् देवींपश्यन् स्वदर्शनेनसृष्टिव्यापारादौप्रवर्तयन्नालिंग्यतिष्ठ तीति । अनेनतस्याःस्वतोनात्यंतंभेदइतिदर्शितंशक्तिशक्तिमतोस्तादात्म्यस्यैवशास्त्रसिद्धांतितत्वात् ॥ ४९ ॥ ५० ॥ तादृशोऽपितत्प्रसादंविनाद्रष्टुमश

अग्निरिंद्रस्तथामृत्युःपर्जन्योवसवस्तथा ॥ ब्रह्मारुद्रादयश्चैवयेचान्येदेवदानवाः ॥ ४७॥ विद्योततिज्वलत्येषपातिचात्तीतिविश्वकृत् ॥ क्रीडांकरोत्यव्ययात्मासोऽयंविष्णुःसनातनः ॥ ४८ ॥ तेनसर्वमिदंव्याप्तंत्रैलोक्यंसचराचरम् ॥ नीलोत्पलदलश्यामोविद्युद्वर्णांबरावृतः ॥ ४९ ॥ शुद्धजांबूनदप्रख्यांश्रियंवामांकसंस्थिताम् ॥ सदानपायिनींदेवींपश्यन्नालिंग्यतिष्ठति ॥ ५० ॥ द्रष्टुंनशक्यतेकैश्चिद्देवदानवप न्नगैः ॥ यस्यप्रसादंकुरुतेसचैनंद्रष्टुमर्हति ॥५१॥ नचयज्ञतपोभिर्वानदानाध्ययनादिभिः॥शक्यतेभगवान्द्रष्टुमुपायैरितरैरपि ॥ ५२ ॥ तद्भक्तैस्तद्गतप्राणैस्तच्चित्तैर्धूतकल्मषैः ॥ शक्यतेभगवान्विष्णुर्वेदांतामलदृष्टिभिः ॥ ५३ ॥ अथवाद्रष्टुमिच्छातेशृणुत्वंपरमेश्वरम् ॥ त्रेतायुगेसदेवेशोसवितानृपविग्रहः ॥ ५४ ॥ हितार्थंदेवमर्त्यानामिक्ष्वाकूणांकुलेहरिः ॥ रामोदाशरथिर्भूत्वामहासत्त्वपराक्रमः ॥५५ ॥ पितुर्नियोगात्सभ्रात्रा भार्ययादंडकेवने ॥ विचरिष्यतिधर्मात्माजगन्मात्रास्वमायया ॥ ५६ ॥ एवंतेसर्वमाख्यातंमयारावणविस्त रात् ॥ भजस्वभक्तिभावेनतदारामंश्रियायुतम् ॥ ५७ ॥ एवंश्रुत्वाऽसुराध्यक्षोध्यात्वाकिंचिद्विचार्यच ॥ त्वयासहविरोधेप्सुर्मुमु देरावणोमहान् ॥ ५८ ॥

क्यइत्याह । द्रष्टुमिति ॥५१॥ तद्दर्शनेतद्भक्तिरेवासाधारणउपायइत्याह । नचेति ॥५२॥ तद्भक्तैरितिचशक्यतेद्रष्टुमितिशेषः ॥ ५३ ॥ अथवाद्रष्टुमिच्छाएतै रुपायैर्विनापीतिशेषः । नृपविग्रहःगृहीतराजशरीरः ॥ ५४ ॥ हितार्थमित्यस्यत्वद्वधार्थमितिहृत्स्थःशेषः । महासत्त्वपराक्रमःमहांतौबलपराक्रमौयस्यसः ॥ ५५ ॥ जगन्मातृत्वंजगत्कारणत्वपालकत्वाभ्याम् ॥ ५६ ॥ ॥ ५७ ॥असुराध्यक्ष इतिच्छेदः । तमोगुणप्रधानत्वाद्विरोधेप्सुः ॥ ५८ ॥

एतदर्थंत्वद्विरोधेनत्वत्तोमृत्युलाभार्थम् । त्वयात्मेति त्वत्कर्तृकात्मवधेच्छयेत्यर्थः ॥ ५९ ॥ ६० ॥ इतिश्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिबिरुदाव
ली० अध्यात्मरामायणसेतौउत्तरकांडेतृतीयःसर्गः ॥ ३ ॥ ॥ ॥ नारदोऽपिसर्वतोबलवंतंत्वांत्वत्सामीप्यंप्राप्तानेवचाहेत्याह । एकदेति ॥ १ ॥
ज्ञातासीतितृन् ॥ २ ॥ ३ ॥ ४ ॥ मंत्रिभिःसहपुष्पकेणश्वेतद्वीपसमीपतःसमागत्यस्थितः ॥५॥ तद्वीपप्रभायाहततेजस्कंप्रतिरुद्धगतिकम् मंत्रिणश्चप्रययुः ।



युद्धार्थीसर्वतोलोकान्पर्यटन्समवास्थितः ॥ एतदर्थंमहाराजरावणोऽतीवबुद्धिमान् ॥ हृतवाञ्जानकींदेवींत्वयात्मवधकांक्षया ॥ ५९ ॥ इमांकथांयःशृणुयात्पठेद्वासंश्रावयेद्वाश्रवणार्थिनांसदा ॥ आयुष्यमारोग्यमनंतसौख्यंप्राप्नोतिलाभंधनमक्षयंच ॥६०॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेउत्तरकांडेतृतीयःसर्गः ॥ ३ ॥ ॥ एकदाब्रह्मणोलोकादायांतंनारदंमुनिम् ॥ पर्यटन्रावणोलोकान्दृष्ट्वानत्वाब्रवीद्वचः ॥ १ ॥ भगवन्ब्रूहिमेयोद्धुंकुत्रसंतिमहाबलाः ॥ योद्धुमिच्छामिबलिभिस्त्वंज्ञातासिजगत्त्रयम् ॥ २ ॥ मुनिर्ध्यात्वाहसुचिरंश्वेतद्वीपनिवासिनः ॥ महाबलामहाकायास्तत्रयाहिमहामते ॥३॥ विष्णुपूजारतायेवैविष्णुनानिहताश्चये ॥ तएवतत्रसंजाताअजेयाश्चसुरासुरैः ॥ ४ ॥ श्रुत्वातद्रावणोवेगान्मंत्रिभिःपुष्पकेणतान् ॥ योद्धुकामःसमागत्यश्वेतद्वीपसमीपतः ॥ ५ ॥ तत्प्रभाहततेजस्कंपुष्पकंनाचलत्ततः ॥त्यक्त्वाविमानंप्रययौमंत्रिणश्चदशाननः ॥ ६ ॥ प्रविशन्नेवतद्वीपंधृतोहस्तेनयोषिता ॥पृष्टश्चत्वंकुतःकोऽसिप्रेषितःकेनवावद ॥ ७ ॥ इत्युक्तोलीयास्त्रीभिर्हसंतीभिःपुनःपुनः ॥ कृच्छ्राद्धस्ताद्विनिर्मुक्तस्तासांस्त्रीणांदशाननः ॥ ८ ॥ आश्चर्यमतुलंलब्ध्वाचिंतयामासदुर्मतिः ॥ विष्णुनानिहतोयामिवैकुंठमितिनिश्चितः ॥ ९ ॥ मयिविष्णुर्यथाकुप्येत्तथाकार्यंकरोम्यहम् ॥ इतिनिश्चित्यवैदेहींजहाराविपिनेऽसुरः ॥ १० ॥ जानन्नेवपरात्मानंसजहारावनीसुताम् ॥ मातृवत्पालयामासत्वत्तःकांक्षन्वधंस्वकम् ॥ ११ ॥ रामत्वंपरमेश्वरोऽसिसकलंजानासिविज्ञानदृग्भूतंभव्यमिदंत्रिकालकलनासाक्षीविकल्पोज्झितः ॥ भक्तानामनुवर्तनायसकलांकुर्वन्क्रियासंहर्तित्वांशृण्व न्मनुजाकृतिर्मुनिवचोभासीशलोकार्चितः ॥ १२ ॥

पद्भ्यामितिशेषः ॥ ६ ॥ योषितादासीरूपयाकयाचित् ॥ ७ ॥ ८ ॥ विष्णुनाहतःसर्वथावैकुंठंयामि यास्यामीतिनिश्चितःनिश्चयवान्सन् ॥ ९ ॥ १० ॥
स्वकंवधंस्वकीयंवधमित्यर्थः ॥ ११ ॥ एवंकथामुक्त्वास्वाश्रमंजिगमिषूरामंभगवंतंस्तौति । रामेति ॥ सकलज्ञानवत्त्वेहेतुः विज्ञानदृक्विज्ञानंस्वस्वरूपमेव

दक्ज्ञानकारणंयस्य । ज्ञानेइतरकरणानपेक्षइतियावत् । अतएवभूतमतीतंभव्यंभाविइदंवर्तमानमेवंत्रिषुकालेषुयाकलनातत्तत्कालवैशिष्ट्यंतस्यसाक्षाद्द्रष्टा विकल्पोज्झितःत्यक्तसंशयइत्यर्थः । भक्तानामनुवर्तनायस्वचरितकीर्तनादिनातेषांपापक्षयायसकलक्रियासंहतिंकुर्वन्मनुजाकृतिःनतुवस्तुतोमनुष्यइत्यर्थः । ईशलोकैरिंद्रादिभिरार्चितस्त्वंमुनीनामस्माकंवचआशृण्वन्भासिशोभसे ॥ १२ ॥ रामेणपूजितोऽगस्त्यएवंराघवंस्तुत्वास्वाश्रमंययौ ॥ १३ ॥ संसारीवनतु वस्तुतस्तथा ॥ १४ ॥ अनासक्तोऽप्यासक्तवद्विषयान्बुभुजेसद्भिःसाधुभिः ॥ १५ ॥ ततोभवदाज्ञयाकुबेरसमीपगमनानंतरंकुबेरेणत्वांप्रतिप्रेषितमितिप्राह

स्तुत्वैवंराघवंतेनपूजितःकुंभसंभवः ॥ स्वाश्रमंमुनिभिःसार्धंप्रययौहृष्टमानसः ॥ १३ ॥ रामस्तुसीतयासार्धंभ्रातृभिःसहमंत्रिभिः ॥ संसारीवरमानाथोरममाणोऽवसद्गृहे ॥ १४ ॥ अनासक्तोऽपिविषयान्बुभुजेप्रिययासह ॥ हनूमत्प्रमुखैःसद्भिर्वानरैःपरिवेष्टितः ॥ १५ ॥ पुष्पकंचागमद्राममेकदापूर्ववत्प्रभुम् ॥ प्राहदेवकुबेरेणप्रेषितंत्वामहंततः ॥ १६ ॥ जितंत्वंरावणेनादौपश्चाद्रामेणानिर्जितम् ॥ अतस्त्वं राघवंनित्यंवहयावद्वसेद्भुवि ॥१७॥ यदागच्छेद्रघुश्रेष्ठोवैकुंठंयाहिमांतदा ॥ तच्छ्रुत्वाराघवःप्राहपुष्पकंसूर्यसन्निभम् ॥ १८ ॥ यदास्मरा मिभद्रंतेतदागच्छममांतिकम् ॥ तिष्ठांतर्धायसर्वत्रगच्छेदानींममाज्ञया ॥ १९ ॥ इत्युक्त्वारामचंद्रोऽपिपौरकार्याणिसर्वशः ॥ भ्रातृभिर्मं त्रिभिःसार्धंयथान्यायंचकारसः ॥२०॥ राघवेशासतिभुवंलोकनाथेरमापतौ ॥ वसुधासस्यसंपन्नाफलवंतश्चभूरुहाः ॥ २१ ॥ जनाध र्मपराःसर्वेपतिभक्तिपराःस्त्रियः ॥ नापश्यत्पुत्रमरणंकश्चिद्राजनिराघवे ॥२२ ॥ समारुह्यविमानाग्र्यंराघवःसीतयासह ॥ वानरैर्भ्रातृ भिःसार्धंसंचचारावनिंप्रभुः ॥ २३ ॥

॥ १६ ॥ अथकुबेरवचआह । जितमिति ॥ १७ ॥ यावद्गच्छेदितिपाठेऽपियदागच्छेदित्येवार्थः । मांयाहिमांप्रत्यागच्छेत्यर्थः ॥ १८ ॥ तदाआगच्छ तिच्छेदः । आगमनोत्तरमात्मानमंतर्धायतिष्ठ यथासर्वलोकोमांदेवत्वेननजानीयादित्यर्थमेवमुक्तिः ॥ १९ ॥ २० ॥ शास्तिशिक्षयतिसतिपालयतीतियाव त् ॥ २१ २२ ॥ ततःकदाचित्पृथिव्यांसम्यग्रक्षणंवर्ततेनवेतिद्रष्टुंपुष्पकंस्मृत्वातत्रारुह्यपृथिव्यांसंचारंकुर्वन्ननेकान्यमानुषाणिकार्याणिचका रेत्याह । समारुह्येति ॥ २३ ॥

तेषांमध्येकियत्कर्माह । ब्राह्मणस्येति । अकालतःअकाले । सार्वविभक्तिकस्तसिः ॥ २४ ॥ २५ ॥ लोकानामुपदेशार्थम् । यद्यदाचरतिश्रेष्ठस्तत्तदेवेतरो जनः । इतिन्यायेन ॥ २६ ॥ २७ ॥ कथांस्वचरित्रविषयाम् ॥ २८ ॥ २९ ॥ शिक्षयन्जनानितिभगवतोधर्माचरणंलोकशिक्षार्थमेवेतिभावः ॥ ३० ॥ प्रेमप्ररूढावस्थाप्रीतिः अनुवृत्तिरानुकूल्यम् प्रश्रयस्तन्मतानुष्ठानम् दमइंद्रियनिग्रहः भावज्ञा अभिप्रायज्ञामनोहराआसीदितिशेषः ॥ ३१ ॥ आक्रीडवि

अमानुषाणिकार्याणिचकारबहुशोभुवि ॥ ब्राह्मणस्यसुतंदृष्ट्वाबालंमृतमकालतः ॥ २४ ॥ शोचंतंब्राह्मणंचापिज्ञात्वारामोमहामतिः ॥ तपस्यंतंवनेशूद्रंहत्वाब्राह्मणबालकम् ॥ २५ ॥ जीवयामासशूद्रस्यददौस्वर्गमनुत्तमम् ॥ लोकानामुपदेशार्थंपरमात्मारघूत्तमः ॥ २६ ॥ कोटिशःस्थापयामासशिवलिंगानिसर्वशः ॥ सीतांचरमयामाससर्वभोगैरमानुषैः ॥२७॥ शशासरामोधर्मेणराज्यंपरमधर्मवित् ॥ कथांसंस्थापयामाससर्वलोकमलापहाम् ॥ २८ ॥ दशवर्षसहस्राणिमायामानुषविग्रहः ॥ चकारराज्यंविधिवल्लोकवंद्यपदांबुजः ॥ २९ ॥ एकपत्नीव्रतोरामोराजर्षिःसर्वदाशुचिः ॥ गृहमेधीयमखिलमचराच्छिक्षयञ्जनान् ॥३० ॥ सीताप्रेम्णाऽनुवृत्त्याचप्रश्रयेणदमेनच ॥ भर्तुर्मनोहरासाध्वीभावज्ञासाह्रियाभिया ॥ ३१ ॥ एकदाऽऽक्रीडविपिनेसर्वभोगसमन्विते ॥ एकांतेदिव्यभवनेसुखासीनंरघूत्तमम् ॥ ३२॥ नीलमाणिक्यसंकाशंदिव्याभरणभूषितम् ॥ प्रसन्नवदनंशांतंविद्युत्पुंजनिभांबरम् ॥ ३३ ॥ सीताकमलपत्राक्षीसर्वाभरणभूषिता ॥ रामपादकराभ्यांसालालयंतीपदांबुजे ॥ ३४ ॥ देवदेवजगन्नाथपरमात्मन्सनातन ॥ चिदानंदादिमध्यांतरहिताशेषकारण ॥ ३५ ॥ देवदेवाःसमासाद्यमामेकांतेऽब्रुवन्वचः ॥ बहुशोऽर्थयमानास्तेवैकुंठागमनंप्रति ॥ ३६॥ त्वयासमेतश्चिच्छक्त्यारामस्तिष्ठतिभूतले ॥ विसृज्यास्मान्स्वकंधामवैकुंठंचसनातनम् ॥ ३७ ॥

पिनंपुष्पवाटिका ॥ ३२ ॥ ३३ ॥ रामस्यपदांबुजेकराभ्यांलालयंतीरामप्राह ॥ ३४ ॥ चिदानंदज्ञानसुखरूप आदिमध्यांतहीन आद्यंतयोरभावादेवमध्यस्याप्यभावः अशेषस्यजगतः कारण ॥ ३५ ॥ हेदेव देवाइंद्राद्याःतेतववैकुंठागमनंप्रतिबहुशोमांप्रार्थयमानावचोऽब्रुवन् ॥ ३६ ॥ निर्विषयचित्तःसविषयत्वसंपादकत्वेनाचिच्छक्तिरूपयामाययाविसृज्यत्यक्त्वास्वकंसनातनंधामवैकुंठंचहित्वा ॥ ३७ ॥

अतःप्रथमंत्वमागच्छततःसआगमिष्यत्येव शक्त्याविनाशक्तिमतःस्थातुमशक्यत्वात् ॥ ३८ ॥ ३९ ॥ ४० ॥ लोकवादरूपंमिषंकल्पयित्वाततोभीतः अपरइवपृथग्जनइवत्वांत्यजामि सर्वस्यापिस्वकल्पनारूपत्वादिममपिजनमनसिकल्पयिष्यामीत्याशयः ॥ ४१ ॥ ४२ ॥ प्रत्ययार्थंसीतानेदृशीतिविश्वासार्थम् ॥ ४३ ॥ ४४ ॥ ४५ ॥ हास्यविषयेप्रौढाश्चतेकथासुसुज्ञाः ॥ ४६ ॥ इहएतज्जन्मविषये ॥ ४७ ॥ सीतामित्यादेःप्रतीतिशेषः । तत्तद्विषयेकिं

आस्तेत्वयाजगद्धात्रिरामःकमललोचनः ॥ अग्रतोयाहिवैकुंठंत्वंतथाचेद्रघूत्तमः ॥ ३८ ॥ आगमिष्यतिवैकुंठंसनाथान्नःकरिष्यति ॥ इतिविज्ञापिताहंतैर्मयाविज्ञापितोभवान् ॥ ३९ ॥ यद्युक्तंतत्कुरुष्वाद्यनाहमाज्ञापयेप्रभो ॥ सीतायास्तद्वचःश्रुत्वारामोध्यात्वाऽब्रवीत्क्षणम् ॥ ४० ॥ देविजानामिसकलंतत्रोपायंवदामिते ॥ कल्पयित्वामिषंदेविलोकवादंत्वदाश्रयम् ॥ ४१ ॥ त्यजामित्वांवनेलोकवादाद्भीतइवापरः ॥ भविष्यतःकुमारौद्वौवाल्मीकेराश्रमांतिके ॥ ४२ ॥ इदानींदृश्यतेगर्भःपुनरागत्यमेंऽतिकम् ॥ लोकानांप्रत्ययार्थंत्वंकृत्वाशपथमादरात् ॥ ४३ ॥ भूमेर्विवरमात्रेणवैकुंठंयास्यसिद्रुतम् ॥ पश्चादहंगमिष्यामिएषएवसुनिश्चयः ॥ ४४ ॥ इत्युक्त्वातांविसृज्याथरामोज्ञानैकलक्षणः ॥ मंत्रिभिर्मंत्रतत्त्वज्ञैर्बलमुख्यैश्चसंवृतः ॥ ४५ ॥ तत्रोपविष्टंश्रीरामंसुहृदःपर्युपासत ॥ हास्यप्रौढकथासुज्ञाहासयंतःस्थिताहरिम् ॥ ४६ ॥ कथाप्रसंगात्पप्रच्छरामोविजयनामकम् ॥ पौराजानपदामेकिंवदंतीहशुभाशुभम् ॥ ४७ ॥ सीतांवामातरंवामेभ्रातॄन्वाकैकयीमथ ॥ नभेतव्यंत्वयाब्रूहिशापितोऽसिममोपरि ॥ ४८ ॥ इत्युक्तःप्राहविजयोदेवसर्वेवदंतिते ॥ कृतंसुदुष्करंसर्वंरामेणविदितात्मना ॥ ४९ ॥ किंतुहत्वादशग्रीवंसीतामाहृत्यराघवः ॥ अमर्षंपृष्ठतःकृत्वास्ववेश्मप्रत्यपादयत् ॥ ५० ॥ कीदृशंहृदयेतस्यसीतासंभोगजंसुखम् ॥ याहृताविजनेऽरण्येरावणेनदुरात्मना ॥ ५१ ॥ अस्माकमपिदुष्कर्मयोषितांमर्षणंभवेत् ॥ यादृग्भवतिवैराजातादृश्योनियतंप्रजाः ॥ ५२ ॥

शुभाशुभंवदंतीत्यर्थः शापितोऽसिस्वशपथपूर्वंपृच्छामीत्यर्थः ॥ ४८ ॥ ४९ ॥ वेश्मप्रत्यपादयत् गृहंप्रवेशितवान् ॥ ५० ॥ यादुष्टेनरावणेनहृताबलात्त्रीतासापिगृहंप्रवेशितेतिअकृत्यमेतदितिशेषः ॥ ५१ ॥ किंचैवंसतिअस्मदादीनामपियोषितांदुष्कर्ममर्षणंतद्योग्यंसहनयोग्यंभवेत्भविष्यतीत्यर्थः । तदेवद्रष्टयति । यादृगिति । नियतंनियमेनप्रजास्तादृश्योभवंति । राज्यव्यवहारानुरूपव्यवहाराभवंतीत्यर्थः ॥ ५२ ॥

॥ ५३ ५४ ॥ लोकापवादःकलंकः समानीयअंतःपुरान्निष्कास्य ॥ ५५ ॥ रथेनपुनरायाहीत्युक्त्यासीतायाअपिरथेननयनंसूचितंनतुसाक्षात्तथोक्तम् । तस्यांक्रोधातिशयंद्योतयितुमेवमांहतवानसि । अत्रार्थेविपरीतोक्तौमद्वधप्रयुक्तप्रायश्चित्तमित्यर्थः ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ अतिमुग्धवत्अत्यज्ञ



श्रुत्वातद्वचनंरामःस्वजनान्पर्यपृच्छत॥तेऽपिनत्वाऽब्रुवन्राममेवमेतन्नसंशयः ॥५३॥ ततोविसृज्यसचिवान्विजयंसुहृदस्तथा॥ आहूयल
क्ष्मणंरामोवचनंचेदमब्रवीत् ॥५४॥ लोकापवादस्तुमहान्सीतामाश्रित्यमेऽभवत् ॥ सीतांप्रातःसमानीयवाल्मीकेराश्रमांतिके ॥ ५५ ॥
त्यक्त्वाशीघ्रंरथेनत्वंपुनरायाहिलक्ष्मण॥वक्ष्यसेयदिवाकिंचित्तदामांहतवानसि॥५६॥ इत्युक्तोलक्ष्मणोभीत्याप्रातरुत्थायजानकीम्॥सु
मंत्रेणरथेकृत्वाजगामसहसावनम् ॥५७॥ वाल्मीकेराश्रमस्यांतेत्यक्त्वासीतामुवाचसः॥लोकापवादभीत्यात्वांत्यक्तवान्राघवोवने॥५८॥
दोषोनकश्चिन्मेमातर्गच्छाश्रमपदंमुनेः ॥ इत्युक्त्वालक्ष्मणःशीघ्रंगतवान्रामसन्निधिम् ॥ ५९ ॥ सीताऽपिदुःखसंतप्ताविललापातिमुग्ध
वत् ॥ शिष्यैःश्रुत्वाचवाल्मीकिःसीतांज्ञात्वासदिव्यदृक् ॥६०॥ अर्घ्यादिभिःपूजयित्वासमाश्वास्यचजानकीम् ॥ ज्ञात्वाभविष्यंसकल
मार्पयन्मुनियोषिताम् ॥ ६१ ॥ तास्तांसंपूजयंतिस्मसीतांभक्त्यादिनेदिने ॥ ज्ञात्वापरात्मनोलक्ष्मींमुनिवाक्येनयोषितः ॥ सेवांचक्रुः
सदातस्याविनयादिभिरादरात ॥६२॥ रामोऽपिसीतारहितःपरात्माविज्ञानदृक्केवलआदिदेवः॥ संत्यज्यभोगानखिलान्विरक्तोमुनिव्रतो
ऽभून्मुनिसेवितांघ्रिः ॥ ६३ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेउत्तरकांडेचतुर्थःसर्गः ॥ ४ ॥



वत् शिष्यैः शिष्यमुखैः ॥ ६० ॥ मुनियोषितामार्पयत्एषासर्वथारक्षणीयेतितासांहस्तेदत्तवान् ॥ ६१ ॥ परात्मनोविष्णोः ॥ ६२ ॥ मुनिसेवितांघ्रिः मुनिभिःसेवितावंघ्रीयेनेतिवा ॥ ६३ ॥ इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादेचतुर्थः सर्गः ॥ ४ ॥

अथभगवान्शिवोरामलक्ष्मणसंवादमुखेनपरतत्त्वमुपदेष्टुमाह । ततइति । जगतांयानिमंगलानिअनंदास्तेषामुपजीव्यभूतंमंगलंब्रह्मानंदःसएवात्मास्वरूपंते न । तस्यैवानंदस्यान्यानिमात्रामुपजीवंति । इतिश्रुतेः । मंगलानांचमंगलम् । इतिस्मृतेश्च । किंचजगतांमंगलंकल्याणंयस्मात्तादृशकल्याणरूपआत्मामू र्तिस्तयाउत्तमांश्रोत्रादीनांमोक्षदत्वेनात्युत्तमांरामायणकीर्तिवाल्मीक्यादिकृतनानाविधरामायणप्रवर्तिकांरावणवधादिजांकीर्तिविधाय स्थितो रघूत्तमः । ततःसी तापरित्यागानंतरंपूर्वैःस्ववंशजैराचरितंप्रजापालनसत्कथाश्रवणादिकंकेवलंतत्पूर्वजैरेवाचरितमिति न किंत्वन्यैरपि राजर्षिश्रेष्ठैर्यथाऽभिसेवितं तथाचचारकृत वान् ॥ १ ॥ उदारागुरुदेवविश्वासलक्षणमहागुणवती । यद्वा । उदारादानशीलाबुद्धिर्यस्यतेन पुरातनीःप्राचीनराजसंबंधिनीःशुभाःधर्माधर्मनिर्णेत्रीः प्रम त्तस्यस्वगोमंडलमिश्रितब्राह्मणगोदानात्प्रमत्तस्यनृगस्यराज्ञोद्विजस्यशापात्तिर्यक्त्वमाह । तेनाज्ञानकृतब्रह्मस्वापहारेणपरमधार्मिकस्याप्यीदृश्यवस्थेतिसर्वथा

श्रीमहादेवउवाच॥ततोजगन्मंगलमंगलात्मनाविधायरामायणकीर्तिमुत्तमाम्॥चचारपूर्वाचरितंरघूत्तमोराजर्षिवर्यैरभिसेवितंयथा॥ १ ॥ सौमित्रिणापृष्टउदारबुद्धिनारामःकथाःप्राहपुरातनीःशुभाः ॥ राज्ञःप्रमत्तस्यनृगस्यशापतोद्विजस्यतिर्यक्त्वमथाहराघवः ॥२॥ कदाचि देकांतउपस्थितंप्रभुंरामंरमालालितपादपंकजम् ॥ सौमित्रिरासादितशुद्धभावनः प्रणम्यभक्त्याविनयान्वितोऽब्रवीत् ॥ ३ ॥ त्वंशुद्धबो धोऽसिहिसर्वदेहिनामात्माऽस्यधीशोऽसिनिराकृतिःस्वयम् ॥ प्रतीयसेज्ञानदृशांमहामतेपादाब्जभृंगाहितसंगसंगिनाम् ॥ ४ ॥

ब्रह्मस्वविमुखताधर्मइतिसूचितम् ॥ २ ॥ एकांतेविजनेउपस्थितंप्राप्तम् विनयान्वितःसन्भक्त्यागुरुरयमितिबुद्ध्याप्रणम्य । अनेनगुरूपसदनप्रकारउक्तः । आसादितंशुद्धंभावनंभावनांतःकरणंयेनसः । शुद्धांतःकरणइतियावत् । भगवदुक्तसत्कथाश्रवणेनशुद्धांतःकरणइत्यर्थः ॥ ३ ॥ हेमहामते महतीसर्वविषयामति र्यस्यतस्यसंबोधनम् । त्वंशुद्धबोधोऽसि अनवच्छिन्नचैतन्यरूपोऽसि सर्वदेहिनामात्मासि । जीवानांतत्प्रातिबिंबत्वात् । अधीशोऽसि । अंतर्यामित्वात् । नियंतासि । वास्तवभेदाभावाच्चसर्वात्मत्वम् । औपाधिकभेदाच्चनियंतृनियम्यभावोबोध्यः । निराकृतिरस्मदादिवत्स्वार्जितकर्माधीनशरीराकृतिरहितः । नन्वेवंसर्वैःकथमेवंनज्ञायतेऽतआह । ज्ञानदृशांस्वयमेवंप्रतीयसे । ज्ञायतेऽनेनेतिज्ञानंवेदांतवाक्यजातंतदेवदृक्दर्शनसाधनंयेषांतेषामितिसंबंधसामान्येषष्ठी । वैरित्यर्थः । तादृशदृग्लाभश्चत्वद्भक्त्यधीनइत्याह । पादेति । त्वच्चरणकमलयोर्भृंगवदाहितःकृतःसंगोयेनतादृशांतःकरणसंगवताम् त्वच्चरणकमलसक्तांतः करणवतामित्यर्थः ॥ ४ ॥

अथप्रार्थयते । अहमिति । भवस्यसंसारस्यापवर्गोनिवृत्तिर्यस्मात्तादृशंतवपदांबुजंप्रपन्नोऽस्मि शरणंप्राप्तोऽस्मि योगिभावितंयोगिभिःसंसारमुक्तयेभावितम् । अनेनतस्यभवापवर्गत्वेसदाचारःप्रमाणमुक्तम् । प्रार्थनीयमाह । अपारवारिधिरूपंयदज्ञानंसंसारमूलकारणंयथासुखमक्लेशेनतरिष्यामितथामामनुशाधिशिक्षय । अपारवारिधिमित्यनेनसपारप्रसिद्धसमुद्राद्व्यतिरेकउक्तःअशक्यतरणताऽनेनध्वनिता ॥ ५ ॥ अथोत्तरमवतारयति । श्रुत्वेति । रामः सौमित्रिवचः श्रुत्वा । अथशब्दोवाक्यालंकारे । तदाश्रवणाव्यवहितकालेएवप्रपन्नानांभक्तानामार्तिंसंसारदुःखंहरतितादृशः प्रसन्नाभ्रमादिहीनाभक्तानुग्रहपराचधीर्यस्यसः क्षितिपालानांराज्ञांभूषणभूतोज्ञानरूपतमसउपशांतयेतदर्थम् । संधिरार्षः । श्रुतिभिः । तमेवविदित्वातिमृत्युमेति । इत्यादिश्रुतिभिःप्रपन्नंतत्फलकत्वेनबोधितंविज्ञानमात्मतत्त्वज्ञानमितिसामान्यतःप्रथमंप्राह ॥ ६ ॥ अथतादृशज्ञानप्राप्तयेक्रमेणबहिरंगांतरंगसाधनान्याह । आदाविति । स्ववर्णाश्रमेषुशास्त्रेण

अहंप्रपन्नोऽस्मिपदांबुजंप्रभोभवापवर्गंतवयोगिभावितम् ॥ यथांजसाज्ञानमपारवारिधिंसुखंतरिष्यामितथानुशाधिमाम् ॥ ५ ॥ श्रुत्वाऽथसौमित्रिवचोऽखिलंतदाप्राहप्रपन्नार्तिहरःप्रसन्नधीः ॥ विज्ञानमज्ञानतमोपशांतयेश्रुतिप्रपन्नंक्षितिपालभूषणः ॥ ६ ॥ आदौस्ववर्णाश्रमवर्णिताःक्रियाःकृत्वासमासादितशुद्धमानसः ॥ समाप्यतत्पूर्वमुपात्तसाधनःसमाश्रयेत्सद्गुरुमात्मलब्धये ॥ ७ ॥ क्रियाशरीरोद्भवहेतुरादृताप्रियाप्रियौतौभवतःसुरागिणः ॥ धर्मेतरौतत्रपुनःशरीरकंपुनःक्रियाचक्रवदीर्यतेभवः ॥ ८ ॥

वर्णितायाःक्रियानित्यनैमित्तिकयज्ञदानादिरूपास्ताःकृत्वासमासादितशुद्धमानसः प्राप्तांतःकरणशुद्धिः तत्पूर्वमुपात्तसाधनः तदनुष्ठानपूर्वकमेवउपात्तानिसाधनानिशमदमादीनियेनतादृशः । अनेनकर्मणांबहिरंगत्वंशमादीनामंतरंगत्वंस्फुटमेवोक्तम् । किंच । शमदमवैराग्यदार्ढ्यपर्यंतंकर्मानुष्ठानमेवेतिसूचितम् । ततस्तत्कर्मानुष्ठानंसमाप्यत्यक्त्वा । संन्यस्येतियावत् । आत्मलब्धयेआत्मज्ञानायतत्फलकायतत्त्वमस्यादिवाक्यार्थविचारायसद्गुरुंश्रोत्रियंब्रह्मनिष्ठमित्यादिलक्षणलक्षितंसमाश्रयेत् सेवेत । अनेनव्युत्पत्तिबलेनस्वयमेववाक्यार्थविचारःक्रियमाणोनफलायेतिसूचितम् ॥ ७ ॥ संसारस्यभ्रमिमच्चक्ररूपत्वात्तन्निवृत्तेश्चतत्कारणाज्ञाननिवृत्तिमूलकत्वादज्ञाननिवृत्तेश्चतत्त्वज्ञानैकसाध्यत्वात्तत्त्वज्ञानस्यचवेदांतविचारसाध्यत्वात्तदर्थंगुरुसमाश्रयणमित्याह । क्रियेति । भवःसंसारश्चक्रवद्विपरिवर्तमानईर्यतेकथ्यते । तदेवोपपादयति । आदृताआदरपूर्वंपूर्वजन्मार्जिताक्रियाएतस्यशरीरोद्भवस्यजन्मनोहेतुः तत्रजन्मनिसुरागिणोविषे

याभिलाषवतः तौ शास्त्रप्रसिद्धौ धर्मेतरौ धर्माधर्मौ प्रियाप्रियौसुखदुःखजनकौभवतः कस्याचिदधर्मेएवसुखत्वबुद्ध्याप्रवृत्तिः कस्यचिद्धर्मेएवंकदाचिदित्यप्यूह्यम् ।
एवंतत्रोत्पादितकर्मणापुनःशरीरंपुनः क्रियाइत्येवंचक्रवद्विपरिवृत्तिः । यथाचक्रेभ्राम्यमाणेऽधोभागः कदाचिदुपरिउपरितनश्चाधः पुनरुपरिपुनरधएवंजन्मक्रिय
योर्जन्यजनकभावेनपरिवृत्तिरितिबोध्यम् ॥ ८ ॥ तस्यचाज्ञानमेवमूलमित्याह । अज्ञानमेवेति । अत्रविधौसंसारनिवृत्तिलक्षणेकर्तव्येऽर्थेतद्धानमेवमूलका
रणत्वादज्ञानहानमेवविधीयते । साधनत्वेनेतिशेषः । ननुकर्मैवतन्नाशकमस्तुकिंज्ञानेनेत्याशंक्याह । विद्यैवज्ञानमेवतन्नाशविधौमूलाज्ञाननाशनेपटीयसीसम
र्था । नकर्मसमर्थमितिशेषः । यतस्तत्तज्जमज्ञानजम् । आत्मस्वरूपाज्ञानजन्यदेहाद्यभिमानजन्यत्वात्कर्मणोज्ञानजन्यत्वंबोध्यम् । ननुतज्जन्यस्यापितन्नाशकत्वंवृ
श्चिककर्कटयादौदृष्टमित्याशंक्यतज्जन्यत्वंवाननाशकत्वेप्रयोजकंकिंतुसविरोधत्वमेवेत्याह । यत्सविरोधंतदीरितंनाशकमुक्तमित्यर्थः ॥ ९ ॥ अतएवकर्मणानाज्ञा

अज्ञानमेवास्यहिमूलकारणंतद्धानमेवात्रविधौविधीयते ॥ विद्यैवतन्नाशविधौपटीयसीनकर्मतज्जंसविरोधमीरितम् ॥ ९ ॥ नाज्ञानहानिर्न
चरागसंक्षयोभवेत्ततःकर्मसदोषमुद्भवेत् ॥ ततःपुनःसंसृतिरप्यवारितातस्माद्बुधोज्ञानविचारवान्भवेत् ॥ १० ॥ ननुक्रियावेदमुखेनचो
दितायथैवविद्यापुरुषार्थसाधनम् ॥ कर्तव्यताप्राणभृतःप्रचोदिताविद्यासहायत्वमुपैतिसापुनः ॥ ११ ॥

नहानिरित्याह । नाज्ञानेत्यादि । यतःकर्मणाविरोधाभावान्नाज्ञाननाशोनापिरागनाशोवस्तुतः कर्मानुष्ठानात्पुनः सदोषंक्षयिफलत्वादिदोषविशिष्टंकर्मैवोद्भवेत्
कर्मणश्चपुनः संसारएवेविनमुक्तिप्रत्याशा ततस्तस्माद्बुधोविवेकीज्ञानविचारवान् ज्ञायतेऽनेनेतिज्ञानंवेदांतवाक्यंतद्विचारवान्भवेत् ॥ १० ॥ इदानींज्ञानस्यै
वमोक्षहेतुत्वंवक्तुंज्ञानकर्मसमुच्चयवादंदूषणायानुवदतिसार्धेन । नन्विति । नन्वितिशंकायाम् । यथाविद्यावेदमुखेनश्रुतिपुराणलक्षणेन । ब्रह्मविदाप्नोतिपर
म् । इत्यादिनापुरुषार्थसाधनमुक्ता तथा । उभाभ्यामेवपक्षाभ्यांयथाखेपक्षिणांगतिः । तथैवज्ञानकर्मभ्यांप्राप्यतेब्रह्मशाश्वतम् । इत्यादिनाक्रियाऽपि
तत्साधनत्वेनोक्ता । किंच क्रियाकर्तव्यता तृतीयार्थेप्रथमा कर्तव्यतयाआवश्यकेकृत्येअवश्यकर्तव्यतयाप्रचोदितानित्यनैमित्तिकरूपा एवंचतदकरणेप्रत्यवायो
त्पत्त्याज्ञानोत्पत्तिरेवनस्यात् तस्मात्सापुनर्विद्यायाःसहायत्वंप्राप्नोतिघटेजननीयेयथादंडचक्रादीनांपरस्परसहायता ॥ ११ ॥

कर्तव्यतेतिस्वोक्तमेवविवृणोति । कर्मेति । वीरहावाएषदेवानांयोऽग्निमुद्वासयतेयावज्जीवमग्निहोत्रंजुहोति । इतिश्रुतिः । तत्रसिद्धांतीशंकते । नन्विति ।
ध्रुवंस्थिरंकार्यमिदंपुरुषार्थमोक्षजनिकाविद्यायतः स्वतंत्राविनाऽपिसहायेन स्वकार्यसंपादनेसमर्था । यथातेजस्तिमिरनिवर्तनसमर्थंमनसाऽपिकिंचित्सहायभूतं
वस्तुनापेक्षते तथाफलेजननीयेसहायांतरसंभावनाऽपिनेतिभावः । अनेनविद्याफलजननेनिरपेक्षास्वतंत्रत्वात्तेजोवदित्यनुमानंसूचितम् ॥ १२ ॥ समुच्चयवा
दीपरिहराति । नेति । त्वदुक्तंनेत्यर्थः । सत्यकार्यः । अक्षय्यंहवैचातुर्मास्ययाजिनःसुकृतंभवति । इत्यादिवेदेनबोधितःस्थिरकार्योऽपिअध्वरः । यथाऽन्या
नपिकारकादिकान् आरादुपकारकप्रयाजाद्यंगानिदेशकालादीनिचप्रकांक्षते तथाविद्यापि अग्निहोत्रंजुहोतिइत्यादिविधिवाक्यतःतत्समूहेनप्रकाशितैः कर्मभिः
सहितैवमुक्तयेविशिष्यतइत्यर्थः । विद्याफलदानेकर्मापेक्षा । अंगित्वात । प्रयाजाद्यंगापेक्षदर्शादिवदितिसत्प्रतिपक्षानुमानमनेनसूचित्तम् ॥ १३ ॥ तदनूद्यसिद्धां

कर्मांकृतौदोषमापिश्रुतिर्जगौतस्मात्सदाकार्यमिदंमुमुक्षुणा ॥ ननुस्वतंत्राध्रुवकार्यकारिणीविद्यानकिंचिन्मनसाऽप्यपेक्षते ॥ १२ ॥ नस
त्यकार्योऽपिहियद्वदध्वरःप्रकांक्षतेऽन्यानपिकारकादिकान् ॥ तथैवविद्याविधितःप्रकाशितैर्विशिष्यतेकर्मभिरेवमुक्तये॥१३॥केचिद्वदंती
तिवितर्कवादिनस्तदप्यसद्दृष्टविरोधकारणात् ॥ देहाभिमानादभिवर्धतेक्रियाविद्यागताहंकृतितःप्रसिद्धयाति ॥ १४ ॥ विशुद्धविज्ञान
विरोचनांचिताविद्याऽत्मवृत्तिश्चरमेतिभण्यते ॥ उदेतिकर्माखिलकारकादिभिर्निहंतिविद्याऽखिलकारकादिकम् ॥ १५ ॥

तीदूषयति । केचिदिति । यत्केचिद्वितर्कवादिनइतिज्ञानकर्मणीसमुच्चित्यमुक्तिसाधनंवदंति । तदप्यसत । यथाकेवलंकर्ममोक्षसाधनमित्यसत्तथातन्मीलि
तमित्यप्यसत् । तत्रहेतुर्दृष्टविरोधकारणात् दृष्टोयोविरोधः सर्वलोकदृष्टविरोधरूपात्कारणात्तदसदित्यर्थः । विरोधमेवाह । देहाभिमानात्क्रियावर्धते
अनात्मनिदेहादावात्मत्वाभिमानात्क्रियावृद्धिः विद्यातुगताहंकृतितः गताहंकृतिर्यस्यतस्यनष्टाहंकृतेः प्रसिद्धयाति । सार्वविभक्तिकस्तासिः । एवंचाहं
कारसत्तामूलकत्वात्क्रियाज्ञानयोः समुच्चयोविरुद्धइत्यर्थः ॥ १४ ॥ अथपूर्वपक्ष्युक्तानुमानंदूषयन्विद्यास्वरूपमाह । विशुद्धंविज्ञानंयेभ्यस्तेषांवेदां
तवाक्यानांयद्विशेषेणरोचनंरलयोरभेदादालोचनंविचारस्तेनांचिताप्रापितायाचरमा आत्मवृत्तिर्ब्रह्माकारांतःकरणवृत्तिः साविद्येतिभण्यतेविद्वद्भिरितिशेषः पुनः
समुच्चयवारणायविद्याकर्मणोर्वैषम्यमाह । कर्मयज्ञादिअखिलकारकादिभिःकर्तव्यकर्मादिभिरंगैश्चसहितंसदुदेति फलोन्मुखंभवति विद्यापुनरखिलाकारकादि

निहंति तत्रकर्तृत्वादिबुद्धिंनिहंति । सकलव्यापारपरित्यागेनब्रह्मणिसमाप्तिर्हिविद्या अतःस्वोत्पत्तौचित्तशुद्धिद्वाराकर्मसापेक्षास्वफलेजनयितव्येतन्निरपेक्षैवा
न्यथाविद्यास्वरूपस्यैवभंगापत्तेरितिपूर्वपक्ष्युक्तहेतोरसिद्धिरितिभावः ॥ १५ ॥ उपसंहरन्मुमुक्षोर्वृत्तिप्रकारमाह । तस्मादिति । विद्याविरोधाद्विद्यायाःकर्मणासह
विरोधेनसमुच्चयोनभवेत्तस्मात्सुधीर्मुमुक्षुरशेषतःकर्मत्यजेत् । काम्यंतुसर्वथात्याज्यमेवनित्यनैमित्तिकमपियावच्चित्तशुद्धिकर्तव्यमेव ततोऽपिब्रह्मणिचित्तस्थैर्यपर्यंतं
कर्तव्यमेव ततस्तदनुसंधानंप्रतिबंधकत्वात्प्रयोजनाभावाच्चतदपित्याज्यमेवेतिभावः इदानींमुमुक्षुकर्तव्यमाह । निवृत्ताःसर्वेषामिंद्रियाणां गोचराविषयाःशब्दादयो
यस्मात्तादृशःसन् आत्मनःसच्चिदानंदस्यानुसंधानमेवपरमयनंप्राप्यंयस्यतथाविधोभवेत् अत्रेंद्रियप्रत्याहारःकर्तव्यत्वेनोक्तस्तेनतत्पूर्वंप्राणायामाद्यर्थादाक्षिप्तम्
॥ १६ ॥ रागिविरागिभेदेनकर्मणांकर्तव्यतेत्याह । यावदिति । माययाविद्ययाशरीरादिष्वनात्मसुआत्मधीरहंकर्तेत्यादिरूपायावद्वर्ततेतावद्विधिवादकर्मणां

तस्मात्त्यजेत्कार्यमशेषतःसुधीर्विद्याविरोधान्नसमुच्चयोभवेत्॥आत्मानुसंधानपरायणःसदानिवृत्तसर्वेन्द्रियवृत्तिगोचरः ॥ १६॥ यावच्छ
रीरादिषुमाययाऽऽत्मधीस्तावद्विधेयोविधिवादकर्मणाम् ॥ नेतीतिवाक्यैरखिलंनिषिद्ध्यतज्ज्ञात्वापरात्मानमथत्यजेत्क्रियाः ॥ १७ ॥
यदापरात्मात्मविभेदभेदकंविज्ञानमात्मन्यवभातिभास्वरम् ॥ तदैवमायाप्रविलीयतेऽञ्जसासकारकाकारणमात्मसंसृतेः ॥१८॥

विधिर्यजेतेत्यादिर्वादःकर्तव्यताबोधकोयेषांकर्मणांविधेयोवशवर्तीतत्कर्मकर्ताभवेत् । तदपगमेतुतदखिलंजगन्नेति । इतिवाक्यैः । अथातआदेशोने
तिनेति । इत्यादिवाक्यैर्निषिध्यमिथ्यात्वेननिर्णीयतद्विलक्षणतयासत्यत्वेनपरात्मस्वरूपंज्ञात्वाक्रियास्त्यजेत् निरूपितमेतत् ॥ १७ ॥ आत्मविज्ञानेसत्य
वश्यमविद्यानिवर्ततइत्याह । यदेति । आत्मनिशुद्धेंऽतःकरणेपरमात्मनईशस्यात्मनोजीवस्यचयोविभेदोमायांतःकरणरूपोपाधिद्वयकृतोविभेदोभेदस्तस्यभेदकं
नाशकंभास्वरंप्रकाशशीलंयद्विज्ञानमितरवृत्त्युपमर्दनपूर्वकंब्रह्माकाराऽखंडावृत्तिर्यदाऽवभाति असंभावनादितिरस्कारेणोदेति तदैव सकारकाजन्मांतरप्रापककर्म
सहितामायातत्त्जीवोपाधिभूताविद्यांऽञ्जसाझटितिप्रविलीयतेनश्यति । ननुतन्नाशेऽपिसंसारनाशःकथमतोमायाविशेषणम् । आत्मसंसृतेःकारणंसंसारस्योपादान
कारणमेवंचतन्नाशेकार्यनाशोभवत्येवेतिभावः ॥ १८ ॥

उक्तमेवार्थं पुनर्दार्ढ्यायाह । श्रुतीति । तत्त्वमसीत्यादिश्रुतिरूपैः प्रमाणैस्तज्जनितज्ञानेन नाशितासाविद्याकथमपिकार्यकारिणीभविष्यतीति काकुरत्र । सर्वथानेत्यर्थः । असतःकार्यकारित्वासंभवादितिभावः । पुनश्चतस्यानोद्भवइत्याह । विज्ञानमात्रादिति । अमलाद्द्वितीयतःशुद्धाद्वितीयात्मविषयकाद्वि ज्ञानमात्रादितरासहकृतान्निदिध्यासनपरिपाकजज्ञानाद्यतोनष्टातस्मात्सापुनर्नभविष्यति रज्ज्वज्ञानमूलकस्य सर्पस्य रज्जुज्ञानेन निवृत्तस्ययथानपुनरुत्पत्तिरिति भावः ॥ १९ ॥ विद्यायाइतरनिरपेक्षायाएवमोक्षकारणत्वमुक्तंयुक्तिपूर्वकंपुनःकथयतिश्रोतृदार्ढ्याय । यदीति । यदिनष्टातत्त्वज्ञाननाशितासानपुनः प्रसूयतेनोत्पद्यतेतदाकारणाभावादहंमतिःकथंभवेत् । कथमपिनभवेदित्यर्थः । तदभावाच्चतत्कालेकर्माभावइतिस्वफलजननेसास्वतंत्राइतरनिरपेक्षैवनाकिम प्यपेक्षते द्वितीयस्यासंभवात् । अतःकेवलासहायैवविमोक्षायविभातितत्फलिकाभवतीत्यर्थः ॥ २० ॥ अत्रार्थेश्रुतिरपिप्रमाणमित्याह । सेति । साप्र सिद्धा । नकर्मणानप्रजयाधनेनत्यागेनैकेअमृतत्वमानशुः । इत्यादिकातैत्तिरीयश्रुतिःप्रशस्तानामर्थवादैःप्राशस्त्येनबोधितानामपिकर्मणांन्यासंत्यागंसादरंस्फु

श्रुतिप्रमाणाभिर्विनाशिताचसाकथंभविष्यत्यपिकार्यकारिणी ॥ विज्ञानमात्रादमलाद्वितीयतस्तस्मादविद्यानपुनर्भविष्यति ॥ १९ ॥
यदिस्मनष्टानपुनःप्रसूयतेकर्ताऽहमस्येतिमतिःकथंभवेत् ॥ तस्मात्स्वतंत्रानकिमप्यपेक्षतेविद्याविमोक्षायविभातिकेवला॥२०॥सातैत्ति
रीयश्रुतिराहसादरंन्यासंप्रशस्ताखिलकर्मणांस्फुटम् ॥ एतावदित्याहचवाजिनांश्रुतिर्ज्ञानंविमोक्षायनकर्मसाधनम् ॥ २१ ॥ विद्यासम
त्वेनतुदार्शितस्त्वयाक्रतुर्नदृष्टांतउदाहृतः समः ॥ फलैःपृथक्त्वाद्बहुकारकैः क्रतुःसंसाध्यतेज्ञानमतोविपर्ययम् ॥ २२ ॥

टमाह । नतुकर्मसमुच्चयमित्यर्थः । तथावाजिनांवाजसनेयिनाम् । एतावदरेखल्वमृतत्वम् । इत्यादिका ज्ञानंविमोक्षायसाधनंनकर्मेत्येतदाह ॥ २१ ॥ अहंकारत्यागरूपकारणवैषम्यात्क्रियाज्ञानयोर्वैषम्यमुक्त्वाफलप्रयुक्तमपिवैषम्यमाह । विद्येति । हेसमुच्चयवादिन्त्वयाक्रतुरग्निष्टोमादिर्विद्यासमत्वेनदर्शि तःपरंतुसमोदृष्टांतोनोदाहृतः । अनेनक्रतुर्विद्यासमः श्रुतिबोधितकर्तव्यताकत्वादित्यनुमानंनिरस्तम् । दृष्टांताभावात् । अन्वय्येवानुमानंनव्यतीरेकीति भावः । एतच्चाकरेविस्तरेणप्रपंचितम् । ननुविद्याकर्मणीसमे एकफलत्वाच्चक्रदंडादिवदित्यनुमानमितिचेत्तत्राह । फलैःपृथक्त्वात् । षष्ठ्यर्थेतृतीया । फलानांभेदादित्यर्थः । एवंचस्वरूपासिद्धोहेतुरितिभावः । समानकारकत्वमपिहेतुर्नेत्याह । क्रतुर्बहुभिःकारकैरहंममताभिमानरूपैरांतरैर्बाह्यैश्चदेशकालादि नियमैश्चसाध्यते ज्ञानंत्वतोविपर्ययवदतोनतयोःसाम्यमितिभावः ॥ २२ ॥

नन्वकरणेप्रत्यवायभियाकर्मकार्यमितिचेन्नेत्याह । सप्रत्यवायइति । कर्मत्यागेनहिनिश्चयेनाहंप्रत्यवायसहितोभविष्यामीत्येवंशुद्धात्मानिअनात्मधर्मस्यधारि
ज्ञस्यतत्त्वज्ञानाविकलस्यप्रसिद्धा । नतुतत्त्वदर्शिनः । तस्याहंबुद्धेरभावात् । पापादेरनात्मधर्मतानिश्चयाच्च । तस्माद्बुधैःकर्मक्रियात्मभिः । षष्ठयर्थेतृतीया ।
क्रियाफलसक्तचित्तानांविधानतोविधानेनेतिकर्तव्यतयायुक्तंकर्मविधिभिरवश्यकर्तव्यतयाबोधितमपित्याज्यमित्यर्थः ॥ २३ ॥ अथविरक्तस्यकार्यमाह ।
श्रद्धेति । गुरुशास्त्रयोर्विश्वासःश्रद्धातदन्वितोबुभुत्सुःशुद्धमानसोऽपि निष्कामकर्मानुष्ठानाच्छुद्धमानसश्चगुरोःप्रसादाल्लब्धतत्त्वमसीतिवाक्यतःश्रुतमात्मजीव
योरैकात्म्यंविज्ञायमनननिदिध्यासनपरिपाकाभ्यांसाक्षात्कृत्य । चएवार्थः । साक्षात्कृत्यैवसुखीभवेत् । सकलदुःखहीनोभवेदित्यर्थः । अप्रकंपनःविषया
भिलाषाक्षोभितांतःकरणः ॥ २४ ॥ महावाक्यंविवरीतुंवाक्यार्थस्यपदार्थबोधपूर्वकत्वमाह । आदाविति । विधानतःभ्रमप्रमादराहित्येनवाक्यार्थविज्ञानस्यविधा

सप्रत्यवायोह्यहमित्यनात्मधीरज्ञप्रसिद्धानतुतत्त्वदर्शिनः ॥ तस्माद्बुधैस्त्याज्यमपिक्रियात्मभिर्विधानतःकर्मविधिप्रकाशितम् ॥ २३ ॥
श्रद्धान्वितस्तत्त्वमसीतिवाक्यतोगुरोःप्रसाददपिशुद्धमानसः ॥ विज्ञायचैकात्म्यमथात्मजीवयोःसुखीभवेन्मेरुरिवाप्रकंपनः ॥ २४ ॥
आदौपदार्थावगतिर्हिकारणंवाक्यार्थविज्ञानविधौविधानतः ॥ तत्त्वंपदार्थौपरमात्मजीवकावसीतिचैकात्म्यमथानयोर्भवेत् ॥ २५ ॥
प्रत्यक्परोक्षादिविरोधमात्मनोर्विहायसंगृह्यतयोश्चिदात्मताम् ॥ संशोधितांलक्षणयाचलक्षितांज्ञात्वास्वमात्मानमथाद्वयोभवेत् ॥२६ ॥

वुत्पत्तौआदौप्रथमंमुख्यमितियावत् । पदार्थावगतिःकारणम् । हिप्रसिद्धं तस्यपदत्रयंतत्त्वमसीति । तत्रतत्पदार्थःपरमात्मासर्वज्ञत्वादिगुणः त्वंपदार्थोजी
वःअनयोस्तत्त्वंपदार्थयोरैकात्म्यंतद्बोधकमसीतिपदम् ॥ २५ ॥ ननुसर्वज्ञत्वादिगुणस्येशस्यकिंचिज्ज्ञत्वधर्मवताजीवेनैकात्म्यंविरुद्धमित्याशंक्याह । प्र
त्यगिति । अहंबुद्धिवेद्यत्वंप्रत्यक्त्वंजीवधर्मः परोक्षत्वमीशधर्मस्तदादिधर्मकृतमात्मनोःपरमात्मजीवात्मनोर्विरोधंविहायत्यक्त्वातयोःसंशोधितांयुक्तिभिः
सम्यग्विचारितांतत्त्वंपदाभ्यांशक्त्यभावेऽपिवक्ष्यमाणप्रकारयालक्षणया लक्षितां चिदात्मतां संगृह्य तत्त्वंपदोपास्थितिविषयांकृत्वा स्वमात्मानंतथाज्ञात्वाऽथएका
त्मज्ञानानंतरमद्वयोभवेत् । चित्स्वरूपतांप्राप्तइवभवेत् । पूर्वमपितत्स्वरूपएवविस्मृतकंठचामीकरन्यायेनचतत्प्राप्तिरतइवेत्युक्तम् । अयंभावः । तत्त्वं

पदयोर्द्वावर्थौ वाच्योलक्ष्यश्च तत्रतत्पदस्यमायोपाधिःसर्वज्ञत्वादिविशिष्टोवाच्यः त्वंपदस्यापि किंचिज्ज्ञत्वादिविशिष्टो मायाकार्याविद्योपाधिरविद्यावदंतःकरणो पाधिर्वाच्यः उभयोरपिविशेषणांशत्यागेनशुद्धश्चिदात्मालक्ष्यःतत्रवाच्ययोर्विरुद्धधर्मकत्वादैक्यासंभवेऽपिलक्ष्ययोरैक्यंनिर्बाधमेवेति ॥ २६ ॥ उक्तलक्ष णास्वरूपमाह । एकात्मकत्वादितिजहतीलक्षणाजहत्स्वार्थलक्षणायथागंगायांघोषइत्यत्रगंगापदार्थस्यप्रवाहस्यघोषाधारतानुपपत्त्यासर्वथातत्परित्यागेनती ररूपार्थलक्षणा साप्रकृतेन एकात्मत्वात् । विशेष्यांशस्यैकत्वात्सर्वथास्वार्थत्यागाभावात् । तथाजहल्लक्षणताजहत्स्वार्थलक्षणावत्त्वमपिअत्रनसंभवति । यथाकाकेभ्योदधिरक्ष्यतामित्यादौकाकपदस्यस्वार्थात्यागेनैवदध्युपघातकेलक्षणा । सापि न । विरोधतःविशेषणत्यागेनसर्वथास्वार्थत्यागाभावात् । अतो भागलक्षणाजहदजहल्लक्षणायुज्यते । अदोषतःपूर्वोक्तदोषाभावात् । विशेष्यांशस्यात्यागाद्विशेषणांशस्यत्यागाच्च । तत्रदृष्टांतः । सोऽयंपदार्थाविव । यथासोऽयं देवदत्तइत्यत्रतद्देशादिविशिष्टोऽतीतानुभवविषयोवातत्पदार्थः एतद्देशादिविशिष्टोऽनुभूयमानोवेदंशब्दार्थः । तयोश्चविरुद्धविशेषणकत्वादैक्यासंभवेनदेशादि

एकात्मकत्वाज्जहतीनसंभवेत्तथाऽजहल्लक्षणताविरोधतः ॥ सोऽयंपदार्थाविवभागलक्षणायुज्येततत्त्वंपदयोरदोषतः ॥२७॥ रसादिपंची कृतभूतसंभवंभोगालयंदुःखसुखादिकर्मणाम् ॥ शरीरमाद्यंतवदादिकर्मजंमायामयंस्थूलमुपाधिमात्मनः ॥ २८ ॥ सूक्ष्मंमनोबुद्धिदशें द्रियैर्युतंप्राणैरपंचीकृतभूतसंभवम् ॥ भोक्तुः सुखादेरनुसाधनंभवेच्छरीरमन्यद्विदुरात्मनोबुधाः ॥ २९ ॥

रूपविशेषणत्यागेनानुभवगतातीतत्वादिविशेषणत्यागेनवालक्षणयैक्यंतद्वदितिभावः ॥ २७ ॥ अथत्याज्यत्वायजीवोपाधिमाह । रसादीति । रसापृथ्वीआ दियेषांतानिपंचीकृतानियानिभूतानितेभ्यःसंभवोयस्यतत । पंचीकरणंचेत्थम् एकैकंभूतंद्विधाविभज्यतत्रैकंभागंचतुर्धाविभज्यतेषांभागानांस्वेतरभूतचतुष्टयार्ध भागचतुष्टयेसंयोजनेएकैकंभूतंपंचात्मकंभवतिभागाधिक्याच्चप्रातिस्विकतयाभूरादिव्यवहारोऽपि । सुखदुःखयोरादीनियानिकर्माणितेषांभोगस्तत्कर्मजसुखदुः खानुभवस्तस्यालयमाश्रयभूतमाद्यंतवत्उत्पत्तिनाशयोगि आदिकर्मजंप्राग्भवीयकर्मजन्यंमायामयंपरंपरयामायाविकारः तद्विकारभूतविकारत्वात् । एतच्छ रीरमात्मनःस्थूलमुपाधिंवदंतीतिशेषः ॥ २८ ॥ अथसूक्ष्मोपाधिमाह । सूक्ष्ममिति । बुधाअन्यत्स्थूलशरीरविलक्षणंशरीरंलिंगदेहाख्यमात्मनउपाधिंविदुः । तत्स्वरूपमाह । सूक्ष्मंचक्षुराद्यविषयः मनोबुद्धिदशेंद्रियैःप्राणैश्चयुतम् संकल्पात्मकंमनः निश्चयात्मिकाबुद्धिः घ्राणरसनाचक्षुस्त्वक्श्रोत्रेतिपंचज्ञानेंद्रियाणिवा

क्पाणिपादपायूपस्थानिकर्मेंद्रियाणिप्राणापानव्यानोदानसमानाश्चप्राणास्तैर्युतमेतत्सप्तदशसमुदायात्मकम् । तदाधारभूतान्याह । अपंचीकृतभूतसंभवंतेभ्यउत्प
न्नमतएवादृश्यम् । तथाभोक्तुःसुखदुःखादेःसुखदुःखाद्यनुभवस्यानुसाधनम् । स्थूलशरीरस्यैतदनुगतस्यैवभोगसाधनमितिभावः । एतद्वियोगेनैवमरणव्यवहारइति
बोध्यम् ॥ २९ ॥ इतिजीवोपाधिद्वयमुक्त्वाईशोपाधिमाह । अनादीति। अनादिउत्पत्तिहीनम् । नानाविधपरिणामशालितयापरिणामरूपेणनश्वरमितिअनादित्वमा
त्रोक्त्यासूचितम् । अनिर्वाच्यंसत्त्वासत्त्वाभ्यांनिर्वक्तुमशक्यम् कारणंसकलप्रपंचस्यजनकम् ईदृशीमायातुब्रह्मणःपरमेश्वरव्यवहारसंपादकत्वादुत्कृष्टंप्रधानंश
रीरकम् । स्वार्थेकः । एवमुपाधिभेदादेकमेवचैतन्यंयतःपृथक्स्थितंजीवईशइतिभेदबुद्धिविषयमतोलक्षणयोपाधिपरित्यागेनस्वात्मानमात्मनिअवधारयेद
भेदेनजानीयात् । क्रमाच्छ्रवणमनननिदिध्यासनक्रमेणेत्यर्थः ॥ ३० ॥ अथवाक्यार्थविचारफलमाह । कोशेष्विति । आनंदमयस्यब्रह्मत्वेअन्नमयप्राण
मयमनोमयविज्ञानमयेषुचतुर्षुकोशेयतत्तत्संगात्तत्तदाकृतिर्विभातियथाजपादिसंगात्स्फटिकोऽनेकाकृतिर्भाति । आनंदमयस्यापि जीवत्ववादिनांतुतेनसहपंच

अनाद्यनिर्वाच्यमपीहकारणंमायाप्रधानंतुपरंशरीरकम् ॥ उपाधिभेदात्तुयतःपृथक्स्थितंस्वात्मानमात्मन्यवधारयेत्क्रमात् ॥ ३० ॥ को
शेष्वयतेषुतुतत्तदाकृतिर्विभातिसंगात्स्फटिकोपलोयथा ॥ असंगरूपोऽयमजोयतोऽद्वयोविज्ञायतेऽस्मिन्परितोविचारिते ॥ ३१ ॥ बु
द्धेस्त्रिधावृत्तिरपीहदृश्यतेस्वप्नादिभेदेनगुणत्रयात्मनः ॥ अन्योऽन्यतोऽस्मिन्व्यभिचारतोमृषानित्येपरेब्रह्मणिकेवलेशिवे ॥ ३२ ॥

सुकोशेष्वितिबोध्यम् । अस्मिन्महावाक्येपरितोविचारितेसम्यग्विचारितेसत्ययमात्माऽसंगरूपःअन्नमयादिभिःसंगरहितः । असंगोनहिसज्जेत । इतिश्रुतेः ।
अजोऽद्वयश्चविज्ञायते । स्थूलोऽहमित्यादिस्त्वज्ञस्यतत्तत्कोशप्रसंगात्प्रतीतिःस्फटिकवत् तत्त्वज्ञस्यतुनतथाप्रतीतिरितिभावः । एवंचतत्तदुपाधिकृततद्रूपता
प्रतीतिनिरासएवविचारफलमितिभावः ॥ ३१ ॥ जाग्रदाद्यवस्थाऽपिबुद्धिधर्मोनात्मधर्मइत्याह । बुद्धेरिति । इहआत्मनिस्वप्नादिभेदेनजाग्रत्स्वप्नसुषुप्तिभेदे
नयात्रिधावृत्तिर्दृश्यतेसाऽपिगुणत्रयात्मनःसत्त्वरजस्तमोरूपगुणत्रयस्वरूपायाबुद्धेर्धर्मः । उक्तावस्थात्रयस्योक्तमूलकत्वात् । एतदवस्थात्रयस्यास्मिन्नवस्था
नंव्यभिचारतोमृषाबुद्ध्यध्यासनिबंधनंनतुवास्तवमित्यर्थः । अन्योऽन्यतोव्यभिचारतस्तस्यावस्थात्रयस्यस्वरूपतोमृषात्वात्तद्भानस्यमृषात्वमेव । स्वप्न
कालेजाग्रत्सुषुप्त्योरभावात् । जाग्रतिइतरद्वयस्याभावात् सुषुप्तावितरयोरभावात्परस्परंव्यभिचारोबोध्यः । आत्मनस्तदनाश्रयत्वंविशेषणैराह । नित्येउत्प
त्तिनाशशून्येपरेगुणत्रयातीतेब्रह्मणिव्यापकेकेवलेऽसंगेशिवेआनंदरूपेएवंभूतेसदैकरसेपरस्परव्यभिचारधर्माधानमसंभवीतिभावः ॥ ३२ ॥

अथत्याज्यत्वायसंसारमूलभूतांवृत्तिमाह । देहेति । एषांसंघावइतरेतराध्यासविषयात् अजस्त्रंयावद्धियोबुद्धेर्वृत्तिस्तमोमूलतयाऽज्ञलक्षणऽज्ञत्वज्ञापिका यावत्परिवर्तते तावद्भवोद्भवःसंसारोद्भवोभवेत । तमःपदंरजसोऽप्युपलक्षणम् । रजस्तमःप्रधानाबुद्धिःसंसारहेतुत्वात्सर्वथात्याज्येतिभावः ॥ ३३ ॥ कृत महावाक्यविचारस्यकर्तव्यमाह । नेतीति । अथातआदेशोनेतिनेति । इतिप्रमाणेननिराकृतंमिथ्यात्वेनगृहीतमखिलंजगत्येनसः ततोहृदासत्त्वप्रधानेनमन सासम्यगास्वादितं चिल्लक्षणंघनामृतंदुःखासंभिन्नंसुखंयेनसः । स्वर्गादितुपरिणामदुःखत्वात्तत्संभिन्नमेव । एवंभूतोऽशेषंजगद्देहेंद्रियादिदृश्यसमूहंत्यजेत् हा नोपादानबुद्धिविषयं कुर्यात । किंतूदासीनस्तत्रभवेत । ननुदेहेंद्रियादिभिरेववज्ज्ञानलाभात्कथमुपजीव्यस्यत्यागइत्याशंक्यदृष्टांतदर्शनेनपरिहरति । यथा तृषावान्आत्तःसद्रसोमाधुर्ययेनवादृशंनारिकेलनारंगादिफलांतर्वर्त्यंभः पीत्वा तत्स्थानभूतंतत्फलंजहाति तत्रोदासीनोभवातितद्वतसर्वदृश्यसारांशोब्रह्मतल्लाभेस

देहेंद्रियप्राणमनश्चिदात्मनांसंघादजस्त्रंपरिवर्ततेधियः ॥ वृत्तिस्तमोमूलतयाज्ञलक्षणायावद्भवेत्तावदसौभवोद्भवः ॥ ३३ ॥ नेतिप्रमा णेननिराकृताखिलोहृदासमास्वादितचिद्घनामृतः ॥ त्यजेदशेषंजगदात्तसद्रसंपीत्वायथांऽभःप्रजहातितत्फलम् ॥ ३४ ॥ कदाचिदात्मानमृ तोनजायतेनक्षीयतेनापिविवर्धतेऽनवः ॥ निरस्तसर्वातिशयःसुखात्मकःस्वयंप्रभःसर्वगतोऽयमद्वयः ॥ ३५ ॥

तिनिःसारंदृश्यंनोपादेयंनापिहेयमितिभावः । यतोभयादिसंभावनातद्धेयमित्युच्यते ॥ ३४ ॥ इत्वरस्यानित्यत्वेनतत्रवैराग्यार्थमात्मनएवनित्यत्वमाह । कदाचिदिति । कदापीत्यर्थः । अनवः उत्पत्त्यनंतरंविद्यमानोहिनवः । तेनजन्मानंतरास्तित्वंव्यावर्तितं नवत्वाभावेनैवजीर्णत्वाभावादवस्थांतरापत्तिरूप परिणामोऽपिनिरस्तः । अनेनजायतेऽस्तिविपरिणमतेवर्धतेऽपक्षीयतेनश्यतीतिषड्भावविकाररराहित्यमुक्तम् । एवंचैतद्भिन्नंसर्वमुक्तषड्भावविकारवत्त्वादनित्यमिति ततोविरज्येतेतिबोधितम् । यतईदृशोऽतएवनिरस्तःसर्वस्यदेहेंद्रियादेरतिशयोमहत्त्वंयेनस्वलाभात्सः । यल्लाभान्नापरोलाभः । इतिश्रुतेः । यतःसुखात्मकः आनंदस्वरूपःस्वयंप्रभःदेहेंद्रियादिस्तु दुःखस्वरूपःपरप्रकाश्यश्च । यस्यभासासर्वमिदंविभाति । इतिश्रुतेः । सर्वगतोव्यापकः अयमहंबुद्धिवि षयःप्रत्यगात्माऽपिअद्वयः उक्ताद्वयब्रह्मस्वरूपएव । नततोऽतिरिक्तइतिभावः । अयमात्माब्रह्म । इतिश्रुतेः ॥ ३५ ॥

पुनस्तत्त्वंपदार्थस्वरूपमाह । अनादीति । अनादिर्याऽविद्याततउद्भवोयस्याबुद्धेरंतःकरणस्यतत्रबिंबितःप्रतिबिंबितश्चितःप्रकाशःसजीवइतीर्यतेआत्मापरमा
त्माधियःसाक्षितयाधीधर्मासंगेनैवपृथक्स्थितः । अंतर्यामितयेत्यर्थः जीवोऽहंसुखीत्यादिप्रकारेणांतःकरणधर्माध्यासवान्परमात्मातुसाक्षितयासर्वत्रविद्यमनोऽ
पिनतथेतिभावः । अतएवबुद्ध्यापरिच्छिन्नपरःबुद्धिलक्षणपरिच्छेदरहितःअतएवपरः । एवंचज्ञानेनप्रतिबिंम्बाधारविलयप्रतिबिंबस्यविलयात्सजीवः सएव
परमात्मैवहिप्रसिद्धंसइत्यस्यचावृत्तिर्बोध्या ॥ ४० ॥ अथबुद्ध्यात्मनोःपरस्पराध्यासवशात्परस्परधर्मभानामितिदाढर्यायपुनराह । ।चिद्बिंबेति । चिदात्मचेत
सोरन्योन्याध्यासवशात्परस्परतादात्म्यारोपाज्जडाजडत्वंप्रतीयते । चेतसोवृत्तीनांज्ञानत्वंजीवात्मनोजडत्वंप्रतीयेत । अतएवज्ञानाश्रयआत्मेतिचितएवतार्किक

अनाद्यविद्योद्भवबुद्धिबिंबितोजीवःप्रकाशोऽयमितीर्यतेचितः॥आत्माधियः साक्षितयापृथक्स्थितोबुद्ध्यापरिच्छिन्नपरःसएवहि ॥४०॥
चिद्बिंबसाक्ष्यात्मधियांप्रसंगतस्त्वेकत्रवासादनलाक्तलोहवत् ॥ अन्योऽन्यमध्यासवशात्प्रतीयतेजडाजडत्वंचचिदात्मचेतसोः ॥४१॥
गुरोःसकाशादपिवेदवाक्यतःसंजातविद्यानुभवोनिरीक्ष्यतम् ॥ स्वात्मानमात्मस्थमुपाधिवर्जितंत्यजेदशेषंजडमात्मगोचरम् ॥ ४२ ॥

व्यवहारः । जीवात्मनिजडात्मनिजडात्माकथ्यतेबुधैरीतिस्मार्तव्यवहारश्च । अत्रहेतुः । चिदित्यादि । चिद्बिंबंयस्यसचिदाभासःअक्षैःसहितःसाक्षःसेंद्रियःसचा
सावात्मामनःधीरंतःकरणंतेषांप्रकृष्टसंगादतिसन्निकर्षादध्यासइत्यर्थः । अनलाक्तलोहवत्अग्नितप्तलोहपिंडवत् अत्रदृष्टांतः । अग्निधर्मोदाहकत्वंलोहधर्मश्चवर्तु
लत्वाद्यनलेभासते । तत्रहेतुरेकत्रवासात्परस्पराविभागेनवृत्तेरित्यर्थः । तद्वदेतयोरपिपरस्परधर्माध्यासइत्यर्थः ॥ ४१ ॥ उक्तमेवार्थंदाढर्यायपुनराह । गुरोरि
ति । वेदवाक्यतइत्यनेनश्रवणंगुरोःसकाशादपि । ततश्चानेनमननमुक्तम् । ताभ्यांसंजातोविद्ययाज्ञानरूपस्यात्मनोऽनुभवोयस्यसः । अनेनकृतनिदिध्यासनइ
त्यर्थः । तंचिदानंदस्वरूपंस्वात्मानमुपाधिवर्जितंरहितोपाधिधर्ममात्मस्थंहृत्स्थंनिरीक्ष्यअपरोक्षीकृत्याशेषंजडंदृश्यंत्यजेत् । तत्रोदासीनोभवेदितिभावः ॥ ४२ ॥

ज्ञेयंनिरुपाधिकंस्वरूपंश्लोकद्वयेनाह । प्रकाशेति । अहंप्रकाशरूपःस्वप्रकाशःपरप्रकाशहीनः । परप्रकाशरूपोयथाघटादिः । अजोजन्मादिहीनःअद्वयःस जातीयद्वितीयरहितःअसकृद्विभातःसकृदपिपरेणभासकांतरेणप्रकाशितःसकृद्विभातः नसकृद्विभातोसकृद्विभातः । नतत्रसूर्योभातिनचंद्रतारकम् । इतिश्रुतेः । नतद्भासयतेसूर्यः । इतिस्मृतेश्च । अतीवनिर्मलःमायाकृतावरणविक्षेपरहितःविशुद्धविज्ञानघनःविशुद्धचिदेकरसःनिरामयःकर्तृत्वाभिमानराहितःसंपूर्णःदेश कालपरिच्छेदहीनः आनंदमयःआनंदरूपः । स्वार्थेमयट् । अक्रियःपरिणामहीनः ॥ ४३ ॥ सदेवेति । अहंसदैवकालत्रयेऽपिमुक्तःसर्वधर्मरहितःअचिंत्य शक्तिमान् यः परमात्मा अतींद्रियज्ञानमिंद्रियातिरिक्तज्ञानरूपः । यतोवाचोनिवर्ततेअप्राप्यमनसासह । इतिश्रुतेः । अविक्रियात्मकोऽपरिणामी अनंतपारः अंतःकालतःपारःपरंतीरंतावविद्यमानौयस्य । तेनदेशकालपरिच्छेदहीनः । ईदृशोयःपरमात्माबुधैर्हृदिअहर्निशंविभावितःसोऽहमित्यर्थः ॥ ४४ ॥ एवं

प्रकाशरूपोऽहमजोऽहमद्वयोऽसकृद्विभातोऽहमतीवनिर्मलः ॥ विशुद्धविज्ञानघनोनिरामयःसंपूर्णआनंदमयोऽहमक्रियः ॥ ४३ ॥ सदै वमुक्तोऽहमचिंत्यशक्तिमानतींद्रियज्ञानमविक्रियात्मकः ॥ अनंतपारोऽहमहर्निशंबुधैर्विभावितोऽहंहृदिवेदवादिभिः ॥ ४४ ॥ एवंसदात्मा नमखंडितात्मनाविचारमाणस्यविशुद्धभावना ॥ हन्यादविद्यामचिरेणकारकैरसायनंयद्वदुपासितंरुजः ॥ ४५ ॥ विविक्तआसीनउपारतें द्रियोविनिर्जितात्माविमलांतराशयः ॥ विभावयेदेकमनन्यसाधनोविज्ञानदृक्केवलआत्मसंस्थितः ॥ ४६ ॥

भावनायाःफलमाह । एवमिति । उक्तरीत्यासदाआत्मानमखंडितात्मनाविषयानाकृष्टचित्तेनविचारमाणस्यध्यायतः । धातूनामनेकार्थत्वात् चरमाण एवचारमाणः । स्वार्थेऽण् । विशुद्धभावनाब्रह्माकारांतःकरणवृत्तिरुदेतीतिशेषः । साचोदिताकारकैर्देहांतरप्रापककर्मभिःसहाविद्यामचिरेणशीघ्रमेवहन्या त् । यथोपासितंसेवितंरसायनंरुजोहन्यात्तद्वत् ॥ ४५ ॥ तत्रध्यानेइतिकर्तव्यतामाह । विविक्तइति । निर्जनइत्यर्थः । आसीनोयथोचितपद्मासना द्युपविष्टः । उपारतेंद्रियः । तेनशमदमादिसंपन्नः । विनिर्जितात्माप्राणायामादिभिर्जितांतःकरणः । अतएवविमलांतराशयोविशुद्धचित्तः । विज्ञानदृक्विज्ञानेएव दृक्भावनंयस्यसःद्रष्टृदृश्यभानरहितः । अनेननिर्विकल्पकसमाधिरुक्तः । अनन्यसाधनःतत्त्वज्ञानातिरिक्तमुक्तिसाधनास्तित्वभ्रमराहितः । केवलोऽसंगःआत्म संस्थितःआत्मन्येवसंस्थासमाप्तिःसंजातायस्यसः तेननकदापिविषयांतरसंचारवाचित्तः । विभावयेद्ध्यायेत् ॥ ४६ ॥

नुनएवंविधेविकारशून्येआत्मनिजन्ममरणादिप्रवाहरूपसंसारभानंकथमितिशंकते । एवंविधेइति । दुःखमयःदुःखप्रचुरः ।: उत्तरयति । अज्ञानमूलकोयो
ध्यासोदेहांतःकरणादौअहंममेत्यध्यासस्तद्वशात् । एवंचभ्रांतिरूपातत्प्रतीतिरितिभावः । नन्वेवंकथंतस्यसंसारस्यनिवृत्तिस्तत्राह । ज्ञानेति । आविर्भूतइति
शेषः । ज्ञानस्याज्ञानविरोधित्वात्तदुत्पत्तिक्षणएवकारणभूताज्ञाननाशात्तत्कार्यसंसारस्यापिविलयइत्यर्थः । यथारज्जुसर्पस्यलयइत्यर्थः ॥ ३६ ॥ अथा
ध्यासलक्षणमाह । यदन्यदिति । यदन्यत्सर्पादिकमन्यत्ररज्ज्वादौभ्रमात्भ्रमजनकाद्दोषाद्विभाव्यतेविज्ञायतेअमुंविपश्चितोविद्वांसोऽध्यासइत्याहुः । यथाऽ
सर्पभूतेरज्ज्वादौअहिविभावनंसर्पारोपोरज्ज्वबुद्धिमूलकस्तद्वदीश्वरेऽपिजगद्देहादिसंसारात्मकंसर्वंविभाव्यतेआत्मज्ञानाभावाद्यथार्थतयाज्ञायते ॥ ३७ ॥
आत्मनिजगद्भानेकीदृशोऽध्यासोनिमित्तंतदाह । विकल्पेति । सर्वविकल्पकारणमायारहितेवस्तुतत्संगरहितेचिदात्मकेचित्स्वरूपेसर्वकारणेनिरामयेदुःखा

एवंविधेज्ञानमयेसुखात्मकेकथंभवोदुःखमयःप्रतीयते ॥ अज्ञानतोऽध्यासवशात्प्रकाशतेज्ञानेविलीयेतविरोधतःक्षणात् ॥ ३६ ॥ यदन्य
दन्यत्रविभाव्यतेभ्रमादध्यासमित्याहुरमुंविपश्चितः ॥ असर्पभूतेहिविभावनंयथारज्ज्वादिकेतद्वदपीश्वरेजगत् ॥ ३७ ॥ विकल्पमायार
हितेचिदात्मकेऽहंकारएषप्रथमःप्रकल्पितः ॥ अध्यासएवात्मनिसर्वकारणेनिरामयेब्रह्मणिकेवलेपरे ॥ ३८ ॥ इच्छादिरागादिसुखादिध
र्मिकाःसदाधियःसंसृतिहेतवः परे ॥ यस्मात्प्रसुप्तौतदभावतःपरःसुखस्वरूपेणविभाव्यतेहिनः ॥ ३९ ॥

सं भिन्नानंदमयेकेवलेसर्वविकारशून्येपरेदृश्यविलक्षणेब्रह्मणिव्यापकेआत्मनिप्रथममहंकारःकल्पितःसएवाध्यासः । अहंबुद्ध्यात्मकोध्यासएवसर्वसंसारकारणमि
तिभावः ॥ ३८ ॥ बुद्धिनिष्ठएवसंसारोनत्वात्मनिष्ठइत्यत्रान्वयव्यतिरेकौप्रमाणयति । इच्छादीति । परेसर्वसाक्षिणिआत्मनिसंसृतिहेतवःभासमानसंसारकारणंसदा
कालत्रयेऽपिइच्छादिरागादिसुखादिधर्मिकाःइच्छोपेक्षेरागद्वेषौसुखदुःखेइत्येवमादिद्वंद्वधर्मिकाःधियएव धीषुसतीषुसंसारइत्यन्वयमुक्त्वातद्व्यतिरेकमाह । यस्मा
त्कारणात्प्रसुप्तौतदभावात्धीवृत्त्यभावात् परआत्मा नोऽस्माभिः । तृतीयार्थेषष्ठी । सुखरूपेणस्वस्वरूपमात्रेणविभाव्यतेनिश्चीयते । नतुसंसारित्वेनेतिभावः । सुप्तो
त्थितस्तुसुखमहमस्वाप्समितिप्रत्यभिज्ञानुभवात्तदात्मस्वरूपनिश्चयोऽस्तीतितात्पर्यम् ॥ ३९ ॥

किंच यदेतत् भूतंभविष्यद्वर्तमानांविश्वंपरमात्मादर्शनंभासकोयस्यतत् । तस्यभासासर्वमिदंविभाति । इतिश्रुतेः । तत्सर्वकारणेमायासान्निधानात्सर्वोपादानत्वे
नाभिमतेआत्मनिविलापयेत् । उपादानसत्ताव्यतिरेकेणकार्यसत्तांनपश्येत् । तादृशस्यलक्षणमाह । संपूर्णःअवाप्तसमस्तकामः । तस्यकाम्याभावात् । चिदानं
दमयःतद्रूपोवतिष्ठतेबाह्यमांतरंचदृश्यंनजानाति । सर्वत्रब्रह्मदर्शनादितिभावः ॥४७॥ समाधिसिद्धेःपूर्वंयत्कर्तव्यंतदाह । पूर्वमिति । समाधेःसकलविषयव्यासंगनि
वृत्तिपूर्वकंब्रह्माकारवृत्तिःसमाधिस्ततःपूर्वमखिलंसचराचरंजगत्ओंकारमात्रंविचिंतयेत् । ओंकारोमीयतेऽनयेतिमात्राप्रमाणंबोधकत्वेनपरिच्छेदकोयस्यतथा
जानीयात् । तदेवविवृणोति । तदेवेति । जगदेवेत्यर्थः । प्रणवोवाचकोविभाव्यतेएतत्त्विहिप्रसिद्धइत्यर्थः । इयंभावनाज्ञानवशादेवनबोधनकः । निर्विशेषब्रह्मसाक्षा
त्कारस्तदुत्तरंनेत्यर्थः । तस्यसर्ववृत्त्युपमर्दकत्वात् ॥ ४८ ॥ उक्तमर्थंविवृणोति । अकारेति । अकारसंज्ञस्तद्वाच्यःपुरुषोहिविश्वकोविश्वएवविश्वकः

विश्वंयदेतत्परमात्मदर्शनंविलापयेदात्मनिसर्वकारणे ॥ पूर्णश्चिदानंदमयोऽवतिष्ठतेनवेदबाह्यंनचाकिंचिदांतरम् ॥ ४७ ॥ पूर्वंसमाधेरखि
लंविचिंतयेदोंकारमात्रंसचराचरंजगत् ॥ तदेववाच्यंप्रणवोहिवाचकोविभाव्यतेज्ञानवशान्नबोधतः ॥ ४८ ॥ अकारसंज्ञःपुरुषोहिविश्वको
ह्युकारकस्तैजसईर्यतेक्रमात् ॥ प्राज्ञोमकारःपरिपठ्यतेऽखिलैःसमाधिपूर्वंनतुतत्त्वतोभवेत् ॥ ४९ ॥ विश्वंत्वकारंपुरुषंविलापयेदुकारम
ध्येबहुधाव्यवस्थितम् ॥ ततोमकारेप्रविलाप्यतैजसंद्वितीयवर्णंप्रणवस्यचांतिमे ॥ ५० ॥

विश्वशब्देनपरिभाषितः अयंजाग्रत्साक्षीविराट् ततःस्वप्नसाक्षीतैजसःतेनपदेनपरिभाषितःलिंगदेहाभिमानीहिरण्यगर्भउकारकः उकारप्रतिपाद्यईर्यते । ततः
सुषुप्तिसाक्षीप्राज्ञपदवाच्योमायोपाधिकोमकारस्तद्वाच्यःपठ्यतेऽखिलैर्वेदैः । इयंभावनासमाधिपूर्वंसमाधेःपर्वमेव न तत्त्वतः तत्त्वसाक्षात्कारेसतिनभवेत् ।
सर्वस्यब्रह्मणिप्रविलयात् ॥ ४९ ॥ अथविलापनप्रकारमाहद्वाभ्याम् । विश्वंत्विति । उकारमध्येबहुधाव्यवस्थितंस्थूलदेहनिबंधनंस्थूलदेहाभिमानेनास्थि
तंविश्वंपुरुषंतद्वाचकमकारंचविलापयेत् । तुश्चार्थे । विलीनंभावयेत् । ततस्तैजसंलिंगदेहाभिमानिनंपुरुषंतद्वाचकंप्रणवद्वितीयवर्णमुकारंविलीनविश्वकंमका
रेविलाप्यविलीनंभावयित्वा ॥ ५० ॥

ततस्तादृशंमकारंतद्वाच्यंप्राज्ञंचकारणंकारणत्वाभिमानिनंपुरुषमिहात्मनिचिद्घनेपरेविलापयेत् तथाभावयेत् । ततःसोऽहंसर्वविलापाधिष्ठानंपरंब्रह्मविभावयेत् ।
तद्विशिनष्टि । सदाविमुक्तिमत् नित्यमुक्तम् । नन्वहंपदार्थस्यरागद्वेषादिमलिनस्यकथंब्रह्मत्वभावनेत्याशंक्याहंपदार्थविशिनष्टि । उपाधितोमुक्तःअतएवामलःत
थाभावनेसाधनं विज्ञानदृग्विज्ञानंनिदिध्यासनंब्रह्ममात्रप्रत्ययाविच्छेदरूपादृक्तत्साक्षात्कारेसाधनंयस्यसः॥५१॥ एवंभावनावतोलक्षणमाह । एवमिति । उक्तप्र
कारेणसदाजातापरमात्मन्येकभावनायस्यसः परिविस्मृतमखिलंपुत्रदेहादियेनसः । अतएवस्वस्वरूपानंदेनैवतुष्टःनतुविषयानंदेन । तस्यपरिणामेदुःखरूपत्वात्ततो
विरक्तइत्यर्थः । साक्षान्नित्यात्मनिसुखप्रकाशकःसाक्षादौपाधिकनामरूपभेदराहित्येननित्यमखंडितमात्मस्वरूपंयत्सुखप्रकाशश्चतद्रूपः एवंरूपो विमुक्तोजीव

मकारमप्या त्मनिचिद्घनेपरेविलापयेत्प्राज्ञमपीहकारणम्॥सोहंपरंब्रह्मसदाविमुक्तिमद्विज्ञानदृङ्मुक्तउपाधितोऽमलः॥५१॥ एवंसदाजा
तपरात्मभावनःस्वानंदतुष्टःपरिविस्मृताखिलः।आस्तेसनित्यात्मसुखप्रकाशकःसाक्षाद्विमुक्तोऽचलवारिसिंधुवत्॥५२॥एवंसदाभ्यस्तस
माधियोगिनोनिवृत्तसर्वेंद्रियगोचरस्याहि ॥ विनिर्जिताशेषरिपोरहंसदादृश्योभवेयंजितषड्गुणात्मनः॥५३॥ ध्यात्वैवमात्मानमहर्निशं
मुनिस्तिष्ठेत्सदामुक्तसमस्तबंधनः॥ प्रारब्धमश्नन्नभिमानवर्जितोमय्येवसाक्षात्प्रविलीयतेततः॥५४॥

न्मुक्तः अचलंनिश्चलंवारियस्यतादृशसिंधुवदास्ते । विषयसंबंधरूपलहरीरहितआस्तइत्यर्थः ॥ ५२ ॥ ईदृशस्यमत्प्राप्तिर्भवत्येवेत्याह । एवमिति । उक्त
प्रकारेणसदाभ्यस्तसमाधेर्योगिनःनिवृत्ताःसर्वेषामिंद्रियाणांगोचराविषयाःशब्दादयोयस्य विनिर्जिताअशेषारिपवःकामादयोयेनतस्य । तज्जयेनविषयेष्वंतः
करणाप्रवृत्तिः सूचिता । अतएव सर्वज्ञत्वानित्यत्वानित्यतृप्तत्वबोधरूपत्वस्वतंत्रत्वनित्यमलुप्तत्वानंतरूपाःषडगुणायस्यतादृशआत्माजितोवशीकृतोयेनतस्य
सदादृश्योभवेयम् । एतेनमद्भक्तस्ययोगिनोऽहंदृश्योनतुभक्तिविमुखस्येतिसूचितम् ॥ ५३ ॥ एवंविधोजीवन्मुक्तःप्रारब्धवशेनअनभिमानोभोगानश्नंस्तिष्ठेत
ततोमय्येवविलीयतेमद्रूपोभवतीत्याह । ध्यात्वैवमिति ॥ ५४ ॥

सर्वधर्मापेक्षयाऽप्यमेवधर्मोज्यायानित्याह । आदौचेति । भवंसंसारमादिमध्यावसानेषुसर्वथाभयशोकयोःकारणंविदित्वातत्कारणीभूतंविधिवादैर्यजेतेत्यादि भिश्चोदितंबोधितंसमस्तंकर्ममार्गंकाम्यंहित्वाअखिलात्मनांजीवानांस्वरूपभूतंमामात्मानंपरमेश्वरंभजेत् । यथाधनस्यार्जनेनादौदुःखंमध्येपालनकृतंतत्रराजा दिकृतभयमंतेनाशेशोकपर्यवसायिदुःखमेवंपदार्थमात्रेद्रष्टव्यम् ॥ ५५ ॥ मय्यभेदभावनयानामरूपाविभागेनमद्रूपएवभवतीत्यमुमर्थंसदृष्टांतमाह । आत्मनीति । आत्मनिसर्वाधिष्ठानेमयिइदंस्वस्वरूपंजीवमभेदेनविभावयन्यदा । तिष्ठतीतिशेषः । तदामयात्मनापरमेश्वरेणाभेदेनभवति अभिन्नोभवति । तत्रदृष्टांतः । यथास मुद्रेप्रविष्टंनद्यादिजलंसमुद्रएव यथाक्षीरेगवादिक्षीरेप्रक्षिप्तंपयःक्षीरमेव यथाव्योम्निमहाकाशेघटाद्यवच्छिन्नाकाशोघटादिभंगे च यथाचर्मभस्त्रिकाद्यवच्छिन्नो वायुरनिलेमहावायौनामरूपाविभागेनैकीभवतीत्यर्थः ॥ ५६ ॥ एवमात्मतत्त्वज्ञस्यजगत्सत्यत्वभ्रमःस्वतएवापैतीत्याह । इत्थमिति । हिरण्यर्थे । लोकसं स्थितोऽपिजीवन्मुक्तिदशायांप्रारब्धवशाल्लोकव्यवहारंकुर्वन्नपिजगन्मृषैवेतिविभावयन्सन्यदियदा इत्थमीक्षते ऐकात्म्यं जानीयात्तदानिवृत्तजगत्सत्यत्वभ्र

आदौचमध्येचतथैवचांततोभवंविदित्वाभयशोककारणम् ॥ हित्वासमस्तंविधिवादचोदितंभजेत्स्वमात्मायमथाखिलात्मनाम् ॥ ९९ ॥
आत्मन्यभेदेनविभावयन्निदंभवत्यभेदेनमयाऽत्मनातदा ॥ यथाजलंवारिनिधौयथापयःक्षीरेवियद्व्योम्न्यनिलेयथाऽनिलः ॥ ९६ ॥
इत्थंयदीक्षेतहिलोकसंस्थितोजगन्मृषैवेतिविभावयन्मुनिः ॥ निराकृतत्वाच्छ्रुतियुक्तिमानतोयथेंदुभेदोदिशिदिग्भ्रमादयः ॥ ९७ ॥ यावन्न
पश्येदखिलंमदात्मकंतावन्मदाराधनतत्परोभवेत् ॥ श्रद्धालुरत्यूर्जितभक्तिलक्षणोयस्तस्यदृश्योऽहमहर्निशंहृदि ॥ ९८ ॥

मोभवतीतिशेषः । तत्रहेतुः श्रुतियुक्तिमानतोनिराकृतत्वात् । अतोऽन्यदार्तमित्यादिश्रुतिरूपात् जगन्मिथ्यादृश्यत्वात् शुक्तिरजतवदितितदुपबृंहितानु मानरूपात् मानतःप्रमाणतोनिराकृतत्वात् । तत्रदृष्टांतोयथेंदुभेदः एकचंद्रेद्विचंद्रत्वभ्रमस्तदेकत्वज्ञानेननिवर्ततेयथाचदिशिप्राच्यादौअन्यदिक्त्वाभ्रमः सोऽ पितत्त्वज्ञानान्निवर्तते । एवंभ्रमतःपुरुषस्यदिक्षुभ्रमणाद्भ्रमोनिकटवर्तिवृक्षादौचभ्रमणभ्रमस्तत्स्थैर्यज्ञानेननिवर्ततेतद्वत् ॥ ५७ ॥ ईदृशज्ञानेमदाराधनमेवोपा यइत्याह । यावदिति । अखिलंजगन्मदात्मकंमदधिष्ठानकंमद्विवर्तभूतंयावन्नपश्येत्तावन्मत्प्राप्तयेश्रद्धालुःभगवदाराधनमेवज्ञानप्रापकमित्यत्रदृढविश्वासवान् अतिशयेनोर्जितावृद्धिमतीभक्तिर्मयिभगवतिपूज्यताबुद्धिरूपालक्षणंचिह्नंयस्यसः तावन्मदाराधननिष्ठोभवेत् एवंहितस्यहृदिअहमहर्निशंदृश्योभवामि येयथा मांप्रपद्यंते तांस्तथैवभजाम्यहम् । इतिस्मृतेः ॥ ५८ ॥

स्वोक्तवचनजातस्यश्रुतिसमत्वंकथमेतदालोचनमपिमदाराधनप्रतिबंधकदुरितध्वंसोपायइत्याह । रहस्यमिति । श्रुतिसारसंग्रहत्वेनातिगोपनीयताअप्रमाणशंकाक
लंकराहित्यंसूचितम् । आलोचयतिसम्यग्विचारयति ॥ ५९॥ अथभगवानुक्तमेवार्थंसंक्षेपेणदार्ढ्यायपुनराह । भ्रातरिति । यदीतियदित्यर्थे । यदिदंजगत्परि
दृश्यतेतत्सर्वंमायैवेतिज्ञात्वेतिशेषः । चेतसासर्वंपरिहृत्यतत्रौदासीन्यंकृत्वामद्भावनयामदैक्यभावनयाभावितंशुद्धंमानसंयस्यतादृशस्तिष्ठ । इत्युपदिश्याशिषंप्राह ।
निरामयःसन्सुखीभव । सर्वदुःखनिवृत्त्येतिभावः । ततोंऽतरंगामन्यामाशिषमाह । आनंदमयोभव । तद्रूपोभवेत्यर्थः । यद्यपिपूर्वमानंदरूपत्वमस्त्येवतथाऽपितत्प्रा
प्तिर्विस्मृतकंठस्थभूषणप्राप्तिवत् ॥ ६० ॥ एवंरीत्यास्वोपासकस्यलोकपावनत्वमाह । यइति । कदावायदाकदाचिदित्यर्थः । हृदानिर्मलेनांतःकरणेनयोमामगुणं
प्राकृतसत्त्वरजस्तमोरूपगुणरहितम् । सच्चिदानंदरूपत्वात् । अतएवगुणात्परंगुणादव्याकृतात्परंमायावीतम् । यदिवायद्वेत्यर्थे । गुणात्मकंसर्वज्ञत्वादिलोकोत्तर

रहस्यमेतच्छ्रुतिसारसंग्रहंमयाविनिश्चित्यतवोदितंप्रिय ॥ यस्त्वेतदालोचयतीहबुद्धिमान्समुच्यतेपातकराशिभिःक्षणात् ॥५९॥ भ्रातर्य
दीदंपरिदृश्यतेजगन्मायैवसर्वंपरिहृत्यचेतसा ॥ मद्भावनाभावितशुद्धमानसःसुखीभवानंदमयोनिरामयः ॥ ६० ॥ यःसेवतेमामगुणंगुणा
त्परंहृदाकदावायदिवागुणात्मकम् ॥ सोऽहंस्वपादांचितरेणुभिःस्पृशन्पुनातिलोकत्रितयंयथारविः ॥ ६१ ॥ विज्ञानमेतदखिलंश्रुतिसा
रमेकंवेदांतवेद्यचरणेनमयैवगीतम् ॥ यःश्रद्धयापरिपठेद्गुरुभक्तियुक्तोमद्रूपमेतियदिमद्वचनेषुभक्तिः ॥ ६२॥ ॥ इति श्रीमदध्यात्मरा
मायणेउमामहेश्वरसंवादेउत्तरकांडेश्रीरामगीतायांपंचमःसर्गः ॥ ५ ॥

लावण्यादिगुणवानात्मामूर्तिर्यस्यतंदृश्यमानंरूपंसेवते । सद्विविधोऽप्युपासकःअहंमत्स्वरूपएव । मामकइत्यर्थोवा । प्रियोहिज्ञानिनोऽत्यर्थमहंसचममप्रियः ।
इत्युक्तेः । तादृशोभक्तःस्वपादलग्नरेणुभिःसंस्पृशन्लोकत्रयमपिपुनाति अज्ञानध्वांतनिरसनेनपवित्रीकरोति । यथारविःस्वकरैर्जगद्वितिमिरीकरोतितद्वत् ॥ ६१ ॥
इदानीमेतद्ग्रंथार्थालोचनासमर्थस्यपाठमात्रतोऽपिमहत्फलमाह । विज्ञानंविज्ञानजनकंकरणव्युत्पत्त्येतिबोध्यम् । वेदांतैरुपनिषद्वाक्यैर्वेद्यंचरणंजगज्जन्मादि
लक्षणंकर्मयस्यतेन । ननुपाठमात्रादेतादृशमहत्फलप्राप्तिःकथमित्याशंक्यभवत्येवेतिसूचयंस्तत्रहेतुमाह । मद्वचनेषुभक्तिर्विश्वासोयदीत्यर्थाद्गुरुवाक्यविश्वासस्यै
वफलदायकत्वादितिभावः ॥ ६२ ॥ इति श्रीमत्सकलराजविपद्गु० उत्तरकांडेसेतौपंचमःसर्गः ॥ ५ ॥

एकदेति । लवणरक्षसः लवणनाम्नोभयादित्यर्थः ॥ १ ॥ रामाल्लवणकृतभयनाशकांक्षिणः ॥ २ ॥ ३ ॥ हेमुनिश्रेष्ठाःअहंकिंभवत्कार्यंकरवाणि मत्समीपे
भवदागमनस्यचकिंकारणंयदियत्प्रीत्यासर्वंदुःखनिवर्तनक्षमत्वबुद्ध्यायाप्रीतिस्तयायावद्द्रष्टुमागतास्तद्धन्योऽस्मि ॥ ४ ॥ ५ ॥ ६ ॥ अनुत्तमंनविद्यते
शत्रुवधेउत्तममधिकंयस्मात्तत् ॥ ७ ॥ ८ ॥ यतोंदुरात्माऽतःसर्वैर्दुर्धर्षोंदुःसहः ॥ ९ ॥ वोयुष्माकंमाभीःभवत्विविशेषः ॥ १० ॥ विगतज्वराःगतदुः

॥ श्रीमहादेवउवाच ॥ एकादामुनयःसर्वेयमुनातीरवासिनः ॥ आजग्मूराघवंद्रष्टुंभयाल्लवणरक्षसः ॥ १ ॥ कृत्वाग्रेतुमुनिश्रेष्ठंभार्गवंच्य
वनंद्विजाः ॥ असंख्याताःसमायातारामादभयकांक्षिणः ॥ २ ॥ तान्पूजयित्वापरयाभक्त्यारघुकुलोत्तमः ॥ उवाचमधुरंवाक्यंहर्षयन्मु
निमण्डलम् ॥३॥ करवाणिमुनिश्रेष्ठाःकिमागमनकारणम्॥धन्योऽस्मियदियूयंमांप्रीत्याद्रष्टुमिहागताः ॥४॥ दुष्करंचापियत्कार्यंभवतां
तत्करोम्यहम् ॥ आज्ञापयंतुमांभृत्यंब्राह्मणादैवतंहिमे ॥५ ॥ तच्छ्रुत्वासहसाहृष्टश्च्यवनोवाक्यमब्रवीत् ॥ मधुनामामहादैत्यःपुराकृतयुगे
प्रभो ॥६॥ आसीदतीवधर्मात्मादेवब्राह्मणपूजकः ॥ तस्यतुष्टोमहादेवोददौशूलमनुत्तमम् ॥ ७ ॥ प्राहचानेनयंहंसिसतुभस्मीभविष्यति ॥
रावणस्यानुजाभार्यातस्यकुंभीनसीश्रुता ॥ ८ ॥ तस्यांतुलवणोनामराक्षसोभीमविक्रमः ॥ आसीद्दुरात्मादुर्धर्षोदेवब्राह्मणहिंसकः ॥९॥
पीडितास्तेनराजेंद्रवयंत्वांशरणंगताः ॥ तच्छ्रुत्वाराघवोऽप्याहमाभीर्वोमुनिपुंगवाः ॥ १० ॥ लवणंनाशयिष्यामिगच्छंतुविगतज्वराः ॥
इत्युक्त्वाप्राहरामोऽपिभ्रातॄन्कोवाहनिष्यति॥ ११॥लवणंराक्षसंदद्याद्ब्राह्मणेभ्योऽभयंमहत्॥तच्छ्रुत्वाप्रांजलिःप्राहभरतोराघवायव॥१२॥
अहमेवहनिष्यामिदेवाज्ञापयमांप्रभो ॥ ततोरामंनमस्कृत्यशत्रुघ्नोवाक्यमब्रवीत् ॥ १३ ॥ लक्ष्मणेनमहत्कार्यंकृतंराघवसंयुगे ॥ नंदिग्रा
मेमहाबुद्धिर्भरतोदुःखमन्वभूत् ॥ १४ ॥ अहमेवगमिष्यामिलवणस्यवधायच ॥ त्वत्प्रसादाद्रघुश्रेष्ठहन्यांतंराक्षसंयुधि ॥ १५ ॥ तच्छ्रु
त्वास्वांकमारोप्यशत्रुघ्नंशत्रुसूदनः ॥ प्राहाद्यैवाभिषेक्ष्यामिमथुराराज्यकारणात् ॥ १६ ॥

खाः ॥ ११ ॥ लवणराक्षसमित्यस्यकोवाहनिष्यतीत्यनेनान्वयः । कोवाब्राह्मणेभ्योऽभयंदद्यात् । दास्यतीत्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ वधायचव
धायत्वित्यर्थः । हन्यांहनिष्यामीत्यर्थः ॥ १५ ॥ १६ ॥

अभिषेचनेनिमित्तम् । विषयसतम्यामयमर्थःफलति अकारयत्वसिष्ठादिभिरितिशेषः ॥ १७ ॥ १८ ॥ गेहेसंपूज्यस्थापयित्वावनंगच्छतत्यिर्थः ॥
॥ १९ ॥ सतुयावद्वनचरोभवेत्भवतिसदनंनायातितावदेवेत्यन्वयः ॥ २० ॥ क्रुद्धःसन्योत्स्यतेशूलंविनैवेतिशेषः ॥ २१ ॥ २२ ॥ २३ ॥ त्वमग्रेप्र
थममेकएवराक्षसंसाधय नाशय पश्चाद्ध्वोत्तरंसेनात्वत्समीपमागमिष्यतीत्यर्थः ॥ २४ ॥ २५ ॥ स्फीतांसमृद्धांजनपदांजनवासस्थानभूताम् पूर्वंतुवनत्वान्न

आनाय्यचसुसंभाराँल्लक्ष्मणेनाभिषेचने ॥ अनिच्छंतमपिस्नेहादभिषेकमकारयत् ॥ १७ ॥ दत्त्वातस्मैशरंदिव्यंरामःशत्रुघ्नमब्रवीत् ॥
अनेनजहिबाणेनलवणंलोककंटकम् ॥ १८ ॥ सतुसंपूज्यतच्छूलंगेहेगच्छतिकाननम् ॥ भक्षणार्थंतुजंतूनांनानाप्राणिवधायच ॥१९॥
सतुनायातिसदनंयावद्वनचरोभवेत् ॥ तावदेवपुरद्वारितिष्ठत्वंधृतकार्मुकः ॥ २० ॥ योत्स्यतेसत्वयाक्रुद्धस्तदावध्योभविष्यति ॥ तं
हत्वालवणंक्रूरंतद्वनंमधुसंज्ञितम् ॥ २१ ॥ निवेश्यनगरंतत्रतिष्ठत्वंमेऽनुशासनात् ॥ अश्वानांपंचसाहस्रंरथानांचतदर्धकम् ॥ २२ ॥
गजानांषट्शतानीहपत्तीनामयुतत्रयम् ॥ आगमिष्यतिपश्चात्त्वमग्रेसाधयराक्षसम् ॥ २३ ॥ इत्युक्त्वामूर्ध्न्यवघ्रायप्रेषयामासराघवः ॥
शत्रुघ्नंमुनिभिःसार्धमाशीर्भिरभिनंद्यच ॥ २४ ॥ शत्रुघ्नोऽपितथाचक्रेयथारामेणचोदितः ॥ हत्वामधुसुतंयुद्धेमधुरामकरोत्पुरीम् ॥
॥ २५ ॥ स्फीतांजनपदांचक्रेमथुरांदानमानतः ॥ सीतापिसुषुवेपुत्रौद्वौवाल्मीकेरथाश्रमे ॥ २६ ॥ मुनिस्तयोर्नामचक्रेकुशोज्येष्ठोतु
जोलवः ॥ क्रमेणविद्यासंपन्नौसीतापुत्रौबभूवतुः ॥ २७ ॥ उपनीतौचमुनिनावेदाध्ययनतत्परौ ॥ कृत्स्नंरामायणंप्राहकाव्यंबालकयोर्मु
निः ॥ २८ ॥ शंकरेणपुराप्रोक्तंपार्वत्यैपुरहारिणा ॥ वेदोपबृंहणार्थायतावग्राहयतप्रभुः ॥ २९ ॥ कुमारौस्वरसंपन्नौसुंदरावश्विनाविव ॥
तंत्रीतालसमायुक्तौगायन्तौचेरतुर्वने ॥ ३० ॥

तथा ॥ २६ ॥ २७ ॥ क्रममेवाह । उपनीतौचेति ॥ २८ ॥ यत्पुराशंकरेणपार्वत्यैप्रोक्तंरामायणंतद्वेदोपबृंहणार्थायवेदतात्पर्यार्थज्ञाननिमित्तमग्राहयत ।
शब्दतोऽर्थतश्चबोधितवानित्यर्थः ॥ २९ ॥ तंत्रीशब्दतालाभ्यांसमायुक्तौअवैषम्येणयुक्तौयथातयोर्वैषम्यंनभवतितथागायंतौचेरतुः । तंत्रीलयेतिपाठेतं
त्र्यालयोमूर्च्छनात्तत्रसमायुक्तौअत्यंतनिपुणौ ॥ ३० ॥

॥ ३१ ॥ भूलोकेगंधर्वकिन्नरमध्येनेदृशःदेवालयेस्वर्गे देवेषुनपातालेनागेषुनअथवाब्रह्मलोकेऽपिनेदृशोगायकःनाज्ञायीत्यस्यैवविवरणम् ॥ नादर्शिसाक्षादीदृ
शंगानंस्वकर्णाभ्यांनश्रुतमित्यर्थः ॥ नाश्राविकर्णोपकर्णिकयामुकदेशेईदृशोविशिष्टगातास्तीतिनश्रुतमपीत्यर्थः ॥ ३२ ॥ स्तुवद्भिर्मुनिभिःसहेतिशेषः ॥
॥ ३३ ॥ ३४ ॥ वितानेयज्ञसंसदि दिदृक्षवः । यज्ञमितिशेषः । संगृह्यगृहीत्वा ऋषिवाटस्यऋषिवाटस्थानस्य ॥ ३५ ॥ ३६ ॥ ज्ञानशास्त्रंतत्त्वज्ञानका



तत्रतत्रमुनीनांतौसमाजेषुरूपिणौ ॥ गायंतावभितोदृष्ट्वाविस्मितामुनयोऽब्रुवन् ॥३१॥ गंधर्वेष्विहकिन्नरेषुभुविवादेवेषुदेवालयेपाताले
ष्वथवाचतुर्मुखगृहेलोकेषुसर्वेषुच ॥ अस्माभिश्चिरजीविभिश्चिरतरंदृष्ट्वादिशःसर्वतोनाज्ञायीदृशगीतवाद्यगरिमानादर्शिनाश्राविच ॥
॥ ३२ ॥ एवंस्तुवद्भिरखिलैर्मुनिभिःप्रतिवासरम् ॥ आसातेसुखमेकांतेवाल्मीकेराश्रमेचिरम् ॥ ३३ ॥ अथरामोऽश्वमेधादींश्चकारबहुद
क्षिणान् ॥ यज्ञान्स्वर्णमयींसीतांविधायविपुलद्युतिः ॥ ३४ ॥ तस्मिन्वितानेऋषयःसर्वेराजर्षयस्तथा ॥ ब्राह्मणाःक्षत्रियावैश्याःसमाज
ग्मुर्दिदृक्षवः ॥ ३५ ॥ वाल्मीकिरपिसंगृह्यगायंतौतौकुशीलवौ॥जगामऋषिवाटस्यसमीपंमुनिपुंगवः ॥३६॥ तत्रैकांतेस्थितंशांतंसमाधि
विरमेमुनिम् ॥ कुशःपप्रच्छवाल्मीकिंज्ञानशास्त्रंकथांतरे ॥ ३७ ॥ भगवञ्छ्रोतुमिच्छामिसंक्षेपाद्भवतोखिलम् ॥ देहिनःसंसृतिर्बंधःकथ
मुत्पद्यतेदृढः ॥ ३८ ॥ कथंविमुच्यतेदेहीदृढबंधाद्भवाभिधात् ॥ वक्तुमर्हसिसर्वज्ञमह्यंशिष्यायतेमुने ॥ ३९ ॥ वाल्मीकिरुवाच ॥ शृणु
वक्ष्यामितेसर्वंसंक्षेपाद्बंधमोक्षयोः ॥ स्वरूपंसाधनंचापिमत्तःश्रुत्वायथोदितम् ॥ ४० ॥ तथैवाचरभद्रंतेजीवन्मुक्तोभविष्यसि ॥ देह
एवमहागेहमदेहस्यचिदात्मनः ॥ ४१ ॥

रणंशास्त्रम् । इतःपरंमुनिवियोगकालस्यसन्निहितत्वादिदंगुह्यंतत्त्वंपप्रच्छेतिभावः ॥ ३७ ॥ भवतःसकाशादितिशेषः । संसृतिर्बंधः संसाररूपोबंधः ॥ ३८ ॥
॥ ३९ ॥ तच्चमत्तःश्रुत्वायथामयोदितंकथितंभविष्यति ॥ ४० ॥ तथैवाचरेत्यन्वयः । अदेहस्यवस्तुतोदेहसंबंधहीनस्यापिदेहोमहागेहमेवयथागृहस्वा
मिनागृहस्यनवातादात्म्यंतथास्याचिदात्मनोदेहेनापिनतादितिभावः ॥ ४१ ॥

तस्यचिदात्मनोऽस्मिन्देहेऽहंकारएवमंत्रीसचाहंकारस्तेनैवकल्पितः तत्सान्निध्येनमायायास्तद्रूपःपरिणामइत्यतस्तेनकल्पितइत्युक्तम् । सोहंकारःस्वंस्वीयंदेहरू
पगेहविषयमहंकारंममेत्याकाराभिमानंचिदात्मनिआरोप्य ॥ ४२ ॥ तेनाचिदात्मनातादात्म्यमभेदमापन्नोयतोऽतःस्वचेष्टितंचिदानंदेविदधाति । ननुजड
स्याहंकारस्यकथंचेष्टितत्वमतआह । तद्भासितवपुस्तत्संपर्कादेवतादृशसामर्थ्यवानयंजातइत्यर्थः ॥ ४३ ॥ तेनाहंकारेणसंकल्पितोऽयमेवससंकल्पान्करो
त्विति संकल्पविषयीकृतः । यद्वा । स्वीयसंकल्पेनैवतद्वान्कृतोऽत्यंतसन्निकर्षेणतादात्म्यापन्नत्वात् । यथाभार्याविशिष्टएवगृहस्थोगृहस्थस्यभार्येतिचव्य
वहारस्तद्वदयंव्यवहारोबोध्यः । तदीयसंकल्परूपानिगडेनावृतोबद्धःसंकल्पयतिकामयते ॥ ४४ ॥ तानिकामयंस्तदलाभेलब्धनाशेचशोचति त्रयःतमःसत्त्व
रजोरूपाः ॥ ४५ ॥ तदेवाह । तमइत्यादि । अतएवजगतःस्थितेःकारणं तेषांकार्यविशेषानाह । तमोरूपादिति । तमोरूपात्तमोगुणप्राधान्येनकृतात्संक

तस्याहंकारएवास्मिन्मंत्रीतेनैवकल्पितः॥देहगेहाभिमानंस्वंसमारोप्याचिदात्मनि॥४२॥तेनतादात्म्यमापन्नःस्वचेष्टितमशेषतः॥ विदधा
तिचिदानंदेतद्भासितवपुःस्वयम्॥४३॥तेनसंकल्पितोदेहीसंकल्पनिगडावृतः॥पुत्रदारगृहादीनिसंकल्पयतिचानिशम्॥ ४४॥ संकल्पय
न्स्वयंदेहीपरिशोचातिसर्वदा॥ त्रयस्तस्याऽहमोदेहाअधमोत्तममध्यमाः॥४५॥ तमःसत्त्वरजःसंज्ञाजगतःकारणंस्थितेः॥ तमोरूपा
द्धिसंकल्पान्नित्यंतामसचेष्टया॥४६॥ अत्यंततामसोभूत्वाकृमिकीटत्वमाप्नुयात्॥ सत्त्वरूपोहिसंकल्पोधर्मज्ञानपरायणः॥४७॥
अदूरमोक्षसाम्राज्यःसुखरूपोहितिष्ठति॥ रजोरूपोहिसंकल्पोलोकेसव्यवहारवान्॥४८॥ परितिष्ठतिसंसारेपुत्रदारानुरंजितः॥ त्रिवि
धंतुपरित्यज्यरूपमेतन्महामते॥४९॥संकल्पःपरमाप्नोतिपदमात्मपरिक्षये॥ दृष्टीःसर्वाःपरित्यज्यनियम्यमनसामनः॥५०॥

ल्पादित्यर्थः । वृत्तिवृत्तिमतोरभेदात् । तमोरूपादित्युक्तकारणानुरूपत्वात्कार्यस्यतत्कृतचेष्टायास्तामसत्वम् ॥ ४६ ॥ ४७ ॥ मोक्षोऽप्यनयैववृत्त्याप्रा
प्यइत्याह । अदूरेति । अतएवसपुरुषः सुखरूपस्तिष्ठति । हिप्रसिद्धम् । यस्यरजोरूपःसंकल्पःसलोकेव्यवहारवान् ॥ ४८ ॥ ततःव्यवहारयुतःपुत्रदारानुरं
जितः संसारेराजससंकल्पकृततत्तत्कर्मवशात्तिष्ठति यस्यसंकल्पएतत्पूर्वोक्तंत्रिविधमपिरूपंपरित्यज्यशाम्यतीतिशेषः ॥ ४९ ॥ सपरंपदमाप्नोति । सत्त्वरू
पसंकल्पस्यहिक्रमेणसर्वसंकल्पनाशद्वारादूरमोक्षत्वंप्रागुक्तंबोध्यम् । आत्मपरिक्षयेअत्रात्मासंकल्पःअतस्तंदृष्टीःसर्वेंद्रियज्ञानानिपरित्यज्यमनसैवमनोविनि
यम्यविषयेभ्योनिवर्त्य ॥ ५० ॥

बाह्येंद्रियविषयसहितोयआभ्यंतरेंद्रियविषयोऽर्थस्तस्यताद्विषयस्यसंकल्पस्यक्षयंकुरुसंकल्पंत्यजेत्यर्थः । अन्योपायेननसर्वथासुखप्राप्तिरित्याह । यदीति
॥ ५१ ॥ तादृशतपःपूर्वकंपातालाद्यन्यतमलोकस्थस्यापितवसंकल्पोपशमादृतेतंविना ॥ ५२ ॥ अनाबाधेदुःखासंमिश्रे अविकारेविषयसंबंधविनैवप्रा
प्येपरमपावने स्वात्मरूपेसुखेतत्प्राप्तिनिमित्तं नकश्चिदुपायोऽस्तीत्यर्थः । तस्मात्तद्रूपोपशमेयत्नंकुरु ॥ ५३ ॥ संकल्पस्यैवाधारत्वात्तन्नाशेएवसर्वविषय
निवृत्तिरित्याह । संकल्पतंताविति । विभवाः विशिष्टोभवः संसारोयेभ्यस्तादृशास्तेपराभवास्तेक्कयांतीतिनजानीमः । सर्वथानश्यंत्येवेतिभावः ॥ ५४ ॥
तस्मान्निःसंकल्पस्त्यक्तेच्छोयथाप्राप्तंव्यवहारंकुर्वित्यर्थः । संकल्पक्षयफलमाह । क्षयेति ॥ ५५ ॥ प्रसभंहठेन विकल्पजालंत्यक्त्वाअधिगतःपरमार्थोब्रह्म

सत्त्वाह्याभ्यंतरार्थस्यसंकल्पस्यक्षयंकुरु ॥ यदिवर्षसहस्राणितपश्चरसिदारुणम् ॥ ५१ ॥ पातालस्थस्यभूस्थस्यस्वर्गस्यस्थापितेऽनघ॥
नान्यःकश्चिदुपायोऽस्तिसंकल्पोपशमादृते ॥ ५२ ॥ अनावाधेविकारेस्वेसुखेपरमपावने ॥ संकल्पोपशमेयत्नंपौरुषेणपरंकुरु ॥ ५३ ॥
संकल्पतंतौनिखिलाभावाःप्रोताःकिलानघ ॥ छिन्नेतंतौनजानीमःक्कयांतिविभवाःपराः ॥ ५४ ॥ निःसंकल्पोयथाप्राप्तव्यवहारपरोभव॥
क्षयेसंकल्पजालस्यजीवोब्रह्मत्वमाप्नुयात् ॥ ५५ ॥ अधिगतपरमार्थतामुपेत्यप्रसभमपास्यविकल्पजालमुच्चैः ॥ अधिगमयपदंतदद्वितीयंविततसुखायसुषुप्तचित्तवृत्तिः ॥ ५६ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेउत्तरकांडेषष्ठःसर्गः ॥ ६॥ वाल्मीकिनाबोधितोऽसौकुशःसद्योगतश्रमः ॥ अंतर्युक्तोवहिःसर्वमनुकुर्वंश्चचारसः ॥ १ ॥ वाल्मीकिरपितौप्राहसीतापुत्रौमहाधियौ ॥ तत्रतत्रचगायंतौपुरेवीथिषुसर्वतः ॥ २ ॥ रामस्याग्रेप्रगायेतांशुश्रूषुर्यदिराघवः ॥ नग्राह्यंवैयुवाभ्यांतद्यदिकिंचित्प्रदास्यति ॥ ३ ॥

तत्त्वंयेनतद्भावमुपेत्यप्राप्यतदद्वितीयंपदमधिगमयप्राप्नुहि विततसुखायानुच्छेद्यसुखाय । तदर्थंनिदिध्यासनमुपदिशति । सुषुप्तिकालिकाचित्तवृत्तिर्यस्यतादृशोभव । सकलविषयरहितचित्तवृत्तेरेवब्रह्माकारचित्तवृत्तिरितिभावः ॥ ५६ ॥ इति श्रीमत्सकलराजवि० उत्तरकांडेषष्ठःसर्गः ॥ ६ ॥ ॥ वाल्मीकिनेति । सद्गुरूपदेशात् कुशस्योत्तमाधिकारित्वाचतत्कालमेवनिदिध्यासनांतसाधनसंपदितिभावः । यत्करोतितदनुकुर्वन्निवतत्रास्थाभावादितिभावः ॥ १ ॥ २ ॥ यदिकिंचिद्राघवोधनंदास्यतितन्नग्राह्यम् ॥ ३ ॥

यथोक्तंयथाशिक्षितम् ॥ ४ ॥ अपूर्वपाठजातिमपूर्वपठनरीतिं गेयेनगानेनव्याप्ताम् ॥ ५ ॥ ६ ॥ शब्दविदःव्याकरणविदः ॥ ७ ॥ संप्रवेशयत । अडभाव आर्षः ॥ ८ ॥ रामंदारकौचदृष्ट्वाविस्मिताःसंतोऽनिमेषणाअपश्यन्नितिशेषः ॥ ९ ॥ बिंबंप्रतिबिंबम् ॥ १० ॥ ११ ॥ अतिमानुषंमनुष्यलोकीयगानमतिक्रां

इतितौचोदितौतत्रगायमानौविचेरतुः ॥ यथोक्तमृषिणापूर्वंतत्रतत्राभ्यगायताम् ॥ ४ ॥ तांसशुश्रावकाकुत्स्थःपूर्वचर्यांततस्ततः ॥ अपूर्वपाठजातिंचगेयेनसमभिप्लुताम् ॥ ५ ॥ बालयोराघवःश्रुत्वाकौतूहलमुपेयिवान् ॥ अथकर्मांतरेराजासमाहूयमहामुनीन् ॥ ६ ॥ राज्ञश्चैवनरव्याघ्रःपंडितांश्चैवनैगमान् ॥ पौराणिकाञ्छब्दविदोयेचवृद्धाद्विजातयः ॥ ७ ॥ एतान्सर्वान्समाहूयगायकौसंप्रवेशयत् ॥ तेसर्वेहृष्टमनसोराजानोब्राह्मणादयः ॥ ८ ॥ रामंतौदारकौदृष्ट्वाविस्मिताह्यनिमेषणाः ॥ अवोचन्सर्वएवैतेपरस्परमथागताः ॥ ९ ॥ इमौरामस्यसदृशौबिंबाद्बिंबमिवोदितौ ॥ जटिलौयदिनस्यातांनचवल्कलधारिणौ ॥१०॥ विशेषंनाधिगच्छामोराघवस्यानयोस्तदा ॥ एवंसंवदतांतेषांविस्मितानांपरस्परम् ॥ ११ ॥ उपचक्रमतुर्गातुंतावुभौमुनिदारकौ ॥ ततःप्रवृत्तंमधुरंगांधर्वमतिमानुषम् ॥ १२ ॥ श्रुत्वातन्मधुरंगीतमपराह्णेरघूत्तमः ॥ उवाचभरतंचाभ्यांदीयतामयुतंवसु ॥ १३ ॥ दीयमानंसुवर्णंतुनतज्जगृहतुस्तदा ॥ किमनेनसुवर्णेनराजन्नौवन्यभोजनौ ॥ १४ ॥ इतिसंत्यज्यसंदत्तंजग्मतुर्मुनिसन्निधिम् ॥ एवंश्रुत्वातुचरितंरामःस्वस्यैवविस्मितः ॥ १५ ॥ ज्ञात्वा सीताकुमारौतौशत्रुघ्नंचेदमब्रवीत् ॥ हनूमंतंसुषेणंचविभीषणमथांगदम् ॥ १६ ॥ भगवंतंमहात्मानंवाल्मीकिंमुनिसत्तमम् ॥ आनयध्वं मुनिवरंससीतंदेवसंमितम् ॥ १७॥ अस्यास्तुपर्षदोमध्येप्रत्ययंजनकात्मजा ॥ करोतुशपथंसर्वेजानंतुगतकल्मषाम् ॥ १८ ॥ सीतां तद्वचनंश्रुत्वागताःसर्वेऽतिविस्मिताः ॥ ऊचुर्यथोक्तंरामेणवाल्मीकिंरामपार्षदाः ॥ १९ ॥ रामस्यहृद्गतंसर्वंज्ञात्वावाल्मीकिरब्रवीत् ॥ श्वःकरिष्यतिवैसीताशपथंजनसंसदि ॥ २० ॥

तम् ॥ १२ ॥ १३ ॥ नौ[१]आवांवन्यभोजनौस्वइतिशेषः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ प्रत्ययंसर्वजनस्यशुद्धत्वनिश्चयोत्पादकंशपथमित्यन्वयः । सीता मितिपूर्वान्वयि ॥ १८ ॥ १९ ॥ २० ॥

१ नौ–आवयोरनेन त्वद्दत्तेन सुवर्णेन किम् ? इत्यर्थः करणीयः । यद्वा । नौ–इति प्रथमार्थे द्वितीया तेन टीकागोचरोऽयं विषयः ।

॥२१॥ राघवस्यापिरामोविधंतद्वचऊचुरित्यन्वयः । राजानोमुनयइतिसंबोधने ॥२२॥ सीतायाःशपथंदृष्ट्वातस्याःशुभाशुभंधर्माधर्मरूपंविजानंतुनिर्णयंतु॥ २३॥ ॥ २४ ॥ २५ ॥ बाष्पकंठासैव ॥ २६ ॥ २७ ॥ २८ ॥ अपापापिलोकापवादभत्यात्यक्ता ॥ २९ ॥ सासीताप्रत्ययंविश्वासजनकंशपथम् । अत्रस्था नेकशेरतिकरुणरसाक्रांतचित्ततयाइमावितिपदपौनरुक्त्यंनदोषाय ॥ ३० ॥ तत्रादौभगवान्वाल्मीकिःस्वधर्मशपथैःसीतायाअदुष्टत्वंख्यापयति । प्रचेतस

योषितांपरमंदैवंपतिरेवनसंशयः ॥ तच्छ्रुत्वासहसागत्वासर्वेप्रोचुर्मुनेर्वचः ॥ २१ ॥ राघवस्यापिरामोऽपिश्रुत्वामुनिवचस्तथा ॥ राजा नोमुनयःसर्वेशृणुध्वमितिचाब्रवीत ॥२२॥ सीतायाःशपथंलोकाविजानंतुशुभाशुभम् ॥ इत्युक्ताराघवेणाथलोकाःसर्वेदिदृक्षवः ॥२३॥ ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चैवमहर्षयः ॥ वानराश्चसमाजग्मुःकौतूहलसमन्विताः ॥ २४ ॥ ततोमुनिवरस्तूर्णंससीतःसमुपागमत ॥ अग्रतस्तमृषिंकृत्वायांतीकिंचिदवाङ्मुखी ॥ २५ ॥ कृतांजलिर्बाष्पकंठासीतायज्ञंविवेशतम् ॥ दृष्ट्वालक्ष्मीमिवायांतींब्रह्माणमनुयायि नीम् ॥ २६ ॥ वाल्मीकेःपृष्ठतःसीतांसाधुवादोमहानभूत् ॥ तदामध्येजनौघस्यप्रविश्यमुनिपुंगवः ॥ २७ ॥ सीतासहायोवाल्मीकिरि तिप्राहचराघवम् ॥ इयंदाशरथेसीतासुव्रताधर्मचारिणी ॥ २८॥ अपापातेपुरात्यक्तामामाश्रमसमीपतः ॥ लोकापवादभीतेनत्वयाराममम हावने ॥ २९ ॥ प्रत्ययंदास्यतेसीतातदनुज्ञातुमर्हसि ॥ इमौतुसीतातनयाविमौयमलजातकौ ॥ ३० ॥ सुतौतुतवदुर्धर्षौतथ्यमेतद्ब्रवीमि ते ॥ प्रचेतसोऽहंदशमःपुत्रोरघुकुलोद्वह ॥३१॥ अनृतंनस्मराम्युक्तंयथेमौतवपुत्रकौ ॥ बहून्वर्षगणान्सम्यक्तपश्चर्यामयाकृता ॥ ३२ ॥ नोपाश्नीयांफलंतस्यादुष्टेयंयदिमैथिली ॥ वाल्मीकिनैवमुक्तस्तुराघवःप्रत्यभाषत ॥ ३३ ॥ एवमेतन्महाप्राज्ञयथावदसिसुव्रत ॥ प्रत्य योजनितोमह्यंतववाक्यैरकिल्बिषैः ॥३४॥ लंकायामपिदत्तोमेवैदेह्याप्रत्ययोमहान् ॥ देवानांपुरतस्तेनमंदिरेसंप्रवेशिता ॥ ३५ ॥ सेयं लोकभयाद्ब्रह्मन्नपापापिसतीपुरा ॥ सीतामयापरित्यक्ताभवांस्तत्क्षंतुमर्हति ॥ ३६ ॥

इत्यादिना ॥ ३१ ॥ यथाययावदनृतमुक्तंनस्मरामितथाइमौतवपुत्रकाविविवाक्यमपिसत्यमेवेत्यर्थः ॥ ३२ ॥ ३३ ॥ प्रत्ययोविश्वासः ॥ ३४ ॥ महान्प्र त्ययजनकः । शपथोऽग्निप्रवेशरूपः ॥ ३५ ॥ लोकभयात्लोककृतदुर्वादभयात् ॥ ३६ ॥

जगतीमध्येतद्वर्तिलोकमध्ये शुद्धायांशपथेनसर्वलोकज्ञातशुद्धतायाम् ॥ ३७ ॥ ३८ ॥ ३९ ॥ विवरंप्रवेशायाच्छिद्ररूपंमार्गम् ॥ ४० ॥ महाद्भुतमत्याश्चर्यंदिव्यंसिंहासनंप्रादुरासीत् ॥ ४१ ॥ सर्वाश्चर्यत्वदिव्यत्वोत्पादकंरविप्रभमिति ॥ ४२ ॥ दोर्भ्यांगृहीत्वास्वागतमितितामुवाचाथैनामासनेसंन्यवेशयत् ॥ ४३ ॥ साधुवादश्च । आसीदितिशेषः ॥ ४४ ॥ बहुधावाचःबहुप्रकारवाचःसीतेमैवंकर्तुमर्हाइतिराघवोगृहीतशपथोऽपिपुनःशपथग्रहणेप्रवृत्तइत्येवंबहुप्रकारवाचः ॥ ४५ ॥ सीताशपथकारणात्बहुधावाचऊचुरित्यनुकर्षः । तस्याश्चिंतापराःक्वसीतागमिष्यतीत्यादिचिंतायुक्ताःध्यानपरायणाःभूप्रविष्ट

ममैवजातौजानामिपुत्रावेतौकुशीलवौ ॥ शुद्धायांजगतीमध्येसीतायांप्रीतिरस्तुमे ॥ ३७ ॥ देवाःसर्वेपरिज्ञायरामाभिप्रायमुत्सुकाः ॥ ब्रह्माणमग्रतःकृत्वासमाजग्मुःसहस्रशः॥३८॥प्रजाःसमागमन्दृष्टाःसीताकौशेयवासिनी ॥ उदङ्मुखीह्यधोदृष्टिःप्रांजलिर्वाक्यमब्रवीत्॥ ॥ ३९ ॥ रामादन्यंयथाहंवैमनसापिनाचिंतये ॥ तथामेधरणीदेवीविवरंदातुमर्हति ॥ ४० ॥ तथाशपंत्याःसीतायाःप्रादुरासीन्महाद्भुतम्॥ भूतलाद्दिव्यमत्यर्थंसिंहासनमनुत्तमम् ॥ ४१ ॥ नागेंद्रैर्ध्रियमाणंचदिव्यदेहैरविप्रभम् ॥ भूदेवीजानकींदोर्भ्यांगृहीत्वास्नेहसंयुता ॥ ४२ ॥ स्वागतंतामुवाचैनामासनेसंन्यवेशयत् ॥ सिंहासनस्थांवैदेहींप्रविशंतींरसातलम् ॥ ४३ ॥ निरंतरापुष्पवृष्टिर्दिव्यासीतामवाकिरत् ॥ साधुवादश्चसुमहान्देवानांपरमाद्भुतः ॥ ४४ ॥ ऊचुश्चबहुधावाचोअंतरिक्षगताःसुराः ॥ अंतरिक्षेचभूमौचसर्वेस्थावरजंगमाः ॥ ४५ ॥ वानराश्चमहाकायाःसीताशपथकारिणः॥ केचिच्चिंतापरास्तस्याःकेचिद्ध्यानपरायणाः ॥ ४६ ॥ केचिद्रामंनिरीक्षंतःकेचित्सीतामचेतसः॥मुहूर्तमात्रंतत्सर्वंतूष्णींभूतमचेतनम्॥४७॥सीताप्रवेशनंदृष्ट्वासर्वंसंमोहितंजगत् ॥ रामस्तुसर्वंज्ञात्वैवभविष्यत्कार्यगौरवम्॥४८॥ अजानन्निवदुःखेनशुशोचजनकात्मजाम् ॥ ब्रह्मणाऋषिभिःसार्धंबोधितोरघुनंदनः ॥ ४९ ॥

सीतारूपस्यध्यानपरायणाः ॥ ४६ ॥ रामंनिरीक्षंतःकिंकरिष्यतीत्याद्येवं सीतांनिरीक्षंतःकथंगच्छत्येवेत्याद्येवंप्रकारेणअचेतनमासीदितिशेषः ॥ ४७ ॥ भविष्यतःकार्यस्यगौरवंनिश्चयंज्ञात्वैवज्ञात्वापि ॥ ४८ ॥ अजानन्निवशुशोच । लोकव्यवहारानुसारेणेत्यर्थः । बोधितःभाविनोदुःपरिहरत्वादिकथाभिकृतदुःखापनयनः ॥ ४९ ॥

ऋत्विजोयेइत्यत्रतान्विससर्जेत्यनुकर्षः ॥ ५० ॥ तान्ऋत्विक्प्रभृतीन् ॥ ५१ ॥ एकांतेसमुपस्थितःतत्रैवस्थितआसीत् ॥ ५२ ॥ ध्याननिरतेराघवे सतीत्यर्थः । रामंतच्चरित्रैर्ऋषिवाक्यैश्वतत्कृपावशान्नारायणंज्ञात्वा ॥ ५३ ॥ प्रणता नारायणोऽयमितिबुद्ध्या । आदिः कारणंस्वयंचोत्पत्तिनाशरहितस्तदभा वादेवचमध्यवर्जितः ॥ ५४ ॥ सर्वेषांपरमउत्कृष्टआत्माअंतर्यामिविधयाप्रेरकत्वात् परानंदःहिरण्यगर्भानंदादपिउत्कृष्टोयआनंदस्तद्रूपःपूर्णःपुरुषःप्राप्तसर्व कामत्वात्पूर्णः अतएवेश्वरःसर्वनियंताईदृशोऽपित्वंममगर्भरूपेगृहेमदीयपुण्याधिक्याज्जातोजातइव ॥ ५५ ॥ अवसानेत्वस्याअवसानकालेऽतिवार्धकेइत्य र्थः । त्वदवतारसमाप्तिकालेचसमयःप्रश्नावसरःअबोधजःअज्ञानजःकृत्स्नोननिवर्तते । सर्वदात्वत्संगात्किंचिन्निवृत्तोऽपिसर्वथाननिवर्ततइतिभावः ॥ ५६ ॥

प्रतिबुद्धइवस्वप्नाच्चकारानंतराःक्रियाः ॥ विससर्जऋषीन्सर्वान्नृत्विजोयेसमागताः ॥५०॥ तान्सर्वान्धनरत्नाद्यैस्तोषयामासभूरिशः ॥ उपादायकुमारौतावयोध्यामगमत्प्रभुः ॥५१॥ तदादिनिःस्पृहोरामःस्वगभोगेषुसर्वदा॥आत्मचिंतापरोनित्यमेकांतेसमुपस्थितः ॥५२॥ एकांतेध्याननिरतेएकदाराघवेसति ॥ ज्ञात्वानारायणंसाक्षात्कौसल्याप्रियवादिनी॥५३॥ भक्त्यागत्यप्रसन्नंतंप्रणताप्राहहृष्टधीः ॥ राम त्वंजगतामादिरादिमध्यांतवर्जितः ॥ ५४ ॥ परमात्मापरानंदःपूर्णःपुरुषईश्वरः ॥ जातोऽसिमेगर्भगृहेममपुण्यातिरेकतः ॥ ५५ ॥ अव सानेममाप्यद्यसमयोऽभूद्रघूत्तम ॥ नाद्याप्यबोधजःकृत्स्नोभवबंधोनिवतते ॥ ५६ ॥ इदानीमपिमेज्ञानंभवबंधनिवर्तकम्॥यथासंक्षेपतो भूयात्तथाबोधयमांविभो ॥ ५७ ॥ निर्वेदवादिनीमेवंमातरंमातृवत्सलः ॥ दयालुःप्राहधर्मात्माजराजर्जरितांशुभाम् ॥ ५८ ॥ श्रीरामच न्द्रउवाच ॥ ॥ मार्गास्त्रयोमयाप्रोक्ताःपुरामोक्षाप्तिसाधकाः ॥ कर्मयोगोज्ञानयोगोभक्तियोगश्चशाश्वतः ॥ ५९ ॥

इदानीमपिअवसानकालेऽपितथासंक्षेपतोबोधयेत्यन्वयः ॥ ५७ ॥ निर्वेदोविषयेष्वलंप्रत्ययस्तेनवादिनीमीदृशवचनवक्त्रीम् ॥ ५८ ॥ त्रीन्मार्गानाह । कर्मेत्यादि । अत्रेदंबोध्यम् । ज्ञानयोगस्त्रिधा । एतज्जन्मानुष्ठितकर्मयोगसंपादिताचित्तशुद्ध्याजातः एतज्जन्मानुष्ठितभक्तियोगकृताचित्तशुद्ध्याजातः पूर्वा र्जिताभ्यामाभ्यांसंपादिततया एतज्जन्मनितदनुष्ठानानपेक्षोवेति । अन्यथाकेवलकर्मभक्तिभ्यांज्ञानंविनामोक्षस्य । तमेवविदित्वातिमृत्युमेति नान्यःपंथावि द्यतेऽयनाय । इतिश्रुतिविरुद्धतयायथाश्रुतमूलासंगतिःस्यादितिदिक् । तेषांमध्येभक्तियोगरूपोमार्गोज्ञानजननेसुलभइत्यर्थः ॥ ५९ ॥

गुणभेदतः तमोरजःसत्त्वरूपगुणभेदेनतामसीराजसीसात्त्विकी चेतित्रिधेत्यर्थः ॥ ६० ॥ भक्तित्रैविध्याद्भक्तस्यापित्रैविध्यम् तत्रतामसंभक्तमाह । यस्त्विति । हिंसां शत्रोः दंभंपूजालाभादिफलकम् मात्सर्यंपरगुणद्वेषः भेददृष्टिःअरिमित्रादिदृष्टिः संरंभीतत्तद्विषयकाग्रहवान् ॥ ६१ ॥ फलंस्वर्गस्तदभिसंधिस्तत्कामः भोगऐहिकः यशइत्यस्ययशःकामइत्यर्थः । गोबलीवर्दन्यायेनपृथङ्निर्देशः । अर्चादौप्रतिमादौ । आदिनास्थंडिलादिपूजास्थानसंग्रहः । भेदबुद्ध्याअयमुपास्योऽहमुपासकइत्येवंरूपया ॥ ६२ ॥ योनिर्हरणायपापनाशायकर्ममत्पूजनरूपंपरास्मिन्मयिअर्पितंकर्यात् । भगवतःप्रेरणायादस्वतंत्रेणमयाकृतंतेनसएवतुष्यत्वितिबुद्धिर्ब्रह्मार्पणंनाम । अथवाशास्त्रबोधितत्वादवश्यकर्तव्यमितिबुद्ध्यावायःकुर्यात्ससात्त्विकः । अत्रापिभेदबुद्ध्येत्युपादानादभेदबुद्धिरेतत्फलमितिसूचितम् ॥ ६३ ॥ एतत्फलीभूतंनिर्गुणभक्तियोगलक्षणमाह । मद्गुणेति अविच्छिन्नामनोवृत्तिरित्यंतेन । अनंतगुणालयेमयियाअविच्छिन्नामनोवृत्तिरेत

भक्तिर्विभिद्यतेमातस्त्रिविधागुणभेदतः ॥ स्वभावोयस्ययस्तेनतस्यभक्तिर्विभिद्यते ॥ ६० ॥ यस्तुहिंसांसमुद्दिश्यदंभंमात्सर्यमेववा ॥ भेददृष्टिश्चसंरंभीभक्तोमेतामसःस्मृतः ॥६१॥ फलाभिसंधिर्भोगार्थीधनकामोयशस्तथा॥अर्चादौभेदबुद्ध्यामांपूजयेत्सतुराजसः॥६२॥ परस्मिन्नर्पितंयस्तुकर्मनिर्हरणायवा ॥ कर्तव्यमितिवाकुर्याद्भेदबुद्ध्याससात्त्विकः ॥ ६३ ॥ मद्गुणाश्रयणादेवमय्यनंतगुणालये ॥ अविच्छिन्नामनोवृत्तिर्यथागंगांबुनोंबुधौ ॥ ६४ ॥ तदेवभक्तियोगस्यलक्षणंनिर्गुणस्यहि ॥ अहैतुक्यव्यवहितायाभक्तिर्मयिजायते ॥ ६५ ॥ सामेसालोक्यसामीप्यसार्ष्टिसायुज्यमेववा ॥ ददात्यपिनगृह्णंतिभक्तामत्सेवनंविना ॥ ६६ ॥ सएवात्यंतिकोयोगोभक्तिमार्गस्यभामिनि ॥ मद्भावंप्राप्नुयात्तेनअतिक्रम्यगुणत्रयम् ॥६७॥ महताकामहीनेनस्वधर्माचरणेनच ॥ कर्मयोगेनशस्तेनवर्जितेनाविहिंसनम् ॥६८॥

त्सगुणध्यानस्यनिर्गुणध्यानस्यलक्षणंप्रापकम् । तत्रदृष्टांतः । यथागंगांबुनोंऽबुधौइत्यनेनाभेदविषयत्वंमनोवृत्तेर्दर्शितम् ॥ ६४ ॥ अहैतुक्यंफलानुद्देशः अतएवाव्यवहिताविशेषेणावहितासंबद्धा ॥ ६५ ॥ सार्ष्टिःसारूप्यम् उक्तफलानिददात्यपिपरंतुभक्तामत्सेवनंविनातेषुमत्सेवायाअभावात्तानिनगृह्णंतिनांगीकुर्वंति ॥ ६६ ॥ सएवसालोक्यादितिरस्कारएवआत्यंतिकोयोगः । सएवपूर्णोभक्तोयोमत्सेवारहितंमोक्षमपिनबहुमन्यतेइतितेनभक्तियोगेनगुणत्रयंतद्रूपांमायामतिक्रम्यमद्भावंमदैक्यंप्राप्नुयात् ॥ ६७ ॥ अथकर्मयोगमाह । महतेति । कामहीनेनफलोद्देशहीनेन स्वधर्मोनित्यनैमित्तिकरूपः । तादृशकर्मयोगेनमद्भावंप्राप्नुयात् । कथंभूतेनविहिंसनंहिंसावर्जितेनहिंसारहितेनेतियावत् ॥ ६८ ॥

उक्तभक्तियोगप्राप्त्युपायमाह । मद्दर्शनेति । स्मृतिः स्मरणम् । वंदनंप्रणतिः । सर्वभूतेषुमद्भावनयाईश्वरभावनया असंगेनदुष्टसंगपरित्यागेन ॥ ६९ ॥ यमाद योयमनियमप्राणायामादयः ॥ ७० ॥ अहमःअहंकृतेः अहंकर्तेत्यादिबुद्धेः ॥ ७१ ॥ ममधर्मस्यमत्पूजादिरूपस्यकांक्षयाइच्छया । अंजसाशीघ्रमायातिमद भिन्नोभवति ॥ ७२ ॥ स्वाश्रयात्वायुनास्वाश्रयापकर्षणात् ॥ ७३ ॥ अहमात्माव्यवस्थितः।सर्वत्रचेतनोऽहमेवेत्यर्थः । तंसर्वत्रचैतन्यसंपादकंमामज्ञात्वा बहिः क्रियोत्पन्नैरनेकभेदैर्द्रव्यैर्गंधपुष्पधूपादिभिर्हेअंबमेतोषणंसंतोषंनकुरुते नजनयतीत्यन्वयः । सर्वभतस्थितत्वेनमामज्ञात्वाकृतयापूजयामोक्षफलदोममसंतोषोनेत्यर्थः

मद्दर्शनस्तुतिमहापूजाभिःस्मृतिवंदनैः ॥ भूतेषुमद्भावनयासंगेनासत्यवर्जनैः ॥६९॥ बहुमानेनमहतांदुःखिनामनुकंपया ॥ स्वसमानेषु मैत्र्याचयमादीनांनिषेवया ॥ ७० ॥ वेदांतवाक्यश्रवणान्ममनामानुकीर्तनात् ॥ सत्संगेनार्जवेणैवह्यहमःपरिवर्जनात् ॥ ७१ ॥ कांक्ष याममधर्मस्यपरिशुद्धांतरोजनः ॥ मद्गुणश्रवणादेवायातिमामंजसाजनः ॥ ७२ ॥ यथावायुवशाद्गंधःस्वाश्रयाद्घ्राणमाविशेत् ॥ योगा भ्यासरतंचित्तमेवमात्मानमाविशेत् ॥७३॥ सर्वेषुप्राणिजातेषुह्यहमात्माव्यवस्थितः ॥ तमज्ञात्वाविमूढात्माकुरुतेकेवलंबहिः ॥ ७४ ॥ क्रियोत्पन्नैर्नैकभेदैर्द्रव्यैर्मेनांबतोषणम् ॥ भूतावमानिनार्चायामर्चितोऽहंनपूजितः ॥ ७५ ॥ तावन्मामर्चयेद्देवंप्रतिमादौस्वकर्मभिः ॥ या वत्सर्वेषुभूतेषुस्थितंचात्मनिनस्मरेत् ॥ ७६ ॥ यस्तुभेदंप्रकुरुतेस्वात्मनश्चपरस्यच ॥ भिन्नदृष्टेर्भयंमृत्युस्तस्यकुर्यान्नसंशयः ॥ ७७ ॥

॥ ७४ ॥ सर्वप्राण्यपमानकर्त्रायावत्प्रतिमानपूजितातावदेवविशिष्टानांसापूजायोग्या तदनंतरंनैतत्पूजेत्यर्थः[1] । अर्चितइत्यस्यव्याख्यापूजितइति ॥ ७५ ॥ ताव न्मामर्चयेदित्यर्धंमध्यमणिन्यायेनोत्तरान्वय्यपि[2] । यावत्सर्वभूतास्थितंमामात्मनिनस्मरेत्सएवाहमितिनजानीयात् तावदेवपूजादावधिकारोनतदुत्तरम् । पूज्यपूज कभावापगमादितिभावः ॥ ७६ ॥ इयमेवभावनामुख्येतिध्वनयितुंभेदंनिंदति । यस्त्विति । भिन्नदृष्टेस्तस्यमृत्युर्भयंकुर्यात्अत्रसंशयोनास्तीत्यर्थः ॥ ७७ ॥

१ अनेनसर्वप्राणिविनिन्दकस्यात्यन्तनीचता दर्शिता । तस्मात्प्राणिभिः सह विरोधविमाननादिकं दुष्कर्म कदापि न कुर्वीतेति विधिर्व्यतिरेकमुखेन दर्शितः ।

२ मध्ये वर्तमानो हीरकादिमणिरुभयतोऽपि गात्रं विभूषयति । इति न्यायस्वरूपम् ।

तस्माद्भेदंत्यक्त्वैवाहमुपास्यइत्याह । मामतइति । एकंमांज्ञानेनमानेनएवंज्ञानपूर्वकंसर्वप्राणिसंमाननेनमैत्र्यासर्वत्रमित्रबुद्ध्यामामर्चेदितीयमेवमेमुख्यापूजा । क्वापिशत्रुबुद्धिः सर्वथानकार्येतिभावः । अभिन्नधीःएकएवचेतनोभगवान्सर्वत्रेत्येवंबुद्धिरित्यर्थः ॥ ७८ ॥ तथासर्वभूतानिचेतसाप्रणमेत्तत्रहेतुः । ज्ञात्वेति ॥ ७९ ॥ ईश्वरजीवयोरितिपरस्परजीवानांचेत्यपिबोध्यम् । ज्ञानयोगोभक्तियोगसहितोज्ञानयोगइत्यर्थः ॥ ८० ॥ एकतरंकेवलभक्तियोगमपीत्यर्थः । शममृच्छतितस्यपीरणामेज्ञानयोगप्रापकत्वादितिभावः ॥८१॥ भक्तियोगेनउत्कृष्टोऽयमीश्वरःपूज्यइत्येवंरूपेण । तत्रासामर्थ्येआह । पुत्ररूपेणवेति ॥ ८२ ॥

मामतःसर्वभूतेषुपरिच्छिन्नेषुसंस्थितम् ॥ एकंज्ञानेनमानेनमैत्र्याचार्चेदभिन्नधीः॥७८॥चेतसैवानिशंसर्वभूतानिप्रणमेत्सुधीः ॥ ज्ञात्वामां चेतनंशुद्धंजीवरूपेणसंस्थितम् ॥७९॥ तस्मात्कदाचिन्नेक्षेतभेदमीश्वरजीवयोः ॥ भक्तियोगोज्ञानयोगोमयामातरुदीरितः॥ ८० ॥आलंब्यैकतरंवापिपुरुषःशममृच्छति ॥ ततोमांभक्तियोगेनमातःसर्वहृदिस्थितम् ॥ ८१ ॥ पुत्ररूपेणवानित्यंस्मृत्वाशांतिमवाप्स्यसि ॥ श्रुत्वारामस्यवचनंकौसल्यानंदसंयुता ॥८२॥ समंसदाहृदिध्यात्वाछित्त्वासंसारबंधनम् ॥ अतिक्रम्यगतीस्तिस्रोऽप्यवापपरमांगतिम्॥ ॥ ८३ ॥ कैकेयीचापियोगंरघुपतिगदितंपूर्वमेवाधिगम्य श्रद्धाभक्तिप्रशांताहृदिरघुतिलकंभावयंतीगतासुः ॥ गत्वास्वर्गेस्फुरंतीदशरथसहितामोदमानावतस्थेमाताश्रीलक्ष्मणस्याऽप्यतिविमलमतिःप्रापभर्तुःसमीपम् ॥ ८४ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादे उत्तरकांडेश्रीरामचन्द्रमातॄणांस्वर्गप्रस्थानंनामसप्तमःसर्गः ॥ ७ ॥ ॥ श्रीमहादेवउवाच ॥ अथकालेगतेकस्मिन्भरतोभीमविक्रमः ॥ युधाजितामातुलेनह्याहूतोऽगात्ससैनिकः १

तिस्रोगतीःसात्विकराजसतामसीः तत्रसात्विकीअर्चिरादिगतिः राजसीधूमादिगतिस्तामसीजायस्वम्रियस्वेत्येवंरूपा तत्राद्यादहराद्युपासकानां द्वितीयाकर्मिणां तृतीयान्येषाम् । परमांगतिम् । नास्यप्राणाह्युत्क्रामंत्यत्रैवसमवलीयंते । इतिज्ञानिप्राप्याम् ॥ ८३ ॥ पूर्वमेवचित्रकूटगिरौ ॥ ८४ ॥ ॥ इति श्रीमत्सकलराजविपदुद्धरण० उत्तरकांडे सप्तमः सर्गः ॥ ७ ॥ ॥ अथेति । कस्मिन्कस्मिंश्चिदित्यर्थः । मातुलेनाहूतःस्वदेशसमीपवर्तिगंधर्वविषयस्थगंधर्ववधार्थम् ॥ १ ॥

१ एतेन कौसल्याया राममातुरेव सहसा मुक्तिप्राप्तिः सूचिता । अवश्यमुचिता च सा, तस्याः प्रत्यक्षजन्मदत्वात् ।

तिस्रःकोटीर्गंधर्वनायकान्हत्वेत्यन्वयः । पुरेपुष्करावतीतक्षशिलाख्ये ॥ २ ॥ सुतौपुष्करतक्षनामानौ ॥ ३ ॥ ४ ॥ कुमारौस्वपुत्रौपश्चिमांदिशंयाहीतिशे
षः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ततःसमागमनानंतरम् ॥ ९ ॥ अतिबलस्यमहर्षिमुख्यस्यदूतंरामंद्रष्टुकामंपुरुषोत्तमायनिवेदयस्वयस्याहंदूतस्तस्यमहर्षिमु
ख्यस्यरामायचिरायविज्ञापनमस्तिरामंप्रतिचिरकालंबोधनीयंवाक्यमस्ति ॥ १० ॥ ससौमित्रिरित्यन्वयः ॥ ११ ॥ १२ ॥ १३ ॥ वर्धस्वेत्यस्यभूरा



रामाज्ञयागतस्तत्रहत्वागंधर्वनायकान् ॥ तिस्रःकोटीःपुरेद्वेतुनिवेश्यरघुनंदनः ॥ २ ॥ पुष्करंपुष्करावत्यांतक्षंतक्षशिलाह्वये ॥ अभिषि
च्यसुतौतत्रधनधान्यसुहृद्वृतौ ॥ ३ ॥ पुनरागत्यभरतोरामसेवापरोऽभवत् ॥ ततःप्रीतोरघुश्रेष्ठोलक्ष्मणंप्राहसादरम् ॥ ४ ॥ उभौकुमा
रौसौमित्रेगृहीत्वापश्चिमांदिशम् ॥ तत्रभिल्लान्विनिर्जित्यदुष्टान्सर्वापकारिणः ॥ ५ ॥ अंगदश्चित्रकेतुश्चमहासत्त्वपराक्रमौ ॥ द्वयोर्द्वेनग
रेकृत्वागजाश्वधनरत्नकैः ॥ ६ ॥ अभिषिच्यसुतौतत्रशीघ्रमागच्छमांपुनः ॥ रामस्याज्ञांपुरस्कृत्यगजाश्वबलवाहनः ॥७॥ गत्वाहत्वारि
पून्सर्वान्स्थापयित्वाकुमारकौ ॥ सौमित्रिःपुनरागत्यरामसेवापरोऽभवत् ॥ ८ ॥ ततस्तुकालेमहतिप्रयातेरामंसदाधर्मपथेस्थितंहरिम् ॥
द्रष्टुंसमागादृषिवेषधारीकालस्ततोलक्ष्मणमित्युवाच ॥ ९ ॥ निवेदयस्वातिबलस्यदूतंमांद्रष्टुकामंपुरुषोत्तमाय ॥ रामायविज्ञापनमास्ति
तस्यमहर्षिमुख्यस्यचिरायधीमन् ॥ १० ॥ तस्यतद्वचंश्रुत्वासौमित्रिस्त्वरयान्वितः ॥ आचचक्षेऽथरामायससंप्राप्तंतपोधनम् ॥ ११ ॥
एवंब्रुवंतंप्रोवाचलक्ष्मणंराघवोवचः ॥ शीघ्रंप्रवेश्यतांतातमुनिःसत्कारपूर्वकम् ॥ १२ ॥ लक्ष्मणस्तुतथेत्युक्त्वाप्रावेशयततापसम् ॥स्वते
जसाज्वलंतंतंघृतासिक्तंयथानलम् ॥ १३ ॥ सोभिगम्यरघुश्रेष्ठंदीप्यमानःस्वतेजसा ॥ मुनिर्मधुरवाक्येनवर्धस्वेत्याहराघवम् ॥ १४ ॥
तस्मैसमुनयेरामःपूजांकृत्वायथाविधि ॥ पृष्ट्वानामयमव्यग्रोरामःपृष्टोऽथतेनसः ॥ १५ ॥ दिव्यासनेसमासीनोरामःप्रोवाचतापसम् ॥
यदर्थमागतोऽसित्वमिहतत्प्रापयस्वमे ॥ १६ ॥

ज्याधिकस्वर्गराज्यलाभेनवर्धस्वेतितद्धृदयस्थितोऽर्थः ॥ १४ ॥ तेनानामयंपृष्टोरामस्तस्मैअनामयंपृष्ट्वाप्रोवाचेत्यन्वयः ॥ १५ ॥ यदर्थंयत्प्रापणार्थंतत्स्व
स्वामिवाक्यम् ॥ १६ ॥

द्वंद्वमेवरहस्यमेवअनालक्ष्यंतृतीयेनेतिशेषः ॥ १७ ॥ तदेवस्पष्टयति । नान्येनेति । निरीक्षेद्वाकथयंतावावामितिशेषः ॥ १८ ॥ अत्ररहोरहःस्थानेजनआ
वाभ्यामतिरिक्तस्तृतीयोजनइत्यर्थः ॥ १९ ॥ कोवापित्वंवाअन्योवा । येनत्वंविसर्जितःप्रेषितस्तस्यवामनीषितमथवातेतवैवमनीषितंयद्वाक्यंतद्वदस्व
॥ २० ॥ यथातथंसत्यमित्यर्थः ॥ २१ ॥ त्वंकइतिजिज्ञासांसंभाव्यस्वयमेवोत्तरमाह । अहंहीति । पूर्वसृष्टयपेक्षयापूर्वः । महत्तत्त्वस्यैवायमंशविशेषइ
त्याह । अतिरिक्तमेवेदंतत्त्वमितिशैवाः ॥ २२ ॥ मायासंगमस्तदीक्षणमात्रम् ॥ २३ ॥ अथब्रह्मवाक्यमाह । रक्षितुमिति । समयःअवतारसमयेकृतःका

वाक्येनचोदितस्तेनरामेणाहमुनिर्वचः ॥ द्वंद्वमेवप्रयोक्तव्यमनालक्ष्यंतुतद्वचः ॥१७॥ नान्येनचैतच्छ्रोतव्यंनाख्यातव्यंचकस्यचित् ॥
शृणुयाद्वानिरीक्षेद्वायःसवध्यस्त्वयाप्रभो ॥ १८ ॥ तथेतिचप्रतिज्ञायरामोलक्ष्मणमब्रवीत् ॥ तिष्ठत्वंद्वारिसौमित्रेनायात्वत्रजनोरहः ॥
॥ १९ ॥ यद्यागच्छतिकोवापिसवध्योमेनसंशयः ॥ ततःप्राहमुनिंरामोयेनवात्वंविसर्जितः ॥ २० ॥ यत्तेमनीषितंवाक्यंतद्वदस्वममाग्र
तः ॥ ततःप्राहमुनिर्वाक्यंशृणुरामयथातथम् ॥ २१ ॥ ब्रह्मणाप्रेषितोऽस्मीशकार्यार्थंतेऽतिकंप्रभो ॥ अहंहिपूर्वजोदेवतवपुत्रःपरंतप ॥
॥२२ ॥ मायासंगमजोवीरकालःसर्वहरःस्मृतः ॥ ब्रह्मात्वामाहभगवान्सर्वदेवर्षिपूजितः ॥ २३ ॥ रक्षितुंस्वर्गलोकस्यसमयस्तेमहा
मते ॥ पुरात्वमेकएवासीर्लोकान्संहृत्यमायया ॥ २४ ॥ भार्ययासहितस्त्वंमामादौपुत्रमजीजनः ॥ तथाभोगवतंनागमनंतमुदकेशयम्
॥ २५ ॥ माययाजनयित्वात्वंद्वौससत्त्वौमहाबलौ ॥ मधुकैटभकौदैत्यौहत्वामेदोऽस्थिसंचयम् ॥ २६ ॥ इमांपर्वतसंबद्धांमेदिनीं
पुरुषर्षभ ॥ पद्मेदिव्यार्कसंकाशेनाभ्यामुत्पाद्यमामपि ॥ २७ ॥

लः एतावंतंकालंभूलोकेस्थित्वापुनःस्वर्गमागंतेत्येवंरूपः । ननुममस्वर्गेणकःसंबंधइत्याशंकांनिवर्तयितुंपूर्वकथामाह । पुरेति । सदेवसोम्येदमग्रआसीत् । इ
तिश्रुतेः । मायापिकार्याक्षमत्वात्त्वदभेदेनैवतदेतिभावः ॥ २४ ॥ भार्ययामाययाभवत्सान्निध्येनतस्याअप्येवंपरिणामशीलत्वादितिभावः । भोगवंतंशेषम् । नु
मभावआर्षः । एतावुभावपिमहत्तत्त्वाधिष्ठातारावित्याहुः ॥ २५ ॥ ससत्त्वौसपराक्रमौ तन्मेदोऽस्थिसंचयंतद्रूपाम् ॥ २६ ॥ इमांमेदिनीम् । निर्मितवानि
तिशेषः । तत्रसुप्तस्यनाभ्यांविद्यमानेपद्मेमामुत्पाद्य ॥ २७ ॥

तंचमांप्रजाध्यक्षंविधायभवान्मयिसर्वंप्रजोत्पादनपालनादिभारंन्यवेदयत्स्थापितवान् संयुक्तसंभारःअंगीकृतप्रजोत्पादनादिव्यवहारः ॥ २८ ॥ मेवीर्यापहारिणःमेवीर्यस्यमत्प्रजानांदुःखदाइत्यर्थः । ततः मांप्रतितथाप्रतिज्ञानोत्तरामित्यर्थः ॥ २९ ॥ ३० ॥ ३१ ॥ समयंवासकालप्रतिज्ञाम् । मनोरथःप्रतिज्ञाविषयःकालःनृषुनृलोकेआयुषिपूर्णेसति ॥ ३२ ॥ अहंकालस्तापसरूपेणत्वत्समीपमुपागमंप्राप्तवानस्मि ॥ ३३ ॥ तत्तथाभवराज्यमुपास्वेत्यर्थः ॥ ३४ ॥

मांविधायप्रजाध्यक्षंमयिसर्वंन्यवेदयत् ॥ सोहंसंयुक्तसंभारस्त्वामवोचंजगत्पते ॥ २८ ॥ रक्षांविधत्स्वभूतेभ्योयेमेवीर्यापहारिणः ॥ ततस्त्वंकश्यपाज्जातोविष्णुर्वामनरूपधृक् ॥२९॥ हृतवानसिभूभारंवधाद्रक्षोगणस्यच ॥ सर्वासूत्सार्यमाणासुप्रजासुधरणीधर ॥३०॥ रावणस्यवधाकांक्षीमर्त्यलोकमुपागतः ॥ दशवर्षसहस्राणिदशवर्षशतानिच ॥ ३१ ॥ कृत्वावासस्यसमयंत्रिदशेष्वात्मनःपुरा ॥ सतेमनोरथःपूर्णःपूर्णेचायुषितेनृषु ॥ ३२ ॥ कालस्तापसरूपेणत्वत्समीपमुपागमम् ॥ ततोभूयश्चतेबुद्धिर्यदिराज्यमुपासितुम् ॥ ३३ ॥ तत्तथाभवभद्रंतेएवमाहपितामहः ॥ यदितेगमनेबुद्धिर्देवलोकंजितेंद्रिय ॥ ३४ ॥ सनाथाविष्णुनादेवाभवंतुविगतज्वराः ॥ चतुर्मुखस्यतद्वाक्यंश्रुत्वाकालेनभाषितम् ॥ ३५ ॥ हसन्रामस्तदावाक्यंकृत्स्नस्यांतकमब्रवीत् ॥ श्रुतंतववचोमेऽद्यममापीष्टतरंतुतत् ॥ ३६ ॥ संतोषःपरमोज्ञेयस्त्वदागमनकारणात् ॥ त्रयाणामपिलोकानांकार्यार्थंममसंभवः ॥ ३७ ॥ भद्रंतेऽस्त्वागमिष्यामियतएवाहमागतः ॥ मनोरथस्तुसंप्राप्तोनमेत्राऽस्तिविचारणा ॥३८॥ मत्सेवकानांदेवानांसर्वकार्येषुवैमया ॥ स्थातव्यंमाययापुत्रयथाचाहप्रजापतिः ॥३९॥ एवंतयोःकथयतोर्दुर्वासामुनिरभ्यगात् ॥ राजद्वाररंराघवस्यदर्शनापेक्षयाद्भुतम् ॥ ४० ॥ मुनिर्लक्ष्मणमासाद्यदुर्वासावाक्यमब्रवीत् ॥ शीघ्रंदर्शयराममेकार्यंमेऽत्यंतमाहितम् ॥ ४१ ॥

॥ ३५ ॥ कृत्स्नस्यजगतोंऽतकंनाशकम् । कालमित्यर्थः ॥ ३६ ॥ कार्यार्थसंभवः तेननिष्पन्नकार्यस्यावस्थानेनप्रयोजनमित्यर्थः ॥ ३७ ॥ मनोरथः अयमेवमेमनोरथोयदितोगमनमितिभावः ॥ ३८ ॥ स्थातव्यंतद्रक्षणायोद्युक्तेनभाव्यम् । माययेत्यनेनसर्वमिदंमायैवेतिध्वनयति ॥ ३९ ॥ आद्भुतंयथाभवतितथादर्शनेच्छयाराजद्वारमभ्यगात् ॥ ४० ॥ ४१ ॥

रामेणकार्येकिंतेइतिवत्सर्वंकार्यमहंसंपादयामीतिभावः । तदेवाह । किंतेइत्यादि ॥ ४२ ॥ ४३ ॥ वंशंदशरथस्येतिशेषः । तेनसर्वेषांभवदादीनांनाशंकरि
ष्यामीत्यर्थः ॥ ४४ ॥ भृशमतिशयेनघोरमित्यन्वयः । स्वरूपंवाच्यंव्यंग्यंचार्थम् ॥ ४५ ॥ कारणाद्दुर्वासोरूपात् ॥ ४६ ॥ ४७ ॥ ४८ ॥ वर्षस
हस्राणांसंबंधीयउपवासस्तस्यसमापनम् । समासआर्षः ॥ ४९ ॥ यत्सिद्धंगृहेऽस्तितद्भोजनमिच्छामि ॥ ५० ॥ अमृतममृतवत्स्वादु ॥ ५१ ॥ कालेनभा

तच्छ्रुत्वाप्राहसौमित्रिर्मुनिंज्वलनतेजसम् ॥ रामेणकार्यंकिंतेऽद्यकिंतेऽभीष्टंकरोम्यहम् ॥ ४२ ॥ राजाकार्यांतरेव्यग्रोमुहूर्तंसंप्रतीक्ष्यता
म् ॥ तच्छ्रुत्वाक्रोधसंतप्तोमुनिःसौमित्रिमब्रवीत् ॥४३॥ अस्मिन्क्षणेतुसौमित्रेनदर्शयासिचेद्विभुम् ॥ रामंसविषयंवंशंभस्मीकुर्यांनसंशयः ॥
॥ ४४ ॥ श्रुत्वातद्वचनंघोरमृषेर्दुर्वाससोभृशम् ॥ स्वरूपंतस्यवाक्यस्याचिंतयित्वासलक्ष्मणः ॥ ४५ ॥ सर्वनाशाद्वरंमेऽद्यनाशोह्येकस्य
कारणात् ॥ निश्चित्यैवंततोगत्वारामायप्राहलक्ष्मणः ॥ ४६ ॥ सौमित्रेर्वचनंश्रुत्वारामःकालंव्यसर्जयत् ॥ शीघ्रंनिर्गम्यरामोऽपिददर्शा
त्रेःसुतंमुनिम् ॥ ४७ ॥ रामोऽभिवाद्यसंप्रीतोमुनिंपप्रच्छसादरम् ॥ किंकार्यंतेकरोमीतिमुनिमाहरघूत्तमः ॥ ४८ ॥ तच्छ्रुत्वारामव
चनंदुर्वासाराममब्रवीत् ॥ अद्यवर्षसहस्राणामुपवाससमापनम् ॥ ४९ ॥ अतोभोजनमिच्छामिसिद्धंयत्तेरघूत्तम ॥ रामोमुनिवचश्श्रु
त्वासंतोषेणसमान्वितः ॥ ५० ॥ ससिद्धमन्नंमुनयेयथावत्समुपाहरत् ॥ मुनिर्भुक्त्वान्नममृतंसंतुष्टःपुनरभ्यगात् ॥ ५१ ॥ स्वमाश्रमंग
तेतस्मिन्रामःसस्मारभाषितम् ॥ कालेनशोकदुःखार्तोविमनाश्चातिविह्वलः ॥५२॥ अवाङ्मुखोदीनमनानशशाकाभिभाषितुम् ॥ मन
सालक्ष्मणंज्ञात्वाहतप्रायंरघूद्वहः ॥५३॥ अवाङ्मुखोबभूवाथतूष्णीमेवाखिलेश्वरः ॥ ततोरामंविलोक्याहसौमित्रिर्दुःखसंप्लुतम् ॥५४॥
तूष्णींभूतंचिंतयंतंगर्हंतंस्नेहबंधनम् ॥ मत्कृतेत्यजसंतापंजहिमांरघुनंदन ॥ ५५ ॥ गतिःकालस्यकलितापूर्वमेवेदृशीप्रभो ॥ त्वयिहीन
प्रतिज्ञेतुनरकोमेध्रुवंभवेत् ॥ ५६ ॥

षितमित्यन्वयः । स्मृत्वाचशोकादियुक्तःसन् ॥ ५२ ॥ मनसाहतप्रायंज्ञात्वाप्रतिज्ञायाअन्यथाकर्तुमशक्यत्वादितिभावः ॥ ५३ ॥ ५४ ॥ स्नेहकृतंबं
धनंगर्हंतंनिंदंतम् स्नेहाद्वधेऽशक्ततातदकरणेचप्रतिज्ञाहानिरितिचिंतयंतम् ॥ ५५ ॥ पूर्वमेवेदृशीति । इदमवश्यंभावीतिभावः । मत्कृतेत्वत्प्रतिज्ञाहानौम
मापिनरकइत्यर्थः ॥ ५६ ॥

धर्ममात्यजेत्यन्वयः । अनेनप्रतिज्ञापालनमेवक्षत्रियस्यमुख्योधर्मस्तद्विधेयानांचतत्प्रतिज्ञानिर्वाहणंपरमोधर्मइतिचसूचितम् ॥ ५७ ॥ चलितमानसस्त्यक्त
भ्रातृस्नेहः ॥ ५८ ॥ मुनेर्दुर्वाससः ॥ ५९ ॥ ६० ॥ भूभारहारिणस्तावन्मात्रफलकवयाधृतशरीरस्यतवपूर्वंत्वत्तःपूर्वमित्यर्थः । लक्ष्मणगमनंनिर्दिष्टं
भावीसत्वर्थोऽस्माभिर्ज्ञातएवास्ते ॥ ६१ ॥ प्रतिज्ञातेऽर्थेपरित्यक्तेअन्यथाकृते ॥ ६२ ॥ धर्मेनष्टेराज्ञइतिशेषः । तवत्रैलोक्यपालकत्वेनतद्धर्मनाशेसंपू

मयिप्रीतिर्यदिभवेद्यद्यनुग्राह्यताऽतव ॥ त्यक्त्वाशंकांजहिप्राज्ञमामाधर्मंत्यजप्रभो ॥ ५७ ॥ सौमित्रिणोक्तंतच्छ्रुत्वारामश्चलितमानसः ॥
आहूयमंत्रिणःसर्वान्वसिष्ठंचेदमब्रवीत् ॥ ५८ ॥ मुनेरागमनंयत्तुकालस्यापिहिभाषितम् ॥ प्रतिज्ञामात्मनश्चैवसर्वमावेदयत्प्रभुः ॥५९॥
श्रुत्वारामस्यवचनंमंत्रिणःसपुरोहिताः ॥ ऊचुःप्रांजलयःसर्वेराममक्लिष्टकारिणम् ॥६०॥ पूर्वमेवहिनिर्दिष्टंतवभूभारहारिणः ॥ लक्ष्मणे
नवियोगस्तेज्ञातोविज्ञानचक्षुषा ॥ ६१ ॥ त्यजाशुलक्ष्मणंराममाप्रतिज्ञांत्यजप्रभो ॥ प्रतिज्ञातेपरित्यक्तेधर्मोभवतिनिष्फलः ॥ ६२ ॥
धर्मेनष्टेऽखिलेरामत्रैलोक्यंनश्यतिध्रुवम् ॥ त्वंतुसर्वस्यलोकस्यपालकोऽसिरघुत्तम ॥६३॥ त्यक्त्वालक्ष्मणमेवैकंत्रैलोक्यंत्रातुमर्हसि ॥
रामोधर्मार्थसहितंवाक्यंतेषामनिंदितम् ॥ ६४॥ सभामध्येसमाश्रुत्यप्राहसौमित्रिमंजसा ॥ यथेष्टंगच्छसौमित्रेमाभूद्धर्मस्यसंशयः॥६५॥
परित्यागोवधोवापिसतामेवोभयंसमम् ॥ एवमुक्तेरघुश्रेष्ठेदुःखव्याकुलितेक्षणः ॥६६॥ रामंप्रणम्यसौमित्रिःशीघ्रंगृहमगात्स्वकम् ॥ ततो
ऽगात्सरयूतीरमाचम्यसकृतांजलिः ॥ ६७ ॥ नवद्वाराणिसंयम्यमूर्ध्निप्राणमधारयत् ॥ यदक्षरंपरंब्रह्मवासुदेवाख्यमव्ययम् ॥ ६८ ॥ पदं
तत्परमंधामचेतसासोऽभ्यचिंतयत् ॥ वायुरोधेनसंयुक्तंसर्वेदेवाःसहर्षयः ॥ ६९ ॥ साग्नयोलक्ष्मणंपुष्पैस्तुष्टुवुश्चसमाकिरन् ॥ अदृश्यं
विबुधैःकैश्चित्सशरीरंसवासवः ॥ ७० ॥

र्णेत्रैलोक्यनाशइतिभावः ॥ ६३ ॥ ६४ ॥ समाश्रुत्य । वसिष्ठादिवाक्यंश्रुत्वेत्यर्थः ॥ ६५ ॥ सतामुभयंसममेवेत्यन्वयः । उक्तेउक्तवतीत्यर्थः ॥ ६६ ॥
॥ ६७ ॥ नवद्वाराणिचक्षुषीकर्णौनासिकामुखंपायूपस्थेब्रह्मरंध्रंचेति ॥ ६८ ॥ अभ्यचिंतयत् वासुदेवोऽहमित्यध्यायत ॥ ६९ ॥ तुष्टुवुः पुष्पैः समाकि
रंश्च विबुधैःकैश्चिददृश्यम् कैरपिदेवैर्नदृश्यमित्यर्थः ॥ ७० ॥

॥ ७१ ॥ हरौहर्यंशे सिद्धलोकगतयोगिनःतल्लोकस्थयोगिनइत्यर्थः । आहितंप्राप्तंमहाहिरूपंयेनतत् दुर्धर्षयथादधिभावमापद्यंते तथायमेवदेहस्तत्राहिरूपतां प्राप्तइत्यर्थः ॥ ७२ ॥ इतिश्रीमत्सकलराजवि० उत्तरकांडे अष्टमः सर्गः॥ ८॥ नैगमावणिजः ॥ १ ॥ अयचाहमित्यर्थः । पदानुगैःपदान्यनुलक्षीकृत्यगंता। अन्यथातेनबहुव्यवधानंस्यादित्यर्थः ॥ २ ॥ उक्तेउक्तवतिसति ॥ ३ ॥ भरतोवापिभरतश्चापीत्यर्थः । राज्यंगर्हयामासतन्निंदापूर्वकमिदंप्राहचेत्यर्थः ॥ ४ ॥

गृहीत्वालक्ष्मणंशक्रःस्वर्गलोकमथागमत् ॥ ततोविष्णोश्चतुर्भागंतंदेवंसुरसत्तमाः॥सर्वेदेवर्षयोदृष्ट्वालक्ष्मणंसमपूजयन् ॥७१॥ लक्ष्मणे हिदिवमागतेहरौसिद्धलोकगतयोगिनस्तदा ॥ ब्रह्मणासहसमागमन्मुदाद्रष्टुमाहितमहाहिरूपकम् ॥ ७२ ॥ इतिश्रीमदध्यात्मरा०उमा महेश्वरसंवादेउत्तरकांडेअष्टमःसर्गः ॥ ८ ॥ ॥ श्रीमहादेवउवाच ॥ लक्ष्मणंतुपरित्यज्यरामोदुःखसमन्वितः ॥ मंत्रिणोनैगमांश्चैव वसिष्ठंचेदमब्रवीत् ॥ १ ॥ अभिषेक्ष्यामिभरतमधिराज्येमहामतिम् ॥ अद्यचाहंगमिष्यामिलक्ष्मणस्यपदानुगः ॥ २ ॥ एवमुक्तेरघु श्रेष्ठेपौरजानपदास्तदा ॥ द्रुमाइवच्छिन्नमूलादुःखार्ताःपतिताभुवि ॥ ३ ॥ मूर्च्छितोभरतोवापिश्रुत्वारामाभिभाषितम् ॥ गर्हयामास राज्यंसप्राहेदंरामसन्निधौ ॥ ४ ॥ सत्येनचशपेनाहंत्वांविनादिविवाभुवि ॥ कांक्षेराज्यंरघुश्रेष्ठशपेत्वत्पादयोःप्रभो ॥ ५ ॥ इमौकुशल वौराजन्नभिषिंचस्वराघव ॥ कोशलेषुकुशंवीरमुत्तरेषुलवंतथा ॥ ६ ॥ गच्छंतुदूतास्त्वरितंशत्रुघ्नानयनायहि ॥ अस्माकमेतद्गमनं स्ववंशसायश्रृणोतुसः ॥ ७ ॥ भरतेनोदितंश्रुत्वापतितास्ताःसमीक्ष्यतम् ॥ प्रजाश्चभयसंविग्नारामविश्लेषकातराः ॥ ८ ॥ वसिष्ठोभग वान्राममुवाचसदयंवचः ॥ पश्यताताद्रात्सर्वाःपतिताभूतलेप्रजाः ॥ ९ ॥ तासांभावानुगंरामप्रसादंकर्तुमर्हसि ॥ श्रुत्वावसिष्ठवचनं ताःसमुत्थाप्यपूज्यच ॥ १० ॥ सस्नेहोरघुनाथस्ताःकिंकरोमीतिचाब्रवीत् ॥ ततःप्रांजलयःप्रोचुःप्रजाभक्त्यारघूद्वहम् ॥ ११ ॥ गंतु मिच्छसियत्रत्वमनुगच्छामहेवयम् ॥ अस्माकमेषापरमाप्रीतिर्धर्मोऽयमक्षयः ॥ १२ ॥

सत्येनशपेसत्यंभेनश्यतुयदिराज्याकांक्षेत्येकःशपथः । त्वत्पादयोश्चशपेत्वत्पादयोः स्पर्शनेचशपथइत्यपरःशपथः ॥ ५ ॥ तर्हिसर्वगमनेकोराज्यंपाल यिष्यतीत्याशंक्याह । इमाविति ॥ ६ ॥ ७ ॥ तंतथाकठोरंवदंतम् । पतिताभुवीतिशेषः ॥ ८ ॥ तातेतिसंबोधनम् ॥ ९ ॥ भावानुगमभिप्रायानुगम् पूज्येतिल्यबार्षः ॥ १० ॥ ११ ॥ अयंत्वदनुगमनरूपः ॥ १२ ॥

॥ १३ ॥ तपोवनाद्यन्यतमंयद्वंतासितदनुयामइत्यर्थः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ कृच्छ्रेणभगवद्वियोगजदुःखासहिष्णुतयाक्लेशेन अ
त्रिपुत्रस्यदुर्वाससःप्रतिज्ञांप्रजासुसहनयनविषयाम् ॥ १९॥ चिकीर्षितंस्वगमनरूपम् । कुलस्यभ्रातृसमूहस्यनाशनम् ॥ २० ॥ २१ ॥ २२ ॥१८॥ अक्ष



तवानुगमनेरामस्हृद्गतानोदृढामतिः ॥ पुत्रदारादिभिःसार्धमनुयामोऽद्यसर्वथा ॥ १३ ॥ तपोवनंवास्वर्गंवापुरंवारघुनन्दन ॥ ज्ञात्वातेषां
मनोदार्ढ्यंकालस्यवचनंयथा ॥ १४ ॥ भक्तंपौरजनंचैवबाढंमित्याहराघवः ॥ कृत्वैवनिश्चयंरामस्तस्मिन्नेवाहनिप्रभुः ॥ १५ ॥ प्रस्था
पयामासचतौरामभद्रःकुशीलवौ ॥ अष्टौरथसहस्राणिसहस्रंचैवदंतिनाम् ॥ १६ ॥ षष्टिंचाश्वसहस्राणामेकैकस्मैददौबलम् ॥ वहुरत्नौ
बहुधनौहृष्टपुष्टजनावृतौ ॥ १७ ॥ अभिवाद्यगतौरामंकृच्छ्रेणतुकुशीलवौ ॥ शत्रुघ्नानयनेदूतान्प्रेषयामासराघवः ॥ तेदूतास्त्वरितंग
त्वाशत्रुघ्नायन्यवेदयन् ॥ १८॥ कालस्यागमनंपश्चादत्रिपुत्रस्यचेष्टितम् ॥ लक्ष्मणस्यचनिर्याणंप्रतिज्ञांराघवस्यच ॥१९॥ पुत्राभिषेच
नंचैवसर्वरामचिकीर्षितम् ॥ श्रुत्वातद्दूतवचनंशत्रुघ्नःकुलनाशनम् ॥ २० ॥ व्यथितोऽपिधृतिंलब्ध्वापुत्रावाहूयसत्वरः ॥ अभिषिच्यसु
बाहुंवैमथुरायांमहाबलः ॥ २१ ॥ यूपकेतुंचाविदिशानगरेशत्रुसूदनः ॥ अयोध्यांत्वरितंप्रागात्स्वयंरामादिदृक्षया ॥ २२ ॥ ददर्शचमहा
त्मानंतेजसाज्वलनप्रभम् ॥ दुकूलयुगसंवीतमृषिभिश्चाक्षयैर्वृतम् ॥ २३ ॥ अभिवाद्यरमानाथंशत्रुघ्नोरघुपुंगवम् ॥ प्रांजलिर्धर्मसहितंवा
क्यंप्राहमहामतिः ॥ २४ ॥ अभिषिच्यसुतौतत्रराज्येराजीवलोचन ॥ तवानुगमनेराजन्विद्धिमांकृतनिश्चयम् ॥ २५ ॥ त्यक्तुंनार्हसिमां
वीरभक्तंतवविशेषतः ॥ शत्रुघ्नस्यदृढांबुद्धिंविज्ञायरघुनन्दनः ॥ २६ ॥ सज्जीभवतुमध्याह्नेभवानित्यब्रवीद्वचः ॥ अथक्षणात्समुत्पेतु
र्वानराःकामरूपिणः ॥ २७ ॥ ऋक्षाश्वराक्षसाश्चैवगोपुच्छाश्चसहस्रशः ॥ ऋषीणांदेवतानांचपुत्रारामस्यनिर्गमम् ॥ २८ ॥ श्रुत्वाप्रोचू
रघुश्रेष्ठंसर्वेवानरराक्षसाः ॥ तवानुगमनेविद्धिनिश्चितार्थान्हिनःप्रभो ॥ २९ ॥



यैर्ऋषिभिः अतिचिरजीविभिर्वसिष्ठाद्यैः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

॥ ३० ॥ ३१ ॥ ३२ ॥ मेवचनात्प्रशाधिराक्षसंरक्षःसंबंधिराज्यंचप्रशाधि । अतोन्यन्मावदेत्याह । शापितोसीति । अन्यवचनोक्तौमद्वधपातकंतवे
तिभावः ॥ ३३ ॥ ३४ ॥ ममाज्ञांचिरंजीवेत्येवंरूपाम् द्वापरांतरेएतच्चतुर्युगीभिन्नंयत्किंचिच्चतुर्युगंतर्गतद्वापरे ॥ ३५ ॥ युद्धंभवेत्भविष्यति ततःस्वर्गं
गमिष्यसीतिशेषः । अत्रजांबवद्ग्रहणंमैंदद्विविदयोरप्युपलक्षणम् । तान्हनुमज्जांबवदादिभिन्नान् ॥ ३६ ॥ ३७ ॥ प्रास्थानिकंमहाप्रस्थानोचितम् क्षौमां

एतस्मिन्नंतरेरामंसुग्रीवोऽपिमहाबलः ॥ यथावदभिवाद्याहराघवंभक्तवत्सलम् ॥ ३० ॥ अभिषिच्यांगदंराज्येआगतोऽस्मिमहाबलम् ॥
तवानुगमनेरामविद्धिमांकृतनिश्चयम् ॥ ३१ ॥ श्रुत्वातेषांदृढंवाक्यमृक्षवानररक्षसाम् ॥ विभीषणमुवाचेदंवचनंमृदुसादरम् ॥ ३२ ॥ ध
रिष्यतिधरायावत्प्रजास्तावत्प्रशाधिमे ॥ वचनाद्राक्षसंराज्यंशापितोऽसिममोपरि ॥ ३३॥ नकिंचिदुत्तरंवाच्यंत्वयामत्कृतकारणात् ॥
एवंविभीषणंतूक्त्वाहनूमंतमथाब्रवीत् ॥ ३४ ॥ मारुतेत्वंचिरंजीवममाज्ञांमामृषाकृथाः ॥ जांबवंतमथप्राहतिष्ठत्वंद्वापरांतरे ॥ ३५ ॥
मयासार्धंभवेद्युद्धंयत्किंचित्कारणांतरे ॥ ततस्तान्राघवःप्राहऋक्षराक्षसवानरान् ॥ सर्वानेवमयासार्धंप्रयातेतिदयान्वितः ॥ ३६ ॥ त
तःप्रभातेरघुवंशनाथोविशालवक्षाःसितकंजनेत्रः ॥ पुरोधसंप्राहवसिष्ठमार्यंयांत्वग्निहोत्राणिपुरोगुरोमे ॥ ३७ ॥ ततोवसिष्ठोऽपिचकार
सर्वंप्रास्थानिकंकर्ममहद्विधानात् ॥ क्षौमांबरोदर्भपवित्रपाणिर्महाप्रयाणायगृहीतबुद्धिः ॥ ३८ ॥ निष्क्रम्यरामोनगरात्सिताभ्राच्छशी
वयातःशशिकोटिकांतिः ॥ रामस्यसव्येसितपद्महस्तापद्मागतापद्मविशालनेत्रा ॥ ३९ ॥ पार्श्वेऽथदक्षेरुणकंजहस्ताश्यामाययौभू
रपिदीप्यमाना ॥ शास्त्राणिशस्त्राणिधनुश्चबाणाजग्मुःपुरस्ताद्धृतविग्रहास्ते ॥ ४० ॥ वेदाश्चसर्वेधृतविग्रहाश्चययुश्चसर्वेमुनयश्चदिव्याः ॥
माताश्रुतीनांप्रणवेनसाध्वीययौहरिंव्याहृतिभिःसमेता ॥ ४१ ॥ गच्छंतमेवानुगताजनास्तेसपुत्रदाराःसहबंधुवर्गैः ॥ अनावृतद्वारामि
वापवर्गंरामंव्रजंतंययुरात्तकामाः ॥ ४२ ॥

बरइत्यादिरामविशेषणम् ॥ ३८ ॥ पद्मालक्ष्मीः । पूर्वंगतासीतातत्कालेलक्ष्मीरूपेणसन्निहिताजातेत्यर्थः ॥ ३९ ॥ अरुणकंजहस्तारक्तपद्महस्ताभूस्तद
धिष्ठात्रीदेवता । एवमग्रेऽपिबोध्यम् ॥ ४० ॥ दिव्यमुनयःसनकादयः । श्रुतीनांमातागायत्री ॥ ४१ ॥ अनावृतद्वारामिवापवर्गतुल्यंव्रजंतंराममनुययुः ॥ ४२ ॥

अनुयायात् । अन्वगच्छादित्यर्थः । क्वचित्तथैवपाठः ॥ ४३ ॥ सामात्यवर्गाःसमंत्रिणोद्विजाग्र्याययुः क्षत्रमुखाः क्षत्रंक्षत्रियामुखंमुख्या अग्रेसरायेषांतादृशावैश्यादयः ॥ ४४ ॥ ४५ ॥ दुःखबाह्यसुखयोगाभावेहेतुः । आनंदरूपानुगताआनंदरूपंराममनुगताः । तदनुगमनात्तदानंदप्रतिभासात्तदयोगःसर्वत्रवैराग्यंचेतिभावः ॥ ४६ ॥ जग्मुरनुजग्मुःयोराममनारामंनयातोनानुयावस्तादृशोजंतुर्नासीदित्यन्वयः ॥ ४७ ॥ राजनिगतेऽखिलंपुरंशून्यंबभूव हरिनेत्रजातां



सांतःपुरःसानुचरःसभार्यःशत्रुघ्नयुक्तोभरतोऽनुयायात् ॥ गच्छंतमालोक्यरमासमेतंश्रीराघवंपौरजनाःसमस्ताः ॥ ४३॥ सबालवृद्धाश्चययुर्द्विजाग्र्याःसामात्यवर्गाश्चसमंत्रिणोययुः ॥ सर्वेंगताःक्षत्रमुखाःप्रहृष्टावैश्याश्चशूद्राश्चतथापरेच ॥ ४४ ॥ सुग्रीवमुख्याहरिपुंगवाश्चस्नाताविशुद्धाःशुभशब्दयुक्ताः ॥ नकश्चिदासीद्भवदुःखयुक्तोदीनोऽथवाबाह्यसुखेषुसक्तः ॥ ४५ ॥ आनंदरूपानुगताविरक्ताययुश्चरामंपशुभृत्यवर्गैः ॥ भूतान्यदृश्यानिचयानितत्रयेप्राणिनःस्थावरजंगमाश्च ॥४६॥ साक्षात्परात्मानमनंतशक्तिंजग्मुर्विरक्ताःपरमेकमीशम् ॥ नासीदयोध्यानगरेतुजंतुःकश्चित्तदाराममनानयातः ॥४७॥ शून्यंबभूवाखिलमेवतत्रपुरंगतेराजनिरामचंद्रे ॥ ततोऽतिदूरंनगरात्सगत्वाहृष्ट्वानदींतांहरिनेत्रजाताम् ॥ ४८ ॥ ननंदरामःस्मृतपावनोऽतोददर्शचाशेषमिदंहृदिस्थम् ॥ अथागतस्तत्रपितामहोमहान्देवाश्चसर्वेऋषयश्चसिद्धाः ॥ ४९ ॥ विमानकोटीभिरपारपारंसमावृतंखंसुरसेविताभिः ॥ रविप्रकाशाभिरभिस्फुरत्स्वंज्योतिर्मयंतत्रनभोबभूव ॥ ५० ॥ स्वयंप्रकाशैर्महतांमहद्भिःसमावृतंपुण्यकृतांवरिष्ठैः ॥ ववुश्चवाताश्चसुगंधवंतोववर्षवृष्टिःकुसुमावलीनाम् ॥ ५१ ॥ उपस्थितेदेवमृदंगनादेगायत्सुविद्याधरकिन्नरेषु ॥ रामस्तुपद्भ्यांसरयूजलंसकृत्स्पृष्ट्वापरिक्रामदनंतशक्तिः ॥ ५२ ॥

सरयूम् ॥ ४८ ॥ स्मृतंपावनंविराट्रूपमात्मनोयेनसःअशेषमिदंजगत्हृदिस्थंददर्श । आत्मानंविराड्रूपंस्मृतवानित्यर्थः ॥ ४९ ॥ अपारपारमवधिरूपपारद्वयहीनंतादृशमपिविमानावृतमासीत् ज्योतिर्मयंनक्षत्रगणप्रचुरमिव ॥ ५० ॥ येऽत्रलोकेपुण्यंकृत्वास्वर्गेंसर्वेभ्यआधिक्यंप्राप्तास्तैश्चनभःसमावृतम् । चौपादपूरणे ॥ ५१ ॥ परिक्रामत पर्यक्रामत् । जलोपर्यगच्छदित्यर्थः । तत्रैवहेतुगर्भविशेषणम् । अनंतशक्तिरिति ॥ ५२ ॥

हेपरमात्मन्परमेश्वर । जगत्सृष्टिस्थितिलयकर्तात्वमेवेत्यर्थः । त्वमैशमेकंनिजंतत्त्वंब्रह्मरूपंजानासि ॥ ५३ ॥ नन्वेवंब्रह्मज्ञस्यब्रह्मरूपस्यकथंशरीरपरिग्रहोऽ
तआह । तथापीति । भक्तानुग्रहार्थंमाययासर्वमिदंकृतमितिभावः । अतोवैष्णवंदेहंप्रविश्यदेवान्पाहिरक्ष ॥ ५४ ॥ यदीतियइत्यर्थः । अथवायोऽपरोदे
हस्तवरोचतेतंवाप्रविश्यपाहि । एवंविष्णुरूपंत्वांमांविनाऽन्येपुरुषानजानंति ॥ ५५ ॥ एवंविष्णुरूपंज्ञात्वाभक्त्याप्रणमति । सहस्रेति ॥ ५६ ॥ च
क्षूंषिमुष्णन् । स्वप्रभयेतिशेषः । रामेदेहएवतथाभूतोजातः । अनेनाविष्णुदेहएवमाययाद्विभुजत्ववैशिष्ट्येनलोकदृग्गोचरआसीदितिसूचितम् ।
भोगः सर्पशरीरंपूर्वंगतोपिसतस्मिन्नवसरेतेनदेहेनसन्निहितः ॥ ५७ ॥ दरःशंखः लवणातकःशत्रुघ्नः सीताचपुरैवलक्ष्मीरूपाभवत्सापितत्काले

ब्रह्मातदाप्राहकृतांजलिस्तंरामंपरात्मन्परमेश्वरस्त्वम् ॥ विष्णुःसदानंदमयोऽसिपूर्णोजानासितत्त्वंनिजमैशमेकम् ॥ ५३ ॥ तथापिदा
सस्यममाखिलेशकृतंवचोभक्तपरोऽसिविद्वन् ॥ त्वंभ्रातृभिर्वैष्णवमेकमाद्यंप्रविश्यदेहंपरिपाहिदेवान् ॥ ५४ ॥ यद्वापरोवायदिरोच
तेतंप्रविश्यदेहंपरिपाहिनस्त्वम् ॥ त्वमेवदेवाधिपतिश्चविष्णुर्जानंतिनत्वांपुरुषाविनामाम् ॥ ५५ ॥ सहस्रकृत्वस्तुनमोनमस्तेप्रसीददे
वेशपुनर्नमस्ते ॥ पितामहप्रार्थनयासरामःपश्यत्सुदेवेषुमहाप्रकाशः ॥५६ ॥ मुष्णंश्चचक्षूंषिदिवौकसांतदाबभूवचक्रादियुतश्चतुर्भुजः ॥
शेषोबभूवेश्वरतल्पभूतःसौमित्रिरत्यद्भुतभोगधारी ॥ ५७ ॥ बभूवतुश्चक्रदरौचदिव्यौकैकेयिसूनुर्लवणांतकश्च ॥ सीताचलक्ष्मीरभव
त्पुरैवरामोहिविष्णुःपुरुषःपुराणः ॥ ५८ ॥ सहानुजःपूर्वशरीरकेणबभूवतेजोमयदिव्यमूर्तिः ॥ विष्णुंसमासाद्यसुरेंद्रमुख्यादेवाश्चसिद्धा
मुनयश्चयक्षाः ॥ ५९ ॥ पितामहाद्याःपरितःपरेशंस्तवैर्गृणंतःपरिपूजयंतः ॥ आनंदसंप्लावितपूर्णचित्ताबभूविरेप्राप्तमनोरथास्ते ॥ ६० ॥
तदाहविष्णुर्द्रुहिणंमहात्माएतेहिभक्तामयिचानुरक्ताः ॥ यांतंदिवंमामनुयांतिसर्वेतिर्यक्छरीराअपिपुण्ययुक्ताः ॥ ६१ ॥

लक्ष्मीरूपेणसन्निहिताआसीदितिशेषः । हियतोरामोविष्णुरित्यर्थः ॥ ५८ ॥ पूर्वशरीरकेणविष्णुदेहेन ॥ ५९ ॥ ६० ॥ नन्वेवं
भगवतो विष्णुरूपप्राप्त्यावैकुंठवासइत्यायातम् । एवंचसभापर्वणिभारते सर्वदिक्पालसभावर्णनेयमसभाप्रस्तावेदाशरथीरामोयमसभायांदृष्टइतिनारदे
नोक्तंतद्विरुध्यतेइतिचेत् । अत्रवदामः । अवतारपरिग्रहस्यहिप्रयोजनद्वयंदुष्टवधेनशिष्टपालनंस्वाचरणेनलोकानांधर्ममर्यादाबोधनंच । एतदर्थमेवतेषांतत्त
त्कर्मानुष्ठानेप्रवृत्तिरन्यथाअकामस्यभगवतःकिंयज्ञाद्यनुष्ठानेन । एवंचधर्मबोधनार्थंतदनुष्ठानवतआजन्मेदृशधर्मानुष्ठानस्यामुकलोकवासःफलमितिबोधयितुं

दाशरथिरामत्वंप्रत्यभिज्ञापकेनमायिकेनकेनचिच्छरीरेणतल्लोकेवासेनाक्षतेः । रामायणेएतदर्थाकथनंतुइतिहासेषुउक्तत्वात्सर्वज्ञानांवाल्मीक्यादीनांभूतभा
विसर्वार्थज्ञानवत्त्वादित्यन्यत्रविस्तरः ॥ तदेति । तदातस्मिन्समयेविष्णुर्द्रुहिणंब्रह्माणमाह । मदनुगमनादेवपुण्ययुक्तत्वानुमानम् ॥ ६१ ॥ वैकुंठसाम्यंवैकुं
ठसमानलोकम् । स्वार्थेष्यञ् चातुर्वर्ण्यादित्वादार्षत्वाद्वा । एतान्ममाज्ञयासमाविशस्ववादशलोकंप्रवेशयस्व कोब्रह्मासांतानिकालोकशेषाः ॥ ६२ ॥
तेषांलोकानामुत्तमत्वमाह । मदीयोपरिदीप्यमानान् ब्रह्मलोकादूर्ध्वंदीप्यमानान् अपिचयेऽपिमनुष्यालयकालएवमरणकालएव नतुततःप्रागपिकदाचित् ।
तत्राप्यज्ञानतोवाअज्ञानतएव । वाशब्दएवार्थः । येपवित्रनामरामेत्येतद्गृणंतिवदंतितेऽपितानेवलोकान्योगैःप्राप्यान्भजंतु । अनेनाजन्माभ्यस्तयोगोऽतका

वैकुंठसाम्यंपरमंप्रयांतुसमाविशस्वाशुममाज्ञयात्वम् ॥ श्रुत्वाहरेर्वाक्यमथाब्रवीत्कः सांतानिकान्यांतुविचित्रभोगान् ॥ ६२ ॥ लोकान्म
दीयोपरिदीप्यमानांस्त्वद्भावयुक्ताःकृतपुण्यपुंजाः ॥ येचापितेरामपवित्रनामगृणंतिमर्त्यालयकालएव ॥ ६३ ॥ अज्ञानतोवापिभजंतु
लोकांस्तानेवयोगैरपिचाधिगम्यान् ॥ ततोतिहृष्टाहरिराक्षसाद्याःस्पृष्ट्वाजलंत्यक्तकलेवरास्ते ॥ ६४ ॥ प्रपेदिरेप्राक्तनमेवरूपंयदंशजा
ऋक्षहरीश्वरास्ते ॥ प्रभाकरंप्रापहरिप्रवीरःसुग्रीवआदित्यजवीर्यवत्त्वात् ॥ ६५ ॥ ततोविमग्नाःसरयूजलेषुनराःपरित्यज्यमनुष्यदेहम् ॥
आरुह्यदिव्याभरणाविमानंप्रापुश्चतेसांतनिकाख्यलोकान् ॥ ६६ ॥ तिर्यक्प्रजाताअपिरामदृष्टाजलंप्रविष्टादिवमेवयाताः ॥ दिदृक्षवो
जानपदाश्चलोकारामंसमालोक्यविमुक्तसंगाः ॥ ६७ ॥ स्मृत्वाहरिंलोकगुरुंपरेशंस्पृष्ट्वाजलंस्वर्गमवापुरंजः ॥ एतावदेवोत्तरमाहशंभुः
श्रीरामचंद्रस्यकथावशेषम् ॥ ६८ ॥ यःपादमप्यत्रपठेत्सपापाद्विमुच्यतेजन्मसहस्रजातात् ॥ दिनेदिनेपापचयंप्रकुर्वन्पठेन्नरःश्लोकम
पीहभक्त्या ॥ ६९ ॥

लेत्वन्नामस्मर्ताचसमइतिसूचितम् ॥ ६३ ॥ ६४ ॥ योयदंशजःसतद्रूपमेवप्रापेत्यर्थः । तदाह । प्रभाकरमिति । आदित्यजवीर्यवत्त्वात् । आदित्यदेहज
वीर्योत्पन्नत्वात् ॥ ६५ ॥ सांतनिकाख्येत्यत्रह्रस्वआर्षः ॥ ६६ ॥ रामदृष्टाःभगवद्दृष्टयाक्षीणसर्वपापाः । विमुक्तसंगाभूत्वेविशेषः ॥ ६७ ॥ अंजःशी
घ्रम् ॥ ६८ ॥ अथरामायणपाठफलमाह । यइति तथापापंकुर्वन्नेषरामायणश्लोकमपिपठन्विमुक्तसर्वपापःरामस्यसालोक्यंप्रयाति राघवचोदितेनअंतर्यामि
विधयारघुनाथप्रेरितेन ॥ ६९ ॥

॥ ७० ॥ आप्तोव्याप्तःसंबद्धोभविष्यदर्थोयत्रतदाख्यानंश्रुत्वारामः परितोषमेति । भगवंतंसर्वगतंरामंश्रावयामीतिबुद्ध्यायोवाचयतितद्वाचितंतत्सर्वगत्वा तच्छ्रुत्वावाचकस्योपरितोषमेति तत्परितोषेचतस्यसर्वार्थसिद्धिरितिभावः । अनंतपुण्यंवाचकश्रोत्रोरनंतपुण्यदामित्यर्थः ॥ ७१ ॥ अध्यात्मरामंतत्पदघटित् मध्यात्मरामायणाख्यंपुराणमित्यर्थः । श्रोतुःलिखितुश्चातिप्रसन्नःसन्सदासमीपेस्थितोभूत्वाश्रियमातनोतीत्यन्वयः ॥ ७२ ॥ ७३ ॥ ७४ ॥ इति

विमुक्तसर्वाघचयःप्रयातिरामेतिसालोक्यमनन्यलभ्यम् ॥ आख्यानमेतद्रघुनायकस्यकृतंपुराराघवचोदितेन ॥ ७० ॥ महेश्वरेणाप्तभविष्यदर्थंश्रुत्वातुरामःपरितोषमेति ॥ रामायणंकाव्यमनंतपुण्यंश्रीशंकरेणाभिहितंभवान्यै ॥ ७१ ॥ भक्त्यापठेद्यःशृणुयात्सपापैर्विमुच्यतेजन्मशतोद्भवैश्च ॥ अध्यात्मरामंपठतश्चनित्यंश्रोतुश्चभक्त्यालिखितुश्चरामः ॥ ७२ ॥ अतिप्रसन्नश्चसदासमीपेसीतासमेतःश्रियमातनोति ॥ ७३ ॥ रामायणंजनमनोहरमादिकाव्यंब्रह्मादिभिःसुरवरैरपिसंस्तुतंच ॥ श्रद्धान्वितःपठतियःशृणुयात्तुनित्यंविष्णोःप्रयातिसदनंसविशुद्धदेहः ॥ ७४ ॥ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेउत्तरकांडेनवमःसर्गः ॥ ९ ॥ ॥ अध्यात्मोत्तरकांडेसर्गाग्रहसंख्ययापरिक्षिप्ताः ॥ ऋतुशतसंख्याःश्लोकाःपुराणसंख्याश्चपुरहरेणोक्ताः ॥ १ ॥ पार्वत्यैपरमेश्वरेणगदितेह्यध्यात्मरामायणेकांडैःसप्तभिरन्वितेऽतिशुभदेसर्गाश्चतुःषष्टिकाः ॥ श्लोकानांतुशतद्वयेनसहितान्युक्तानिचत्वारिवैसाहस्राणिसमातितःश्रुतिशतेपूक्तानितत्त्वार्थतः ॥ ॥ १ ॥ समाप्तमिदमुत्तरकांडम् ॥

श्रीमत्सकलराजविपदुद्धरणसमर्थेत्यादिविरुदावलीविराजमानस्यहिम्मतिवर्मणःपुत्रस्यश्रीरामवर्मणःकृतावध्यात्मरामायणसेतावुत्तरकांडेनवमःसर्गः ॥ ९ ॥

॥ समाप्तमिदमुत्तरकांडम् ॥ ॥ श्रीरामचन्द्रार्पणमस्तु ॥


इदमध्यात्मरामायणं खानदेशीयरावेरग्रामनिवासिपरशुरामभट्टतनयगोविन्दशर्मशास्त्रिणा स्वविरचितटिप्पणीसमलंकरणपुरःसरं संशोधितं

मुम्बय्यां श्रीकृष्णदासात्मजखेमराजइत्यनेन स्वकीये“श्रीवेङ्कटेश्वर”( स्टीम् ) मुद्रणालये मुद्रयित्वा प्रकाशितम् ।

तदेतत् सतामानन्दं संविधत्तांतमाम् । शकाब्दाः १८२६ ॥ संवत् १९६१ । आवृत्तिः ३ या ।

# "श्रीवेङ्कटेश्वर" (स्टीम्) यन्त्रालयके क्रय्यग्रंथोंकी संक्षिप्त सूची.

पुस्तकोंका नाम. क़ीमत.

## पुराण-इतिहास ग्रन्थाः।

श्रीमहाभारतसटीक अतिउत्तम बडे अक्षरका मजबूत कागज गणपतकृ० छापेका अनुक्रमणिका सहित ... ... ६५-०

महाभारत छोटाअक्षर हल्काकागज़ २५-०

पद्मपुराण सम्पूर्ण ५५००० ग्रंथ बहुतपुस्तकोंके द्वारा शुद्ध होकर छपा तयार है ... १६-०

हरिवंशपुराण सटीक ... ... ५-०

हरिवंशपुराण भाषाटीका समेत १०-०

हरिवंशपुराण केवल भाषावार्तिक जिल्दबँधा ... ... ... ५-०

श्रीवाल्मीकीयरामायण संस्कृत मूल और अत्युत्तम भाषाटीका माहात्म्य और अनुक्रमणिका सहित मोटा कागज सुंदर अक्षर ... ... ... २१-०

वाल्मीकीयरामायण केवलभाषा दो जिल्दोंमें ... ... १०-०

श्रीमद्वाल्मीकीय रामायण तनिश्लोकी रामानुजी भूषण संस्कृत टीकासहित ... ... २०-०

वाल्मीकीयरामायण रामाभिरामीटीका ... ... ... ८-०

श्रीवाल्मीकीयरामायण सुंदरकांड मूल बडा ... ... ... २-०

अध्यात्मरामायणसटीक चिकना कागज... ... ... ३-०

" रफ़ कागज २-८

अध्यात्मरामायण भाषाटीकासहित ... ... ... ४-०

अध्यात्मरामायण मूल (गुटका-रेशमी) पाठ करनेको अत्युत्तम है ... ... ... १-०

अध्यात्मरामायण-केवलभाषा सुन्दर जिल्दबँधी... ... २-०

श्रीमद्भागवत श्रीधरीटीका और टिप्पणी सह ग्लेज कागज १०-०

तथा रफ़ कागज ... ... ९-०

भारतसार संस्कृत ... ... ८-०

श्रीमद्भागवतसचूर्णिका मोटेअक्षर उत्तम कागजकी (सप्ताहपाँचनेमेंपरमोपयोगी) ... ... ८-०

श्रीमद्भागवत भाषाटीका माहात्म्य और शंका समाधान सह अत्युत्तम जिसमें कथाके सिवाय ५०० दृष्टांतहैं (नईछपी)... १२-०

श्रीमद्भागवत-सुबोधिनीटीका समेत पढनेवालों व सप्ताह बाँचने वालोंको परमोपयोगी है १२-०

श्रीमद्भागवत अन्वयार्थप्रकाशिका टीकासमेत ... ... १५-०

श्रीमद्भागवत विजयध्वजी टीकासमेत (माध्वसाम्प्रदायिक) ... ... ... १०-०

पुस्तक मिलनेका ठिकाना-खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर (स्टीम्) यन्त्राल,-बंबई.

इदं पुस्तकं मुम्बयीनगर्यां श्रीकृष्णदासात्मजेन
खेमराजेन स्वकीये 'श्रीवेङ्कटेश्वर' स्टीम्
यन्त्रालयेऽङ्कयित्वा प्रकाशितम्.

संवत् १९६१, शके १८२६.

